तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः ।
सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः ॥ ३ ॥

न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥ ४ ॥

कुतो वा गृह्णते दोषं सूरयो मद्विधोक्तिषु ।
नेष्यते यः परस्थोऽपि स स्वयं गृह्यते कथम् ॥ ५ ॥

निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते ।
सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति ॥ ६ ॥

आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि ।
न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते ॥ ७ ॥

इदानीं वार्तिकप्रतिष्ठासिध्यर्थमनुनयावर्जनीयहृदयान् विदुषोऽभ्यर्थयितुमाह—**तदिति** । सा चेयं प्रार्थना, न त्वाज्ञा ; इत्यर्थान्तरन्यासेन दर्शयन्नाह—**सन्त इति** ।

इदानीमेकान्ततो [1]रोषपरिहारेण प्राज्ञानामनुग्रहप्रार्थनामाशंस इत्याह—**न चेति** । एतदुक्तं भवति—मध्यस्थता मया प्रार्थ्यते, मध्यस्था भूत्वा परीक्षध्वमित्यर्थः ॥

अधुना ये त्वनुनीयमानकर्कशमनसोऽनुनयादेवानुनेतुरशक्तिं मन्यन्ते, न च पाण्डित्योत्कर्षम् ; तान्प्रति साविष्कारमाह—**कुतो वेति** ॥

ननु यद्यप्युक्तेन प्रकारेण सूरयो न गृह्णते दोषम्, तथापि ये विद्यालवलिप्तजिह्वाग्राः पण्डितंमन्यास्ते ग्रहीष्यन्ति; तथा च वार्तिकनिर्दोषत्वं सविगानमेवेति कथमत्र बुद्धिपूर्वकारिणः प्रवर्तेरन्? अत आह—**निर्दोषत्वेति** । तथा हि—यावपि निरतिशयसुखरूपत्वादत्यन्तदुःखोपरमरूपत्वाच्च परमपुरुषार्थौ स्वर्गापवर्गौ तत्रापि नास्तिकाः सद्भावादारभ्य विवदन्ते, कैव कथात्र?

एवं तावन्मद्विधोक्तिषु दोषसम्भावनैव[2] नास्तीत्युक्तम् ; इदानीमभ्युपगम्याप्याह—**आगमेति** ॥

1. रोषपरिहारेण प्रार्थनामनुग्रहप्रार्थनामाशंसत इत्याह. मातृका.
2. सद्भावनैव. मा.

**यथाकथञ्चिदारब्धा त्रयीमार्गानुसारिणी ।**
**वाग्वृत्तिरल्पसारापि श्रद्दधानस्य शोभते ॥ ८ ॥**

**मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।**
**वेदार्थज्ञानरत्ने मे तृष्णातीव विजृम्भते ॥ ९ ॥**

**प्रायेणैव हि मीमांसा लोके लोकायतीकृता ।**
**तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥ १० ॥**

**अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम् ।**
**धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम् ॥ ११ ॥**

यद्यपि मद्वाचि बहु फल्गुप्रायमल्पसारं स्यात्, [1]तथापि विषयसौन्दर्यान्मनसः श्रद्धाप्रधानत्वाद्वाग्वृत्तिः श्रोतृजनचित्ताराधनसमर्थैवेति दर्शयन्नाह—**यथाकथञ्चिदिति** ॥

एवं तावद्वार्तिकं परार्थमभिप्रेत्य परप्रवृत्त्यर्थमेतदुक्तम्; इदानीं स्वार्थमेव वार्तिकारम्भे प्रयत्नः, किं परप्रवृत्त्यर्थेन बहुनोक्तेनेत्याह—**मीमांसाशास्त्रेति**[2] । ननु च प्राप्ते वेदार्थज्ञाने वार्तिकेऽशक्यकर्त्रभिप्राये वा तृष्णानुपपत्तिः । अपि च ग्रन्थारम्भः स्वप्रतिपत्त्यर्थ इति नातीव शोभते । नैष दोषः, प्राप्तेऽपि वेदार्थज्ञानरत्ने लोभातिरेकादविस्मरणार्थं ग्रहणकवाक्यवत्स्वार्थे यत्नो घटत एव ग्रन्थारम्भ इति सर्वमुपपन्नम् ॥

ननु [3]वेदार्थग्रहणाविस्मरणार्थमपि **तत्तद्भर्तृमित्रादिविरचिततत्त्वशुद्ध्यादि**-लक्षणप्रकरणमस्त्येवेति गतार्थमिदं वाक्यमित्यत आह—**प्रायेणैवेति** । मीमांसा हि सर्वास्तिकशास्त्राणामग्रणीः, सर्वपुरुषार्थसाधनपरिज्ञानस्यैतन्निबन्धनत्वात् । सैवमात्मिका अलोकायतमेव सती बाहुल्येन लोकायतीकृता, सत्स्मृतिसदाचाराणां विना कारणेन धर्मप्रमाणत्वनिराकरणात् विधिनिषेधयोरिष्टानिष्टफलानभ्युपगमाच्च । प्रायेणेति । चोदनाप्रमाणको धर्म इत्येतावन्मात्रेण नास्तिकशास्त्रादपसारिता, [4]अन्यत्सामान्यमेव कृतमित्यर्थः । तामिमामसद्व्याख्यातृवशादसन्मार्गनिम्नगामुद्धृत्यास्तिकपथे कर्तुं स्थापयितुं वार्तिकारम्भप्रयत्नः कृतो मयेति ॥

तदिदानीं वार्तिकमारभते—**अथातो धर्मजिज्ञासेति** । प्रमाणलक्षणे सूत्रमसम्बद्धमिवाशङ्क्यते—न ह्यनेन कार्यार्थे चोदनायाः प्रामाण्यं प्रतिज्ञायते,

1. तथाहि. मा.
2. शास्त्रेति..........वा तृष्णा. मा.
3. ग्रहणावि......र्थमपि. मा.
4. अन्यसामान्य. मा.

'चोदनालक्षणोऽर्थो धर्मः' इतिवत्; नापि सदौत्पत्तिकसूत्राभ्यामिव निर्णीयते; नाप्यध्यापनविधिप्रयुक्तत्वेनाध्ययनस्य तच्छेषत्वेनार्थाविवक्षायामप्रामाण्यमाशङ्क्य प्रयुक्तिकृतशेषत्वनिराकरण[1]मुखेन विवक्षितार्थतया प्रामाण्यप्रतिपादनमस्यार्थः, स्वाधिकारप्रयुक्ताध्ययनलाभेनाध्यापनविधेर्गुणाधिकारवदप्रयोक्तृत्वात्[2]। तत्रै-तत्स्यादध्ययनविधौ नियोज्यानवगमादप्रयोजकत्वम्[3], तदत्रापि समानम्। अथ तत्र "अष्टवर्षं ब्राह्मणमुपनयीत" इत्यात्मनेपदपर्यालोचनया "उपनीय तु यः शिष्यम्" इत्यादिस्मरणादाचार्यकरणकामः प्रती[4]यते, तद्वदत्रापि ब्रह्मचारिप्रकरणे "उपा-कृत्याधीयीत छन्दांसि" इति स्मरणात् "आचार्याधीनो वेदमधीष्व" इति प्रैषाच्च ब्रह्मचारी प्रतीयत एव। अथ शिशुत्वादसावधिकारं प्रतिपत्तुमसमर्थः, तदसत्; अनुशिष्ट पुत्रं लोभभयादिना अधिकारप्रतिपादनेन वा पिता हि प्रवर्तयति। अवश्यञ्चाधिकारान्तरप्रयुक्तसम्भवेऽधिकारान्तरमप्रयोजनमाश्रयितव्यम्। इतरथा-ध्यापनविधेरप्यध्यापनं विनासिद्धेः प्रयुञ्जीताध्यापनम्। येषां तु 'आचार्य आचारं ग्राहयति' इति निर्वचनात् "आचार्याधीनो वेदमधीष्व" इति प्राक्सिद्धाचार्य-वेदाध्ययनप्रेषणात् वृद्धव्यवहाराच्च गायत्र्यध्यापनादाचारग्रहणमात्रादेव वाचार्य-नियोगसिद्धिः, तेषां कथमिव तत्प्रयुक्तमध्ययनं स्यात्? अथ—मन्वाद्याचार्य-वचनात् सकलवेदाध्यापनादाचार्यनियोगसिद्धिर्यद्यपि तथापि विकल्पप्रसक्तेः फलभूयस्त्वाद्वा न सर्वेषां नित्यमध्ययनं तत्प्रयुक्तमिति, बालभाषितमिव नः प्रतिभाति। अपि च, न विधेः प्रेरणादन्यो व्यापारः; प्रयुक्तिरपि हि प्रेरणैव; अध्यापनविधिश्च नाध्ययने प्रेरयति; अधिकारिभेदात्, अनुबन्धान्यत्वाच्च; प्रेरयन् वा नाध्यापननियोगः स्यात्; आचार्यस्य तु नाध्ययनं स्वव्यापारः, येन तत्र नियुज्येत तत्राध्यापनमात्रपर्यवसिते विधावाचार्यः पुरुषार्थसिद्ध्यर्थं कृषिकरणवल्लोभभयाधिकारप्रतिपादनेन वा माणवकं च प्रवर्तयति; सोऽपि स्वार्थ-सिद्ध्यर्थमेव प्रवर्तते, न तदर्थमिति प्रासङ्गिकस्तु तस्योपकार इति। किञ्च अध्यापनविधेः प्रयोजकतया प्रयुक्तिकृतशेषत्वनिराकरणार्थं सूत्रमारभ्यमाणम् "शेषः परार्थत्वात्" इत्यनेन गतार्थत्वादनर्थकमेव स्यात्। न च तस्य न्यायस्य पुनराक्षेपः संभवति। सम्भवे वा शेषलक्षण एव वक्तव्यं स्यात्। प्रयुक्तिकृतशेष-त्वनिराकरणमुखेन प्रामाण्यप्रतिपादनपरे च सूत्रे सति "किन्त्वधीते वेदे"

1. मुखेनविवि.........थतया. मा.
2. त्वात्सतत्रै. मा.
3. कत्व.........दत्रापि. मा.
4. यते.........चारि. मा.
5. पुत्रं लो.........अवश्य. मा.

इत्युपक्रम्य "गुरुकुलान्मा समावर्तिष्ट, कथं नु वेदवाक्यानि विचारयेत्" इति सूत्रतात्पर्यकथनपरं भाष्यद्वयमसम्बद्धमेव स्यात्। प्रतिज्ञासूत्रताञ्चास्य दर्शयिष्यति 'सर्वासां प्रतिज्ञानामपि सूचनाच्च सूत्रमिति', तदपि नोपपद्येत। यदि तदेतत्प्रतिज्ञासूत्रं स्यात्, चोदनासूत्रोत्तरकालं च सूत्रं कर्तव्यं स्यात्, प्रतिज्ञातस्य प्रकारान्तरेणाक्षिप्य समर्थनात्। तदेवमसम्बद्धतामाशङ्क्य प्रयोजनपरत्वेन सकलशास्त्रशेषतामस्य सूत्रस्य दर्शयन्नाह—**अथातो धर्मजिज्ञासेति**। ननु नात्र प्रयोजनं पदेनोपात्तम्; न चापदार्थस्य वाक्यार्थत्वम्; न चावाक्यार्थे तात्पर्यम्। प्रयोजनपरत्वे च कर्तव्यतानुपदेशात् अथातःशब्दयोरनन्वयप्रसङ्गः; न हि वेदाध्ययनानन्तरं तद्धेतुकं धर्मज्ञानं प्रयोजनमिति। गुरुकुलनिवृत्तिप्रतिषेधपरंच भाष्यमसम्बद्धमेव स्यात्। अयमभिप्रायः—"अथातो धर्मजिज्ञासा" इति शास्त्रादौ सूत्रमध्ययनविधेरदृष्टार्थतामाशङ्क्य दृष्टार्थताप्रतिपादनपरं व्याख्यातं भाष्यकारेण[1] "दृष्टो हि तस्यार्थः कर्मावबोधनं नाम; न च तत्राध्ययनमात्रात्तत्रभवन्तो याज्ञिकाः फलं समामनन्ति; यदपि च समामनन्तीव तत्रापि द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् इत्यर्थवादता" इति। कथं पुनरदृष्टार्थता शङ्क्यते? इह हि "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनकरणिकायां भावनायां नियोगः प्रतीयमानो नियोज्यविशेषणं विना अपर्यवस्यन् "स स्वर्गः स्यात्" इत्यस्मिंश्च "फलमात्रेयो निर्देशात्" इत्यपोदिते [2]घृतकुल्यादिकाममवलम्बते प्रतिष्ठाकाममिव रात्रिसत्रनियोगः। न चास्यान्यार्थता, येन परार्थत्वादर्थवादोऽर्थमात्रपर्यवसाय्येव स्यात्। न हि कर्मावबोधनकामस्यात्राधिकारः संभवति, ज्योतिष्टोमादिकर्मणां प्रमाणान्तरादप्रतीतेः कामनायोगात्। अथापि प्रमाणान्तरात्प्रतीयेरन्, तथापि न तदवबोधकामस्याधिकारः संभवति; बोध्यतया हि तत् काम्यते; न चावबुद्धे बोध्यतया कामना संभवति। अत्र ब्रूमहे—"स्वाध्यायोऽध्येतव्यः" इत्यध्ययनकरणिकायां निर्वर्त्यमानायामर्थावबोधो जायते। ज्योतिष्टोमादयश्च स्वैःस्वैर्वाक्यैः पुरुषार्थतयावगताः "ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्येवमादिभिः; घृतकुल्यादिवाक्यानि चार्थवादतयोपयुक्तानि[3] न पुनः खेदमर्हन्ति; तदिदमाधानवद् द्रष्टव्यम्, आहवनीयादीनां कर्मार्थत्वादाधानस्य तदर्थत्वादिति। तदुक्तम्—"न च सहसैवादर्शनात् स्वर्गाद्येव फलं कल्प्यते" इति।

1. कारेण.........कर्मा. मा.
2. ल्यादिकामव. मा
3. क्तानि पुनःवेद. मा.

तदिदमसम्यगिव मन्यन्ते ; सिद्धे हि चोदनायाः प्रामाण्ये तस्यार्थो निरूपयितुं युक्तम् "स्वध्यायोऽध्येतव्यः" इति ; तन्नाद्यापि प्रमाणम् । वक्ष्यति ह्येतत् "औत्पत्तिकस्तु" इति । एवमुक्ते विचारस्य प्रयोजनमुच्यते वेदवाक्यार्थनिर्णयप्रयोजनप्रतिपादनमुखेन[1] । "स्वाध्यायोऽध्येतव्यः" इति यदा अध्ययनस्य वैधं शेषत्वं स्वर्गभावक इव व्यापारे ज्योतिष्टोमादेः, तदाध्ययनशब्दवाच्यानामग्निहोत्रादिविधीनामुच्चारणस्यादृष्टार्थत्वादन्य[2]परत्वे सति कार्यरूपार्थप्रतिपत्तेरविवक्षायामध्ययनानन्तरं तदर्थनिर्णयार्थं शास्त्रं नारब्धव्यं स्यात् । अथादृष्टार्थत्वेऽप्युच्चारणस्य विवक्षितोऽर्थः, प्रतीतेरबाधाच्च [3]यथोक्तं साधिवति ।

"ततो विधास्यति ह्येष नियोगात् स्मारयिष्यति"

इत्यनेन न्यायेनोच्यते, तथापि अध्ययनविधेरतत्परत्वेन वाक्यार्थनिर्णयानाक्षेपादनारम्भः । यदा तु शब्दैकसमधिगम्योऽपि

"सत्यं प्रथममाधानादुत्पद्यन्तेऽग्नयस्त्रयः ।
पश्चात्तु व्रीहिवत्तेषां नोपायान्तरवारणा ॥"

इत्यनेन न्यायेनानेकोपायप्रसक्तौ सत्याम् अध्ययनेनैव कर्मावबोधं भावयेत्' इति [4]प्रतिपुरुषं नियम्यतेऽवघातादिनेव तण्डुलभावो व्रीह्यादेः । न च तद्विचारनिरपेक्षः कर्मावगमयितुं शक्नोति ; वाक्यार्थनिर्णयप्रयोजनप्रतिपादनमुखेनानन्तरं तद्धेतुकमितिकर्तव्यताभूतविचारमप्याक्षिपति तदा । अतश्च स्वाध्याये चेत् [5]प्रवृत्तः, आ अर्थविचारात् प्रवृत्त एव ; एका हि प्रवृत्तिरङ्गप्रधानयोर्यतः । वक्ष्यति च—"अङ्गप्रधानवत्यां भावनायां युगपत् पुरुषनियोगः" इति । तदुक्तम्—

"धर्मे [6]प्रमीयमाणे हि वेदेन करणात्मना" इति ।

वेदानां विवक्षितार्थतया साधिते शास्त्रस्यार्थवत्त्वेनानन्तरारम्भे "लोके" इत्यादिना "तस्मिन् हि सति [7]सावकल्पते" इत्येवमन्तेन, पुनः "नैतदेवम्, [8]अन्यस्यापि" इत्यादिना दृष्टार्थतामनधिगम्यैवानधीतवेदनिषेधपरत्वभ्रान्त्याध्ययनानन्तरमाक्षेपकप्रमाणाभावेनाथशब्दस्यालौकिकार्थत्वमाशङ्कितम् । तस्यापि

1. मुखेन.........अध्ययनस्य. मा.
2. न्यपरे सति कार्येरूपा. मा.
3. यथोक्तं स्थिताविधास्य..........स्मारयिष्यन्तीत्यनेन. मा.
4. वत् पुरुषं नि. मा.
5. प्रवृत्तः अर्थ. मा.
6. प्रतीयमाने. मा.
7. सावकमष्यता इत्येवमन्तौ. मा.
8. अस्यापि. मा.

कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः ।
एवमादि विना युक्त्या कल्प्यं मीमांसकैः पुनः ॥ ९८ ॥
इदानीमिव[1] सर्वत्र दृष्टान्नाधिकमिष्यते ।
एवंभूतस्य वेदस्य ज्ञानोत्पत्तिं प्रकुर्वतः ॥ ९९ ॥
स्वरूपविपरीतत्वसंशयौ भाष्यवारितौ ।
निराकरिष्यते चापि दुष्टकारणकल्पना ॥ १०० ॥
पुरुषाभावतस्तेन तद्द्वारेणाप्यशङ्कितौ ।
तथा सत्यतथाभावो बुद्ध्यनुत्पत्तिमाश्रितः ॥ १०१ ॥
तत्र विप्रतिषिद्धत्वं ब्रवीतीत्येवमादिना ।
यथादृष्टार्थवादित्वं तच्चेत् प्रत्ययितादिति ॥ १०२ ॥

अपौरुषेयाभ्युपगमे तु तस्य सिद्धत्वान्न काचित् कल्पनेत्याह—**मीमांसकैरितीतीष्यत** इत्यन्तेन ।

अत एवंभूतस्यापौरुषेयत्वेन निरस्तदोषाशङ्कस्य बुद्ध्युत्पादकत्वेनानवग[2]तानुत्पत्तिलक्षणाप्रामाण्यस्य यदि परं संशयविपर्ययरूपमप्रामाण्यमाशङ्क्येत, तदपि "न चाग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिभाष्यद्वयेन निवारितमित्याह—**एवंभूतस्येति ।**

तत्रैतत् स्यात्—यद्यपीदानीं संशयविपर्ययौ न स्तः, तथापि कदाचित् स्यातामित्याशङ्क्याह—**निराकरिष्यत इति** । दुष्टकारणारब्धे ह्याशङ्कापि स्यात् ; अनाप्तानुप्रवेशश्च शब्दे दोषः ; स च सम्बन्धग्रन्थे निराकरिष्यते ; अतस्तद्द्वारेणाप्याशङ्का न युक्तेत्यर्थः ।

एवं सति यत् पूर्वं प्रत्यक्षवादिनाभिहितम्—"नन्वतथाभूतमपि" इति, तस्य बुद्ध्यनुत्पत्तिरेव विषयः परिशिष्यते ; तस्य च "विप्रतिषिद्धमिदम्" इति भाष्येणानुभवविरोधोद्भावनं दूषणम् , न जात्युत्तरं दूषणमित्याह—**तथा सतीति ।**

एवं प्रतिज्ञादूषणपरं भाष्यम्—"यत्तु लौकिकं वचनम्" इति, तद्व्याचष्टे—**यथादृष्टेति** । प्रत्ययितस्येन्द्रिय[3]जन्यज्ञानमूलं यद्वाक्यं तदवितथमेवेति साध्यविकलता दृष्टान्तस्य ।

1. मेव. मा.
2. निवारयिष्यते. चौ. मु.
3. यवाक्यं. तदपि कथम्. मा.

मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाविवेकतः ।
न्यायमार्गे महान् दोष इति यत्नोपचर्यता ॥ १५ ॥

तस्मात् प्रयोजनं पूर्वमुक्तं सूत्रकृता स्वयम् ।
[1]यत्तेनोक्तं वदेयुस्तद्भाष्यकारादयः कथम् ॥ १६ ॥

सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ १७ ॥

शास्त्रं प्रयोजनं चैव सम्बन्धस्याश्रयावुभौ ।
तदुक्त्यन्तर्गतस्तस्माद्भिन्नो नोक्तः प्रयोजनात् ॥ १८ ॥

सिद्धिः श्रोतृप्रवृत्तीनां सम्बन्धकथनाद्यतः ।
तस्मात् सर्वेषु शास्त्रेषु सम्बन्धः पृथगुच्यते[2] ॥ १९ ॥

यावत् प्रयोजनेनास्य सम्बन्धो नाभिधीयते ।
असम्बद्धप्रलापित्वाद्भवेत्तावदसङ्गतिः ॥ २० ॥

इह त्वाक्षिप्य सम्बन्धं भाष्य एवाभिधास्यते ।
धर्मप्रसिध्यसिद्धिभ्यां तस्मान्नान्योऽभिधीयते ॥ २१ ॥

तत्र "धर्माख्यं विषयं वक्तुम्" अध्ययनविधेः इति सूत्रवाक्यार्थकथनम् । "मीमांसायाः प्रयोजनम्" इति वाक्यार्थस्यैवात्रैव तात्पर्यकथनम् । वक्ष्यति च "वेदवाक्यानि विचारयेदित्येवमर्थोऽयमुपदेशः" इति ॥

इदानीं प्रयोजनसमर्थनस्य प्रवृत्त्यङ्गतां दर्शयदि—**सर्वस्यैवेति** ॥

विशेषतो मीमांसाया बहुप्रयाससाध्यत्वादिति दर्शयति—**मीमांसाख्येति** ।

यच्च सूत्रकृताध्ययनविधिपर्यालोचनेन स्वयमेव प्रयोजनं समर्थितम्, तत्र विद्यान्तर इव व्याख्यातृभिरभिधानमपेक्षितम् "अथ शब्दानुशासनम्" इतिवत् अत्र वार्तिककारः श्लोकत्रयेण कारणमाह—**विद्यान्तरेष्वित्यादिना** ॥

ननु प्रयोजनवत् प्रवृत्त्यङ्गत्वात् सम्बन्धोऽपि वक्तव्य इति चोदयति—**सिद्धार्थमिति** ॥

1. यत्स्वेनोक्तम्. न्यायरत्नाकरे.  2. पूर्वमुच्यते. चौ. मु.

न चाप्यत्राथशब्देन शास्त्रसम्बन्ध उच्यते ।
सम्बन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक् ॥ २२ ॥

योऽप्ययं शास्त्रसम्बन्धो वर्ण्यते कैश्चिदादितः ।
क्रियानन्तर्यरूपो वा गुरुपर्वक्रमोऽपि वा ॥ २३ ॥

तदतद्भावयोस्तस्य विशेषो नोपलभ्यते ।
श्रोतुर्विधौ निषेधे वा ज्ञाने वा शास्त्रगोचरे ॥ २४ ॥

तस्माद्व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः ।
शास्त्रावतारसम्बन्धो वाच्यो नान्यस्तु निष्फलः ॥ २५ ॥

लोक इत्यादिभाष्यस्य षडर्थान् संप्रचक्षते ।
भाष्यकारानुसारेण प्रयुक्तस्यादितः पृथक् ॥ २६ ॥

सर्वव्याख्यामुपालम्भं प्रत्याख्यानं तथापरे ।
परिसंख्यास्तुती केचिदथशब्दस्य दूषणम् ॥ २७ ॥

सत्यमेवम्, प्रयोजनमुखेन तु धर्माधर्मज्ञानविचारयोः साध्यसाधनलक्षणसम्बन्धोऽप्याक्षिप्त एव सूत्रकृतेत्याह—**शास्त्रमिति** ॥

ननु स एवार्थोक्तः कस्माद्व्याख्यातृभिर्न कथित इति चोदयति—**सिद्धिरिति** ॥

स्यादेतत्—अर्थोक्तस्य किमभिधानेनेत्याशङ्क्याह—**यावदिति** । अयमर्थः—प्रयोजनवत् सम्बन्धेऽनभिहितेऽसम्बद्धप्रलापितापि कस्यचिदाभातीत्यभिधातव्य एव सम्बन्ध इति ॥

अत्र परिहारमाह—**इह त्विति** । 'प्रसिद्धमप्रसिद्धं वा' इत्यादिना भाष्यकारेणैव चाक्षेपपूर्वकं स्वयमेवाभिधानान्न पृथगभिधानमित्यर्थः ॥

नन्वत्राथशब्देनैव सम्बन्धः पृथगुक्त एवेति किमुच्यते "भिन्नो नोक्तः" इतीत्याशङ्क्याह—**न चापीति** । विध्याक्षिप्तं हि करणेतिकर्तव्यतयोः[1] सम्बन्धमाह, न शास्त्रस्य प्रयोजनेन सहेत्यर्थः ॥

1 कर्तव्ययोः. मा.

**साधारणी विशिष्टा च सूत्रव्याख्या द्विधा [1]कृता ।**
**विशिष्टा प्रतिसूत्रं या सर्वार्था त्वियमुच्यते ॥ २८ ॥**

**प्रवृत्तिस्तु पदेष्वेव निवृत्तिः सूत्रसंश्रया ।**
**वेदवाक्याविरुद्धेषु न तु सर्वेषु केषुचित् ॥ २९ ॥**

**अध्याहारस्य वाक्येषु व्यत्यासस्य च सम्भवात् ।**
**तेनैषामिति सूत्राणां पारार्थ्ये सत्यपि ग्रहः ॥ ३० ॥**

**एवशब्दोऽल्पवाच्यत्वादस्यावृत्तौ तु गौरवम् ।**
**प्रसिद्धत्वादवाच्यं चेन्न दोषः पुम्गिरामयम् ॥ ३१ ॥**

**व्याख्याङ्गत्वाभिमानेन योऽध्याहाराद्यपेक्षते ।**
**स्वसंज्ञां चापि तस्येदं शास्त्ररूपं निरूप्यते ॥ ३२ ॥**

न चायमथशब्दः शिष्यप्रश्नानन्तर्यलक्षणगुरुपर्वक्रमलक्षणसम्बन्धप्रतिपादको वा व्याख्यायते, अप्रवृत्त्यङ्गत्वेन तयोरवाच्यत्वादित्याह—**योऽप्ययमि**त्यादिना श्लोकत्रयेण । पूर्वेण निराकार्यस्वरूपोपन्यासः "योऽप्ययं शास्त्रसम्बन्धः" इति ; मध्यमेन निराकरणहेतुरुक्तः "तदतद्भावयोस्तस्य" इति ; तृतीयेनोपसंहारः "तस्माद्व्याख्याङ्गमिच्छद्भिः" इति ॥

एवं सूत्रतात्पर्यं व्याख्यायाधुना लोक इत्यादिभाष्यं व्याचष्टे—**लोक इत्यादीति** । तत्र शास्त्रादौ प्रयुक्तत्वात् सकलशास्त्रशेषत्वेन सर्वव्याख्यादयः पञ्च पक्षाः प्रतिभान्ति, आनन्तर्यविशेषाद्वा प्रथमसूत्रशेषत्वेन वा अथशब्दाक्षेपपक्षप्रतिभानम् ॥

तत्र पक्षानुद्दिशति—**सर्वव्याख्यामिति** । केचिद्ग्रहणं च लोक इत्यादिभाष्यस्य सिद्धान्तग्रन्थतामपि दर्शयिष्यति—"यद्वाक्षेपो यथोक्तस्य" इत्यादिना, तदभिप्रायम् ॥

ननु प्रतिसूत्रं व्याख्या वर्तिष्यत एव, कथमिदं भाष्यं सकलसूत्रव्याख्यापरं व्याख्यायत इति सर्वव्याख्यायां पौनरुक्त्यमाशङ्क्य परिहरति—**साधारणीति** ॥

अत्रैव भाष्यं योजयति—**प्रवृत्तिस्तु पदेष्वेवेति** ॥

1. मता. चौ. मु.

वृत्त्यन्तरेषु केषांचिल्लौकिकार्थव्यतिक्रमः ।
शब्दानां दृश्यते तेषामुपालम्भोऽयमुच्यते ॥ ३३ ॥

अथात इत्ययं लोके नानन्तर्ये प्रयुज्यते ।
तस्मात्ताद्ध्र्यमेतस्य परिभाषादिभिर्भवेत् ॥ ३४ ॥

प्रसिद्धहानिः शब्दानामप्रसिद्धे च कल्पना ।
न कार्या वृत्तिकारेण सति सिद्धार्थसम्भवे ॥ ३५ ॥

सूत्रार्थे क्लिश्यतश्चैवं दूरे वेदार्थनिर्णयः ।
तत्र यत्नस्य भारत्वं वक्तृश्रोत्रोः प्रसज्यते ॥ ३६ ॥

न व्याख्यास्यति सूत्राणि चोदनार्थपरत्वतः ।
यत्तस्य परिहारोऽयं प्रत्याख्यानेन [1]चोच्यते ॥ ३७ ॥

प्रयासो वेदवाक्येषु कार्यः सूत्रेष्वनेन किम् ।
फलवत्त्वाफलत्वाभ्यामेभिः कारणसंमतः ॥ ३८ ॥

चोदनार्थ उपेतव्यो नोभयं यत्नगौरवात् ।
पदार्थानां प्रसिद्धत्वाद्व्याख्येयं नावशिष्यते ॥ ३९ ॥

एवंशब्दादिको ग्रन्थः पक्षे चास्मिन् समर्थ्यते ।
पदच्छेदाद्यभावेन प्रत्याख्यानमतिस्फुटम् ॥ ४० ॥

ननु "नाध्याहारादिभिरेषाम्" इति न सूत्राणां सर्वनामार्थता, "सूत्रेषु" इति पदविशेषणत्वेनोपात्तत्वात्; अतः कथं निवृत्तिः सूत्रसंश्रयेत्याशङ्क्याह— **अध्याहारस्येति** । निषेध्यानामध्याहारादीनां साक्षात् पारम्पर्येण वा वाक्य एव सम्भवादित्यर्थः ॥

भाष्यगतस्त्वेवशब्दोऽल्पाभिप्रायेणैतस्मिन् पक्ष इत्याह—**एवशब्द इत्यर्धेन** । प्रसिद्ध एवायमर्थः, किमनेनेति चोद्यम्—**प्रसिद्धत्वादवाच्यं चेदिति**; प्रमाणान्तरवतामेवायमर्थः पौरुषेयवाक्यानामिति परिहारः—**न दोषः पुञ्जि-रामयमिति** ॥

यो व्याख्याङ्गत्वाभिमानादध्याहारादि कल्पयितुमारभते, तस्य वानेन निषेध इत्याह—**व्याख्याङ्गत्वाभिमानेनेति** ॥

1. वोच्यते. मा.

ब्रवीत्येव हि सूत्रार्थमतिरिक्तादि [1]चेक्षते ।
नन्वशक्तमिदं सूत्रं सम्यक् सूत्रितमित्यपि ॥ ४१ ॥

सूत्रे चागमकत्वादि प्रत्याख्याने विरुध्यते ।
न चोपायानभिज्ञेन शक्योपेयावधारणा ॥ ४२ ॥

नान्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते ।
प्रत्याख्यानस्य हेतुश्च पदार्थानां प्रसिद्धता ॥ ४३ ॥

योक्ता [2]सा वेदवाक्यानां तुल्यार्थत्वान्निवारयेत् ।
वाक्यार्थे तत्र सन्देहाद्व्याख्यानं चेत् प्रवर्तते ॥ ४४ ॥

सूत्रेष्वपि समानत्वात् प्रत्याख्यानं न युज्यते ।
न व्याख्यातव्यमित्येवं प्रत्याख्याने च सिध्यति ॥ ४५ ॥

उपालम्भपक्षं गृह्णाति—**वृत्त्यन्तरेष्विति** ॥ उपालम्भं दर्शयति—**अथात इति** ॥

उपालम्भपक्षे भाष्यं योजयति—**प्रसिद्धहानिरि**त्यादिना श्लोकद्वयेन ॥

प्रत्याख्यानपक्षं गृह्णाति—**न व्याख्यास्यतीति** ॥

अत्रैव कारणमाह—**प्रयास** इति त्रिपाद्या । लोकप्रसिद्धपदार्थैरेभिर्वेद-वाक्यानि व्याख्येयानीत्याह—**एभिरि**त्यादिना **यत्नगौरवादि**त्यन्तेन ॥

ननु वेदवाक्यवत् सूत्राण्यपि व्याख्येयानि, अन्यथा अनवगतार्थैर्वेद-वाक्यानि न व्याख्यायन्त इत्याशङ्क्याह—**पदार्थानामि**त्यर्धेन ॥

एवं यत्नगौरवशब्दौ तस्मिन् पक्षे समञ्जसौ, वेदवाक्यव्याख्यानमात्र-करणादित्याह—**एवंशब्दादिक** इत्यर्धेन ॥

प्रत्याख्यानपक्षं तावद्दूषयति भाविसूत्रव्याख्यानविरोधेन कारिकाद्वयेन—**पदच्छेदाद्यभावेनेति** ॥ उपायत्वादित्यस्य प्रत्याख्यानहेतोर्विरुद्धतामाह—**न चोपायानभिज्ञेने**त्यर्धेन ॥

ये तु विनैव सूत्रं वेदार्थं विजानन्ति, तान् प्रति सूत्रमेव नारब्धव्यमित्याह—**नान्यत** इत्यर्धेन ॥ इदानीं प्रसिद्धपदार्थकत्वादित्यस्य प्रत्याख्यानहेतोरिष्टविघात-कृल्लक्षणविरुद्धतामाह—**प्रत्याख्यानस्येति** ।

1. चेष्यते. चौ. मु. पेक्षते. मा.　　2. सापद. चौ. मु.

दुष्टव्याख्यानिषेधेन तदपेता न वार्यते ।
अस्य दृष्टविरुद्धत्वात् फल्गुत्वाच्चापि पूर्वयोः ॥ ४६ ॥

मध्यमे [1]चातिदौर्बल्यात् परिसंख्यैव युज्यते ।
वैदिकं जैमिनीयं च यत्र वाक्यं विरुध्यते ॥ ४७ ॥

यथाश्रुतगृहीतेऽर्थे तत्रेदमुपदिश्यते ।
अध्याहारादिभिः सूत्रं वैदिकं तु यथाश्रुतम् ॥ ४८ ॥

नेयं विरोधेऽन्योन्यस्य वैदिकानां भवन्तु ते ।
यथा धर्मावबोधस्य प्रमाणं वैदिकं वचः ॥ ४९ ॥

तदर्थनिर्णये हेतुर्जैमिनीयं तथैव नः ।
वाक्यसामर्थ्यतुल्यत्वात्तथा पदतदर्थयोः ॥ ५० ॥

अध्याहारादि[2]निर्मुक्ता व्याख्या सर्वत्र युज्यते ।
असम्भवादवश्यं या विरोधेऽन्यतरस्य तु ॥ ५१ ॥

वेदवाक्यार्थसन्देहप्रयुक्तं व्याख्यानं सूत्रेष्वपि समानमित्याह—**वाक्यार्थ** इति । अपि च दुष्टव्याख्याननिषेधेन तदपेताश्रितैव भाष्यकारेण व्याख्या, येनैवमाह — "नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः" इति । इतरथा ह्येवमव[3]क्ष्यत्—लौकिकार्थत्वेन सूत्राणि व्याख्यातव्यानीत्याह—**न व्याख्यातव्यमिति** ॥

दूषितं पक्षमुपसंहरन् पूर्वयोः फल्गुत्वं मध्यमे चातिदौर्बल्यं वदन् परिसंख्यापक्षं गृह्णाति—**अस्य दृष्टविरुद्धत्वादिति** ।

प्राप्त एव [4]अविरोधे लौकिकार्थग्रहणे, 'वेदवाक्याविरोधस्य सति सम्भवे लौकिकार्थग्रहणं कर्तव्यम्' इति पुनरुच्यमानम् 'वेद[5]वाक्यविरोधे न' इत्यन्यनिवृत्ति[6]फलं भवतीति कारिकाद्वयेन परिसंख्याफलस्य विषयमाह—**वैदिकमित्यादिना नेयमित्यन्तेन** । यत्र तु वेदवाक्यगत एवोपक्रमोपसंहारयोर्विरोधः तत्र प्रतिग्राहयेदिति विकल्पितमेवेत्याह—**विरोधेऽन्योन्यस्येति** ॥

1. चातिदौर्जन्यात्. चौ. मु.
2. रादिभिःमुक्ता. चौ. मु.
3. मवोचत्. मा.
4. विरोधे. मा.
5. वाक्याविरोधे. मा.
6. वृत्तिः फलं. मा.

अन्याय्यकल्पना सापि विकल्पेन प्रसज्यते ।
प्राथम्येनावरुद्धत्वादुपाय[1]वशतोऽथवा ॥ ५२ ॥

यथाश्रुतेन सूत्रेण न्याय्यां बाधेत चोदनाम् ।
तेन वेदा[2]विरोधस्य सति सम्भव इत्ययम् ॥ ५३ ॥

विधीयतेऽर्थः शेषं तु यथाप्राप्तमनूद्यते ।
शेषभाजां भवेल्लोप इत्यध्याहारकल्पना ॥ ५४ ॥

विप्रकर्षात् पशोश्चेति विभक्तिः [3]परिणम्यते ।
पदेन व्यवधानं तु लोके सन्नियमादिति ॥ ५५ ॥

सूत्रेण व्यवधानं[4] च पानव्यापदि कल्पितम् ।
पशुसामान्यविध्यादौ सूत्रमेवान्यथा कृतम् ॥ ५६ ॥

अग्नयश्च स्वकालत्वाद्देयधर्मापयातनम् ।
[5]व्याख्यातं वाक्यभेदेन गुणकल्पास्त्वमी कृताः ॥ ५७ ॥

ननु च तत्र चान्यत्र च प्राप्तौ परिसंख्या भवति, न च विरोधे लौकिकार्थग्रहणं सूत्रेषु प्राप्तमित्याशङ्क्य अविरोधवत् विरोधेऽपि परिसंख्यासमर्थनार्थं प्राप्तिं कारिकाद्वयेनाह—**यथा धर्मावबोधस्येति** ॥

तत्र विरोधे सति द्वयोर्यथाश्रुतग्रहणासम्भवात् पक्षे प्राप्तिरित्याह—**असम्भवादिति** ॥

वेदवाक्यार्थप्रतिपत्तावुपायत्वेन प्रथमं प्रतीयमानत्वाद्विरोध एव नास्तीति तत्तावद्यथाश्रुतमेव नित्यं गृह्यते, तस्मिंस्तु यथाश्रुते गृहीते वेदवाक्यमुपलभ्यमानं पूर्वसूत्रगृहीतार्थविरुद्धत्वादयथार्थतां प्रतिपद्यत इति सिद्धा तत्र चान्यत्र च प्राप्तिरित्याह—**प्राथम्येनेति** ॥

अतो भवति परिसंख्येत्याह—**तेन वेदाविरोधस्येति** । "लोके" इत्यादिभाष्यसंकीर्तनं सर्वं प्रमाणान्तरसिद्धमेवानूद्य 'वेदाविरोधस्य सति सम्भवे' इत्येतावन्मात्रं विधीयत इत्यर्थः ।

1. वशगोऽथवा मा.
2. वेदाविरुद्धस्य. चौ. मु.
3. परिणंस्यते. मा.
4. धानं तु. चौ. मु.
5. व्याख्यानं चौ. मु.

औत्पत्तिकस्तु गव्यस्य तथौष्णिककुकुभोरपि ।
दर्शनाच्च विशेषस्य तथाभ्युदय इत्यपि ॥ ५८ ॥

सूत्रकारप्रशंसा वा लोक इत्यादिनोच्यते ।
प्रसिद्धैरभिधानाद्धि न शिष्याः क्लेशिता यतः ॥ ५९ ॥

भवितव्यं तु तेनेति प्रागस्मादेकवाक्यता ।
वेदाध्ययनवाक्याद्वा तेनाथेत्यस्य दूषणम् ॥ ६० ॥

प्रसिद्धार्थपदैः शक्यः सूत्रैर्वेदार्थनिर्णयः ।
न च सोऽस्त्यथशब्दस्य विना ते पूर्वकर्मणा ॥ ६१ ॥

[1]प्रसिद्धार्थं पदं युक्तं तच्च नास्तीति दूषणम् ।
प्रसिद्धोऽप्यथशब्दादेः किं पदार्थोऽत्र वर्ण्यते ॥ ६२ ॥

इदानीं विरोधेऽध्याहारविपरिणामव्यवहितकल्पनावाक्यभेदगुणकल्पनाना-मुदाहरणानि कारिकाचतुष्टयेनाह—**शेषभाजामित्यादिना** सार्धेन ॥

प्रशंसापक्षं गृह्णाति—**सूत्रकारप्रशंसेति** ॥

एवमनुपासितगुरुव्याख्याविकल्पनाभिधानेन पारमार्थिकमथशब्ददूषणपक्षं गृह्णाति; तत्रेयता भाष्यग्रन्थेनाथशब्दो दूष्यत इति [2]विकल्पेनावधिद्वयमाह—**भवितव्यमिति** । पूर्व एवात्रावधिरभिप्रेतः, "भवितव्यं तु तेन"—इत्यस्य सिद्धान्तग्रन्थतयापि व्याख्यानात् ॥

अथायमभिप्रायः—आनन्तर्ये ह्ययमथशब्दो लोके प्रयुक्तः तच्च प्रतियोगि-सापेक्षम्; वेदाध्ययनं चात्र प्रतियोगित्वेनाभिप्रेतम्; न च तत् सूत्र उपात्तम्; नापि विध्याक्षेपलभ्यम्; अत्राध्ययनविधेरदृष्टार्थत्वेनानन्तरं विचारानाक्षेपकत्वा-दित्याह सार्धेन श्लोकेन—**प्रसिद्धार्थपदैरिति** । "तत्र लोकेऽयम्" इत्यादि भाष्यमथशब्दस्य दूषणपक्षे युज्यते, अनेनैवाथशब्ददूषणात् "न किञ्चिदिह वृत्तमुपलभ्यते" इत्येवमन्तेन सर्वव्याख्यादिषु किमथशब्दोपवर्णनेनेति चोदयति—**प्रसिद्ध** इत्यर्धेन ॥

1. प्रसिद्धार्थपदैर्युक्तम्. मा.          2. कल्पनाव मा.

**प्रदर्शनार्थमित्येके केचिन्नानार्थ[1]वादिनः ।**
**समुदायादवच्छिद्य भवदासेन कल्पितात् ॥ ६३ ॥**

**शक्तितोऽवयवं[2] चैत्र वर्णयन्त्यष्टमादिवत् ।**
**न चात्र चोदनाव्याख्या गौरवं तत्र चोदितम् ॥ ६४ ॥**

**यद्वाक्षेपो यथोक्तस्य वृत्ताभावादसम्भवात् ।**
**यदि लोकप्रसिद्धार्थग्रहणं क्रियते [3]पदे ॥ ६५ ॥**

**स नास्त्यताथशब्दस्येत्यध्याहारादिकल्पना ।**
**वेदाध्ययनवृत्तत्वं स्नानस्योत्कर्षकल्पना ॥ ६६ ॥**

**नाव्याख्यातेऽथशब्दार्थे ज्ञायते तेन वर्ण्यते ।**
**अनर्थकेऽथवान्यार्थे प्रसिद्धिर्बाध्यते ध्रुवम् ॥ ६७ ॥**

तत्र सर्वव्याख्यायां पूर्वस्यैवोदाहरणमेतदिति योजयति—**प्रदर्शनार्थमित्येक इति** । उपालम्भपक्षे योजयति—**केचिदित्यादिना अष्टमादिवदित्यन्तेन** । लोके ह्यथशब्दस्यैव केवलस्यानन्तर्यरूपोऽर्थः प्रसिद्धः, "अथ विशेषलक्षणम्" इति वचनात्; नाथातःशब्दस्येत्यर्थः ॥ प्रत्याख्याने योजयति—**न चात्रे**त्यर्धेन । गौरवभयात् प्रत्याख्यानम्, चोदनाव्याख्यायां तु तदित्यर्थः ॥

सांप्रतमथशब्दाक्षेपपक्षं प्रकारान्तरेण योजयितुमाह—**यद्वेति** सार्धेन श्लोकेन । पूर्वव्याख्यायां हि "भवितव्यं तु तेन" इति प्रागस्मात् सकलमिदं पूर्वपक्षभाष्यम्; इदानीं तु "**लोक**" इत्यादि "**गौरव**"पर्यन्तं सिद्धान्तभाष्यम्, अध्ययनविध्याक्षिप्ततया विचारस्याध्ययनं प्रत्यानन्तर्यसम्भवेनाथशब्दस्य लौकिकार्थ-ग्रहणोपपत्तेः । "तत्र लोकेऽयम्" इत्यादि, "न हि किञ्चिदिह वृत्तमुपलभ्यते" इत्येवमन्तमध्ययनविधेरदृष्टार्थतया विध्यनाक्षेपाभिप्रायेण पूर्वपक्षभाष्यमिति सिद्धान्तोपक्रममिदमधिकरणम् ॥

इदानीमाक्षेपपूर्वकमथशब्दोपवर्णने प्रयोजनमाह—**वेदाध्ययनेति** । स्मृति-मात्रप्राप्तस्नानबाधेनाध्ययनानन्तरं तद्धेतुकशास्त्रारम्भकर्तव्यतायां प्रयोजनमस्य दर्शयति ॥

1. वाचिनः चौ. मु.
2. यवस्यैव. मा.
3. पदैः मा.

[1]तस्माच्छ्रुतार्थसिद्ध्यर्थं वृत्तं किमपि गम्यते ।
विशिष्टलिङ्गविज्ञानाद्विशिष्टे लिङ्गिनीक्षिते ॥ ६८ ॥

सूत्रेणासम्भवं मत्वा नैतदित्यब्रवीत् परः ।
आनन्तर्योपदेशेन तद्दृष्टार्थतयापि च ॥ ६९ ॥

वेदाध्ययनमाक्षिप्तं किमसूत्रितचोदना ।
येन वृत्तेन जिज्ञासा विना नैवोपपद्यते ॥ ७० ॥

तदानन्तर्यमुक्तं हि दृष्टार्थमवकल्पते ।
क्रियमाणापि[2] जिज्ञासा नियमाद्यस्य कस्यचित् ॥ ७१ ॥

क्रियेतानन्तरैवेति व्यर्थं तदुपदेशनम् ।
सङ्कल्पादिभिरप्येषा विना सत्यं न सिध्यति ॥ ७२ ॥

साधारण्यात्तु तेऽप्यत्र नोपदेश्याः कथंचन ।
तस्माद्धर्मबुभुत्सायामसाधारणकारणम् ॥ ७३ ॥

"भवितव्यं तु तेन" इत्यादि सिद्धान्तभाष्यम्, तस्याभिप्रायमाह— **अनर्थक** इति । श्रुतानन्तर्यान्यथानुपपत्त्या किमपि वृत्तं गम्यत इत्यर्थः ॥

इदमपरं सिद्धान्तभाष्यं वृत्तविशेषप्रतिपादकम् "तत्तु वेदाध्ययनम्" इत्यादि; तदतिस्पष्टत्वान्न व्याख्यातम् । अत्र चोद्यभाष्यम् "नैतदेवम्, अन्यस्यापि" इति ; तस्यानुपपन्नतामशङ्क्योपपन्नतां दर्शयति—**विशिष्टलिङ्गेति**॥

यद्यपि विध्याक्षिप्तविचारविशेषि[3]तानन्तर्यरूपलिङ्गाद्विशिष्ट एव लिङ्गी वेदाध्ययनाख्यः[4] प्रतीयते, तथापि सूत्रेणायमंशो नोपात्त इति चोदयतीति केचित् । तदनुपपन्नम्; विध्याक्षिप्तस्य हि विचारस्यानन्तर्योपदेशात् तस्य दृष्टार्थत्वाद्वेदाध्ययनमाक्षिप्तमेवेत्याह—**आनन्तर्योपदेशेनेति** ॥

एतदेव युक्तिद्वयं कारिकाद्वयेन विवृणोति—**येन वृत्तेने**त्यादिना ॥

यद्यपि सङ्कल्पं विना नोपपद्यते, तथापि सर्वक्रियासाधारणत्वेन तं प्रत्यानन्तर्यमनुपदेश्यमेव, प्राप्तत्वादित्याह **सङ्कल्पादिभिरिति** ॥ उपसंहरति— **तस्मादिति** ॥

1. तस्मात्स्मृतार्थ. मा.
2. माणा च. चौ. मु.
3. तमानन्तर्य मा.
4. नाख्यं. मा.

**निर्वृत्तं सूत्रकारेष्टं तच्च नाध्ययनादृते ।**
**अन्यस्यापीत्यनेनैव वेदपाठे[1]ऽवबाधिते ॥ ७४ ॥**

**प्रागपीति न वक्तव्यं तत्राप्यन्यस्य सम्भवात् ।**
**पूर्वेणैव[2] च लब्धेऽर्थे तादृशीं त्वित्यनेन किम् ॥ ७५ ॥**

**वक्ष्यमाणमनालोच्य संभवेत् परिचोदना ।**
**न तावत् साध्यतेऽद्यापि चोदना धर्मसाधनम् ॥ ७६ ॥**

**इह वा कानि वाक्यानि विवरिष्यति जैमिनिः ।**
**[3]धर्ममात्राभिधानाद्धि बुद्धादिवचनान्यपि ॥ ७७ ॥**

**पठित्वा धर्मजिज्ञासेत्यन्यस्यापीति [4]चोद्यते ।**
**यद्वा भवतु नामेदृक् सूत्रं वेदमधीत्य [5]च ॥ ७८ ॥**

पूर्वचोद्य एवान्तर्गतत्वादिदमपि चोद्यभाष्यम्—"प्रागपि च वेदाध्ययनात्" इत्यनुपपन्नमेवेत्याह—**अन्यस्यापीति** ॥

इदमपरं सिद्धान्तभाष्यम्—"तादृशीं तु" इति, "तत्तु वेदाध्ययनम्" इत्यनेन पुनरुक्तत्वादनुपपन्नमेवेत्याह—**पूर्वेणैवे**त्यर्धेन ॥

एवमाक्षिप्ते सति "नैतदेवम्, अन्यस्यापि" इति परिचोदनां तावद्व्याचष्टे **वक्ष्यमाणेति** सार्धेन कारिकाद्वयेन । अथशब्दो हि धर्मजिज्ञासामात्रस्य तावदानन्तर्यं प्रतिपादयति; न च चोदनैकप्रमाणत्वं धर्मस्याद्यापि सिद्धम् । अतो बुद्धवाक्याध्ययनानन्तरं धर्मजिज्ञासेत्यपि सूत्रार्थः संभवतीत्यभिप्रायः ॥

इदानीं परिचोदनाद्वयमप्यन्यथा व्याख्यास्यन्नाह—**यद्वा भवतु नामेदृक् सूत्र**मित्यादिना श्लोकचतुष्टयेन । अयमभिप्रायः—भवतु नामाध्ययनविधेर्दृष्टार्थत्वपर्यालोचनया वेदमधीत्यानन्तरं धर्मजिज्ञासेत्येष सूत्रार्थः, तथापि चोद्यद्वयम्; यतोऽधीत्यैव, अनन्तरमेवेति द्वयमत्र विवक्षितम्; न च तच्छक्यम्, "[6]**न चैतदेकं** वाक्यम्" इत्यादिभाष्यनिषिद्धवचनव्यक्तिद्वयपरिग्रहे वाक्यभेदप्रसङ्गात्; तत्र

1. पाठे प्रबा. चौ. मु.
2. व हि लब्धार्थे. चौ. मु.
3. इदमर्धं नास्ति. मा.
4. चोदना. चौ. मु.
5. तु. चौ. मु.
6. न ह्येत. चौ. मु.

जिज्ञासानन्तरं कार्येत्यत्रापि द्वयमीप्सितम् ।
नानधीत्य न चाप्यन्यत् [1]कृत्वेत्येवं न लभ्यते ॥ ७९ ॥

वक्ष्यमाणवचोभङ्ग्योर्वाक्यभेदप्रसङ्गतः ।
अधीत्यैवेति हि विधौ स्नानादेरप्यनन्तरा ॥ ८० ॥

भवेद्धर्मस्य जिज्ञासा नानन्तर्यविधिस्तदा ।
आनन्तर्यविधित्वे[2] तु या वेदाध्ययने कृते ॥ ८१ ॥

इत्येवमनुवादत्वात् प्रागप्येषा प्रसज्यते ।
बुद्धवाक्यादिपाठस्य तादृशीं त्वित्यपाक्रिया ॥ ८२ ॥

प्रागपीति च चोद्यस्य सामर्थ्याद्वेदलाभतः ।
नैवैतयोर्वचोभङ्ग्योरेकोऽ[3]प्यर्थो विधीयते ॥ ८३ ॥

अधीत्यैवेत्येतस्मिंस्तात्पर्येऽप्यन्यस्यापि स्नानादेरनन्तरं प्राप्नोति, आनन्तर्यस्याविहितत्वात्; अथानन्तरमेवेत्येष सूत्रार्थः, तत्राप्यधीत्यैवेत्येतस्याविहितत्वात् "प्रागपि वेदाध्ययनात्" इति चोद्यम् । एवं गते "तादृशीं तु" इति सिद्धान्तभाष्यमाक्षिप्तं व्याचष्टे—**बुद्धवाक्येत्यर्धेन** । यदि तावद्वक्ष्यमाणमनालोच्य "नैतदेवम्, अन्यस्यापि" इति चोद्यम्, तदा वक्ष्यमाणपर्यालोचनया परिहारः । तदुक्तम्—"वेदवाक्यानामनेकविधो विचार इह वर्तिष्यते" इति । अथ वचनव्यक्तिद्वयासम्भवेनान्यतरवचनव्यक्तिपरिग्रहाभिप्रायेण चोद्यद्वयम्, तत्रापि "अपि च, नैव वयमिह" इत्यादिना "[4]एवमर्थोऽयमुपदेशः" इत्येवमन्तेन अथशब्दार्थविधानवचनव्यक्तिपक्षं गृह्णाति भाष्यकारः ॥

यत्त्वेतस्मिन् पक्षेऽधीत्यैवेत्यस्याविहितत्वात् "प्रागपि च वेदाध्ययनात्" इति चोदितम्, तत्परिहारेऽपि "तादृशीं तु" इति भाष्यं योजयति—**प्रागपीति च चोद्यस्येति** । अध्ययनविधिदृष्टार्थत्वेन हि तद्विधिप्रयुक्तस्य विचारस्याध्ययनात् पूर्वं प्रयोजकाभावेन कुतः प्रसक्तिरित्याह—**सामर्थ्याद्वेदलाभत इति** ॥

इदानीं तीर्थान्तरव्याख्यानमुपन्यस्यति स्वास्यैव भाष्यस्य—**नैवैतयोरिति** त्रिपाद्या । नाथशब्दार्थस्य विधानम्, नानधीतवेदस्य प्रतिषेधकमेव तु सूत्रमिति

1. कृत्वेत्येतन्न. चौ. मु.
2. न्तर्यविधाने, चौ. मु.
3. प्यर्थोऽभि. मा.
4. एवमर्थ उपदेश मा

अपिचेत्यादिकेनोक्तं किन्त्वित्येतद्विधीयते ।
आनन्तर्यं [1]परस्ताच्च नापि शिष्म इतीह तु ॥ ८४ ॥

केचिदध्याहरन्त्यस्य सूत्रस्यान्यपरत्वतः ।
न वार्यतेऽनधीतत्वं नानन्तर्यं विधीयते ॥ ८५ ॥

सामर्थ्यासिद्ध्यदृष्टार्थप्रसङ्गात्तेन लक्षणा ।
आनन्तर्यवचोव्यक्तिराश्रितैवात्र लक्ष्यते ॥ ८६ ॥

श्रुतार्थं[2] तु परित्यज्य लक्षणार्थो विधीयते ।
प्रतीता धर्मजिज्ञासा वेदाध्यायादनन्तरा ॥ ८७ ॥

"अपि च, नैवमिह" इत्यादिना भाष्येणोक्तम् । किं तर्हि विधीयत इत्याह—**किन्त्वित्येतद्विधीयत इति** । "किंतु अधीते वेदे द्वयमापतति" इत्यस्यार्थः । स्मृतिप्राप्तगुरुकुलनिवृत्तिव्यावृत्तिर्विधीयत इत्यर्थः ॥

ननु चानधीतवेदस्य प्रतिषेधनिरासपरमिदं भाष्यम् "अपि च, नैव वयमिह" इत्यादि, नाथशब्दार्थविधिनिरासपरम्; अत आह—**आनन्तर्यमित्याद्यध्याहरन्त्यन्तेन** । यद्यपि च 'नापि परस्तादानन्तर्यं शिष्मः' इति न श्रूयते, तथाप्यध्याह्रियते । अध्याहारे कारणमाह—**अस्य सूत्रस्यान्यपरत्वत** इति । गुरुकुलनिवृत्तिव्यावृत्तिपरत्वेन सूत्रस्यान्यपरत्वादिति ॥

इदानीं तत्पक्षोक्त एव[3] प्रतिज्ञाद्वये यथासंख्येन हेतुद्वयमाह—**न वार्यत** इति ।

अध्ययनविधिप्रयुक्तस्य विचारस्याध्ययनात् प्राक् प्रयोजनाभावेनाप्रसक्तप्रतिषेधानर्थक्यादविधिः; गुरुकुलनिवृत्तिव्यावृत्तिव्यतिरेकेण चानन्तर्यविधानेऽदृष्टार्थत्वप्रसङ्गाल्लाक्षणिकार्थो गुरुकुलनिवृत्तिर्विधीयत इत्यर्थः ।

तद्दूषयति—**आनन्तर्येति** । त्वयाप्यथशब्दस्यार्थविधानमङ्गीकृतमेवादृष्टार्थत्वभयेन; अभिधेयाविनाभूतो लाक्षणिकोऽर्थो गुरुकुलान्निवृत्तिव्यावृत्तिर्विधीयत इत्यभ्युपगमात् ॥

1. पुरस्ताच्च. चौ. मु. पर. रत्नाकरे.
2. र्थन्त्वपरि. चौ. मु. रत्नाकरसम्मतश्च.
3. दानीमक्षतोक्तमेव. मा.

तत्कालस्यावरुद्धत्वात् स्नानाभावं हि लक्षयेत् ।
विरोधो युगपत्प्राप्तेर्दौर्बल्यं वेदबाधनात् ॥ ८८ ॥

स्नानस्य तेन बाधः स्याद्धर्मजिज्ञासया बलात् ।
दृष्टार्थस्नादिसंयुक्तं वाक्यं लक्षणया स्थिति ॥ ८९ ॥

पुनरुक्त्या गतार्थत्वात्त्यक्तं कैश्चित्तदुच्यते ।
यद्यप्यस्य भवेद्वाच्यमानन्तर्यमसंशयम् ॥ ९० ॥

तथापि पूर्वतामात्रं ल..वेदविरोधतः ।
ग्रन्थग्रहणमात्रे च कृते स्नानं विरुध्यते ॥ ९१ ॥

कथं पुनरथशब्दो गुरुकुलनिवृत्तिव्यावृत्तिं लक्षयतीत्यत्राह—**प्रतीतेति** । अध्ययनविधिनाध्ययनानन्तरमाक्षिप्तो हि विचारो गुरुकुलनिवृत्तिव्यावृत्तिं लक्षयतीत्यर्थः । "यद्येवम्" इत्यादि पूर्वपक्षभाष्यं स्मृतिप्राप्तस्नानबाधेनानन्तरं धर्मजिज्ञासाक्षेपमाक्षिपति, तदपि स्पष्टत्वान्न व्याख्यातम् ॥

"तदुच्यते" इत्यादि सिद्धान्तभाष्यं व्याचष्टे—**विरोध इति** । प्रयोगवचनचोदिताङ्गप्रधानयौगपद्येनाध्ययनविधिविरोधात् "वेदमधीत्य स्नायात्" इत्यस्य बाधः । उक्तं च—"अङ्गप्रधानवत्यां भावनायां युगपत् पुरुषनियोगः" इति ॥

"न च अधीतवेदस्य" इत्यपरं सिद्धान्तभाष्यं विरोधाभावमाह, क्त्वाप्रत्ययेनानन्तर्यस्यानभिहितत्वात्, "समानकर्तृकयोः पूर्वकाले" इति स्मरणात् । तदतिस्पष्टत्वान्न व्याख्यातम् । दृष्टार्थता चाध्ययनस्यानन्तर्ये व्याहन्येत, लक्षणया [1]त्वेषोऽर्थः स्यात्" इति च भाष्यद्वयम् । तत्राद्यम् "वेदमर्थवन्तं सन्तमनर्थकम्" इत्यनेन पुनरुक्तम्; उपरितनं चाविज्ञायमानार्थत्वेन त्यक्तं कैश्चिदित्याह—**दृष्टार्थत्वादीति** ॥

तदेतद्भाष्यद्वयमपि समर्थयितुमाह—**यद्यपीति** । यद्यपि क्त्वाप्रत्ययस्यानन्तर्यमर्थः, तथाप्यध्ययनविधिविरोधपरिहाराय पूर्वकालमात्रं प्रतिपादयतीत्यर्थः । लक्षणा चात्रोभयक्रियाविनाभू[2]तक्त्वेतिप्रत्यायार्थैकदेशवृत्तिरभिप्रेता ॥

इदानीमात्मीयमविरोधप्रकारं दर्शयितुमाह—**ग्रन्थग्रहणमात्र इति** । "इण् गतौ" इत्यस्येदं रूपमिति यावत् ।

1. त्वेषोऽर्थो न स्यादिति न भाष्यं.मा.
2. भूतत्वेतिप्र......र्थैक. मा.

अधीत्येत्यधिगम्येति व्याख्याने त्वविरोधिता ।
यस्त्वेवमविरोधित्वं कुर्वन्नाप्लवनं वदेत् ॥ ९२ ॥

अदृष्टायाथवाप्यन्यं[1] संस्कारं तस्य चोत्तरम् ।
इहास्नानादिनियमो यः कृतो ब्रह्मचारिणः ॥ ९३ ॥

अवधित्वमनाश्रित्य सोऽवसानमपेक्षते ।
ततोऽपेक्षावशात् स्नानमस्नानादिनिवर्तनम् ॥ ९४ ॥

विरोधसाहचर्याभ्यां दृष्टार्थत्वेन लक्षयेत् ।
तस्माद्ध्ययनस्नानजिज्ञासाक्रमवाचिनाम् ॥ ९५ ॥

दृष्टार्थत्वाय शब्दानामेवं व्याख्येयमाश्रिता ।
स्नात्वा जिज्ञासमानोऽपि ननु वेदं न बाधते ॥ ९६ ॥

"न चेदं स्नानमदृष्टार्थम्" इत्यादिभाष्यं स्मृत्यर्थव्याख्यानपरम्; तस्यार्थमाह—**यस्त्वेवमिति**। यस्तु विरोधपरिहाराय आप्लवनं स्मृत्यर्थं ब्रूयात् अन्यं वा कथञ्चिददृष्टार्थसंस्कारम्, तस्योत्तरम्—"न चेदम्" इति भाष्येण ॥

कः पुनरस्याः स्मृतेरर्थ इत्याह—**इहास्नानादिनियम** इत्यादिना श्लोकद्वयेन। ये ह्यस्नानादिगुरुकुलवासादयो ब्रह्मचारिधर्मत्वेन व्रतक्रमे नियमाः श्रूयन्ते, तेषां निरवधिकानामवध्यपेक्षायामवधिप्रतिपादिकेयं स्मृतिः—"वेदमधीत्य स्नायात्" अस्नानादीन्न कुर्यात्—इति ह्यविरोधादस्नानं तत्सहचरितत्वाच्च गुरुकुलवासादीन् लक्षणया निवर्तयति। एवमपेक्षितार्थविधानाद्दृष्टार्थत्वं स्मृत्यर्थस्य आप्लवनविधाने त्वदृष्टता ॥

इदानीमादित एवारभ्य प्रकरणार्थमुपसंहरति—**तस्मादिति**। जिज्ञासाक्रमवाचिनोऽथशब्दस्य यद्गुरुकुलनिवृत्तिव्यावृ[2]त्तिपरत्वं व्याख्यातम्, आप्लवनस्नानवाचिनश्च स्नायादित्येतस्य यद्ब्रह्मचारिनियमावधिप्रतिपादनपरत्वं व्याख्यातम्, "स्वाध्यायोऽध्येतव्यः" इत्यस्य च दृष्टार्थत्वम्, तदेतेषां दृष्टार्थत्वायेत्यर्थः ॥

भवतु गुरुकुलनिवृत्तिरेव स्मृत्यर्थः, तथापि तदुत्तरकालमध्ययनविध्याक्षिप्तस्य विचारस्य करणान्नैव विरोध इति चोदयति—**स्नात्वेति** त्रिपाद्या ।

1. न्यः संस्कारस्तस्य चौ. मु.  2. omitted व्यावृत्ति. मा.

तेनावि[1]रोधिता तस्येत्येवं वदत उत्तरम् ।
यथैवाध्ययनात् स्नानं स्मर्यते समनन्तरम् ॥ ९७ ॥

तथा ततः परोऽप्यन्यः पदार्थोऽन्यस्ततः परः ।
ततश्चावश्यकर्तव्ये बाधे स्मार्तस्य कस्यचित् ॥ ९८ ॥

योग्यत्वादागते काले प्राथम्यात् स्नानबाधनम् ।
सोऽयं पाठक्रमस्यार्थाद्बाध इत्यवगम्यते ॥ ९९ ॥

गुणप्रधानयोर्वापि विरोधाद्गुणबाधनम् ।
स्नानोपलक्षिता चात्र निवृत्तिर्गुरुवेश्मनः ॥ १०० ॥

विरोधित्वेन बाध्येत न तु मध्वादिभक्षणम् ।
तस्माद्गुरुकुले तिष्ठन् मधुमांसाद्यवर्जयन् ॥ १०१ ॥

जिज्ञासेताविरुद्धत्वाद्धर्ममित्यवगम्यते ।
गुरुगेहनिवृत्त्यंशो [2]यावन्न च समाप्यते ॥ १०२ ॥

अत्र परिहारमाह—**एवं वदत** इत्यादिना सपादेन श्लोकद्वयेन । तत्रैवं तावदुक्तमेव—गुरुकुलनिवृत्तेर्बाधकारणं "स्वाध्यायोऽध्येतव्यः" इति । करणेतिकर्तव्यतयोर्यौगपद्यविधानेन विरोधात् । इदानीमिदमुच्यते—स्मार्तपदार्थमबाधित्वैतस्याभिनिवेश एव नास्ति; तद्वरं तत्कालप्रतिपक्षत्वेन विरोधाद्गुरुकुलनिवृत्तिमेव बाधत इति श्लोकद्वयस्यार्थतात्पर्यम् ॥

युक्तं चैतत्, पाठक्रमस्यार्थेन बाध्यस्याभ्युपगमात्; क्रमपदार्थविरोधे वा क्रमस्य बाध इत्याह—**सोऽयमिति** ॥

स चायं विरोधकारणको बाधः स्मृत्यर्थैकदेशस्य गुरुकुलनिवृत्तेः, न समस्तस्येत्याह—**स्नानोपलक्षितेति** ॥

स्वाध्यायाध्ययनविधेः "वेदमधीत्य स्नायात्" इति स्मृतेश्चार्थं व्याख्यायाधुनानुष्ठानक्रममाह—**तस्मादिति** ॥

नन्वेवं सति मधुभक्षणवत् दारसङ्ग्रहोऽपि विरोधाभावात् प्राप्नोतीत्याशङ्क्याह—**गुरुगेहेति** । सकलब्रह्मचारिधर्मनिवृत्तौ सत्यां स्नातको भवति;

1. रोधि शास्त्रं स्यादेवम्. मा. 2. यावच्च न. चौ. मु.

तावत् सकलवाचित्वान्न स्नानं पर्यवस्यति ।
गुरुगेहादनावृत्तः स्नातको[1] न हि कथ्यते ॥ १०३ ॥

तत्परत्वविधानाच्च न तावद्दारसङ्ग्रहः ।
व्याख्याय कीर्तिता चात्र स्नायादिति पुनः स्मृतिः ॥ १०४ ॥

समावर्तिष्ट मेत्यादि स्मृतेर्यद्यप्यनन्तरम् ।
विपरीतार्थमित्यस्मात्तद्वाक्यादपनीयते ॥ १०५ ॥

अथशब्देन यो बाधः पुरस्तादुपवर्णितः ।
तन्मात्रस्यैव बाधोऽत्र दृष्टा[2]र्थत्वेन दर्शितः ॥ १०६ ॥

स्मृतिप्राप्तमिदानीं तु मधुमांसाद्यवर्जनम् ।
प्रतिषेधन्नदृष्टार्थं सूत्रकारो न शोभते ॥ १०७ ॥

निवृत्त्य [3]गुरुवासाच्च जिज्ञासोर्यः पुनर्भवेत् ।
प्रवेशः सोऽप्यदृष्टार्थ इति नैवेह[4] संस्थितिः ॥ १०८ ॥

स्नातकस्य च दारसङ्ग्रहः स्मर्यते—"स्नात्वा भार्यामधिगच्छेत्" इति । एतदेव विवृणोति—**गुरुगेहादिति** ॥

इदमपरं भाष्यद्वयम्—"वेदमधीत्य स्नायात्, गुरुकुलान्मा समावर्तिष्ट"[5] इति । तत्राद्यम् "एवं हि समामनन्ति—अधीत्य स्नायात्" इत्यनेन पुनरुक्तमाशङ्क्याह—**व्याख्यायेत्यर्धेन** ॥

उपरितनं तु स्मृतिविपरीतार्थप्रतिपादकत्वेन विरुद्धतामाशङ्क्यापकृष्य व्याख्येयमित्याह—**समावर्तिष्टेति** ॥

अथापकृष्य क्व प्रदेशे व्याख्येय इत्याह—**अथशब्देनेति** । योऽयमथशब्देन स्मृत्यर्थबाध उक्तः, स दृष्टार्थत्वेन गुरुकुलनिवृत्त्यंशमात्रस्येत्यर्थः ॥

अविरुद्धानि तु मधुभक्षणादीनि बाधमानो निष्प्रमाणकत्वान्न शोभत इत्याह—**स्मृतिप्राप्तमिति** ॥

"वेदमधीत्य स्नायात्" इत्यस्माद्गुरुकुलान्निवृत्तः "स्वाध्यायोऽध्येतव्यः" इत्यस्माच्च पुनः प्रविश्य धर्मं जिज्ञासमानो विरोधाभावान्नैवं स्मृत्यर्थं बाधत

1. तको हि न. चौ. मु.
2. ष्टार्थत्वात्प्रद. चौ. मु.
3. गुरुगेहाच्च जिज्ञासार्थः. चौ .मु.
4. ह सूत्रितः चौ. मु.
5. वर्तयेत्. मा.

**निर्गमो हि कृतार्थस्य दृष्टार्थो गुरुवेश्मनः ।**
**स्मर्यते तस्य नार्थः स्यादकृतार्थस्य निर्गमे[1] ॥ १०९ ॥**

**अथशब्दप्रसिद्ध्यैव वेदा[2]ध्ययनहेतुता ।**
**आनन्तर्योपदेशित्वादतःशब्देन किं पुनः ॥ ११० ॥**

**योग्यत्वमथशब्देन यद्यपि प्रतिपाद्यते[3] ।**
**तदेव हेतुरत्रेति नातःशब्दं विना[4] भवेत् ॥ १११ ॥**

**लक्षणं पुरुषस्यैव तदा तद्धि प्रसज्यते ।**
**जिज्ञासायाश्च हेतुत्वे फलार्थित्वादि संभवेत् ॥ ११२ ॥**

इत्याशङ्क्याह—**निवृत्त्येति** द्वाभ्याम् । अध्ययनविधिविरोधात् स्मृतेरदृष्टार्थत्वान्नैव निवर्तयतीति श्लोकद्वयस्यार्थः ॥

"अतःशब्दो वृत्तस्यापदेशको हेत्वर्थेन[5]" इति भाष्यं अतःशब्देन वेदाध्ययनस्य धर्मजिज्ञासां प्रति हेतुत्वमुक्तमित्येतत् प्रतिपादयति; तदाक्षिपन्नाह—**अथशब्देति ।** आनन्तर्योपदेशदृष्टार्थत्वाभ्यामथशब्देनैवाध्ययनस्य जिज्ञासां प्रति हेतुत्वमुक्तम्, किमतःशब्देनेति । तदुक्तम्—"तत्तु वेदाध्ययनम्, तस्मिन् हि सति सावकल्पते" इति । तद्व्याख्यातम्—

"आनन्तर्योपदेशेन तद्दृष्टार्थतयापि च" । इति ॥

एवमाक्षिप्ते सति अथातःशब्दयोर्विविक्तविषयप्रदर्शनपूर्वकं **श्लोकद्वयेन** परिहारमाह—**योग्यत्वमित्यादिना** । अयमभिप्रायः—"स्वाध्यायोऽध्येतव्यः" इत्यध्य[6]यनविधिरेवेतिकर्तव्यताभूतस्य धर्मविचारस्योत्पादकोऽनुष्ठापकश्च; तत्रोत्पत्तावथशब्देनाध्ययनस्य हेतुत्वमुक्तम् । प्रदर्शितं च "तस्मिन् हि सति सावकल्पते" इति । अतःशब्दोऽप्यध्ययनविधेरेव धर्मजिज्ञासां प्रत्यनुष्ठापकत्वलक्षणं प्रयोजकहेतुत्वमाह ॥

अकथ्यमाने तु धर्मजिज्ञासां प्रत्यध्ययनविधेरनुष्ठापकत्वे 'अधीतवेदस्य धर्मजिज्ञासायां योग्यता' इत्येतावन्मात्रे कथ्यमानेऽथशब्देन, फलार्थिताप्यनुष्ठापकत्वेनाशङ्क्येतेत्याह—**लक्षणं पुरुषस्यैवेति** ॥

1. निर्गमः मा.
2. दग्रहणहे चौ मु.
3. पादितम् चौ. मु.
4. शब्दाद्विना चौ. मु.
5. हेत्वर्थः मा.
6. यनविधेरेवेतिकर्तव्यभूतस्य धर्मविचार. ...ष्ठापकश्चविषया...स्य हेतु मा.

अतःशब्दगृहीतं वा तत्राध्ययनमाश्रितम् ।
हेतावकथ्यमाने हि मङ्गलाद्यप्यसौ वदेत् ॥ ११३ ॥

स्नानबाधस्य वा हेतुरत इत्युच्यते पुनः ।
योग्यस्याधीतवेदत्वान्नावस्थातुं हि लभ्यते ॥ ११४ ॥

सन्वाच्येच्छान्तरं कर्म ज्ञानं व्याप्नोति तावता ।
ज्ञानोपसर्जना सेव न तु विध्यादि गम्यते ॥ ११५ ॥

इषेस्तु कर्म [1]बाह्यं स्याद्धर्मः सा वाथवा द्वयम् ।
समानकर्तृकत्वं तु तुमुनोक्तं लिङा विधिः ॥ ११६ ॥

एवं विषयनानात्वान्न क्वचित् पुनरुक्तता ।
सूत्रितेच्छाभिनिर्वृत्त्यै द्वितीयेच्छात्र दर्शिता ॥ ११७ ॥

व्याख्यानान्तरमाह—**अतःशब्दगृहीतं वेति** । आनन्तर्यप्रतिपादनेनाथशब्दो वेदग्रहणस्य हेतुत्वमाक्षिपति ; हेतुप्रतिपादकातःशब्दसहितश्चाथशब्द आनन्तर्यं प्रतिपादयति ; विना तु तेन मङ्गलार्थताप्याशङ्क्येतेत्यर्थः ॥

व्याख्यानान्तरमाह—**स्नानबाधस्येति** । भवतु नामाध्ययनादुत्तरकालमध्ययनविधिप्रयुक्तो यो विचारः; अनन्तरमेव तु स्मृत्यर्थबाधेन स कर्तव्य इत्यत्र किं प्रमाणमित्याशङ्क्य प्रयोगवचनचोदितयौगपद्यपर्यालोचनयाध्ययनस्यैव स्नानबाधं प्रत्ययमथशब्दो हेतुत्वमाह 'अध्ययनविध्यनन्तरं न स्नानं कर्तव्यम्, तदाक्षिप्तविचारकरणविरोधात्' इति ॥

"धर्मं जिज्ञासितुमिच्छेत्" इति भाष्यम् ; तत्र सनस्तुमुन इषेर्लिङश्च समानार्थतां निरस्यन्नाह—**सन्वाच्येच्छान्तरं कर्मे**त्यादिना श्लोकद्वयेन सार्द्धेन । यद्यपि स्मरणात् सना धातुना तुमुना लिङा चेच्छोच्यते, तथापि विषयान्यत्वादपौनरुक्त्यम्, प्रकृत्यर्थज्ञानकर्मिका हीच्छा सनोच्यते ; इषिणा तु सन्वाच्येच्छाकर्मिका धर्मोभयकर्मिका वा, तुमुना समानकर्तृकत्वम्, लिङा विधिः ; इच्छार्थेषु लिङ्प्रत्ययस्योपपदविशेषणत्वादनुपात्तमपीच्छान्तरं सूत्रकृता [2]सूत्रितेच्छाभिनिर्वृत्त्यर्थं भाष्यकृतोक्तम् "इच्छेत्" इति ; तदाह—**सूत्रितेत्यर्धेन** ॥

1. बाह्यः चौ मु. 2. सूचितेच्छा मा.

**प्रकृत्या विकृतिर्यस्माच्चतुर्थ्यन्ता समस्यते ।**
**तादर्थ्ये यूपदार्वादौ तेनास्मिन्नसमासता ॥ ११८ ॥**

**सा हि तस्येत्यनेनोक्तो धर्मस्येत्येष विग्रहः ।**
**धर्मायेति तु तादर्थ्ये षष्ठी वृत्तेति कथ्यते ॥ ११९ ॥**

**प्राप्नोत्यत्र चतुर्थ्येव विशेषश्चेद्विवक्षितः ।**
**सामान्यस्य विवक्षायां तादर्थ्यं कथ्यते कथम् ॥ १२० ॥**

**सम्बन्धमात्र एवैषा षष्ठ्युत्पन्ना तथापि तु ।**
**विशेषनिष्ठता तस्य भाष्यकारेण वर्ण्यते ॥ १२१ ॥**

एवमथातःशब्दौ व्याख्याय अधुना धर्मजिज्ञासापदं व्याचष्टे—"धर्माय जिज्ञासा धर्मजिज्ञासा" इति भाष्यकारः; तदाक्षिपन्नाह—**प्रकृत्येति** । तादर्थ्यसमासो हि प्रकृतिविकारभाव इष्यते; "चतुर्थी तदर्थार्थ" इति चेन्न, "प्रकृतिविकृतिग्रहणं च कर्तव्यम्" इति स्मरणात् । न चेदं सामर्थ्यप्रदर्शनपरम् "समर्थः पदविधिः" इत्यनेनैव सिद्धत्वात्; बलिहितग्रहणानर्थक्यप्रसङ्गाच्च; रन्धनाय स्थालीत्यादिषु समासप्रसङ्गात् ।

तत्र परिहारमाह—**सा हीति** । इदमत्र[1] विग्रहवाक्यम् "धर्मस्य जिज्ञासा" इति । तदिदमुक्तम्—"सा हि तस्य ज्ञातुमिच्छा" इति । धर्माय जिज्ञासा—इति वि[2]गृहीतषष्ठ्यर्थकथनपरं भाष्यम् ॥

ननु तादर्थ्यलक्षणसम्बन्धविशेषविवक्षायाम् "तादर्थ्ये चतुर्थ्युपसंख्यानम्" इति चतुर्थ्येव प्राप्नोति; सम्बन्धमात्रविवक्षायां तु कथं तादर्थ्यलक्षणसम्बन्ध इति चोदयति—**प्राप्नोतीति** ॥

तत्र परिहारमाह—**सम्बन्धमात्र इति** । [3]अत्रायमभिप्रायः—शेषलक्षणा चेयं षष्ठी, स तु तादर्थ्यलक्षणसम्बन्धादन्यः[4] शेष इति दर्शितम् ॥

"स कथं [5]धर्मो जिज्ञासितव्यः" इत्युपक्रम्य "कान्यस्य साधनानि, कानि साधनाभासानि" इति भाष्यम्; तत्र साधनाभासपदं व्याचष्टे **साधनाभासतेत्यादिना** श्लोकेन ॥

1. मर्थ मा.
2. ग्रहीकृतः मा.
3. अथा मा.
4. न्धजन्यः मा.
5. Omitted धर्मः शा. मा.

साधनाभासता चात्र पूर्वपक्षार्थगोचरा ।
अन्यसाधनमन्यस्य साधनाभासमुच्यते ॥ १२२ ॥

क्रत्वर्थं पुरुषार्थस्य तदर्थं च क्रतोरिति ।
शेषलक्षणशब्दश्च कृत्स्नशास्त्रविवक्षया ॥ १२३ ॥

प्रसिद्धः शक्यते ज्ञातुं प्रसिद्धत्वाच्च नेष्यते ।
अप्रसिद्धस्त्वशक्यत्वान्नतरामित्यतोऽब्रवीत् ॥ १२४ ॥

जिज्ञास्यः संशयाद्धर्मः श्रेयस्करतयापि च ।
असंदिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः ॥ १२५ ॥

स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यते ।
पूर्वं प्रमाणरूपाभ्यां पादेनाद्येन[1] निर्णयः ॥ १२६ ॥

तत्रैव चोदाहरणमाह—**क्रत्वर्थमित्यर्धेन**। "क पुरुषपरत्वं [2]धर्मस्य, क पुरुषो गुणभूतः" इति षाष्ठं वस्तु संकीर्त्य "शेषलक्षणे व्याख्यातम्" इत्युक्तं भाष्यकारेण; तदनुपपन्नम्, शेषलक्षणशब्दस्य तार्तीयलक्षणविषयत्वादित्याशङ्क्याह—**शेषेत्यर्धेन**। अवशिष्टवचनत्वेन सर्वलक्षणविषयत्वाददोषः ॥

"धर्मः [3]प्रसिद्धोऽप्रसिद्धो वा" इति भाष्यमभ्युपगम्याध्ययनविधेर्दृष्टार्थत्वं विचारप्रयुक्तिमाक्षिपति; तत्र "अप्रसिद्धो नतराम्" इत्यत्र भाष्ये नञर्थस्यातिशयाभावात् तरप्प्रत्ययस्यासाधुत्वमाशङ्क्य व्याचष्टे—**प्रसिद्ध इति**। प्रसिद्धे हि निष्फलो विचारः अप्रसिद्धे तु कामनाभावात् प्रेरणैव न संभवतीति शङ्कार्थः ॥

"अथवार्थवत्" इत्यादि "स हि निःश्रेयसेन पुरुषं संयुनक्ति" इत्येवमन्तं सिद्धान्तभाष्यम्; तद्व्याचष्टे—**जिज्ञास्य इत्यर्धेन** ॥ सन्दिग्धत्वं सप्रयोजनत्वं च विचाराक्षेपकारणमुक्तम्; एकैकं तु नाक्षिपतीत्याह—**असन्दिग्ध इत्यर्धेन** ॥

ननु धर्मे प्रतीयमाने वेदेन[4] कथमित्याकाङ्क्षायामर्थगत[5] एव विचारः "आम्नायस्य क्रियार्थत्वात्" इत्याक्षिप्येत; न तु प्रथमपादगतः प्रमाणाप्रमाणविचारः, वाक्यार्थावगतावनुपायत्वात् इत्याशङ्क्याह—**स्वरूपादिष्विति** त्रिपाद्या ।

1. नाद्यस्य. चौ. नु.
2. Omitted धर्मस्य शा. भा.
3. प्रसिद्धो वा स्यादप्र शा. भा.
4. वेदे कथम् मा.
5. मवगत मा.

स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये ।
मतिर्बहुविदां पुंसां संशयान्नोपजायते ॥ १२७ ॥

केचिदाहुरसावर्थः केचिन्नासावयं त्विति ।
तन्निर्णयार्थमप्येतत्परं शास्त्रं प्रणीयते ॥ १२८ ॥

इति श्रीभट्टकुमारिलकृतौ श्लोकवार्तिके
जिज्ञासासूत्रं समाप्तम्

कार्यार्थे प्रमायामध्ययनविधिर्वेदस्य कारणत्वं प्रतिपादयति; प्रमायां च करणत्वं प्रमाणत्वम्; तत् कथं प्रत्यक्षाद्यगोचरेऽर्थे शब्दस्येत्यपेक्षायां प्रथमपादगतो विचारो विषयोत्पादकत्वेन द्रव्यदेवतावदाक्षिप्त एवेत्याह पादेन—**पादेनाद्येन निर्णय इति** ॥

ततोऽवगतप्रमाणभावगतः [1]प्रमाणभावः कार्यप्रमाणविचारनिरपेक्षो न शक्यः कर्तुमिति [2]परमपि विचारमारम्भविषयस्वरूपानुत्पादकमपि प्रयाजवदाक्षिपतीत्याह—**स्थिते वेदप्रमाणत्व इति** श्लोकद्वयेन ॥

इति भट्टोम्बेकविरचितायां
तात्पर्यटीकायां
प्रथमं सूत्रम्
समाप्तम्

———

1. प्रमाणिभावः. मा.
2. परमविचारारम्भविषस्य रूपा. मा.

# अथ चोदनासूत्रम्

—०:०:०—

## सामान्यतः सिद्धे प्रमाणं चोदनोच्यते ।

"अथातो धर्मजिज्ञासा" इत्यनेन शास्त्रारम्भमुक्त्वा इदानीं शास्त्रमारभते- "चोदनालक्षणोऽर्थो धर्मः" इति । तस्य तात्पर्यं व्याचष्टे—**धर्म** इत्यर्धेन । एषा ह्यत्र वचनव्यक्तिर्धर्मानुवादेन चोदनाख्यप्रमाणविधानमेतदिति दर्शयति । प्रसिद्धत्वाच्च धर्मश्चोदनाख्यप्रमाणविधौ शक्यतेऽनुवक्तुम् । तदिदमनुपपन्नम्; यदि तावत् प्रमाणान्तरानवगम्यो धर्मः, कथमनूद्येत ? प्रमाणान्तरावगम्यश्चेत् 'चोदनैव प्रमाणम्' इति विधानं विरुध्यते । न च धर्मस्य सामान्यतः सिद्धिरस्ति, मूलाभावात् । न तावदास्त्रीबाललोकप्रसिद्धिर्मूलम्; न च लोकप्रसिद्धिर्नाम प्रत्यक्षादिभ्यः प्रमाणान्तरमिति वक्ष्यति—"न चैतानि परित्यज्य" इति । विरुद्धानेकप्रकारत्वाच्च लोकप्रसिद्धेर्न तया धर्मस्य सिद्धिः । नाप्यर्थापत्तिः, जगद्वैचित्र्यस्य स्वाभाविकत्वेनापि कर्मशक्तिवैचित्र्यवदुपपत्तेः इति वक्ष्यति— "स्यादेवं यदि शक्येत" इति । प्रमाणान्तरसिद्धे च वस्तुनि प्रबुद्धिं प्रसुवानापि चोदना न प्रमाणतया शक्या विधातुम्, अनुवादकत्वात् । तथा च वक्ष्यति— "अर्थेऽनुपलब्धे तत् प्रमाणम्" इति । अपि च प्रमाणान्तरसिद्धेऽपि सामान्यतो धर्मे न चोदना प्रमाणमिति शक्यते विधातुम्; न हि सा धर्मसामान्यं बोधयति; किं तर्हि, शब्दान्तरादिप्रमाणावसितभेदानेवाग्निहोत्रादीन् । धर्मविशेषविषयत्वं च सूत्रद्वयस्य स्वयमेव दर्शयिष्यति—"प्रवृत्त्यङ्गं च यज्ज्ञानं तस्य मूलं परीक्ष्यते।" इत्यादिना । धर्मानुवादेन चोदनाख्यप्रमाणविधावर्थपदस्यानन्वयप्रसङ्गः; न हि तदानर्थस्य धर्मत्वं प्राप्तम्, यन्निवर्त्येत ।

तदेतदनुपासितगुरुप्रज्ञाविलसितमिति ग्रन्थज्ञानमानिनो मन्यन्ते; यस्मादयमर्थः सूत्रस्य—इह तावज्ज्योतिष्टोमादयः क्रियाविशेषा धर्मत्वेन स्मर्यन्तेऽष्टकादय इव कार्यतया । वक्ष्यति च—"यो यागमनुतिष्ठति, तं धार्मिक इति समाचक्षते" इति । तत्र निर्मूलं स्मरणमिति चार्वाकाः, योगिप्रत्यक्षमूलमिति वैशेषिकादयः । तदेवमनेकधा मूलविप्रतिपत्तौ सत्यां प्रत्यक्षाद्यनुप्रवेशव्यवच्छेदेन अप्रामाण्य-

**स्वरूपादेस्ततः सिद्धिः स्वरूपं वेह[1] सूत्र्यते ॥ १ ॥**

व्यवच्छेदेन च चोदना प्रमाणत्वेन प्रतिज्ञायते 'चोदनैव,' 'चोदना प्रमाणमेव' इति। एवं सति नात्र प्रमाणान्तरसिद्धता संभवति; अत्रैव प्रमाणं विधीयते यतः। प्रत्युत प्रमाणान्तरसिद्धेरिह 'चोदनैव,' 'प्रमाणमेव' इत्युभयथापि विधानं व्याहन्यते, एकत्र विरोधात् अन्यत्र चानुवादकत्वात्; यत्र त्वनूद्य अप्रमाणरूपं विधीयते, तत्र त्वनूद्यमानस्य प्रमाणान्तरसिद्ध्या प्रयोजनं यथा "आहवनीये जुहोति" इति। अतो यथा मन्वादिस्मरणप्रतिभासिन्यष्टकादौ चोदना मूलमिति वक्ष्यते, तथेहापीति द्रष्टव्यम्। मूलविशेषानवधारणाभिप्रायं च "धर्मे सामान्यतः" इति वचनम्, न जात्यभिप्रायेण। एतमेव चास्य श्लोकस्यार्थं स्वयमेव वार्तिककारश्चोद्यपूर्वकं दर्शयिष्यति—"प्रत्यक्षादौ निषिद्धेऽपि" इत्युपक्रम्य

"निर्मूलासम्भवादत्र प्रमाणैः सैव मृग्यते।
कुतः पुनः प्रवृत्तेति प्रत्यक्षादि तु वारितम्॥" इति॥

अस्यां च वचनव्यक्तावर्थपदस्यान्वयं दर्शयिष्यति—

"धर्मे सामान्यतः सिद्धे प्रमाणं कथ्यते यदा।" [2]इति।

नन्वेवं सत्यग्निहोत्रादावेव प्रत्याक्षादिनिवृत्तेर्निष्प्रमाणकत्वं च निषिद्धं स्यात्, चैत्यवन्दनादौ तु धर्मत्वनिषेधो न कृतः स्यात्; अत आह—**स्वरूपादेस्ततः सिद्धिरिति**। अवधारिते हि चोदनाख्ये प्रमाणे धर्मस्य स्वरूपं तत एव प्रमाणादवगम्यते यदुत अग्निहोत्राद्येव, न चैत्यवन्दनादि—इति, प्रमाणावसेयत्वात् स्वरूपस्य। आदिग्रहणं चेतिकर्तव्यतानुबन्धप्रदर्शनार्थम्। मतान्तरमाह—**स्वरूपं वेह सूत्र्यत इति**। तस्याभिप्रायः—अध्ययनविध्याक्षिप्ततयाधीतवेदस्य धर्मजिज्ञासायामधिकारः; तस्य च चोदना प्रमाणत्वेन सिद्धैवेति न चोदनाप्रमाणप्रतिज्ञापरमेतत् सूत्रम्; किन्तु तदनुवादेन क्रियाकारकसंसर्गव्यवच्छेदेन यश्चोदनालक्षणः कार्यरूपोऽर्थः, स एव धर्मः; न त्विन्द्रियादिलक्षणः क्रियाकारकसंसर्ग इति। तदनुपपन्नम्; विचारात् पूर्वमधीतवेदावस्थस्य चोदना प्रमाणत्वेन न सिद्धेति कथमनूद्यते? सिद्धौ वा प्रथमपादगतस्य विचारस्याध्ययनविध्याक्षिप्ततया

1. रूपं चेह चौ. मु. 2. Omitted इति. मा

**द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते ।**
**स्वरूपेऽपि हि तस्योक्ते प्रमाणं कथ्यतेऽर्थतः ॥ २ ॥**

**किमाद्यपेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ ।**
**तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिन् चोदनोच्यते ॥ ३ ॥**

कर्तव्यत्वं न स्यात्; तत्र प्रमाणलक्षणोच्छेदप्रसङ्गः । असति च चोदनाप्रमाणप्रतिज्ञापरत्वे "चोदना हि भूतम्" इत्यादिभाष्यप्रतिज्ञासमर्थनपरम् "उक्तम[1]-स्माभिः चोदनानिमित्तं धर्मस्य ज्ञानमिति, तत् प्रतिज्ञामात्रेणोक्तम्" इत्यादि, "प्रथमेऽध्याये प्रमाणलक्षणं वृत्तम्" इत्यादि च भाष्यं सर्वमसमञ्जसं स्यात् । तस्मान्मतान्तरदर्शनमेवैतत् । पूर्वैव तु व्याख्याभिप्रेता शोभना चेत्यनवद्यम् ॥

यदि तर्हि धर्मस्वरूपानुवादेन चोदनाप्रमाणप्रतिज्ञापरमेतत् सूत्रम्, तथा सत्यर्थद्वयमस्य यदुक्तम्—"को धर्मः, कथंलक्षणः इत्येकेनैव सूत्रेण व्याख्यातम्—चोदनालक्षणोऽर्थो धर्मः इति" [2]इति, तद्विरुध्यत एवेत्याशङ्क्याह—**द्वयमि**-त्यर्धेन । श्रुत्यपेक्षया प्रमाणैकप्रतिज्ञापरत्वमत्रोक्तम्; पौनरुक्त्यं पुनरर्थद्वयप[3]रत्वे श्रुत्यर्थाभ्याम्; तच्चैकस्य श्रौतत्वेन परस्यार्थिकत्वेन च न विरुध्यत इत्याह—**स्वरूपेऽपी**त्यर्धेन ॥

"चोदनेति क्रियायाः प्रवर्तकं वचनम्" इति भाष्यं चोदनाशब्दव्याख्यानपरम्; तदनुपपन्नम्; अत्र हि वचनशब्देन वचनार्हत्वात् प्रवर्तकं वाक्यमुक्तम्; लिङादिप्रत्ययमात्रस्यैव विधौ स्मरणात् प्रवर्तकाभिधानद्वारेण प्रवर्तकत्वम्; न वाक्यस्येत्याशङ्क्याह—**किमाद्यपेक्षितैरि**ति । सत्यमेवम्, तथापि नियोज्यविशेषसमर्पकं पदमपेक्षते विषयानुबन्धसमर्पकं च । इतरथा हि कं क्व प्रवर्तयेत्? तच्च वाक्यमेवेति प्रवर्तकं वाक्यमुक्तम् ॥

"चोदना हि भूतम्" इत्यादिभाष्यमतीन्द्रियार्थे चोदनासामर्थ्यव्याख्यानपरम्; "नान्यत् किञ्चनेन्द्रियम्" इत्यपि प्रत्यक्षादेरसामर्थ्यज्ञापनार्थम्; तदुभयमपि प्रतिज्ञासूत्रेऽसम्बद्धं पुनरुक्तं च, सदौत्पत्तिकसूत्राभ्यामस्यार्थस्य वक्ष्य-

1. Omitted अस्माभिः मा.
2. Omitted इति. मा.
3. परत्वश्रु. मा.

चोदनैव प्रमाणं चेत्येतद्द्वयेऽवधारितम् ।
साकाङ्क्षमिति मन्वानो युक्तिलेशं द्वयेऽस्पृशत् ॥ ४ ॥

संभाव्यते प्रमाणत्वं शब्दस्यैवंविधेष्वपि ।
इन्द्रियादेरसामर्थ्यं वक्ष्यमाणमदीदिशत् ॥ ५ ॥

अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि ।
तेनोत्सर्गे स्थिते तस्य दोषाभावात् प्रमाणता ॥ ६ ॥

माणत्वादित्याशङ्क्य परिहरति—**चोदनैवेति** । वक्ष्यमाणोऽप्यर्थः प्रतिज्ञासमर्थनार्थमत्रोच्यमानो न दुष्यतीति मन्यते । तथा हि—धर्मे चोदनैव प्रमाणम्, प्रमाणमेवेति चावधारणद्वयं प्रतिज्ञातम्; तदयुक्तमिवाशङ्क्यते । कथम्? सम्भवदर्थविषयं हि वाक्यं प्रतिज्ञोच्यते; न कश्चिदर्थः संभवति यत् प्रत्यक्षादिग्रहणार्हं न भवति, वाक्यं च तत्प्रमाणमिति । कुतः? अदर्शनात्; यथा रूपे श्रोत्रमेव, प्रमाणमेवेति । तदेवं प्रतिज्ञाभासत्वेन प्रकाशमानं स्वसमर्थनं प्रति साकाङ्क्षमिति मन्वानो भाष्यकारः—चोदनैव, प्रमाणमेव, इत्यवधारणद्वये वक्ष्यमाणं युक्तिद्वयमवोचत् । अतः सम्भवित्वप्रदर्शनमुखेन प्रतिज्ञासमर्थनार्थं वक्ष्यमाणमिह परामृष्टम् । प्रतिज्ञातार्थसिद्ध्यर्थस्तु वक्ष्यमाणः प्रपञ्च इति नासम्बद्धता पुनरुक्तता वा । वक्ष्यति च—"वृत्तिकारोऽधिकं वापि भूतादि द्वारमब्रवीत्" । इति ।

तमधुना शब्दसामर्थ्योक्तिलेशं व्याचष्टे—**संभाव्यत इति** । भूतादिष्वपि संभवति शब्दस्य प्रामाण्यं तद्विषयज्ञानजनकत्वेन; धर्मश्च भूतादीनामेवान्यतमः स्यादिति सम्भवी प्रतिज्ञार्थः ।

सम्भवित्वमेव द्रढयन्नाह—**अत्यन्तेति** । अत्रानुपासितगुरवश्चोदयन्ति—यदि[1] तावदसद्रूपमेवासति ज्ञानं शब्दः करोतीत्युच्यते, न प्रकृतोपयोगः; अथासति सद्रूपं[2] ज्ञानम्, ततः प्रक्रमविरोधः; प्रमाणं चोदना, यतोऽत्यन्तासत्यपि 'सत्' इति ज्ञानं करोति—इति विरुद्धाभिधानात् । तदनुपपन्नम्; यस्मादयमर्थः—यद्यप्यनुष्ठेयरूपत्वाद्वाक्यार्थोऽत्यन्तासन् प्रत्यक्षादीनामविषयः, तथापि तस्य तत्र प्रामाण्यं संभवत्येव; यतस्तत्रापि ज्ञानमुत्पादयति; तेन बोधकत्वादौत्सर्गिकं प्रामाण्यं

1. वदसरूप. मा.  2. सरूपम्. मा.

चोदनेत्यब्रवीच्चात्र शब्दमात्रविवक्षया
न हि भूतादिविषयः कश्चिदस्ति विधायकः ॥ ७ ॥

इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते ।
तावच्च तद्विशेषस्य कुतो वावसरो भवेत् ॥ ८ ॥

निमित्तमात्रं वोच्येत [1]प्रमाणं वेह लक्षणम् ।
प्रमाणं [2]त्वपि शब्दो वा तज्ज्ञानं वा निरूप्यते ॥ ९ ॥

पदार्थस्तन्मतिर्वा स्याद्वाक्यार्थाधिगमोऽपि वा ।
पूर्वेषां तु प्रमाणत्वे फलत्वं तस्य गम्यते ॥ १० ॥

संभवति यदि विस्पष्टं कारणदोषाभावं वक्तुं शक्ष्यामस्ततः प्रामाण्यं सेत्स्यति ; सम्बन्धस्त्वस्यामपि दशायां न निवार्यते ॥

नन्वनुष्ठेयविषयत्वाच्चोदनाया न कालपरामृष्टवस्तुबोधकत्वम् ; अतः कथम् "चोदना हि भूतम्" इत्युच्यते ? अथ वस्तुस्थित्योच्यते, तथापि 'भविष्यन्तम्' इत्येवं वाच्यम् ; तथा लक्षयति—"भविष्यंश्चैषोऽर्थ" इति ; भूतभवद्ग्रहणं त्वयुक्तमित्याशङ्क्याह—**चोदनेत्यर्धेन** । नात्र चोदनाशब्देन विधायकं वाक्यमुच्यते ; किं तर्हि, चोदनाशब्दो विशेषवचनः सन् शब्दमात्रं लक्षयति । कस्मात् लक्षणाश्रीयत इति चेदत आह **न हीत्यर्धेन** । विरुद्धपदसामानाधिकरण्यं दर्शयति ॥

ननु विधौ सूत्रिते सति कस्माच्छब्दमात्रस्य महिमा कथ्यते भाष्यकृता ? अत आह—**इन्द्रियादीति** । यदा हि शब्दमात्रस्येन्द्रियादिव्युदासेन भूतादौ सामर्थ्यं समर्थितं भवति, तदा शब्दविशेषस्य विधायकस्य धर्मे सामर्थ्यं सूत्रोक्तं भवति समर्थितम् ॥

एवं सूत्रभाष्यगतं चोदनाशब्दं व्याख्यायाधुना लक्षणशब्दं व्याचष्टे—**निमित्तमात्रमिति** श्लोकद्वयेन । सन्निकर्षविप्रकर्षानपेक्षं योग्यतया हेतुशब्दाभिधेयं निमित्तमिह रूढ्या लक्षणशब्देनोच्यते ; यद्वा प्रमाणं करणव्युत्पत्त्या लक्षणशब्देनोच्यते । तत्र प्रमाणपक्षे लक्षणं करणम् ; तच्च साधकतमम ; तमबर्थश्चातिशयः ; स चापेक्षिक इति तत्तद्विवक्षादि बाह्यमपेक्ष्य शब्दादिर्वाक्यार्थज्ञानपर्यन्तः

1. प्रमाणं चेह. चौ. मु.    2. वापि. चौ. मु.

**ज्ञाने लक्षणशब्दोऽयं यदि नाम प्रयुज्यते ।**
**चोदनोक्तिस्तदा कार्यं तत्कार्यं [1]चापि लक्षयेत् ॥ ११ ॥**

**निमित्तमात्रे शब्दे च प्रमाणे मुख्यवृत्तयोः ।**
**सामानाधिकरण्यं स्याच्चोदनालक्षणत्रयोः[2] ॥ १२ ॥**

**द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते ।**
**तेषामैन्द्रियकत्वेऽपि न ताद्रूप्येण धर्मता ॥ १३ ॥**

**श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते ।**
**ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ १४ ॥**

प्रमाणविकल्पः पञ्चधा दर्शितः । निमित्तमात्रं तु नापेक्षिकम्, तद्भावभावित्वेन सर्वेषां समुच्चयेन निमित्तत्वादिति न विकल्पितम् । शब्दादीनां च प्रमाणत्वेन वाक्यार्थज्ञानं फलमिति ॥

एवं वर्तिपदार्थौ व्याख्याय अधुना समासार्थाभावमाशङ्कते । यदा हि शब्दव्यतिरिक्ततज्ज्ञानादि लक्षणशब्देन प्रमाणमुच्यते, तदा शब्दपदार्थकेन चोदनाशब्देन सामानाधिकरण्याभावान्न 'चोदना लक्षणमस्य' इति समासार्थोपपत्तिः; बहुव्रीहिः समानाधिकरणानामित्याशङ्क्याह—**ज्ञान इति** । ज्ञानग्रहणं शब्देतरचतुष्टयप्रदर्शनार्थम् । ज्ञानादिप्रमाणाभिधायकेनापि लक्षणशब्देन सह चोदनाशब्दः स्वज्ञानाख्यकार्यलक्षणया लक्षितलक्षणया वा सामानाधिकरण्यं भजते ॥

प्रयोजनं तु विना लाक्षणिकार्थपरिग्रहो न युक्त इति मुख्यार्थयोः सामानाधिकरण्यमाह—**निमित्तमात्र इति** । निमित्तमात्रे हि लक्षणशब्दार्थे ज्ञानादीनां सत्यपि निमित्तत्वे चोदनाया निमित्तत्वानपायात् श्रुत्या सामानाधिकरण्यम्; यदापि लक्षणं प्रमाणम्, तच्च शब्दः, तदापि श्रुत्यैव ॥

ननु यदेव फलसाधनं द्रव्यं क्रिया वा गुणो वा अग्निहोत्रगोदोहनादि, तस्यैव धर्मत्वं स्थापयिष्यति; सर्वे चैते प्रत्यक्षग्राह्याः तस्मात् 'चोदनैव धर्मे प्रमाणम् नान्यत् किञ्चनेन्द्रियम्' इत्ययुक्तम् अत आह—**द्रव्येति** । सत्यं द्रव्यादीनां धर्मत्वमिन्द्रियग्राह्यत्वं च; न तु प्रत्यक्षदृश्येन रूपेण तेषां धर्मत्वम् ॥

कथं तर्हीत्याशङ्क्याह—**श्रेय इति** ॥

1. वापि. चौ. मु.   2. लक्षणद्वयोः. मा.

**प्रदर्शनार्थमत्रोक्तमिन्द्रियं सूत्रकारवत् ।**
**नान्यत् किञ्चेति वा च्छेदः सामान्यार्थः प्रयुज्यते ॥ १५ ॥**

**तदसामर्थ्यसिद्ध्यै च पुनरिन्द्रियकीर्तनम् ।**
**किञ्चेति मध्यमच्छेदो हेतुप्रश्ने प्रयुज्यते ॥ १६ ॥**

**यद्यपि त्वनुमानस्याप्येवमादौ समर्थतः ।**
**विना सम्बन्धबोधेन न तु तस्योद्भवः क्वचित् ॥ १७ ॥**

**न सामान्यविशेषाभ्यां धर्मसम्बन्धदर्शनम् ।**
**लिङ्गस्य कस्यचित् सिद्धं येन स्यादनुमानता ॥ १८ ॥**

ननु "नान्यत् किञ्चनेन्द्रियम्" इत्यनेनानुमानादीनामप्रतिषेधात् 'चोदनैव' इत्यवधारणमनुपपन्नम् अत आह—**प्रदर्शनेत्यर्धेन** । यथा च सूत्रकृता सत्संप्रयोगसूत्रेणेन्द्रियादिनिषेधाच्चोदनेतरकृत्स्नप्रमाणनिषेधः प्रदर्शनार्थं कृतः, तथा भाष्यकृतेति । श्रौत एव वा परमनुमानादिनिषेध इत्याह—**नान्यदित्यर्धेन** ॥

एवं तर्हि "नेन्द्रियम्" इत्यनर्थकम्, गतार्थत्वात्; अत आह — **तदित्यर्धेन** । "चोदनैव, नान्यत् किंच" इत्युक्ते, किं पुनः कारणम् अन्यन्न प्रवर्तते—इति अपेक्षिते स्थितिहेतुप्रश्नावसरः; तन्निराकरणायाह—"नेन्द्रियम्" इति । इन्द्रियं तावन्न प्रवर्तते, तत्पूर्वकत्वादनुमानाद्यपि ॥ हेतुप्रश्नोऽपि श्रौत एवेति दर्शयितुमधुना त्रिधा छित्वा ग्रन्थं व्याचष्टे—**किञ्चेतीति** । "नान्यत्" इति इन्द्रियादिनिषेधार्थः प्रथमच्छेदः; "किञ्च?" इति प्रश्नार्थो मध्यमः; किञ्च कारणमन्यन्न प्रवर्तते यावता दृष्टान्तादावनुमानप्रवृत्तिः—इत्येतत्प्रश्ननिरासार्थः "नेन्द्रियम्" इत्यस्योक्तस्यापि पुनर्वचनम् ॥

एतदेव व्याचष्टे—**यद्यपीति** । यद्यपि त्रिकालविषयमनुमानम्; तथापि धर्मे नोत्सहते तत् प्रवर्तितुम्, विना सम्बन्धग्रहणं तस्योत्पत्त्ययोगात् ॥

ननु सम्बन्धधीपुरःसरेणैवानुमानेनानागतोऽपि धर्मः प्रत्येष्यते कृतकत्वेनेव भाविविनाश इत्याशङ्क्याह—**न सामान्येति** । न हि धर्मसामान्येन धर्मविशेषेण वा सह लिङ्गस्य कस्यचित् सम्बन्धग्रहणमस्ति; तद्धि सम्बन्धग्रहणं न प्रत्यक्षेणानुमाना-

**ननु शब्दोऽपि सम्बन्धबोधान्नैते प्रवर्तते ।**
**पदं तन्न तु तद्वाच्यो धर्मो वाक्यार्थ एव सः ॥ १९ ॥**

**वाक्यस्यावाचकत्वं च पदार्थानां च हेतुता ।**
**सम्बन्धेक्षानपेक्षाणां वाक्यार्थे स्थापयिष्यते ॥ २० ॥**

**नित्यत्वादेरसिद्धत्वादभ्युपेत्योच्यतेऽथवा ।**
**सुतरामप्रमाणत्वं वक्तृप्रामाण्यवर्जनात् ॥ २१ ॥**

दिभिर्वा स्यात्, धर्मस्यातीन्द्रियत्वात् । न तावत् सम्बन्धः प्रत्यक्षग्राह्यः, अनुमानग्रहणे चानवस्था; अर्थापत्त्यादीनां तु धर्मस्वरूपवत् सम्बन्धेऽपि न व्यापारः । सर्वं चैतत् प्रत्यक्षद्वारत्वादित्यत्र निपुणतरमुपपादयिष्यामः ॥

यद्येवं धर्मप्रमाणाभिमते शब्देऽप्येष एव प्रसङ्ग इति चोदयति—**ननु शब्दोऽपीत्यर्धेन** । शब्दोऽपि सम्बन्धग्रहणापेक्षः, प्रथमश्रवणे प्रत्ययानुत्पादात्; न चोक्तेन प्रकारेण धर्मे तद्ग्रहणमस्ति ॥ तत्परिहरति—**पदं तन्न तु तद्वाच्यो धर्म इति** । शब्दो हि पदं वाक्यं वा ; तत्र पदं सम्बन्धग्रहणापेक्षम् ; न च तत्प्रमेयो धर्मः ॥ कस्य तर्हि प्रमेय इत्याह—**वाक्यार्थ एव स इति** ॥

ननु पदवद्वाक्यमपि सम्बन्धग्रहणापेक्षमेव, अन्यथैकस्माद्वाक्यात् सर्ववाक्यार्थावगमप्रसङ्गात्; अत आह—**वाक्यस्येत्यर्धेन** । स्यादेतदेवम्, यदि वाक्यं वाचकं स्यात्; तत्तु नैव वाचकम् ॥ वाक्यार्थावगमे तु पदार्थानामेव हेतुत्वमिति तेषामपि सम्बन्धग्रहणापेक्षत्वात् अतीन्द्रिये च धर्मे तदयोगान्न हेतुत्वमिति चेदत आह—**सम्बन्धेक्षेत्यर्धेन** । न पदार्थानां वाक्यार्थे सम्बन्धग्रहणापेक्षा, तदभावेऽपीन्द्रियवद्बोधकत्वात् । न चातिप्रसङ्गः, अपेक्षासन्निधियोग्यतानां नियामकत्वात् । सर्वं चैतत्तद्भूताधिकरणे विस्तरेण स्थापयिष्यते ॥

प्रतिज्ञासमर्थनार्थं प्रामाण्यसम्भावना ज्ञानजनकत्वेन योक्ता तस्या लोकायतादिमतेनाक्षेपः "नन्वतथाभूतमपि" इति । तत्राक्षेप्तुरभिप्रायमाह—**नित्यत्वादेरसिद्धत्वादिति** । नित्यो वेदः, पदार्थपूर्वको वाक्यार्थः, प्रत्यक्षानुपलब्धिश्च न बाधिका, कालान्तरस्थायी च भोक्तास्ति, इत्येतत्सर्वं ममाद्याप्यसिद्धम्—इति मत्वा चोदयति ॥ एतेषां तु पूर्वपक्षाणां वक्ष्यमाणनिराकरणत्वात् नित्यत्वादिप्रतिपादनमुखेन चोत्तरानभिधानात् अभिप्रायान्तरमाह—**अभ्युपेत्येति** त्रिपाद्या । पौरुषेयत्वे हि वक्तृज्ञानप्रामाण्यात् प्रामाण्यं संभवेदपि, यदि तदवधार्येत ;

**प्रमाणान्तरदृष्टं हि शब्दोऽर्थं प्रापयेत् सदा ।**
**स्मृतिवच्च स्वयं तस्य प्रामाण्यं नोपपद्यते ॥ २२ ॥**

[1]**नूनं वक्त्रानुभूतोऽसावित्याप्तोक्तिनिबन्धना ।**
**बुद्धिः साक्षाददृष्टेऽपि युक्तार्थे पुरुषोक्तितः ॥ २३ ॥**

**नात्मीयादन्यदीयाद्वा प्रत्यक्षादेर्विना क्वचित् ।**
**वचसः सत्यता दृष्टा तथा स्याच्चोदनास्वपि ॥ २४ ॥**

अपौरुषेयत्वे तु वक्तृज्ञानप्रामाण्यवर्जनात् प्रामाण्यशङ्कापि न स्यादिति सुतरामित्युक्तम् । तदिदं नित्यत्वं वेदस्य प्रत्युत प्रामाण्यं व्याहन्ति । तथा **चाहुर्भर्त्रीश्वरादयः**—"किं हि नित्यं प्रमाणं दृष्टम्? प्रत्यक्षादि वा यदनित्यं तस्य प्रामाण्ये कस्य विप्रतिपत्तिः?" इति ॥

नन्वसत्यपि वक्तृप्रामाण्ये वेदस्य वक्तृप्रामाण्यनिरपेक्षस्यैव प्रामाण्यं स्यात् प्रत्यक्षादिवत्; अत आह—**प्रमाणान्तरेत्यर्धेन** । अन्वयव्यतिरेकाभ्यां प्रमाणान्तराधिगतार्थविषयतया प्रामाण्यं शब्दस्य दर्शयति—**स्मृतिवदित्यर्धेन** । यथा स्मृतेर्न पूर्वानुभवनिरपेक्षायाः स्वत एव स्मृतित्वम्, एवं न पूर्वानुभवप्रमाणनिरपेक्षस्य शब्दस्य स्वत एव प्रामाण्यं लोके दृष्टम् ॥

न केवलं प्रमाणान्तरदृष्टार्थविषयत्वं शब्दस्य प्रामाण्ये कारणम्, किन्तु परमाप्तप्रयुक्तत्वमपीति दर्शयन्नाह—**नूनमिति** । यस्तावद्वाक्यार्थः श्रोत्रापि प्रमाणान्तरेण साक्षात्कृतः, तत्र किमुच्यते? योऽपि श्रोत्रा न साक्षात्कृतः, तत्रापि—सम्भवत्प्रमाणान्तरोऽयमर्थः; गृहीताशयबुद्धिश्चायं वक्ता नाननुभूतं वक्ति; तस्मान्नूनं वक्त्रानुभूतोऽसौ—इत्येवं वक्त्रनुभवानुमानमुखेन अर्थे निश्चायिका पुरुषवचनात्तु बुद्धिर्युज्यते ॥

यस्तु न श्रोतुः प्रत्यक्षादिविषयोऽर्थो नापि वक्त्राप्तः, तत्र न वाक्यप्रामाण्यं लोके दृष्टमिति व्यतिरेकमाह—**नात्मीयादिति** त्रिपाद्या । एवं न्यायमुक्त्वा प्रकृते योजयन्नाह—**तथा स्याच्चोदनास्वपीति** । चोदनार्थोऽपि न कस्यचित् प्रत्यक्षग्राह्यः; न च वक्ताप्तोऽस्ति; तस्माच्चोदनैव धर्मे प्रमाणमिति प्रामाण्यप्रतिज्ञानमसमञ्जसमिति ॥

1. नूनं तत्रानु. चौ. मु.

**तेन सत्यपि विज्ञाने प्रतिभादेर्ययैव हि।**
**स्वातन्त्र्यान्न प्रमाणत्वं तथा वेदेऽपि दृश्यताम् ॥ २५ ॥**

**स्वर्गयागादिसम्बन्धविषयाश्चोदना मृषा।**
**प्रत्यक्षाद्यगतार्थत्वादीदृग्बुद्धादिवाक्यवत् ॥ २६ ॥**

प्रकृतमुपसंहरति—**तेनेति**। न विज्ञानं ज्ञानमित्येव प्रमाणम्, बोधरूपतायाः प्रमाणेतरसाधारणत्वात् ॥

पूर्वोक्तमेवार्थं प्रयोगैरुपनिबध्नाति; तत्र "प्रमाणान्तरदृष्टं हि" इत्यत्राह—**स्वर्गेति**। चोदनेति धर्मिनिर्देशः, स्वर्गयागादीत्यादि तद्विशेषणम्, मृषेति साध्यो धर्मः, हेतुदृष्टान्तौ सुज्ञानौ। तत्र चोद्यते—चोदनामात्रं वेह धर्मित्वेनोच्यते, वैदिक्यो वा? यदि चोदनामात्रम्, ततो वैद्याचार्यचोदनानामपि पक्षीकृतत्वात् प्रत्यक्षादिविरोधिनी प्रतिज्ञा, हेतुश्च भागासिद्धः, विप्रलम्भकचोदनांशेऽपि सिद्धसाध्यता, चोदनानां सर्वासां पक्षीकृतत्वात् "ईदृग्बुद्धादिवाक्यवत्" इति दृष्टान्ताभावः। अथ वैदिक्य एव चोदनाश्चोदनाशब्देनोच्यन्ते, तदा "स्वर्गयागादि" इत्यादिविशेषणानर्थक्यम्, सर्वासां तद्विषयत्वेन व्यवच्छेदाभावात्। अप्रसिद्धविशेषणश्चायं पक्षः; स्वर्गयागादिभावनाविषया हि चोदनाः; न सम्बन्धविषयाः, तस्य अपुरुषव्यापारात्मकत्वात्। वाक्यान्तरार्थे च 'चोदना मृषा' इति सिद्धसाध्यता; स्वार्थ इति च नोक्तम्। हेतुरत्यन्तागृहीतार्थविषयैः प्रत्यक्षादिभिरनेकान्तः। दृष्टान्तोऽप्ययमप्रदर्शितान्वयः; न हि 'ईदृक्' इति व्याप्तिरुच्यते; तत्प्रतिपत्त्यर्थश्च दृष्टान्त इति। तथा च स्वयमेव वक्ष्यति—"तस्माद्व्याप्यत्वरूपेण वाच्यो हेतुत्वसंमतः" इति। वैधर्म्यदृष्टान्तन्यूनश्चायं प्रयोगः।

अत्र समाधिः—वैदिक्य एव चोदनाश्चोदनाशब्देनोच्यन्ते, तासामेवात्र शास्त्रे प्रकृतत्वात्, आदैच इव व्याकरणे वृद्धिशब्देन। तत्र "वायुर्वै क्षेपिष्ठा देवता" इत्यादेरपि पक्षत्वात् प्रत्यक्षादिभिर्विरोधः; हेतुश्च भागासिद्धः; "आदित्यो यूपः" इत्यादौ च सिद्धसाध्यता; तन्मा भूदिति स्वर्गयागादीत्यादिविशेषणस्यार्थवत्त्वम्। स्वर्गकामस्य यागावच्छिन्नभावनाविषया अप्याक्षेपतः स्वर्गयागादिसम्बन्धविषया भवन्तीति नाप्रसिद्धविशेषणता पक्षदोषः। वाक्यान्तरार्थे च वाक्यान्तरं नैव चोदना, तस्यासम्बन्धिशब्दत्वात्; अतो न सिद्धसाध्यता। प्रत्यक्षावगमानर्हार्थविषयत्वादिति च हेत्वर्थः; शब्दत्वे सतीति वा विशेषणं

**यद्वाप्तेनाप्रणीतत्वाद्बालोन्मत्तादिवाक्यवत् ।**
**व्योमादिवच्च नित्यत्वात् प्रामाण्यस्य निराकृतिः ॥ २७ ॥**

**यदि वा पुरुषाधीनप्रामाण्याः सर्वचोदनाः ।**

कार्यम्; अतो नानैकान्तिको हेतुः । ईदृग्ग्रहणं दृष्टान्ते व्याप्तिप्रतिपादनपरम् । [1]अन्यथोभयविकलतापि स्यात् । चार्वाकप्रयोगे चायं दृष्टान्तः । शाक्यप्रयोगे त्वादिशब्दोक्तमर्हदादि[2]वाक्यं द्रष्टव्यम् । ईदृशापि दृष्टान्तेन व्याप्तिप्रतीतिः । अप्रदर्शितान्वयस्य चान्यो विषयः यथा 'पटे कृतकनाशित्वे स्तः' इति अन्यतर-सम्यक्प्रयोगेऽपि च व्याप्तिप्रतीतिः—इति सर्वमनुमाने वक्ष्यते, नात्रोच्यते बहुवक्तव्यत्वादिति ॥

अत्रैव प्रतिज्ञार्थे "नूनं वक्त्रानुभूतोऽसौ" इत्यनेन सूचितं हेतुदृष्टान्ता-न्तरमाह—**यद्वे**त्यर्धेन । प्रतिवादिनो वेदस्याप्रणीतत्वात् वादिनश्चानाप्तप्रणीत-त्वात् सिद्धो हेतुः । [3]एवं सति प्रत्यक्षादिभिरनैकान्तिकः; तस्माच्छब्दत्वे सतीति विशेषणं कर्तव्यम् । ननु बालोन्मत्तादिवाक्यमपि किञ्चित् सत्यमस्तीति साध्य-विकलो दृष्टान्तः स्यात् । नैतदेवम्; यत् सत्यं न तद्बालोन्मत्तादिवाक्यमुच्यते, 'बालादीनामेव वाक्यम्' इत्यसाधारण्येन विशेषणात्; यथा 'राजयज्ञः' इत्य-श्वमेधादिरुच्यते, नाग्निहोत्रादिरिति ॥ प्रयोगान्तरमाह—**व्योमादिवच्चे**त्यर्धेन । तत्र स्वर्गयागादिसङ्गता न प्रमाणं चोदना, नित्यत्वात् व्योमवदिति केचित् । तदयुक्तम्; चोदनाकाशयोर्वादिना नित्यत्वानभ्युपगमादसिद्धो हेतुः साधन-विकलश्च दृष्टान्तः स्यात् तस्मान्नैतत्साधनम् । किं तर्हि? परपक्षदूषणम् । मीमां-सकप्रतिज्ञाते चोदनाप्रामाण्ये तत्सिद्धेनैव नित्यत्वेन वादी स्वयमनुमानविरोधमाह, चोदनाप्रामाण्यसिद्धौ तत्प्रयुक्तस्य वा नित्यत्वस्य विरुद्धतामाह । दूषणं चैतदिति दर्शितम् "प्रामाण्यस्य निराकृतिः" इति ब्रुवता; निराकरणं हि दूषणम्, न साधनम्; दूषणं च परसिद्धमपि भवति ॥

साध्यान्तरे प्रयोगान्तरमाह—**यदि वेति** । सर्वचोदना इति धर्मिनिर्देशः, पुरुषाधीनप्रामाण्या इति साध्यो धर्मः, सर्वशब्दः सर्वनामत्वात् प्रकृतवैदिककृत्स्न-चोदनाप्रतिज्ञापादनार्थः । तेनानाप्तचोदनापेक्षया नाभ्युपगमविरोधः ॥

1. अन्यतोभ. मा.
2. मद्दादि. मा.
3. एवमपि. मा.

**स्वतो वा न प्रमाणं स्युर्वाक्यत्वात् पुरुषोक्तिवत् ॥ २८ ॥**

**प्रामाण्यं वा नरापेक्षं सर्वशब्देषु गम्यताम् ।**
**शब्दैः सम्बध्यमानत्वादप्रामाण्यं यथैव हि ॥ २९ ॥**

**न स्याद्वक्तृगुणानां चेद्वचःप्रामाण्यहेतुता ।**

नन्वप्रामाण्यवादिनः पुरुषाधीनप्रामाण्यसाधनेऽभ्युपगमविरोधः । परतः प्रामाण्यवादिनश्च अप्रामाण्यप्रस्तावेऽनवसरः । येऽपि च लक्षणया स्वतःप्रामाण्याभावप्रतिज्ञेयमिति मन्वते, तेषाम् "स्वतो वा प्रमाणम्" इत्यनेन पुनरुक्तं स्यात् । "वाक्यत्वात्" इति चानाप्तवाक्यैरनैकान्तिकः । "पुरुषोक्तिवत्" इति अप्रमाणपुरुषोक्त्यपेक्षया साध्यविकलो दृष्टान्तः । तत्रोच्यते—न वेदवाक्यानां पुरुषाधीनप्रामाण्यसाधने शाक्यानामभ्युपगमविरोधः ; धर्मे हि चोदनायाः प्रामाण्यं तैर्नेष्यते । वाक्यविशेषविवक्षायां तु चोदना प्रमाणतया सिध्यन्ती न तेषां किञ्चिद्विरुणद्धि । तच्चैतद्धर्मं प्रति प्रामाण्यनिरासाय साध्यत इति प्रकृतोपयोगः । प्रमाणत्वे सतीति च विशेषणादनैकान्तिकताभावः ॥ साध्यान्तरमाह—**स्वतो वेत्यर्धेन** । ननु स्वतःप्रामाण्यप्रतिषेधात् परतःप्रामाण्यापत्तेरभ्युपगमविरोधः, विशेषप्रतिषेधेन विशेषान्तराभ्यनुज्ञानात् । नैतदेवम् ; प्रमाणान्तराविषयत्वाच्चोदनानां संवादाभावेन वादिप्रतिवादिभ्यां परतःप्रामाण्यानभ्युपगमे सत्यधुना स्वतोऽपि प्रामाण्यं नास्तीति निषेधात् अप्रामाण्यमेवावतिष्ठते ॥

प्रयोगान्तरमाह—**प्रामाण्यमिति** । प्रामाण्यं धर्मि, सर्वशब्देष्विति धर्मिविशेषणं मा भूत् प्रत्यक्षादावभ्युपगमविरोध इति, नरापेक्षमिति साध्यो धर्मः, 'यत् प्रामाण्यम्' इति चानुवादान्न वेदवाक्यानां प्रामाण्यापत्त्याभ्युपगमविरोधः, शब्दैः सम्बध्यमानत्वादिति हेतुः । ननु चायं शब्दत्वादिभिरनैकान्तिकः । शब्दत्वादीनामभावादविपक्षतेति चेन्न, अन्यापोहात्मकैरपि तैरनैकान्तिकत्वात् । ये च वाच्यवाचकलक्षणसम्बन्धसम्बन्धिनः पुरुषानपेक्षजन्मानः पर्वतादयः, तैरप्यनैकान्तिकत्वम् । तस्मात् 'स्वतः परतो वा' इतीदृशविचारगोचरापन्नत्वे सतीति विशेषणीयम् । अप्रामाण्यसामान्यं च दृष्टान्तः । तेन मृगतृष्णिकादिज्ञानगताप्रामाण्यापेक्षया न हेतुविकलो दृष्टान्तः ॥

इतश्च शब्दप्रामाण्यं नरापेक्षमित्याह—**न स्यादिति** । एवं मन्येत—

तद्दोषैरप्रमाणत्वं किमित्यस्य भविष्यति ॥ ३० ॥

एवं स्थिते तु वेदस्य सति वासति वा नरे ।
प्रामाण्यं दुर्लभं मत्वा नन्वित्ये[1]तदचूचुदत् ॥ ३१ ॥

तत्र विप्रतिषिद्धत्वं बुद्धवाक्येऽपि युज्यते ।
ततोऽपि प्रत्ययोत्पत्तेस्तस्माज्जात्युत्तरन्त्विदम् ॥ ३२ ॥

सर्वविज्ञानविषयमिदं तावत् [2]परीक्ष्यताम् ।
प्रमाणत्वाप्रमाणत्वे स्वतः किं परतोऽथ वा ॥ ३३ ॥

पुरुषगुणे सति वाक्यप्रामाण्यदर्शनात् असति चादर्शनात् अन्वयव्यतिरेकाभ्यां पुरुषगुणकृतं वाक्यप्रामाण्यमवगम्यते । तद्यदि सतोरन्वयव्यतिरेकयोर्गुणकृतं नेष्यते, अप्रामाण्यमपि पुरुषदोषकृतं न स्यात्; विशेषाभावात्; न हि तस्यापि दोषकृतत्वेऽन्यत् प्रमाणमिष्यते; इष्यते च तत्कृतमप्रामाण्यं भवद्भिः; तद्वत् पुरुषगुणकृतं प्रामाण्यमिति । तदयमनेन प्रयोग उपक्षिप्तः—वाक्यप्रामाण्यं नरापेक्षम्, नरान्वयव्यतिरेकानुविधायित्वात्, अप्रामाण्यवदिति ॥

उपसंहरति—**एवमिति**। उक्तेन प्रकारेण पुरुषगुणाधीने प्रामाण्ये स्थिते यदि तावदस्त्येव वेदस्य कर्ता, तथापि प्रमाणान्तरागोचरे धर्मे तस्याप्तत्वायोगादप्रामाण्यं वेदस्य स्यात्; अथ नास्ति, ततः पुरुषगुणानां प्रामाण्यहेतूनामभावात् दूराद्वेदस्य प्रामाण्यम् । तदेवं दुर्लभं चोदनाप्रामाण्यं मत्वाह—"नन्वतथा" इति ॥

अस्य यदुत्तरम्—"विप्रतिषिद्धम्" इति, तदाक्षिपन्नाह—**तत्रेति**। सर्वत्रगतत्वादनुत्तरमित्यभिप्रायः ॥

एवं सिद्धान्तभाष्यमाक्षिप्य प्रतिसमाधास्यन्नाह—**सर्वेति**। ननु चोदनाप्रामाण्यसदसद्भावविचाराधिकारे तत्प्रामाण्याक्षेपपरिहारप्रतिसमाधाने वक्तव्ये सर्वविज्ञानप्रामाण्यपरीक्षणमसम्बद्धम्, अप्रस्तुताभिधानात्। नैष दोषः; चोदनाप्रामाण्यसिद्ध्यर्थमेव निश्चितप्रामाण्याप्रामाण्येषु ज्ञानेषु कथमप्रामाण्यं प्रामाण्यं वेति परीक्ष्यते, यथा तेषु तथा चोदनायाम्; न हि चोदनाया विषयवदलौकिकं प्रामाण्यम्, निष्प्रमाणकत्वात्। तस्माद्युक्तो विचारः ॥

1. नदचूचुदत्. मा.   2. प्रतीक्ष्यताम्. चौ. मु.

**स्वतोऽसतामसाध्यत्वात् केचिदाहुर्द्वयं स्वतः ।**
**अपरे कारणोत्पन्नगुणदोषावधारणात् ॥ ३४ ॥**

**स्वतस्तावद्द्वयं नास्ति विरोधात् परतो न च ।**
**निःस्वभावत्वमेवं हि ज्ञानरूपे प्रसज्यते ॥ ३५ ॥**

अत्र तावत् " द्वयं स्वतः " इत्येतं पक्षं परिगृह्णन्नाह—**स्वत इति** । स्वयमतदात्मनो देवैरपि तादात्म्यापत्तेः कर्तुमशक्यत्वात् द्वयं स्वत इति केचित्; न ह्यग्नौ गन्धादि सिकतासु वा तैलादि शक्यते साधयितुमिति । अपरे तु मन्यन्ते—प्रामाण्यं नाम स्वालम्बननिश्चायकत्वम्; न च प्रमाणान्तरसंवादानपेक्षमुत्पन्नमात्रं विज्ञानं निश्चायकम्, प्रमाणेतरयोस्तदानीं विशेषाप्रतिभासनाद्विशेषावसायनिबन्धनत्वाच्च निश्चयस्य । अतो विज्ञानकारणेषु ये गुणदोषास्तदवधारणात् प्रामाण्यमप्रमाण्यं वेति द्वयं परतः ॥

एतौ पक्षौ यथाक्रमं निराकर्तुमाह—**स्वतस्तावद्द्वयं नास्तीति** । द्वयं स्वत इत्येतत्तावदयुक्तम् । तद्ध्येकस्यां वा विज्ञानव्यक्तौ स्यात् विज्ञानव्यक्तिभेदेन वा ? एकस्यां तावन्नास्तीत्याह—**विरोधादिति** । प्रमाणत्वाप्रमाणत्वे अपि परस्परपरिहारस्थितिलक्षणेन विरोधेन विरुध्येते; कथमेकव्यक्तिनिवेशिनी स्याताम् ? यत्तूक्तम् " स्वतोऽसतामसाध्यत्वात् " इति, तदयुक्तम्; असच्चेन्न साध्यम्, सतामप्यात्मादीनां नतरां साध्यत्वमिति कार्यकारणव्यवहारोच्छेदः । यत्तु ' सिकतासु वा तैलादि न जायते ' इति, तन्न; सर्वं सर्वोत्पादकशक्तियुक्तमित्यदोषः । तस्मात् " द्वयं स्वतः " इत्यनुपपन्नम् । परतो न द्वयमित्यनुषङ्गः । कुत इति चेदत आह—**निःस्वभावत्वमित्यर्धेन** । यदि ज्ञानस्योत्पन्नस्य कारणदोषाद्यवधारणादन्यतो वा कुतश्चित् प्रमाणत्वाप्रमाणत्वे स्याताम्, एवं सति विज्ञानस्य स्वभावान्तराभावात् स्वतो निःस्वभावत्वं स्यात् । ततश्च तस्याप्यभाव एव प्राप्त इति परतोऽपि कस्य ते स्यातामिति ॥

नन्वेकस्यामपि व्यक्तौ कालभेदेन विरुद्धधर्मसमावेशो दृष्टः यथा एकद्रव्यव्यक्तौ रक्तारक्तत्वे, तद्वत् प्रामाण्याप्रामाण्ये स्याताम्; अतः " विरोधात् " इत्ययुक्तम् । यदप्युक्तम् ' परतोऽपि न द्वयम्, निःस्वभावत्वमेवं हि '—तदप्ययुक्तम्; असतोरपि प्रमाणत्वाप्रमाणत्वयोर्विज्ञाने सत्त्वगुणत्वज्ञेयत्वादिस्वभावसद्भा-

कथं ह्यन्यानपेक्षस्य विपरीतात्मसम्भवः ।
किमात्मकं भवेत्तच्च स्वभावद्वयवर्जितम् ॥ ३६ ॥

विज्ञानव्यक्तिभेदेन भवेच्चेदविरुद्धता ।
तथाप्यन्यानपेक्षत्वे किं क्वेति न निरूप्यते ॥ ३७ ॥

तस्मात् स्वाभाविकं तेषामप्रमाणत्वमिष्यताम् ।
प्रामाण्यं च परापेक्षमत्र न्यायोऽभिधीयते ॥ ३८ ॥

अप्रामाण्यमवस्तुत्वान्न स्यात् कारणदोषतः ।
वस्तुत्वात्तु गुणैस्तेषां प्रामाण्यमुपजन्यते ॥ ३९ ॥

वादित्याशङ्क्य हेतुद्वयेऽपि श्लोकेन दोषं परिहरति—**कथमिति** । एतदुक्तं भवति—युक्तं यदेकत्र द्रव्ये रक्तारक्तत्वे कालभेदात् क्रमेण संभवत इति, तद्भावस्यान्यापेक्षत्वात् द्रव्यस्य च स्थायित्वात्; विज्ञानं तु क्षणिकम्; न च स्वतोद्वयवादिनः प्रमाणत्वाप्रमाणत्वे प्रति परापेक्षेति कालभेदेनाप्ययुक्तो विरुद्धधर्मसमावेशः । तस्मात् सूक्तं विरोधादिति । द्वितीयचोद्ये परिहारमाह—**किमात्मकं भवेत्तच्चेति** । सर्वं हि जगत् स्वभावद्वयान्तर्भूतं किंचित् प्रमाणस्वभावम् अवशिष्टमप्रमाणस्वभावम् । न च स्वभावान्तरमस्ति ; सत्त्वगुणत्वादयो ह्यन्यतरांशपातिनः ; तथा सति कारणगुणदोषावधारणात् प्रामाण्याप्रामण्याभ्युपगमे तदवधारणात् प्राक् स्वभावद्वयवर्जितं किमात्मकं किंस्वरूपं स्यादिति न विद्मः । तस्माद्युक्तम् "निःस्वभावत्वमेवं हि" इति ॥

अथ विरोधपरिजिहीर्षया भिन्नव्यक्त्याश्रयं नीलपीतवत् स्वभावतो द्वयमुच्येत, तत्राप्याह—**विज्ञानेति** । एवमपि सर्वविज्ञानेषु बोधस्वरूपतया स्वतो विशेषाप्रतिभासनादन्यस्य च संवादस्याविसंवादस्य च स्वतोद्वयवादिनानपेक्षणात् क्व ज्ञानव्यक्तौ प्रामाण्यम् क्व वा नेत्यनिश्चयात् व्यवहरोच्छेदप्रसङ्गः ॥

पक्षान्तरमाह—**तस्मादिति** त्रिपाद्या ॥ यस्मादेवं स्वतः परतो वा द्वयं नावकल्पते, तस्मादप्रामाण्यं स्वतः, प्रामाण्यं परतो युक्तम् । ननु न परपक्षदूषणमात्रं स्वपक्षसाधनमत आह—**अत्र न्यायोऽभिधीयत इति** ॥

तमधुना प्रतिज्ञाद्वयेऽपि न्यायमाह—**अप्रामाण्यमिति** । अप्रामाण्यं धर्मि, न स्यात्कारणदोषत इति साध्यो धर्मः । अत्र च कारणदोषाददुष्टाद्वा कारणान्नेति

सिद्धसाध्यता मा भूदिति "न स्यात्कारणदोषतः" इत्युभयमुक्तम्। किं कारणम्? अवस्तुत्वात्; अप्रामाण्यं हि नाम प्रामाण्याभावः; तस्यावस्तुत्वान्न कुतश्चिदुत्पादनम्। ननु प्रामाण्याभावः प्रध्वंसादिरूपः; तत्र चतुर्विधस्यापि वस्तुत्वेन मीमांसकैरिष्टत्वात् "अवस्तुत्वात्" इत्यसिद्धो हेतुः। सिद्धत्वे वा घटादिप्रध्वंसेनानैकान्तिकः। तत्रोच्यते—अयमभिप्रायः, वादिनो बौद्धस्य तुच्छाभावो न वस्त्वन्तरं स्यात्। यदि वस्त्वन्तरं स्यात् सत्यपि तस्मिन् भावस्य पूर्ववद्दर्शनं स्यात्, अविशेषात्; न हि पटे सति घटानुपलब्धिः। भावान्तरविरोधित्वादभावस्यायमदोष इति चेत्, न; यदि तावदकिञ्चित्करो भावस्याभावः, कथं विरोधी स्यात्? अतिप्रसङ्गात्। अथ किञ्चित्करः, तथापि भावस्वरूपं तावन्न करोति, तस्य स्वहेतोरुत्पादात्; अर्थान्तरकरणे भावस्यापूर्ववद्दर्शनं स्यात्। तस्माद्घटाभाव इति नास्तीत्यर्थः; न पुनस्तस्याभावो नामापरो भवति। यथोक्तम्—

"न तस्य किञ्चिद्भवति न भवत्येव केवलम्"। इति॥

तस्मान्नासिद्धो हेतुः। न च घटादिप्रध्वंसेनानैकान्तिकः, तस्य वादिना निर्हेतुकत्वाभ्युपगमात्; प्रतिवादिनं च प्रति साधयिष्यामीत्यभिप्रायः। तस्मादवस्तुत्वान्नाप्रामाण्यं परतः; किं तु स्वत एव; प्रामाण्यं तु स्वालम्बनाव्यभिचारित्वम्; न बोधकत्वम्, तस्य प्रमाणेतरसाधारणत्वात्; तस्य वस्तुत्वाद्युक्ता गुणैरुत्पत्तिः। ननु विज्ञानकारणगुणजन्यं प्रामाण्यं वस्तुत्वादिति विपक्ष एव घटादौ भावाद्विरुद्धो हेतुः। अथ गुणवत्कारणजन्यं प्रामाण्यमिति पक्षः, तथापि दुष्टकारणजन्यैः कुब्जघटादिभिरनैकान्तिको हेतुः। अथ जन्यं प्रामाण्यमिति पक्षः, तथापि सिद्धसाध्यता, मीमांसकेनापि प्रामाण्यनित्यत्वानभ्युपगमात्; गुणग्रहणानर्थक्यं च। सर्वेषु च पक्षेषु नित्यैर्व्योमादिभिरनैकान्तिको हेतुः।

अत्रोच्यते—प्रामाण्यस्य कार्यत्वमेव साध्यम्। न च सिद्धसाध्यता, कार्यत्वे सत्यन्वयव्यतिरेकाभ्यां कारणगुणकार्यत्वसिद्धेः। अकार्यत्वे तु कारणान्वयव्यतिरेकावन्यथासिद्धौ स्याताम् अप्रामाण्य इव कारणगुणदोषान्वयव्यतिरेकौ। गुणग्रहणेनापि कार्यत्वसिद्धौ सत्यामन्वयव्यतिरेकाभ्यां गुणकार्यत्वं प्रामाण्यस्य सिध्यतीति दर्शयति। न च नित्यैरनैकान्तिको हेतुः; अर्थक्रियाकारित्वलक्षणं हि वस्तुत्वम्; न च तन्नित्येष्वस्ति, क्रमयौगपद्याभ्यामर्थक्रियाविरोधादित्यभिप्रायः; अयमसौ न्यायार्थः॥

प्रामाण्यं हि यदोत्सर्गात्तदभावोऽप्यकृत्रिमः ।
तदा स्वप्नादिबोधेऽपि प्रामाण्यं केन वार्यते ॥ ४० ॥

मत्पक्षे कारणाभावात् प्रामाण्यं नोपजायते ।
हेतुमत्त्वप्रसङ्गोऽतो न भविष्यत्यवस्तुनः ॥ ४१ ॥

इन्द्रियादिगुणाश्चास्य कारणं तदसद्द्विधा ।
[1]दुष्टत्वाद्वेन्द्रियादीनामभावेऽन्यतरस्य वा ॥ ४२ ॥

एवं स्वपक्षसाधनमुक्त्वा स्वतःप्रामाण्यपक्षे प्रमाणाप्रमाणविभागाभावप्रसङ्गमापादयन्नाह—**प्रामाण्यं हीति**। अयमभिप्रायः—सर्वज्ञानानि हि यावत्सद्भावं बोधात्मकानि। तत्र बोधात्मकता चेत् प्रामाण्यम्, तस्यां सत्यामेव स्वप्नादिज्ञाने तद्विरुद्धत्वादप्रामाण्यं बाधकात् प्रत्ययादन्यतो वा कुतश्चित् कथमास्कन्देदिति ॥

ननु त्वत्पक्षेऽपि स्वप्नादिज्ञानेषु प्रामाण्यं कस्मान्न भवति? कारणदोषात्तत्राप्रामाण्योत्पादादिति चेत्, एवं तर्हि प्राप्तमवस्तुनोऽपि हेतुमत्त्वम्; अतश्च पूर्वोक्तहेतुविरोधः। सेयमुभयतस्पाशा रज्जुः—सर्वज्ञानेषु वा प्रामाण्यम्, अवस्तुनो वा हेतुमत्त्वमित्याशङ्क्याह—**मत्पक्ष इति**। न तावत् स्वप्नज्ञानेषु मत्पक्षे प्रामाण्योत्पत्तिः, तेषु पूर्वोक्तप्रामाण्यकारणाभावात्; हेतुमत्त्वप्रसङ्गोऽप्यत एवावस्तुनो न भविष्यति; प्रामाण्यकारणाभावादेव स्वाभाविकाप्रामाण्यसिद्धिः ॥

ननु प्रत्यक्षादीनां प्रमाणानां प्रामाण्यकारणमिन्द्रियादि, विधिमुखेन वा गुणानां कार्यमुखेन वा अप्रतीतेः; तदभावात् स्वप्नादिज्ञानानां मा भून्नाम प्रामाण्यम्; द्विचन्द्रादिज्ञानानां तु इन्द्रियादिप्रमाणकारणसद्भावात् त्वत्पक्षेऽपि प्रामाण्यं प्रसज्यत एव; किमुच्यते "मत्पक्षे कारणाभावात्" इतीत्याशङ्क्याह—**इन्द्रियादीति**। स्यादेवम्, यदि केवलमिन्द्रियादि प्रामाण्यकारणं स्यात्; किं तर्हि? इन्द्रियादि, तेषां च गुणा अस्य प्रामाण्यस्य कारणम्। केवलं हीन्द्रियादि ज्ञानमात्रस्य कारणम्, न प्रामाण्यस्य। ततश्च तदसद्द्विधा भवति—दुष्टत्वादिन्द्रियादीनां तिमिरादिदोषैः, अन्यतमाभावेन वा। ततश्चेन्द्रियादिगतानां गुणानामपि प्रामाण्यकारणत्वात्तदभावात् द्विचन्द्रादिज्ञानेषु प्रामाण्यानुपपत्तिः ॥

1. दुष्टत्वादिन्द्रि. चौ. मु.

अत [1]एव च वो भ्रान्तिर्दोषैर्मिथ्यात्वधीरिति ।
तद्व्याप्तेस्तु गुणाभावस्तत्कृता ह्यप्रमाणता ॥ ४३ ॥

तस्मात् कारणशुद्धत्वं ज्ञानप्रामाण्यकारणम् ।
स्वभावतोऽप्रमाणत्वं तदभावेन [2]लभ्यते ॥ ४४ ॥

अन्वयव्यतिरेकाभ्यामप्रामाण्यं न दोषतः ।
नाज्ञाने दृश्यते ह्येतत् कारणाभावहेतुके ॥ ४५ ॥

ततश्च पुरुषाभावात् सति वा शुद्ध्यसम्भवात् ।
निर्मूलत्वात् प्रमाणत्वं चोदनानां[3] न युज्यते ॥ ४६ ॥

ननु सत्सु दोषेष्वप्रामाण्यदर्शनादसत्सु चादर्शनादन्वयव्यतिरेकाभ्यां दोषकारणत्वमवगम्यत इत्याशङ्कयाह—**अत एवे**त्यर्धेन । अन्वयव्यतिरेकदर्शनाद्भवतामियं भ्रान्तिः—दोषैर्मिथ्यात्वमिति । एतदुक्तं भवति—अनन्यथासिद्धाभ्यामन्वयव्यतिरेकाभ्यां कार्यकारणभावावगतिः ; अन्यथासिद्धौ चैतावन्वयव्यतिरेकौ । कथमिति चेदत आह—**तद्व्याप्तस्तु गुणाभाव इति** । अयमभिप्रायः—ज्ञानेषु हि निसर्गस्याप्रामाण्यस्य कारणगुणजन्यं प्रामाण्यमपवादः ; तत्र यदा तिमिरादिदोषदुष्टानि कारणानि भवन्ति, तदा तद्विरोधित्वात् प्रामाण्यकारणानामभावः ; तदभावाच्च तत्कार्यं प्रामाण्यं न जातम् । अप्रामाण्यं त्वनपोदितसिद्धं स्वाभाविकमास्त एव ; तत्र दोषाणां न व्यापारः । क्व तर्हि ? गुणोत्पत्तिप्रतिबन्धने । तदाह—**तत्कृता ह्यप्रमाणतेति** । गुणाभावोपलक्षितेत्यर्थः ॥

पूर्वोक्तमुपसंहरति—**तस्मादिति** ॥

अधुना दोषैः सहाप्रामाण्यस्यान्वयव्यतिरेकावेव न स्त इति दर्शयन्नाह—**अन्वयेति** । अन्वयव्यतिरेकाभ्यामप्रामाण्यं दोषत इति यदुच्यते, तन्न । कुतः ? यस्मान्नाज्ञाने ज्ञानानुत्पादरूपेऽप्रामाण्ये खल्विदं दोषकृतत्वं दृश्यते ; ज्ञानानुत्पादरूपस्याप्रामाण्यस्य कारणाभावादेव सिद्धत्वात् ॥

स्वाभिप्रेतसिद्धिमधुना परतः प्रामाण्यवादी दर्शयन्नाह—**ततश्चेति** । शब्दस्य ह्याप्तप्रयुक्तत्वं गुणः ; तत्रापौरुषये वेदे चोदनानां तदभावादप्रामाण्यम् ;

1. एव वचोभ्रान्ति. चौ. मु.
2. लक्ष्यते. चौ. मु.
3. नायाम्- चौ. मु.

स्वतः सर्वप्रमाणानां प्रामाण्यमिति [1]गृह्यताम् ।
न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते ॥ ४७ ॥

पौरुषेये वा प्रमाणान्तरागोचरे धर्मे पुरुषस्याप्तत्वलक्षणा शुद्धिर्न संभवतीत्यप्रामाण्यमेव । ननु गुणाधीनेऽपि प्रामाण्ये चोदनाया नित्यत्वमाकाङ्क्षासन्निधियोग्यपदार्थपूर्वकत्वं वा अनाप्ताभावलक्षणो वा गुणोऽस्तीति तज्ज्ञानस्य प्रामाण्यं स्यात् । नैतदेवम् ; अन्वयव्यतिरेकाभ्यां ह्याप्तप्रयुक्तत्वं वाक्यस्य प्रामाण्यकारणगुणोऽवगम्यते ; न च नित्यत्वं नामापरं कारणगुण इत्यत्र प्रमाणमस्ति, तत्कृतस्य प्रामाण्यस्य क्वचिदप्यदर्शनात् ; प्रत्युत नित्यत्वं दोषाय । यथोक्तम्—“अभ्युपेत्योच्यतेऽथवा” इति । आकाङ्क्षादिपदार्थकत्वमपि ज्ञानोत्पत्तौ कारणम् ; न प्रामाण्यं प्रति गुणः, विप्रलम्भकवाक्येऽपि दर्शनात् । अनाप्ताभावोऽपि न गुणः, अप्रमापकेष्वपि व्योमादिषु द्विचन्द्रादिज्ञानेषु च दर्शनात् । एवम् ‘उभयं परतः’ इत्यत्रापि पक्षे पुरुषगुणानामभावादप्रामाण्यं चोदनानाम् । तथा ‘द्वयं स्वतः’ इत्यत्रापि पक्षे चोदनानामप्रामाण्यम् ; न हि द्वयोः स्वाभाविकत्वे चोदनायाः प्रामाण्यं स्वाभाविकमित्यत्र निश्चयोऽस्ति ॥

अत्र प्रतिविधत्ते—स्वतः सर्वप्रमाणानामिति । केचिदेवमाहुः—सर्व एव भावाः स्वतःसन्त एव कारकैः क्रियन्ते, नासन्तः, कार्योत्पादनियमात् ; न हि स्वतोऽविद्यमाना शशविषाणादयः क्वचिदपि शक्यन्ते कर्तुम्, सिकतासु वा तैलम् । असदुत्पत्तौ तु सर्वत्रासत्त्वे नियमाभावादुत्पत्तिः स्यादिति । तदयुक्तम्, कारणवैयर्थ्यप्रसङ्गात् । असच्चेन्न जन्यते, सन्नतराम् इति कार्यकारणभावाभावप्रसङ्गः । अभिव्यक्तिः क्रियत इति चेत्, सापि सती असती वा स्यात् ; उभयथापि क्रियाभावः ; सच्चाभिव्यज्यते, न च सत्त्वे प्रमाणमस्ति । ननु [2]तत्कार्योत्पादनियम इत्युक्तम् । तदयुक्तम्, शक्तिनियमादपि कार्योत्पादनियमसिद्धेः । सदर्थविषये च कारकव्यापार इष्यमाणे कारकव्यापारानुपरमप्रसङ्गः ; किं हि तदोपलक्ष्य कारकाणि निवर्तेरन्? कार्यसत्तामिति चेन्न, त्वन्मते तस्याः प्रागपि भावात् ; अभिव्यक्तिस्तु निरस्तैव । यदि चासत् प्रामाण्यं कर्तुं न शक्यत इति स्वतस्तदित्युच्यते, अप्रामाण्यमपि तर्हि तेनैव हेतुना स्वत एव प्राप्नोति ।

1. गम्यताम् चौ. मु. 2. तात्पर्योत्पाद. मा.

अथाभिव्यक्तिरस्य परत इति परतोऽप्रामाण्यमुच्यते, प्रामाण्यमपि परतोऽभिव्यज्यत इति परतः स्यात्। तस्मात् तुल्यमेतत् प्रमाणेतरयोरित्यलमतिप्रसङ्गेन।

अपर आह—कारणगुणप्रक्रमेण कार्ये गुणारम्भः। न च विज्ञानकारणानामिन्द्रियादीनामबोधरूपाणां बोधाख्यशक्तिरस्ति; तेनोच्यते न स्वतो विज्ञाने बोधरूपता असती कर्तुमन्येनेन्द्रियादिना[1] शक्यते, तेषु तस्या अभावादिति। अप्रामाण्यं पुनरबोधरूपम्। तच्चानवबोधरूपैः कारणैः शक्यक्रियमिति।

एतदपि न युक्तम्, इन्द्रियादीनामप्रामाण्यप्रसङ्गात्। ततश्च "यद्वेन्द्रियम्" इत्यनेनाभ्युपेतेन विरुध्यते। न चायं नियमः—कारणगुणैः कार्यगुणाः क्रियन्ते इति, स्वात्मन्यसतामपि महत्त्वदीर्घत्वादीनां परिमाणविशेषाणां परमाणुभिः क्रियादर्शनात्।

योऽपि मन्यते—प्रामाण्यं नाम परिच्छेदोत्पादिका शक्तिः। तन्निमित्त एष ज्ञानेषु प्रमाणशब्दः। शक्तिश्च क्षणिकविज्ञानाश्रिततया न स्वतोऽसती शक्या कर्तुम्, कालत्रयेऽपि क्रियानुपपत्तेः। न तावत् प्राक्, विज्ञानक्रियोत्पत्तेराश्रितत्वात् स्वाश्रयाभावे तदयोगात्; न ह्यसति कुड्ये चित्रकर्म। अनेन च हेतुना असहोत्पादः; न खलु कुड्यचित्रयोर्युगपदारम्भः। ननु चित्रं पटस्येव ज्ञानस्योत्पन्नस्य सा करिष्यते। न, क्षणिकत्वात् तावत्कालं स्थितेरभावात्। तस्मात् कार्यतायामसत्त्वमेव स्यात्, तच्चायुक्तम्, परिच्छेदविरोधात्—इति अकार्या शक्तिः स्वत एव सेति कारणैः सह तद्भावभावित्वमन्यथासिद्धमिति, तदाश्रयस्य तैः क्रियमाणत्वादिति।

तदप्ययुक्तम्, आश्रितानामपि पटे रूपादीनां सहोत्पत्तिदर्शनात्। ननु उत्पन्न एव पटे रूपाद्यारम्भः। न, तद्रहितानामनुपलब्धेः। योगिभिः सावस्थोपलभ्यत इति चेन्न, प्रमाणाभावात्। अपि च यथैवोत्पन्ने पटे रूपाद्यारम्भः, एवं शक्त्यारम्भोऽपि किं नेष्यते? क्षयित्वाद्विज्ञानानां तावत्कालं स्थितेरभावादिति चेत्, नैतदेवम्; अर्थपरिच्छित्त्या हि ज्ञानमनुमीयते, न चासावशक्तादुत्पद्यत इति शक्त्युत्पादं यावत् स्थास्यति, इतरथा विज्ञानसद्भावे प्रमाणाभावात्। यदि चाश्रितत्वाच्छक्तेः कालत्रयेऽप्यकार्यत्वम्, अप्रामाण्यशक्तिरपि तर्हि तेनैव हेतुना न कार्या

1. यादीनाम्. मा.

स्यादिति स्वत एवाप्रामाण्यप्रसङ्गः । अथाकार्याप्यप्रमाणशक्तिरन्यतः परिज्ञानात् परत इत्युच्यते, अकारणं तर्ह्यकार्यत्वं स्वतःप्रामाण्ये, अकार्यापि सती प्रमाण-शक्तिरप्रमाणशक्तिवत् कार्ये परिज्ञानमपेक्षत इति । अथ नापेक्षत इति मन्यसे—एतदेव तर्हि वाच्यम्—कस्मादकार्यताप्रतिपादने प्रयत्यते ?

अपरे तु मन्यन्ते—बोधकत्वं नाम प्रामाण्यम्, तच्च विज्ञानानां स्वाभा-विकमेव, न गुणकृतम्; गुणाभावेऽपि विपर्ययज्ञाने सद्भावादिति स्वतः प्रामाण्यम् । गुणैस्तु सह तद्भावभावित्वमन्यथासिद्धमिति वक्ष्यामः "तस्माद् गुणेभ्यो दोषाणाम-भावः" इति ।

एतदप्यनुपपन्नम्; यतो न बोधकत्वं प्रामाण्यम्, अप्रमाणेऽपि शुक्तिकायां रजतज्ञाने सद्भावात् । ननु न बोधात्मकत्वमात्रं प्रामाण्यम्; तद्व्यभिचरति; निर्विचिकित्सस्तु बोधविशेषः प्रमाणम्—हस्तोऽयम् इति । स चोत्पत्तावेव बोधान्तराद्विलक्षण एव भासत इति तादृशस्य नास्ति व्यभिचारः । तदनुपपन्नम्; यादृशादेव हि बोधविशेषात् प्रवृत्तौ सत्यां विषयप्राप्तिः संजाता, तादृशस्यैव शतशो व्यवहारप्रवर्तकस्य बाधदर्शनात् कथं न व्यभिचारः? कश्चायं बोधविशेषः, योऽत्र परिकल्पितः प्रमाणं नाम ? यदि तावत् स्पष्टः, शुक्तिकायामपि रजताभासः स्पष्ट एव । अथ निर्विचिकित्सता, शुक्तिकायामपि रजताभासो निर्विचिकित्स एव । अथ निष्कम्पता, शुक्तिकायामपि रजतावभासो निष्कम्प एव । अथ यादृशस्य बाधो न दृष्टः, स बोधविशेषः प्रमाणम्; सर्वावस्थस्य, बाधादर्शनात् । ननु तदेव पर्यनुयुक्तम्—कीदृशस्य बाधो न दृष्टः इति । अपि च का पुनरियं स्पष्टता, निःसन्दिग्धता निर्विचिकित्सता वा; यदि तावद्विषयावभासस्य निःसन्दि-ग्धता, शुक्तिकायामपि रजतावभासो निःसन्दिग्ध एव । अथ विषयव्यभिचारिता-व्यभिचारिते, ते हि विषयव्यभिचारिताव्यभिचारिते किमुत्पत्तौ तस्मिन्नेव विषयवत् प्रतिभासेते, उत बोधान्तरे ? न तावत्तस्मिन्, विषयावभासातिरेकेणोत्पत्तावप्रति-भासनात् । प्रतिभासे चैकस्मिन् प्रवृत्तिर्बाधकोत्पत्तिश्च न प्राप्नोति । संवादक-बोधाभ्युपगमेऽपि अनवस्था परतः प्रामाण्यप्रसङ्गश्च । अपि च, अप्रतिपन्नसद-सद्भावः 'कन्यकुब्जे गङ्गास्ति' 'रोमशायां गङ्गास्ति' इति वाक्यद्वयोत्पन्नयो-र्बोधयोर्न कश्चिद्विशेष उपलभ्यते । तथाप्रतिपन्नसद्भावः 'अपवरके घटस्तिष्ठति' 'अपवरके घटो नास्ति' इतिवन्न कश्चिद्विशेष उपलभ्यते । कार्यावगमेऽपि 'यजेत स्वर्गकाम' 'श्वमांसं भक्षयेत्' इति न कश्चिद्विशेषः । अतो बोधविशेष-

स्याभावात् बोधमात्रस्य शुक्तिकायां रजतज्ञाने सद्भावात् न बोधकमात्रं प्रमाणम् ।

ननु नैव शुक्तिकायां रजतज्ञानं प्रमाणम्; न ह्येकमेवेदं विज्ञानमन्यथा सन्तमर्थमन्यथा बोधयति, तथाविधज्ञानोत्पत्तौ कारणाभावात्; अदुष्टादिकारणादविसंवादकं ज्ञानमुत्पद्यते, दुष्टाच्च कार्यानुत्पत्तिः; न तु विपरीतकार्योत्पत्तिः; न हि यवादयो दुष्टाः शाल्यङ्कुरप्रसवसमर्थतामश्नुवीरन् । तस्माद्विज्ञानद्वयमेतत्—'इदम्' इति पुरोऽवस्थितार्थग्राहि प्रत्यक्षज्ञानम् 'रजतम्' इति चानुभूतस्मरणम् । अतश्चैतत्स्मरणमननुभूतस्येत्येतन्नोपपद्यते ।

तदेतदपरामृष्टसंविद्विलसितम् । अपरोक्षतया ह्यत्र रजतमवभासते 'रजतमिदम्' इति, नानुभूततया । अनुभवावस्थायां चानुभूततया स्मरणं भवति, न विषयावस्थायाम् । एतदुक्तं भवति–अनुभूतस्य स्मरणं भवति, नानुभूयमानस्य; धाराविज्ञानानामपि स्मरणत्वप्रसङ्गात् । अप्रतिपन्नरजतस्यापि शुक्तिकायां रजतशब्दार्थप्रतिभासिविज्ञानं संज्ञानुसन्धानरहितमुत्पद्यत एव तत् कथं स्मरणम् यथा अप्रतिपन्नरजतस्य रजते रजतज्ञानमाद्यम् । तथा ह्येवं वक्तारो भवन्ति—अपूर्वं किमपि प्रतिपन्नम्, न जाने किमपि तदुत्पद्यत इति । क्वचिच्चोत्तरकालम्—इदं मया ज्ञातम्, अपूर्वं किमपीदम्, यावच्छुक्तिकेयम्—इति प्रवादः । क्वचित् कथयति—रजतमिदमुच्यत इति । अपि च रजते रजतान्न विशेषो दृश्येऽवभासते; बाधकप्रत्ययोत्पत्तावपि सामग्रीमात्रवैलक्षण्यावगतिः, न प्रतिभासे कश्चिद्विशेषः । भवत्पक्षे च 'नेदं रजतम्' इति बाधकप्रत्ययोत्पत्तिर्न प्राप्नोति; यदिदमपरोक्षं तेजस्वितया, नैतत् [1]प्रतिभासितं रजतम्; यत्त्वनुभूतरजतरूपतया प्रतिभासितमिति मितम्, तद्रजतमेव । अप्रसक्तप्रतिषेधश्चायम्; इतरथा 'नायमश्वः' इत्यपि स्यात् । शुक्तिकारजतयोर्विवेकग्राहकमिदमिति चेन्न, अपरोक्षवस्तुधर्मतया रजताभावमात्रप्रतिभासनात् । अपि च, यदि तावदनुभूततयैव रजतमवभासितं तदा का विविक्तता ? अथापरोक्षतया ततो विपरीतख्यातिः । भवतु वा सदृशदर्शनादत्र स्मरणमिति, तिक्तशङ्खादौ मधुरपीतज्ञानं कथं स्मृतिः ? अथैवंजातीयके विपरीतख्यातिः, शुक्तिकादौ तु प्रमोषः; तदनुपपन्नम्; प्रतिभासाविशेषात् । स्वतःप्रामाण्यशून्यवादचोद्ये चापरिहृते एव । यत्तु कारणाभावान्नैकं

1. प्रातिभासिकम् वस्व. मा.

विज्ञानम्; तदनुपपन्नम्; यदि कार्यमवगम्यते किं कारणविकल्पेन ? कथं वा तदभावः ? अथ नावगम्यते, अनवगमादेव तदभावः; न कारणाभावादिति । अपि च दोषसहकारि चक्षुरिन्द्रियं विपर्ययज्ञानोत्पादकम्; सम्यग्ज्ञानाभिप्रायेण दुष्टत्वम्; विपर्ययज्ञाने तु तत्कारणमेव; सर्वं चैतत् प्रमोषपक्षेऽपि समानमिति । तदेतदनुपासितगुरुप्रज्ञाविलसितत्वादुपेक्षणीयम् ।

संवित्परामर्शकुशलस्त्वाह—सत्यमेकमेवेदं विज्ञानम् । अपरोक्षतया चात्र रजतमेवावभासते । तथापि नैवेदं विज्ञानमप्रमाणम्, प्रतिभासाविशेषात् इतररजतविज्ञानवत् अत्राप्यपरोक्षरजतसद्भावात् । लौकिकालौकिकत्वे तु विशेषः । प्रतिभासाविशेषेऽपि व्यवहारप्रवर्तकं हि लोके संमतं रजतम् । यत्तु रजतव्यवहारं न प्रवर्तयति, अथ च रजतज्ञानसंवेद्यम्, तदलौकिकं रजतमिति । तदनुपपन्नम्; इह हि क्वचित् 'रजतमिदम्' इति सर्वेषां सर्वदा प्रतिभासोत्पत्तिः । क्वचिच्च—'रजतमिदम्' 'नेदं रजतम्' इति विधिप्रतिषेधरूपप्रतिभासद्वयोत्पत्तिः । तत्र प्रतिभासाविशेषात् किंचिद्रजतमेव, अपरं तु सदसदात्मकं युगपत् क्रमेण वा भवतु, बाध्यबाधकपर्यालोचनेन वा विपरीतख्यातिरिति । केयमलौकिकता लौकिकता वा संवित्परामर्शस्य ? न तावदयं लौकिकालौकिकत्वविभागः प्रतिभासनिमित्तकः; न हि रजतप्रतिभासोत्पत्तिकाले तद्धर्मतया लौकिकालौकिकत्वे प्रतिभासेते—लौकिकमिदं रजतम्, अलौकिकमिदं रजतम् इति वा । नेदं रजतम्' इत्यत्रापि पूर्वप्रतिपन्नरजताभावमात्रावगतिः । न हि पूर्वप्रतिपन्नरजतानुवृत्तौ सत्यामेवालौकिकत्वं लौकिकत्वाभावो वा अपरोक्षरजतधर्मतयावभासते । 'इदं रजतमलौकिकम्' 'इदं वा रजतं लौकिकं न भवति' इति संवित् स्यात् । ननु 'नेदं रजतम्'इति नेदं लौकिकमिति गुणपरं व्याख्यायते । तदिदं प्रतिभासशून्यं संवित्परामर्शवादी कथं ब्रूयात् ? कथं 'नेदं रजतम्' इत्यत्रापरोक्षतया प्रतिभासमाने रजताभावे 'नेदं लौकिकम्' इति तद्धर्मतया लौकिकत्वाभावोऽवसीयते ? न ह्यप्रतिभासमाने धर्मिणि तद्धर्मतया रूपरसादयोऽवभासन्ते । ननु 'नेदं रजतम्' इत्यभावोऽपि रजतधर्मतयैवावभासते, न भावमात्रधर्मतया; कथं चानवभासमाने तस्मिन् तद्धर्मावगतिः? उच्यते—यत्पूर्वं प्रतिपन्नमपरोक्षधर्मतयैव रजतम्, इदानीं च स्मर्यते तदवच्छिन्नोऽभावोऽपरोक्षवस्तुधर्मतया प्रतीयते 'नेदं रजतम्' इति । तच्चापरोक्षम् 'इदम्' इति बाधकप्रत्ययेऽवभासत

एव; न तु प्रतिषेध्यप्रतिषेधयोर्धर्मधर्मिभावोऽस्ति शुक्लपटयोरिव, विरोधात्। अप्रसक्तस्यानुप्रतिषेधो नास्तीति स्मृतौ तत् प्रसक्तमेव। न त्वत्रापरोक्षरजतधर्मतया लौकिकत्वं प्रतिपन्नमिदानीं च स्मर्यते। न चापरोक्षनया रजतमवभासते येन तद्धर्मतया लौकिकत्वाभावोऽवसीयेत। अथ पूर्वमपरोक्षरजतधर्मतयावभासित-स्यैव लौकिकत्वस्येदानीमपरोक्षतयावभासमाने रजते लौकिकत्वाभावस्तद्धर्मतया-वसीयते 'नेदं रजतं लौकिकम्' इति वा; तर्ह्यलौकिक लौकिकत्वेनावभासितमिति सुदूरमपि गत्वा विपर्ययज्ञानान्न मुच्यामह इति विपरीतख्यातौ च सत्यां बोधकत्वा-तिप्रसक्तिः विज्ञानाकारता च न निरस्ता स्यात्। तद्वरं प्रतिभासानुगुणैव विपर्ययाव-गतिरभ्युपगन्तव्या। तस्मान्नायं विभागः प्रतिभासनिमित्तकः, नापि रजतव्यवहार-सदसद्भावनिमित्तकः; कुतः? अलौकिकेऽपि रजते स्वप्नावस्थायामप्यसकृदर्थक्रिया-दर्शनात्, जाग्रदवस्थायामपि कूटजयतुङ्गादिषु; लौकिकेऽपि चोत्पन्नविनष्टे घटे घटव्यवहाराभावात्। अपि च ये तावद्रजतव्यवहारं न प्रत्याययन्ति, ते रजता-भावं प्रतिपद्यन्ते, न पुनरलौकिकत्वम्। अलौकिकत्वावगमाद्रजतव्यवहारनिवृत्तौ सत्यामितरेतराश्रयत्वम्—अलौकिकत्वाद्रजतव्यवहारनिवृत्तिः रजतव्यवहारनिवृत्तौ च सत्यामलौकिकत्वमिति। लोकसंमताच्च रजताद् विलक्षणमिदमलौकिकसंज्ञकं रजतम्, तद्यदि स्वप्रतिभासोत्पत्तिकाले वैलक्षण्येनावभासते तदा 'नेदं रजतम्, न लौकिकम्' इति बाधकप्रत्ययोत्पत्तिः प्राप्नोति, तथात्वेनैवावभासितत्वात्। अथावैलक्षण्येनैवावभासितम्, तदा विलक्षणमविलक्षणत्वेनावभासितमिति विपरीत-ख्यातिः। अथोभयधर्मरहितं धर्मिमात्रमवभासितम्, तथापि 'नेदं लौकिकम्' इति बाधकप्रत्ययानुत्पत्तिस्तदवस्थैव। प्रमाणाप्रमाणव्यवहारश्च लौकिकानां निर्निबन्धन एव स्यात्। तस्मादलमनया संवित्परामर्शवादिनः प्रतिभास[1]शून्योपपत्त्यूहनिकया। तस्मादयमर्थः—प्रत्यक्षादीनां प्रमाणानामन्वयव्यतिरेकाभ्यामर्थाविसंवादित्वं प्रामा-ण्यमवगम्यते, न बोधकत्वमात्रम्। तथाहि—सत्यपि बोधकत्वे यत्राविसंवा-दित्वं नास्ति, तत्राप्रामाण्यम् यथा शुक्तिकायां रजतज्ञानस्य; विनापि बोधकत्वं यत्रार्थाविसंवादित्वमस्ति, तत्र प्रामाण्यम् यथाग्नौ धूमस्य; तस्य ज्ञानहेतव एवो-त्पादकाः। ननु ज्ञानहेतवः प्रमाणाप्रमाणसाधारणाः; सामग्र्यन्तरजन्योऽप्रमंशः; सामग्र्यन्तरं च गुणसहितमिन्द्रियम्; तदुक्तम् "इन्द्रियादिगुणाः" इति; शब्दे चाप्तप्रणीतत्वं कारणगुणत्वेन व्यवहारादवगतम्; वेदे तदभावादप्रामाण्यम्,

1. सद्भून्या...हनिकया मा.

तदुक्तम्—"ततश्च पुरुषाभावात्" इति। तदसत्, सामग्र्यन्तराभावात्, विधिमुखेन कार्यमुखेन वा गुणानामप्रतीतेः ; इन्द्रियादिस्वरूपमेव ह्यन्यनिरपेक्षमर्थाविसंवादिज्ञानोत्पादकम्, अञ्जनादीनां च दोषापगमे व्यापारः, न गुणाधाने। ननु इन्द्रियादिस्वरूपमप्रामाण्येऽप्यस्त्येव। सत्यम्; दोषसमवधाने तु सामग्र्यन्तराद् विलक्षणकार्योत्पत्तिः। उक्तं च भाष्ये "तदन्तर्गतो दोषो मिथ्याभावस्य हेतुः" इति। अथैवं कस्मान्न भवति—इन्द्रियादिस्वरूपमेवान्यनिरपेक्षं व्यभिचारिज्ञानोत्पादकम्? गुणसमवधाने तु सामग्र्यन्तरमर्थाविसंवादिज्ञानोत्पादकम्? कार्यं हि गुणदोषयोः सद्भावे प्रमाणम्; तदेवमप्युपपद्यत एव। सत्यमेवम्, अन्वयव्यतिरेकाभ्यां तु विज्ञानोत्पादकमेव त्रैरूप्यानुमानादौ प्रामाण्योत्पादकं दृष्टम्। प्रत्यक्षेऽपि तत्सम्भवात् तदेवोत्पादकम्, अर्थान्तरपरिकल्पनायां प्रमाणाभावात्; विपर्ययज्ञानरूपं तु कार्यमिन्द्रियादिस्वरूपादनुत्पद्यमानं सामग्र्यन्तरं कल्पयतीत्यनवद्यम्। सामग्र्यन्तरनिषेधपरतां चास्य श्लोकस्य दर्शयिष्यति तत्र तत्र प्रदेशे स्वयमेव "प्रामाण्यं तत्र गुणतो नैव स्यात्" इत्यादौ। ज्ञानोत्पादकस्यैव प्रामाण्योत्पादकत्वं दर्शयिष्यति—

"चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः।
करणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवत्॥

प्रत्ययोत्पादहेतुत्वात्............॥" इत्यादौ।

भाष्यकारोऽपि दोषापगमे संप्रतिपत्तिं वदन् विज्ञानहेतव एव प्रामाण्यस्योत्पादका इति कथयति। इतरथा ह्येवमवक्ष्यत्—गुणसमवधाने संप्रतिपत्तिदर्शनात्—इति "तदन्तर्गतो दोषो मिथ्याभावस्य हेतुः" इतिवत्। तत्सिद्धौ च ज्ञानहेतूनां प्रामाण्योत्पादकत्वसम्भवात् सिद्धं वेदेऽपि प्रामाण्यम्। तत्र "स्वतः सर्वप्रमाणानाम्" इति पूर्वार्द्धेन विज्ञानहेतूनां प्रामाण्येऽपि व्यापार इति प्रतिज्ञातम्; उपरितनेन सामग्र्यन्तराभावस्तत्र हेतुरुक्तः; "न हि स्वतोऽसती शक्तिः कर्तुमन्येन" विज्ञानसामग्र्यतिरिक्तेन "शक्यते" इति। श्लोके चात्मीयवाचकः स्वशब्द इति। अथवा इन्द्रियादिसामग्रीमात्रजन्यो बोधविशेष एव प्रमाणम्। यदाह—"दोषापगमे संप्रतिपत्तिदर्शनात्" इति। संप्रतिपत्ति-

**आत्मलाभे हि भावानां कारणापेक्षिता भवेत् ।**
**लब्धात्मनां स्वकार्येषु प्रवृत्तिः स्वयमेव तु ॥ ४८ ॥**

शब्देन बोधविशेषमाह । स एव हि बोध्ये प्रमाणम्; तदपेक्षमेव चात्मनो बोद्धृत्वम् । स एव हि विषयं समर्थयति, अन्वयव्यतिरेकाभ्यामव्यभिचारितापि तमेवोत्पादयन्ती प्रमाणम् । तस्यैव चानेन सामग्र्यन्तरनिषेधेनोत्पत्तौ गुणापेक्षित्वं निरस्तम् । तदुक्तम् "न हि स्वतोऽसतस्तस्य कुतश्चिदपि सम्भवः" इति । यत्तु उत्पत्तौ प्रतिभासाविशेषादपवादाशङ्कायामप्रामाण्याशङ्का, तां प्रत्यक्षादिषु निराकरिष्यामः "दोषज्ञाने त्वनुत्पन्ने" इत्यत्र । अपौरुषेये तु वेदे स नास्त्येवेति वक्ष्यामः—

"तत्रापवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी ।
वेदे तेनाप्रमाणत्वं नाशङ्कामधिरोहति ॥" इति ।

इति तत्त्वाविवेकोत्थत्रासगद्गदया गिरा ।
जल्पतां नास्ति मर्यादा दिक् तु तावत् प्रदर्शिता ॥

ननु गृहीतमव्यभिचाराख्यं प्रामाण्यं स्वकार्यं करोति । अर्थक्रियासंवादितया च तद् गृह्येत । तस्याश्च वेदेऽसत्त्वात् प्राप्तं पुनरप्यप्रामाण्यमित्यप्रामाण्यमाशङ्क्याह— **आत्मलाभ इति** । नैव हि प्रमाणं स्वकार्ये स्वग्रहणमपेक्षते, अगृहीतप्रामाण्यादपि विज्ञानाद् विषयपरिच्छेदसिद्धेः । ननु न परिच्छेदमात्रं प्रमाणकार्यम्, अप्रमाणादप्युपपत्तेः; परिच्छित्तिविशेषं तु नागृहीतप्रामाण्यं विज्ञानं जनयति, प्रागर्थक्रियासंवादात् प्रमाणेतरकृतपरिच्छेदविशेषानुपलब्धेः । उच्यते— न ग्रहणोत्तरकालमुत्पत्त्यवस्थातः परिच्छित्तेर्विशेषोऽवभासत इति परिच्छित्तिमात्रमेव प्रमाणकार्यम् । तस्मात् प्रमाणमुत्पत्तावेव विज्ञानहेतूनपेक्षते, नोत्पन्नं स्वकार्येषु स्वग्रहणम् । तदनेन श्लोकद्वयेन स्वोत्पत्तौ स्वकार्ये च सामग्र्यन्तरं स्वग्रहणापेक्षता च निरस्ता । अपेक्षाद्वयरहितं च प्रमाणं स्वत इत्युच्यते । तदिदमुक्तम्—

जातेऽपि यदि विज्ञाने तावन्नार्थोऽवधार्यते ।
यावत् कारणशुद्धत्वं न प्रमाणान्तराद् भवेत् ॥ ४९ ॥

तत्र ज्ञानान्तरोत्पादः प्रतीक्ष्यः कारणान्तरात् ।
यावद्धि न परिच्छिन्ना शुद्धिस्तावदसत्समा ॥ ५० ॥

तस्यापि कारणेऽशुद्धे तज्ज्ञानस्याप्रमाणता ।
तस्याप्येवमितीत्थं तु [1]न किञ्चिद्व्यवतिष्ठते ॥ ५१ ॥

यदा स्वतः प्रमाणत्वं तदान्यो नैव मृग्यते ।
निवर्तते हि मिथ्यात्वं दोषाज्ञानादयत्नतः ॥ ५२ ॥

"तत् प्रमाणं बादरायणस्यानपेक्षत्वात्" इति ॥

एवं स्वतः प्रामाण्यमभिधायेदानीं परतः प्रामाण्ये दूषणमाह—**जातेऽपीति** श्लोकत्रयेण । यद्यव्यभिचाराख्यं प्रामाण्यमगृहीतं स्वकार्यं न करोतीत्युच्यते, तदा कार्यानुत्पत्तिप्रसङ्गः, अव्यभिचारस्यैव ग्रहीतुमशक्यत्वात्; न ह्यपरिच्छिन्ने सम्बन्धिनि तत्राव्यभिचारिलक्षणः सम्बन्धः शक्यो ग्रहीतुम्, सम्बन्धिग्रहणपुरःसरत्वात् सम्बन्धप्रतीतेः । न चायमप्रतीतसम्बन्धो बोधमात्रादर्थं प्रत्याययतीत्यान्ध्यमशेषस्य जगतः । अथ गृहीत्वार्थं सम्बन्धग्रहणम्, एवं सत्यर्थग्रहणमपि गृहीताव्यभिचाराज्ज्ञानादिति प्राप्तोऽन्योन्यसंश्रयः । अथार्थक्रियातो घटं प्रतिपद्य घटज्ञानस्य तत्राव्यभिचारो गृह्यत इति चेत्, नार्थक्रिया घटमवगमयति, घटाभावेऽपि भावात् । तत्साध्या तं गमयतीति चेन्न, अनवगते घटे तत्साध्यत्वस्यैवाग्रहणात् । अवगते तु पूर्वं प्रामाण्यग्रहणाद् घटे किमुत्तरकाले प्रामाण्यग्रहणेन ? न चैवं सति सम्यग्ज्ञानपूर्विका प्रवृत्तिः स्यात् । अथैकस्मिन् विज्ञानेऽर्थग्रहणोत्तरकाले प्रामाण्यमवगम्य ज्ञानान्तरे तथाविधकारणदर्शनात् प्रामाण्यमनुमाय ततः प्रवर्तत इति चेन्न, आलम्बनस्यापि कारणत्वेन तथाविधग्रहणे पूर्ववत् प्रसङ्गात् । न च कतिपयकारणतथाविधत्वेन कार्यतथाविधत्वम्, भस्मधूमाभ्यामनैकान्तिकत्वात् । नापि कारणगुणावधारणपूर्वकमव्यभिचारित्वग्रहणम्, अनवस्थाप्रसङ्गादिति श्लोकत्रयस्यार्थः ॥

1. न कश्चित्. चौ. मु. 1.

तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता ।
अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते ॥ ५३ ॥

अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ।
वस्तुत्वाद् द्विविधस्यात्र सम्भवो दुष्टकारणात् ॥ ५४ ॥

अविज्ञाने तु दोषाणां व्यापारो नैव विद्यते ।
कारणाभावतस्त्वेव तत्सिद्धं नस्त्वदुक्तिवत् ॥ ५५ ॥

दोषतश्चाप्रमाणत्वे स्वतःप्रामाण्यवादिनाम् ।
गुणज्ञानानवस्थावन्न दोषेषु प्रसज्यते ॥ ५६ ॥

ननु स्वतःप्रामाण्यवादिनोऽप्यपवादकदोषग्रहणे समानैवानवस्थेत्याशङ्क्याह—**यदेति** । न तावत् [1]प्रामाण्यं स्वोत्पत्तौ स्वकार्ये वा किञ्चिदपेक्षत इत्युक्तम् । नापि मिथ्यात्वनिवृत्तौ दोषाभावग्रहणापेक्षा, दोषज्ञानानुत्पत्तेरयत्नसिद्धत्वाद्दोषाभावस्य । ननु नानुपलब्धिमात्रादभावः सिद्ध्यति, तस्य दोषसद्भावेऽपि मिथ्याज्ञानेषु भावादनैकान्तिकत्वात् । तस्माद्दोषाभावावधारणज्ञानमपेक्षणीयम् ; तदपि ज्ञानान्तरावधारितदोषाभावं प्रमाणम् ; तदप्येवमित्यनवस्था । उच्यते—यत्र तावद्रजतविज्ञान उत्पन्ने सत्यनन्तरं दोषज्ञानमुत्पद्यते, तत्र तावन्नास्त्येवानवस्था, दोषाणां कार्यद्वारेणावगमात् । यत्र तु नोत्पद्यते बाधः, तत्र दोषाशङ्का न कार्येति परिहारं वक्ष्यति—"दोषज्ञाने त्वनुत्पन्ने" इत्यादिना । भवतु प्रत्यक्षादिषु दोषाशङ्का, अपौरुषेयत्वाद्वेदे सा नास्त्येव ॥

ननु यदि परिच्छित्तिः प्रमाणकार्यम्, तदेव च बोधात्मकत्वं प्रामाण्यम्, तदा शुक्तिकायामपि रजतज्ञानं प्रमाणं प्राप्तमित्याह—**तस्मादिति** ॥

यत् पुनरिदमुक्तम् "अप्रामाण्यमवस्तुत्वान्न स्यात् कारणदोषतः" इति, तत्राह—**अप्रामाण्यमिति** श्लोकद्वयेन । सन्देहविपर्यययोर्वस्तुत्वेन "अवस्तुत्वात्" इत्ययमसिद्धो हेतुः । अनुत्पत्तौ तत्सिद्धसाध्यतेति श्लोकद्वयस्यार्थः । तस्मादप्रामाण्यमुत्पत्तौ विज्ञानानां सामग्रीतः सामग्र्यन्तरमपेक्षते । उक्तं चैतत्—"तदन्तर्गतो दोषो मिथ्याभावस्य हेतुः" इति ॥

स्वकार्ये च दोषावधारणपूर्वकं स्वग्रहणमपेक्षते ; न चानवस्था, प्रमाणेन दोषाणां ग्रहणात् ; तच्च स्वत इति स्थितम् ; तदाह—**दोषत इति** ॥

1. प्रामाण्योत्पत्तौ. मा

**साक्षाद्विपर्ययज्ञानाल्लब्ध्येव त्वप्रमाणता ।**
**पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिद्ध्यति ॥ ५७ ॥**

" अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते " इत्युक्तम्; कथं पुनरयमर्थान्यथात्वज्ञानेन पूर्वस्य बाधः? न तावन्नाशः, सर्वज्ञानानां विनाशादप्रामाण्यप्रसङ्गात्। नापि कार्यप्रतिबन्धः, अर्थपरिच्छेदस्य बलादुत्पद्यमानत्वात्। न च संस्कारोच्छेदः, बाधकप्रत्ययोत्पत्तावपि तत्कार्यस्मरणदर्शनात्। नापि सहानवस्थानम्, सर्वज्ञानसाधारणत्वात्। नापि फलापहारः, प्रमाणस्याबाधितत्वात्; इतश्च, नोत्तरेण पूर्वस्य बाधः; न हि तत् पूर्वस्य मिथ्यात्वमवगमयति, अर्थान्तरविषयत्वात्। स्यादेतत् 'नैतदेवम्' इति पूर्वप्रत्ययगृहीतार्थाभावग्राहकतयोपरितनस्य बाधकत्वमिति। तदनुपपन्नम्; यदि तावत् कालान्तरेऽभावं गृह्णाति, ततो विरोधाभावान्न बाधः। अथ प्रतिभास[1]मानस्यैव, तथापि सदसद्भावयोरेकस्मिन् काले प्रतिभासमानत्वेन विरोधाभावादुभयाकारतैवास्तु, न बाधः। न चोत्तरं प्रत्यक्षं पूर्वगृहीतस्यैवार्थस्याभावग्राहकम्, तस्य भावविषयत्वात्। न चोत्तरमभावाख्यमेव प्रमाणम्, पूर्वस्य सद्भावग्राहिणो विद्यमानत्वात्। सदुपलम्भकप्रमाणप्रत्यस्तमये सति तस्योदयः, न तु पूर्वस्मिन् प्रमाणज्येष्ठे प्रत्यक्षे सति। पूर्वस्य प्रत्यक्षाभासत्वेनायमदोष इति चेन्न, इतरेतराश्रयत्वात्। न हि प्राक्तनस्यान्यदप्रामाण्ये कारणमित्याशङ्क्याह—**साक्षादिति**। तत्र साक्षादिति विषयैकत्वमाह। विपर्ययज्ञानादिति विरोधम्। लब्ध्येवेत्यविचारितसिद्धतामस्य दर्शयति॥

सर्वथा 'नैतदेवम्' इति ज्ञान उत्पन्ने सति पूर्वज्ञाननिबन्धनो व्यवहारो निवर्तते। प्रवृत्तिश्च फलं प्रमाणानाम्। प्रवृत्त्याख्यफलापहारश्च बाधः। किं पुनरनेन कुर्वता तत् कृतमिति चेत्, उच्यते—तच्चेत् कृतम्, किं कार्यान्तरेण? इतरथा हि तदपि किं कुर्वतानेन कृतं स्यात्? काष्ठादीनां तु तथा दर्शनात् परमकार्येऽवान्तरकार्यान्तराश्रयणम्; यत्र च तथा दर्शनं नास्ति, तत्र नैव तदाश्रयणम्। [2]अथावान्तरकार्याश्रयणेऽवान्तरकार्याश्रयणं पूर्वविज्ञानगृहीतार्थाभावग्राहकतया चेति प्रक्रिया, तत्रैतत् स्याद् द्वयोः परस्परविपरीतार्थग्राहकत्वे सति कथमुत्तरस्यैव बाधकत्वमित्याशङ्क्याह—**दुष्टेति**। यद्यपि दोषज्ञानं दोषविषयत्वेन

1. मानत्वस्यैव. मा. 2. यथावान्तर. मा.

दुष्टकारणबोधे तु सिद्धेऽपि विषयान्तरे ।
अर्थात्तुल्यार्थतां प्राप्य बाधो गोदोहनादिवत् ॥ ५८ ॥

तत्र दोषान्तरज्ञानं बाधधीर्वा परा न चेत् ।
तदुद्भूतौ द्वितीयस्य मिथ्यात्वादाद्यमानता ॥ ५९ ॥

स्वत एव हि तत्रापि दोषज्ञानादमानता ।
दोषज्ञाने त्वनुत्पन्ने [1]नाशङ्का निष्प्रमाणिका ॥ ६० ॥

पूर्वस्माद्भिन्नविषयम्, तथापि दोषाणामयथार्थज्ञानहेतुत्वात्तज्ज्ञानादन्यथात्वमर्थस्य, पूर्वज्ञानात्तथात्वमिति एकार्थत्वमस्तीति विरोधः, यथा क्रत्वर्थपुरुषार्थत्वेन भिन्नविषययोरपि चमसगोदोहनयोरवान्तरव्यापारैक्येन बाध्यबाधकभावः ॥

इदानीम् "अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते" इत्यस्योत्सृष्टस्यापवादमाह—**तत्र दोषान्तरज्ञानमिति** ॥

नन्वेवं सति तृतीयविज्ञानादस्य प्रामाण्यमिति परतः प्रामाण्यमित्याशङ्क्याह—**स्वत एव हीत्यर्धेन**। नन्वेवं तर्हि निश्चितस्यापि विज्ञानस्य बाध्यमानतया व्यभिचारस्यापि दृष्टत्वादित्याशङ्कायामाश्वासो न युक्तः; यत्राप्यधुना दोषज्ञानं नोत्पद्यते, तत्रापि कालान्तरादिषु कदाचिदुत्पद्यत इत्याशङ्क्याह—**दोषज्ञान इत्यर्धेन**। अयमभिप्रायः—[2]यत्तावदुभयकोटिसंस्पर्शितया अनवधारितैकान्तिकं विज्ञानमुत्पद्यते, तस्य युक्तमप्रामाण्यम्। यत् पुनः 'इदमित्थम्' इति वस्तुतथात्वनिश्चायकमुत्पद्यते, न च बाधकप्रत्ययः, कारणदोषज्ञानं वा; तत्रेयमाशङ्का क्वचिद्व्यभिचारदर्शनात् 'अन्यथाभावः स्यात्' इति न युक्ता विवेकिना कर्तुम्। कथं हि 'तथा' इति संप्रत्ययादवगम्यमानोऽर्थः अन्यथैव, अन्यथापि वा स्यात्—इत्याशङ्कां विवेकी कुर्यात्, प्रतीतिविरोधात्? नन्वेवं सति कारणदोषज्ञानादपि मिथ्यात्वाशङ्का न प्राप्नोति, प्रतीतिविरोधादेव। उच्यते—नास्माभिः कारणदोषज्ञानात् संशय उत्पाद्यते; किं तर्हि? कारणदोषज्ञानात् सर्वेषामेव प्रमाणभूतात्

1. न शङ्क्या निष्प्रमाणता. चौ. मु- 2. न तावत्. मा.

एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।
प्रार्थ्यते तावदेवैकं स्वतःप्रामाण्यमश्नुते ॥ ६१ ॥

संशयः प्रत्यात्मसिद्ध एव । यस्त्वनुत्पन्न एव संशयः क्वचिद्व्यभिचारदर्शनात् बला-दुत्पाद्यते, अत्र प्रतीतिविरोधः ॥

नन्वेवं सति बाधकस्यापि बाधकान्तरदर्शनात् का परिनिष्ठेत्याशङ्कयाह—**एवं त्रिचतुरेति** ॥

सैषा प्रक्रिया—ननु भवतु दोषादप्रामाण्यम्, तथापि शब्द एव चोदना ज्ञाने दुष्टं कारणम्; ते हि स्वसामर्थ्यमनुरुध्यमानास्तिरस्कृतान्यार्थानयथार्थान् प्रत्ययान् जनयन्ति 'अङ्गुल्यग्रे हस्तियूथशतमास्ते' इति । अतोऽनपेक्षितार्थ-ज्ञानजननस्वभावत्वादर्थासंस्पर्शिनः शब्दा इति । ननु चक्षुरादयोऽपि हि विपर्यय-ज्ञानं जनयन्त्येव, न चार्थासंस्पर्शिनः । नैतदेवम्; इन्द्रियदोषा विपर्ययज्ञानहेतवः, नेन्द्रियम्; शब्देऽपि वक्तृदोषाः सङ्क्रान्ता विपर्ययस्य कारणमिति चेन्न, आप्त-प्रयुक्तादप्यङ्गुल्यग्रादिवाक्यात् प्रत्ययोत्पत्त्यविशेषात् । नन्वाप्ता नेदृशानि वाक्यानि प्रयुञ्जते, प्रयुञ्जाना वानाप्ताः स्युः । नैतत् सारम् । एवमपि वक्तृदोषाणा-मयथार्थज्ञानकारणत्वासिद्धिः, व्यतिरेकासिद्धेः । यदि हि वक्तृदोषाभावे सत्य-प्यर्थशून्यान्यपि वाक्यानि प्रयुञ्जीरन्, न चायथार्थप्रत्ययान् कुर्युः, ततोऽन्वय-व्यतिरेकाभ्यां वक्तृदोषजत्वात् शाब्दस्य स्यात् । यदा तु [1]पुनरनाप्तत्वाभावेऽ-मीषामप्रयोगः, तत् किं शब्दाभावादयथार्थज्ञानानुत्पत्तिः, आहोस्विद् दोषा-[2]भावादिति सन्दिग्धो व्यतिरेकः । शब्दे तु निश्चितः, सत्यपि दोषे शब्दानुच्चारणे मिथ्याज्ञानानुत्पत्तेः । न चाप्तत्वमीदृग्वाक्यप्रयोक्तृत्वेन विरुध्यते, तथाविधशब्दो-च्चारणे सत्यप्याशयदोषाभावादनाप्तत्वायोगात् । तथा हि—आप्तोऽपि कस्मै चिदुपदिशति—न त्वया अननुभूतार्थं वाक्यं प्रयोक्तव्यम् यथा अङ्गुल्यग्रादि-वाक्यम्; यानि वञ्चकमतिकल्पितानि तथावाक्यानि विनोदसुखार्थानि **गन्धमाद-नादिवर्णकवदाप्तैरेव** प्रयुज्यन्ते, तत्राप्याशयदोषाभावादनाप्तत्वं नास्ति; जायते च तेभ्योऽनपेक्षितार्थतत्त्वबुद्धिः; शब्दस्यैवैव महिमा, न वक्तृदोषाणामित्यत्र[1] निश्चयः ।

1. अनाप्तभावे. मा.　　2. भावादिभिः सन्दिग्ध. मा.

**शब्दे दोषोद्भवस्तावद्वक्त्रधीन इति [2]स्थितम् ।**
**तदभावः क्वचित्तावद् गुणवद्वक्तृकत्वतः ॥ ६२ ॥**

**तद्गुणैरपकृष्टानां शब्दे सङ्क्रान्त्यसम्भवात् ।**
**यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ ६३ ॥**

अपि च, बाधकप्रत्ययोत्पत्तावपि शब्दो मिथ्याज्ञानं जनयत्येव । अतोऽर्थासंस्पर्शी शब्दः । तदुक्तम्—

" विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः ।
तेषामन्योन्यसम्बन्धो नार्थान् शब्दाः स्पृशन्त्यमी ॥ "

इत्याशङ्क्याह—**शब्दे दोषोद्भव इति** श्लोकद्वयेन । अयमभिप्रायः—अयथार्थज्ञानजनकत्वं दुष्टत्वम् ; तच्च बाधकप्रत्ययादवसेयम् ; वेदे च तस्याभावात् कुतोऽर्थासंस्पर्शिता ? ननु लोक एवाङ्गुल्यग्रादिवाक्यदर्शनेन—य एव लौकिकाः शब्दास्त एव वैदिकाः इति सा वेदेऽपि स्यात् । तदनुपपन्नम् ; द्विविध एव लौकिकः शब्दः—आप्तप्रणीतोऽनाप्तप्रणीतश्च । तत्राप्तवाक्यं नैव विपर्ययज्ञानमुत्पादयति ; अनाप्तवाक्येऽपि वक्तृदोषाः सङ्क्रान्ता विपर्ययज्ञानहेतवः, न शब्दरूपम् । ननु चाप्तप्रयुक्तादप्यङ्गुल्यग्रादिवाक्याद्विपर्ययज्ञानोत्पत्तिदर्शनाच्छब्दस्यैवैष महिमा, न वक्तृदोषाणाम् । तदनुपपन्नम्, आप्तैरेवंविधवाक्याप्रयोगात् । यत्त्वाप्तोऽपि कस्मैचिदुपदिशतीत्युक्तम्, तत्र निषेधपरत्वेन यथार्थतैव । [2]न त्वेवंविधस्य वाक्यैकदेशस्याप्युच्चारणं कार्यमित्युदाहरणविवक्षायामितिकरणावच्छिन्नस्य शब्दपरत्वेनोपादानम् ; अर्थवत्त्वे तु निषेधवाक्यतैव न स्यादिति । अपि च अन्विताभिधानवादिन एष दोषः । अभिहितयोरपेक्षादिष्वन्वये अङ्गुल्यग्रादिषु कुतोऽन्वयः ? अवगतिभ्रमस्तु सामान्यतोदृष्टनिबन्धनः । [3]नटादिकुपुरुषदोषकृतं वितथत्वम् । शब्दनिबन्धने तु सर्वदा वितथत्वप्रसङ्गात् । तदुक्तम् " तत्तथ्यमेव भवति " इति । न चेदमपि पुरुषगुणकृतम्, वक्ष्यति " गुणेभ्यो दोषाणामभावः " इति ॥

1. मित्यनिश्चयः मा.
2. नन्वेवंविध. मा.
3. नत्यादिकुपुरुषदोषकृतम्.

**पौरुषेये द्वयं दृष्टं दोषाभावो गुणास्तथा ।**
**प्रामाण्यं तत्र गुणतो नैत्र स्यादित्युदाहृतम् ॥ ६४ ॥**

**तस्माद् गुणेभ्यो दोषाणामभावस्तदभावतः ।**
**अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदितः ॥ ६५ ॥**

**प्रत्ययोत्पत्तिहेतुत्वात् प्रामाण्यं नापनीयते ।**
**दोषाभावो गुणेभ्यश्चेन्ननु सैत्रास्थितिर्भवेत् ॥ ६६ ॥**

ननु शब्दोच्चारणमात्र एव पुरुषाणां व्यापारः ; तच्च आप्तानाप्तयोस्तुल्यम् ; अर्थप्रतिपत्तिस्तु शब्दनिबन्धनैवेति तद्विपर्यये शब्दस्यैव व्यापारः, न वक्तृदोषाणाम् । उच्यते—विपर्ययज्ञानोत्पत्तेर्यावता तद्भावभावित्वमवगम्यते तावता तत्र व्यापारः ; सा च शब्दोच्चारणसन्निधानेऽप्यनाप्त[1]प्रयोक्तृकतां विना न दृष्टेति शब्दवत्तदवगमस्यापि व्यापारः ; तदभावश्च पौरुषेयेषु गुणवद्वक्तृकत्वेन ; चोदनायां तु पुरुषाभावादेवेति श्लोकद्वयस्यार्थः ॥

भवतु प्रत्यक्षादिषु विज्ञानोत्पादकसामग्रीव्यतिरेकेण गुणानामभावात् स्वतः प्रामाण्यम् ; शब्दे तु विज्ञानोत्पादकसामर्थ्यातिरेकेण दोषवदाप्तप्रणीतत्वगुणसद्भावात् तस्य च प्रामाण्येन सह तद्भावभावित्वदर्शनात् परतः प्रामाण्यम्, तदभावाच्च चोदनायामप्रामाण्यम् ; प्रत्यक्षादिषु स्वतः प्रामाण्यप्रतिपादनमनुपयोगीत्याशङ्क्याह— **पौरुषेये द्वयमिति ।** अयमभिप्रायः—प्रत्यक्षादिषु विज्ञानोत्पादकस्यैव प्रामाण्योत्पादकत्वे प्रतिपादिते वेदेऽपि तत्सद्भावात् तत एव प्रामाण्यं युक्तमिति प्रत्यक्षादिषु स्वतः प्रामाण्यप्रतिपादनमुपयोगि ॥

गुणानां तु प्रामाण्येन सह तद्भावभावित्वमन्यथासिद्धमिति दर्शयन्नाह— **तस्मादिति** त्रिपाद्या । औत्सर्गिकं यद्विज्ञानोत्पादकत्वं तदपि कुतोऽनपोदितमित्याशङ्क्याह— **तेनोत्सर्गोऽनपोदितः** इति ॥

यतः प्रत्ययोत्पत्तिः, तद्धेतुकं प्रामाण्यमित्याह—**प्रत्ययोत्पत्तीत्यर्द्धेन ।** एवं तर्हि प्रामाण्यावधारण इव गुणानां दोषाभावे व्यापारे सत्यनवस्थेति चोदयति—**दोषाभाव इत्यर्धेन ॥**

1. प्रयोगि........तं विना. मा.

**तदा न व्याप्रियन्ते हि ज्ञानमानतया गुणाः ।**
**दोषाभावे तु विज्ञेये सत्तामात्रोपकारिणः ॥ ६७ ॥**

**तत्रापवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी ।**
**वेदे तेनाप्रमाणत्वं नाशङ्कामपि गच्छति ॥ ६८ ॥**

**अतो वक्त्रनधीनत्वात् प्रामाण्ये तदुपासनम् ।**
**न युक्तमप्रमाणत्वे कल्प्ये तत्प्रार्थना भवेत् ॥ ६९ ॥**

**ततश्चाप्तप्रणीतत्वं न दोषायात्र जायते ।**
**प्रयोगाणां तु सर्वेषां वक्ष्यामः प्रतिसाधनम् ॥ ७० ॥**

एतत्परिहरति—**तदेति** ॥

प्रमाणान्तरेण विज्ञायमाना गुणाः प्रामाण्यमवतारयन्तीति युक्तानवस्था । दोषाभावे तु सत्तामात्रेणैवोपकुर्वन्तीति नास्त्येवानवस्था । भवतु वा प्रत्यक्षादि-दोषाशङ्कायां कालान्तरादिषु बाधकादिप्रत्ययाशङ्का; अपौरुषेयत्वाद्वेदे नास्त्ये-वेत्याह—**तत्रेति** ॥

ननु वक्त्रभावेन आप्तप्रणीतत्वगुणसद्भावोऽपि नास्तीति कथम् "अपवाद-निर्मुक्तिः वक्त्रभावाल्लघीयसी" इति? तदुक्तम् "गुणेभ्यो दोषाणामभावः" इत्याशङ्क्याह—अत इति ॥

न तावद् गुणाभावेन प्रामाण्याभावः; विज्ञानकरणाधीनत्वात्; तस्य च विज्ञानकारणस्य शब्दस्य सन्निधानात् । नापि दोषभावेनाप्रामाण्यम्, वक्तुरभावेन दोषाणामप्यभावात्; तदुक्तम्—"यद्वा वक्तुरभावेन" इति । अतश्च शब्दे विज्ञानोत्पादकमेव प्रामाण्योत्पादकम्, नाप्तप्रणीतत्वम् । ततश्च तदभावो न दोषाय । प्रामाण्यप्रयोजकाभावो हि अप्रामाण्यमाक्षिपति, नाप्तप्रणीतत्वाभावः । अत एव प्रतिसाधनान्यत्र वक्ष्यामः—"दोषवर्जितैः कारणैः जन्यमानत्वात्" इति; प्रयोजके तु प्रत्युक्ते कुतस्तेषामवसर इति । वक्ष्यति च—"तेष्वागम-विरुद्धत्वात्" इति; तदाह—**ततश्चाप्तप्रणीतत्वमिति** ॥

**पौरुषेये तु वचने प्रमाणान्तरमूलता ।**
**तदभावे हि तद् दुष्येदितरन्न कदाचन ॥ ७१ ॥**

**तेनेतरैः प्रमाणैर्या चोदनानामसङ्गतिः ।**
**तयैव स्यात्प्रामाणत्वमनुवादत्वमन्यथा ॥ ७२ ॥**

**अन्यस्यापि प्रमाणत्वे सङ्गतिर्नैव कारणम् ।**
**तुल्यार्थानां विकल्प्यत्वादेकं तत्र हि बोधकम् ॥ ७३ ॥**

**यत्रापि स्यात् परिच्छेदः प्रमाणैरुत्तरैः पुनः ।**
**नूनं तत्रापि पूर्वेण सोऽर्थो नावधृतस्तथा ॥ ७४ ॥**

**सङ्गत्या यदि चेष्येत पूर्वपूर्वप्रमाणता ।**
**प्रमाणान्तरमिच्छन्तो न व्यवस्थां लभेमहि ॥ ७५ ॥**

यत्तु "प्रत्यक्षाद्यगतार्थत्वात्" इत्युक्तम्, तत्राह—**पौरुषेय** इत्यर्द्धेन । ननु पौरुषेयस्यापि स्वत एव प्रामाण्यमुक्तम् "पौरुषेये द्वयं दृष्टम्" इत्यत्र । वक्ष्यति च "तच्चेत्प्रत्ययितात्" इत्यत्र "अप्रामाण्यनिवृत्त्यर्थं दोषाभावोपवर्णनम्" इति । किमिदमुच्यते 'प्रमाणान्तरमूलता" इति ? उच्यते—प्रमाणान्तरमूलत्वं दोषनिरासायाह, न प्रामाण्यसिद्ध्यै ; तदाह—**तदभावे हीत्यर्धेन** ॥

अपौरुषेयत्वेन चोदनायाः प्रमाणान्तराभावेऽप्यनाप्तप्रणीतत्वदोषाभावेन प्रत्यक्षाद्यगतार्थत्वे नैवाप्रामाण्यम्, प्रत्युत प्रमाणान्तरमूलत्वमनुवादकत्वादत्र दोषायेत्याह—**तेनेतरप्रमाणैरिति** ।

यत्रापि प्रत्यक्षादौ प्रमाणान्तरं संभवति, तत्रापि न पूर्वस्येतरसंवादात् प्रामाण्यम्; उभयोरपि तुल्यरूपत्वादेकैकमेव तत्र बोधात्मकत्वाद्विकल्पेनार्थिनं प्रवर्तयति नैकमितरसंवादापेक्षमित्याह—**अन्यस्यापीति** ॥

पूर्वस्य सविचिकित्सत्वेन संवादापेक्षा, एवं तर्हि तत्प्रमाणमेव न भवतीत्याह—**यत्रापीति** ॥

यस्तु संवादादस्य प्रामाण्यं मन्यते, तस्य संवादकस्यापि संवादकापेक्षित्वे सति अनवस्थेत्याह—**सङ्गत्येति** ॥

**कस्यचित्तु यदीष्येत स्वत एव प्रमाणता ।**
**प्रथमस्य तथाभावे प्रद्वेषः किंनिबन्धनः ॥ ७६ ॥**
**श्रोत्रधीश्चाप्रमाणं स्यादितराभिरसङ्गतेः ।**

ननु नैव घटज्ञानान्तरसंवादात् प्रामाण्यम्; अपि तु उदकाहरणरूपक्रियासंवादात्; न च तत्र संवादापेक्षा; अर्थक्रियार्थी पूर्वस्मात् प्रवर्तमानो व्यभिचारदर्शनेन संवादमपेक्षते; अर्थक्रियाज्ञानस्य तु पुरुषार्थत्वादुत्पन्ने तस्मिन्न काचिदपेक्षेत्याशङ्क्याह—**कस्यचित्त्विति** । अर्थक्रियाज्ञानस्यापि स्वप्नावस्थायां व्यभिचारदर्शनान्न कश्चिद् घटविज्ञानाद् विशेषः । अर्थक्रियासंवादाच्च पूर्वप्रामाण्ये मणिप्रभायामपि मणिबुद्धिः प्रमाणं स्यात् । अनुदकार्थिनश्चोदकज्ञानमप्रमाणमसंवादात् । कूटे विजयतुङ्गज्ञानं प्रमाणं स्यात्, कतिपयार्थक्रियादर्शनात् । कस्यांचिदेव घटव्यक्तावुत्पन्नेऽपि घटज्ञाने कथंचिद् दैवादर्थक्रिया न कृतेति ज्ञानमप्रमाणं स्यात् । न च तदप्रमाणमेव, घटोत्पन्नत्वेनाविसंवादात् । उक्तं च भवद्भिः—“प्रत्यक्षमर्थाविसंवादादेव प्रमाणम्; अविसंवादश्च तस्मादात्मलाभात्” इति । अघटेऽपि घटज्ञानदर्शनादर्थक्रियामन्तरेण तदुत्पन्नता कथमवगम्यत इति चेत्, अनुदकाहरणे दर्शनादपि तदुत्पन्नता कथमवगम्यते ? अपि च, अर्थक्रियाज्ञानमप्यर्थक्रियायां घटज्ञानवदविसंवादादेव प्रमाणम्; अविसंवादश्चार्थक्रियाजन्यत्वेन; तत्र यथैवार्थक्रियामन्तरेण घटज्ञानस्याघटेऽपि दर्शनात् तदुत्पन्नता न शक्यावगन्तुम्, अर्थक्रियादर्शनेन तु घटमवगम्य तदुत्पन्नतावगम्यत इति पूर्वमर्थक्रियासंवादसव्यपेक्षम्; तथैव स्वप्नावस्थायामनर्थक्रियायामप्यर्थक्रियादर्शनाज्ज्ञानान्तरेणावगम्यैवार्थक्रियामर्थक्रियाविज्ञानस्य तदुत्पन्नतावगम्यत इत्यर्थक्रियाज्ञानस्यापि ज्ञानान्तरसंवादापेक्षायां कः पूर्वापरयोर्विशेषः ? अपि च, अर्थक्रियातो घटमवगम्य घटज्ञानप्रतिबन्धावधारणं शक्यम्; अप्रतिपन्नायां त्वर्थक्रियायां कथमर्थक्रियाज्ञानस्य प्रतिबन्धावधारणमर्थक्रियायाम् ? न तावद् घटज्ञानमर्थक्रियामवगमयति; नापि घटोऽवगमयति, व्यभिचारात्; नाप्यर्थक्रियाज्ञानम्, पूर्वस्मादविशेषात्; तदपि हि प्रतिबन्धावधारणसव्यपेक्षमेवार्थक्रियामवगमयति । तदेवं पूर्वापरयोः साम्ये सति प्रथमस्य तथाभावपरित्यागे सिद्धान्तविषयाग्रहनिबन्धनः प्रद्वेष इति श्लोकस्यार्थः ॥

अपि च यदि तावद् विजातीयकारणजनितविज्ञानसंवादात् प्रामाण्यमित्यभ्युपगमः, तदा शब्दरसरूपादिबुद्धीनां भिन्नविषयत्वेन संवादाभावादप्रामाण्यप्रसङ्गः;

**एवं त्रिचतुरज्ञानजन्मनो नाधिका मतिः ।**
**प्रार्थ्यते तावदेवैकं स्वतःप्रामाण्यमश्नुते ॥ ६१ ॥**

संशयः प्रत्यात्मसिद्ध एव । यस्त्वनुत्पन्न एव संशयः क्वचिद्व्यभिचारदर्शनात् बलादुत्पाद्यते, अत्र प्रतीतिविरोधः ॥

नन्वेवं सति बाधकस्यापि बाधकान्तरदर्शनात् का परिनिष्ठेत्याशङ्क्याह— **एवं त्रिचतुरेति ॥**

सैषा प्रक्रिया— ननु भवतु दोषादप्रामाण्यम्, तथापि शब्द एव चोदनाज्ञाने दुष्टं कारणम्; ते हि स्वसामर्थ्यमनुरुध्यमानास्तिरस्कृतान्यार्थानयथार्थान् प्रत्ययान् जनयन्ति 'अङ्गुल्यग्रे हस्तियूथशतमास्ते' इति । अतोऽनपेक्षितार्थज्ञानजननस्वभावत्वादर्थासंस्पर्शिनः शब्दा इति । ननु चक्षुरादयोऽपि हि विपर्ययज्ञानं जनयन्त्येव, न चार्थासंस्पर्शिनः । नैतदेवम्; इन्द्रियदोषा विपर्ययज्ञानहेतवः, नेन्द्रियम्; शब्देऽपि वक्तृदोषाः सङ्क्रान्ता विपर्ययस्य कारणमिति चेन्न, आप्तप्रयुक्तादप्यङ्गुल्यग्रादिवाक्यात् प्रत्ययोत्पत्त्यविशेषात् । नन्वाप्ता नेदृशानि वाक्यानि प्रयुञ्जते, प्रयुञ्जाना वानाप्ताः स्युः । नैतत् सारम् । एवमपि वक्तृदोषाणामयथार्थज्ञानकारणत्वासिद्धिः, व्यतिरेकासिद्धेः । यदि हि वक्तृदोषाभावे सत्यप्यर्थशून्यान्यपि वाक्यानि प्रयुञ्जीरन्, न चायथार्थप्रत्ययान् कुर्युः, ततोऽन्वयव्यतिरेकाभ्यां वक्तृदोषजत्वात् शाब्दस्य स्यात् । यदा तु [1]पुनरनाप्तत्वाभावेऽमीषामप्रयोगः, तत् किं शब्दाभावादयथार्थज्ञानानुत्पत्तिः, आहोस्विद् दोषा[2]भावादिति सन्दिग्धो व्यतिरेकः । शब्दे तु निश्चितः, सत्यपि दोषे शब्दानुच्चारणे मिथ्याज्ञानानुत्पत्तेः । न चाप्तत्वमीदृग्वाक्यप्रयोक्तृत्वेन विरुध्यते, तथाविधशब्दोच्चारणे सत्यप्याशयदोषाभावादनाप्तत्वायोगात् । तथा हि—आप्तोऽपि कस्मैचिदुपदिशति—न त्वया अननुभूतार्थं वाक्यं प्रयोक्तव्यम् यथा अङ्गुल्यग्रादिवाक्यम्; यानि वञ्चकमतिकल्पितानि तथावाक्यानि विनोदसुखार्थानि **गन्धमादनादिवर्णकवदाप्तैरेव** प्रयुज्यन्ते, तत्राप्याशयदोषाभावादनाप्तत्वं नास्ति; जायते च तेभ्योऽनपेक्षितार्थतत्त्वबुद्धिः; शब्दस्यैवैष महिमा, न वक्तृदोषाणामित्यत्र[1] निश्चयः ।

1. अनाप्तभावे. मा.　　2. भावादिभिः सन्दिग्ध. मा.

न चेत्थमगृहीतेन व्यवहारोऽवकल्पते ॥ ८२ ॥

प्रमाणं ग्रहणात् पूर्वं स्वरूपेणैव संस्थितम् ।
निरपेक्षं स्वकार्येषु गृह्यते प्रत्ययान्तरैः ॥ ८३ ॥

तेनास्य ज्ञायमानत्वं प्रामाण्ये नोपयुज्यते ।
विषयानुभवो ह्यत्र पूर्वस्मादेव लभ्यते ॥ ८४ ॥

अप्रमाणं पुनः स्वार्थग्राहकं स्यात् स्वरूपतः ।
निवृत्तिस्तस्य मिथ्यात्वे नागृहीते परैर्भवेत् ॥ ८५ ॥

तत्र परिहारमाह—**प्रमाणमिति** त्रिपाद्या । न तावदुत्पत्तौ स्वग्रहणमपेक्षते, नापि विषयपरिच्छित्तिलक्षणे स्वकार्ये, अगृहीतप्रामाण्यादपि विज्ञानाद् विषयपरिच्छेदसिद्धेः । तदुक्तम्—"आत्मलाभे हि भावानाम्" इति । पुरुषप्रवृत्तिलक्षणस्तु व्यापारः परिच्छिन्ने वस्तुनि स्मरणाभिलाषपूर्वको न प्रमाणम् । तदुक्तमन्यैरपि—"स्मरणादभिलाषेण व्यवहारः प्रवर्तते" इति । यदि तर्हि न गृह्यते, ततस्तस्य सद्भाव एव नास्ति; असतश्च कथं कारणत्वमित्याशङ्क्य परिहरति—**गृह्यते प्रत्ययान्तरैरिति** ॥

ननु च प्रत्ययान्तरैः प्रामाण्यग्रहणेऽनवस्थेत्युक्तम्—"सङ्गत्या यदि चेष्येत" इति । अतः कथमुच्यते "गृह्यते प्रत्ययान्तरैः" इति? अयमाशयः—बाधकादिनिवृत्तौ सत्यां, अर्थपरिच्छित्त्यन्यथानुपपत्त्या ज्ञानमनुमीयमानं प्रमाणभूतमनुमीयत इति । अवधारणं तु सत्यम्, कार्यानुपयोगीत्याह—**तेनास्येति**; "[1]आत्मलाभे हि भावानाम्" इत्यर्थविषयपरिच्छित्तौ स्वग्रहसापेक्षत्वं निरस्तम्। अधुना पुरुषप्रवृत्तिलक्षणे व्यापार इत्यपौनरुक्त्यम् ॥

बाधकादिप्रत्ययगृही[2]तमिथ्यार्थं तु घटज्ञानं प्रवर्तमानं निवर्तयतीति परतोऽप्रामाण्यम्; मिथ्यात्वावधारणात्तु पूर्वं तदपि ग्राहकमेवोत्पन्नम्, उत्पत्तौ प्रमाणतदभावयोर्विशेषाभावादित्याह—**अप्रमाणमिति** सार्धेन ।

यदि प्रमाणान्तरगृहीतं मिथ्यात्वं स्वकार्यं करोतीति परतोऽप्रामाण्यमुच्यते, परस्यापि तर्हि मिथ्यात्वग्राहकानुमानसम्भवात् परतोऽप्रामाण्यं प्रसज्येत । तदुक्तम्—

1. भावे च भावा. मा. 2. तमित्यथः. मा

न ह्यर्थस्यातथाभावः पूर्व[1]णात्तस्तथात्ववत् ।
तत्राप्यर्थान्यथाभावे धीर्यद्वा दुष्टकारणे ॥ ८६ ॥

तावतैव च मिथ्यात्वं गृह्यते नान्यहेतुकम् ।
उत्पत्त्यवस्थं चैवेदं प्रमाणमिति मीयते ॥ ८७ ॥

अतो यत्रापि मिथ्यात्वं [2]परेभ्यः प्रतिपादयेत् ।
तत्राप्येतद् द्वयं वाच्यं न तु साधर्म्यमात्रकम् ॥ ८८ ॥

चोदनार्थान्यथाभावं कुर्वतश्चानुमानतः ।
तज्ज्ञानेनैव यो बाधः स कथं विनिवार्यते ॥ ८९ ॥

तन्मिथ्यात्वादबाधश्चेत् प्राप्तमन्योन्यसंश्रयम् ।
नानुमानादतोऽन्यद्धि बाधकं किञ्चिदस्ति ते ॥ ९० ॥

न चान्यैरग्रहेऽर्थस्य स्यादभावो रसादिवत् ।
तेषां जिह्वादिभिर्यस्मान्नियमो ग्रहणेऽस्ति हि ॥ ९१ ॥

"स्वर्गयागादि" इत्याशङ्क्याह—**तत्रेति** सार्धेन । बाधकप्रत्ययकारणदोषज्ञाने मिथ्यात्वे प्रमाणम्, अतो नाप्रयोजकमनुमानमित्यभिप्रायः । वक्ष्यति च "हेतुद्वयप्रयुक्ते च मिथ्यात्वे" इति ॥

यथा चात्मना प्रतिपन्नं तथा परस्यापि प्रतिपादनीयम्, न तु साधर्म्यमात्रं प्रयोक्तव्यमित्याह—**अतो यत्रापीति** ॥

आगमविरुद्धं चेदमनुमानमित्याह—**चोदनेति** ॥

न चागमस्य मिथ्यात्वेनागमविरोधः परिहर्तुं शक्यते; अनुमानेनैव तस्य मिथ्यात्वम्, तन्मिथ्यात्वे चानुमानस्यागमविरोधाभावात् प्रामाण्यमित्याह—**तन्मिथ्यात्वादिति** ॥

अपि च "[3]प्रत्यक्षाद्यगतार्थत्वात्" इति च प्रत्यक्षादिभिश्चोदनार्थस्याप्रतीयमानत्वादिति हेत्वर्थः; न च चोदनैकप्रमाणस्य प्रत्यक्षादिभिरगृह्यमाणत्वेनाभावः शक्यो वक्तुम्, रसस्यापि चक्षुरिन्द्रियजनितविज्ञानेनाप्रतीयमानस्याभावप्रसङ्गादित्याह—**न चान्यैरिति** ॥

1. णोक्तस्त. मा.
2. परेण प्रतिपाद्यते. अनन्त. मु.
3. क्षाद्यर्थत्वा. मा.

**तद्धियैवार्थबोधश्चेत् तादृग्धर्मे भविष्यति ।**
**ममासिद्धमितीदं तु वेदाज्जातेऽवबोधने ॥ ९२ ॥**

**वक्तुं न द्वेषमात्रेण युज्यते सत्यवादिना[1] ।**
**द्वेषादसंमतत्वाद् वा न च स्यादप्रमाणता ॥ ९३ ॥**

**न चात्मेच्छाभ्यनुज्ञाभ्यां प्रामाण्यमवकल्पते ।**
**अग्निदाहादिदुःखस्य न ह्यप्रत्यक्षतेष्यते ॥ ९४ ॥**

**न चाभिला[2]षिकं ज्ञानं प्रामाण्येनावधार्यते ।**
**तस्मादालोकवद् वेदसर्वसाधारणे सति ॥ ९५ ॥**

**नैवं विप्रतिपत्तव्यं बौद्धादेर्वक्ष्यतेऽन्तरम् ।**
**पुरुषाशक्तितस्तत्र सापवादत्वसम्भवः ॥ ९६ ॥**

**वेदस्यापौरुषेयत्वे सिद्धा त्वेवं प्रमाणता ।**
**कर्तृमत्त्वे तु वेदस्य सम्यङ्मिथ्यात्ववादिभिः ॥ ९७ ॥**

अथ तत्र समानजातीयकारणजनितविज्ञानसंवादात् तस्य सद्भावः, तद्वेदेऽपि समानमित्याह—**तद्धियैवेत्यर्धेन** ।

अथ यस्य वादिनो य एवागमः प्रमाणत्वेनाभिमतः तस्य तदागमविरोध एवोद्भावनीयः, न च चोदना बौद्धस्य प्रमाणत्वेनाभिमतेत्याशङ्क्याह—**ममासिद्धमिति** । न हि प्रत्यय उत्पन्ने सति विनैव बाधकप्रत्ययेन 'ममायं प्रमाणत्वेन नाभिमतः' इति शक्यं वक्तुमित्यर्थः ।

न ह्यभ्युपगमानभ्युपगमौ प्रामाण्याप्रामाण्ये लक्षणमित्याह—**द्वेषादिति** ।

अत्रैवोदाहरणमाह—**अग्निदाहादीति** ।

तदेवं प्रामाण्ये सति विना कारणेन विप्रतिपत्तिरयुक्तेत्याह—**तस्मादिति** त्रिपाद्या ।

चैत्यवन्दनादिवाक्ये तु पौरुषेयत्वादनाप्तप्रणीतत्वे सति कारणदोषसद्भावादप्रामाण्यमित्याह—**बौद्धादेरिति** त्रिपाद्या ॥

अपौरुषेयत्वाद् वेदस्य नास्ति कारणदोषज्ञानमित्याह—**वेदस्येत्यर्धेन** । ये तु पुरुषं प्रकल्प्य 'तद्वचनादाम्नायस्य प्रामाण्यम्, अनाप्तप्रणीतत्वेन चाप्रामाण्यम्' इति वदन्ति, तेषां बह्वी कल्पनेत्याह—**कर्तृमत्त्व इति कल्प्यमन्तेन** ।

1. वादिनाम्. अनन्त. मु.    2. लषितम्. मा.

कर्ता गुणाश्च दोषाश्च महाजनपरिग्रहः ।
एवमादि विना युक्त्या कल्प्यं मीमांसकैः पुनः ॥ ९८ ॥

इदानीमिव[1] सर्वत्र दृष्टान्नाधिकमिष्यते ।
एवंभूतस्य वेदस्य ज्ञानोत्पत्तिं प्रकुर्वतः ॥ ९९ ॥

स्वरूपविपरीतत्वसंशयौ भाष्यवारितौ ।
निराकरिष्यते चापि दुष्टकारणकल्पना ॥ १०० ॥

पुरुषाभाववत्त्वेन तद्द्वारेणाप्यशङ्कितौ ।
तथा सत्यतथाभावो बुद्ध्यनुत्पत्तिमाश्रितः ॥ १०१ ॥

तत्र विप्रतिषिद्धत्वं ब्रवीतीत्येवमादिना ।
यथादृष्टार्थवादित्वं तद्वत् प्रत्ययितादिति ॥ १०२ ॥

अपौरुषेयाभ्युपगमे तु तस्य सिद्धत्वान्न काचित् कल्पनेत्याह— **मीमांसकैरितीतीष्यत** इत्यन्तेन ।

अत एवंभूतस्यापौरुषेयत्वेन निरस्तदोषाशङ्कस्य बुद्ध्युत्पादकत्वेनानवग[2]तानुत्पत्तिलक्षणाप्रामाण्यस्य यदि परं संशयविपर्ययरूपमप्रामाण्यमाशङ्क्येत, तदपि "न चाग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिभाष्यद्वयेन निवारितमित्याह— **एवंभूतस्येति** ।

तत्रैतत् स्यात्—यद्यपीदानीं संशयविपर्ययौ न स्तः, तथापि कदाचित् स्यातामित्याशङ्क्याह— **निराकरिष्यत इति** । दुष्टकारणत्वे ह्याशङ्कापि स्यात्; अनाप्तानुप्रवेशश्च शब्दे दोषः; स च सम्बन्धग्रन्थे निराकरिष्यते; अतस्तद्द्वारेणाप्याशङ्का न युक्तेत्यर्थः ।

एवं सति यत् पूर्वं प्रत्यक्षवादिनाभिहितम्— "नन्वतथाभूतमपि" इति, तस्य बुद्ध्यनुत्पत्तिरेव विषयः परिशिष्यते; तत्र च "विप्रतिषिद्धमिदम्" इति भाष्येणानुभवविरोधोद्भावनं दूषणम्, न जात्युत्तरं दूषणमित्याह— **तथा सतीति** ।

एवं प्रतिज्ञादूषणपरं भाष्यम्— "यत्तु लौकिकं वचनम्" इति, तद्व्याचष्टे— **यथादृष्टेति** । प्रत्ययितस्येन्द्रिय[3]जन्यज्ञानमूलं यद्वाक्यं तदवितथमेवेति साध्यविकलता दृष्टान्तस्य ।

1. मेव. मा.
2. निवारयिष्यते. चौ. मु.
3. यवाक्यं. तदपि कथम्. मा.

इन्द्रियेति तु मूलं चेदस्यास्तीत्येवमब्रवीत् ।
द्रष्टृत्वसत्यवादित्वे तच्च प्रत्ययितादिति ॥ १०३ ॥

दृश्यमानार्थवादित्वे स्यादनाप्तोक्तिसत्यता ।
एवं त्वेकाङ्गवैकल्यात् प्रत्युदाहरणस्थितिः ॥ १०४ ॥

एकैकाभावमात्रे स्यादाप्तत्वेन्द्रियकत्वयोः ।
अप्रत्ययितपक्षे स्यादिन्द्रियस्याप्यसत्यता ॥ १०५ ॥

एवं तावत् स्वमतेन भाष्यं व्याख्यायाधुना परमतेन भाष्यं व्याख्यास्यन्नाह—**द्रष्टृत्वेत्यर्धेन** । यथार्थं दर्शनं यस्य यथार्थं च प्रतिपादनम्, स एव प्रत्ययितशब्देनोच्यते ; तस्य यद्वाक्यं [1]तदवितथमेवेति साध्यविकलता दृष्टान्तस्य ॥

एवं तर्हि "इन्द्रियविषयं वा" इत्यनर्थकम्, प्रत्ययितशब्देनैव तत्सिद्धेरित्याशङ्क्याह—**दृश्यमानेत्यर्धेन** । अप्रत्ययितस्यापि यद्वाक्यं श्रोतुरिन्द्रियविषयं तस्यापि तथात्वेन साध्यविकलतेत्यन्वयद्वयेन वाक्यद्वयोपलक्षणम् । न त्वन्वयद्वयोपलक्षितमेकं वाक्यमित्यर्थः ।

तदेतदनन्तरोक्तं [2]दूषयितुमाह—**एवं त्विति** । अस्मत्पक्ष उभयविशेषणसम्भवे एकमुदाहरणम्, तस्यैकाङ्गविकलत्वेन प्रत्युदाहरणद्वयम्—"अथाप्रत्ययितादनिन्द्रियविषयं वा" इति । भवत्पक्षे त्वेकैकोपलक्षितमुदाहरणद्वयम् । तत्रैकैकोपलक्षणाभाव[3]मात्रे एकैकमेव प्रत्युदाहरणमिति स्थितिः—"अथाप्रत्ययितादनिन्द्रियविषयं वा" इति ।

तत्र को दोष इत्याह—**अप्रत्ययितेति** सपादश्लोकेन ।

"तच्चेत्प्रत्ययितात्" इत्यस्य यत् प्रत्युदाहरणम् "अथाप्रत्ययितात्" इति तत् "इन्द्रियविषयं वा" इत्यस्याप्रत्ययितवाक्यप्रामाण्योदाहरणस्य बाधकम् ; "इन्द्रियविषयं वा" इत्यस्य च यत् प्रत्युदाहरणम् "अनिन्द्रियविषयं वा" इति तदपि "तच्चेत्प्रत्ययितात्" इत्यस्य श्रोतु[4]रनिन्द्रियविषयोदाहरणस्य बाधकम् ;

1. तदपि कथम्. मा.
2. दृष्टेयितुम्. मा.
3. त्वेकैव प्रत्यु....अथा. मा.
4. तुरिन्द्रिय. मा.

**अनिन्द्रियत्वपक्षे वा सत्प्रत्ययितभाषिनम् ।**
**व्याहतग्रन्थतैवं स्यात् तस्मात् पूर्वेण सत्यता ॥ १०६ ॥**

**परेण मूलसद्भाव इन्द्रियेति तु दर्शितः ।**
**अप्रामाण्यनिवृत्त्यर्थं दोषाभावोपवर्णनम् ॥ १०७ ॥**

**गुणात् प्रामाण्यमित्येवं तत्पूर्वं सुनिराकृतम् ।**
**पूर्वत्र प्रतिषिद्धत्वान्नैतत् प्रामाण्यकारणम् ॥ १०८ ॥**

**समुच्चयार्थो वाशब्दः पूर्वस्मि[1]न्नितरत्र तु ।**
**विकल्पेनोभयोराह प्रत्युदाहरणे पृथक् ॥ १०९ ॥**

**शक्येऽप्यसत्ये मिथ्यात्वं दृष्टं सत्येऽप्य[2]शक्तिके ।**

तथा च परस्परव्याहतग्रन्थतेति । तस्मात् पूर्वमेव शोभनमित्याह—**तस्मादिति** त्रिपाद्या । तस्मादवयवद्वयोपलक्षितमेवेदमुदाहरणं युक्तमित्यर्थः ।

ननु च प्रत्ययितत्वमर्थावितथत्वे कारणमुक्तं भाष्ये "तच्चेत्प्रत्ययितात्" इति, तथा सति परतः प्रामाण्यमित्याशङ्क्याह — **अप्रामाण्येति** सार्धेन । प्रत्ययितत्वेन दोषाभावादप्रामाण्यनिवृत्तिं दर्शयतीत्यर्थः ॥

यद्यवयवद्वयोपलक्षितमेकमुदाहरणम्, कथं तर्हि "तच्चेत्प्रत्ययितादिन्द्रियविषयं वा" इति [3]विकल्पार्थो वाशब्द इत्याशङ्क्याह—**समुच्चयार्थो वाशब्दः पूर्वस्मिन्निति ।**

प्रत्युदाहरणे तु यो वाशब्दः स विकल्पेनोभयोरवयवयोः प्रत्युदाहरणं प्रतिपादयतीति विकल्पार्थमुपेत्याह—**इतरत्र तु** इति सशेषार्धेन ॥

प्रत्ययितादिति किं प्रत्यक्षादिविषयमपि वाक्यमसत्यवादिनो मिथ्येत्याह—**शक्येऽप्यसत्ये मिथ्यात्वमिति ।** इन्द्रियविषयं वेत्यस्य प्रत्युदाहरणम्—"**दृष्टं सत्येऽप्यशक्तितः**" इति । प्रत्ययितवचनमित्ययोग्यार्थं विषयेऽप्रमाणमित्यर्थः ।

1. न्नुत्तरत्र च. चौ. मु.
2. शक्तितः. मा
3. कल्पस्तत्रार्थो. मा.

**नानेन वचनेनेह सर्वज्ञत्वनिराक्रिया ॥ ११० ॥**

**वचनादृत इत्येवमपवादो हि संश्रितः ।**
**यदि षड्भिः प्रमाणैः स्यात् सर्वज्ञः केन वार्यते ॥ १११ ॥**

**एकेन तु प्रमाणेन सर्वज्ञो येन कल्प्यते ।**
**नूनं स चक्षुषा सर्वान् रसादीन् प्रतिपद्यते ॥ ११२ ॥**

**यज्जातीयैः प्रमाणैस्तु यज्जातीयार्थदर्शनम् ।**
**भवेदिदानीं लोकस्य तथा कालान्तरेऽप्यभूत् ॥ ११३ ॥**

**यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ।**
**दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तिता ॥ ११४ ॥**

"अशक्यं हि तत् पुरुषेण ज्ञातुमृते वचनात्" इति । केचिदेतद् भाष्यं सर्वज्ञनिराकरणपरत्वेन व्याचक्षते, तान् प्रत्याह—**नानेनेति**। सर्वज्ञनिराकरण-द्वारेण 'चोदनैव' इत्ययमंशः साधयितुमभिप्रेतः; प्रतिज्ञासूत्रे च तत्साधनम-सम्बद्धमित्यभिप्रायः ॥

अपि च न तावत् प्रत्यक्षादिभिरभावपर्यन्तैः यः सर्वानर्थान् जानाति सोऽनेन निषिध्यते, "ऋते वचनात्" इत्यपवादाश्रयणात्; न च तन्निराकरणे किञ्चित् प्रयोजनम्, तत्सद्भावे 'चोदनैव' इत्यस्याविरोधादित्याह—**यदीत्यनेन** ।

नापि रूपरसादीनतीतानागतवर्त[1]मानांश्चक्षुरिन्द्रियजनितविज्ञानेन यो गृह्णाति सोऽनेन निषिध्यते, अतितुच्छत्वेनानिराकार्यत्वात् । तस्य कथमतितुच्छता ? कारणाभावेन तथाविधज्ञानाभावात्; न हि चक्षुरिन्द्रियमेवंविधज्ञानोत्पादकत्वेन लोके दृष्टमिति वक्रोक्त्या दर्शयन्नाह—**एकेन त्विति** ॥

अथ बुद्धसम्बन्धि चक्षुरिन्द्रियमेवंविधज्ञानोत्पादकमित्युच्येत, तत्राप्याह—**यज्जातीयैरिति** । [2]तदनेवंप्रमाणरूपमध्यपतितं बुद्धसम्बन्धि चक्षुरिन्द्रियमेवं-विधज्ञानोत्पादकं न भवति, चक्षुष्ट्वात्, अस्मदादिचक्षुर्वत् ॥

यत्राप्यतिशयदर्शनेन निरतिशयातिशयकल्पना, तत्रापि स्वविषयापरित्यागे-नैव अतिशयदर्शनमित्याह—**यत्राप्यतिशय इति** ॥

1. मानम् मा.        2. दनेन प्रमाणरूप....तितम्. मा.

**भविष्यति न दृष्टं च प्रत्यक्षस्य [1]मनागपि ।**
**सामर्थ्यं नानुमानादेर्लिङ्गादिरहिते क्वचित् ॥ ११५ ॥**

**सर्वज्ञकल्पनान्यैस्तु वेदे चापौरुषेयता ।**
**[2]तुल्यवत् कल्पिता येन तेनेदं संप्रधार्यताम् ॥ ११६ ॥**

**सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः ।**
**निराकरणवच्छक्या [3]न चासीदिति कल्पना ॥ ११७ ॥**

[4]ननु हेयोपादेयग्राहकस्य विज्ञानस्यास्त्येकं कारणं भावना ; **किमुच्यते** कारणानुपलब्ध्या कार्याभाव इति ? भावनाजन्यप्रत्यक्षं धर्माधर्मग्राहकत्वेन तैरिष्टम् । यथोक्तम्—"भावनाफलतः स्पष्टम्" इति । हेयोपादेयविज्ञानं चैत्यवन्दनादि-वाक्यप्रामाण्यसिद्ध्यर्थं तस्येष्टम्, न त्वन्यविषयस्य । तदुक्तम्—

"हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः" इति ।

उक्तं [5]च सद्धर्मे—"पश्याम्यहं भिक्षवो दिव्येन चक्षुषा सुगतिं दुर्गतिं च" इति । [6]दिव्यग्रहणं चर्ममयचक्षुर्निवृत्तिद्वारेण भावनाप्रतिपत्त्यर्थमेव तस्येष्ट-मित्याशङ्कां श्लोकेन निराकर्तुमाह—**भविष्यतीति** । अयमभिप्रायः—प्रमाणान्तर-प्रतिपन्ने वस्तुनि भावना भवति ; न चायमर्थः प्रत्यक्षेण प्रतीयते, भविष्यत्त्वात् ; नाप्यनुमानेन[7] तत्पूर्वकत्वात् ; न च प्रत्यक्षानुमानाभ्यामन्यत् प्रमाणमस्ति ॥

एवं सर्वज्ञाभावे प्रमाणमभिधायेदानीं तत्सद्भावे प्रमाणं नास्तीत्याह— **सर्वज्ञकल्पनेति** ॥

ये तु सर्वज्ञकल्पनावदपौरुषेयकल्पनापि न प्रामाणिकीत्याहुः चार्वाकादयः[8] तान् प्रति तत्र वैलक्षण्यमाह—**सर्वज्ञो दृश्यत इति** ।

ननु सर्वपुरुषदर्शनप्रत्यक्षनिवृत्त्या नाभावः प्रतीयते, सर्वपुरुषप्रत्यक्षनिवृत्तेर-गृह्यमाणत्वात्, ग्रहणे वा तस्यैव [7]ग्रहीतुरसाधारण्यप्रसङ्गात् ; नाप्येतत् प्रत्यक्ष-

1. प्रमा गवि. मा.
2. तुल्यता. चौ, अनन्त, मु.
3. न चाविदित. मा.
4. नदुष्टेयो. मा.
5. सधर्मे पश्यास्येहं. मा.
6. द्रव्यग्रहणं चर्ममलच. मा.
7. मानेतत्पूर्वकत्वाच्चेत्प्र. मा.
8. दयः....तत्र. मा.
9. षनिवृत्त्यनि. मा.
10. तुमशक्यत्वत्र. मा.

न चागमेन [1]सर्वज्ञस्तदीयेऽन्योन्यसंश्रयात् ।
नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥ ११८ ॥

न चाप्येवंपरो नित्यः शक्यो लब्धुमिहागमः ।
नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता ॥ ११९ ॥

आगमस्य च नित्यत्वे सिद्धे तत्कल्पना वृथा ।
[2]यतस्तं प्रतिपद्यन्ते धर्ममेव ततो नराः ॥ १२० ॥

योऽपीन्द्रियार्थसम्बन्धविपये सत्यवादिताम् ।
दृष्ट्वा तद्वचनत्वेन [3]श्रद्धेयेऽर्थेऽपि कल्पयेत् ॥ १२१ ॥

निवृत्त्या, तस्यासद्भावेऽपि भावात् मातापितृव्यपदेशनिबन्धनवत् । [4]तदुक्तम् "हन्त ! हतोऽसि मातापितृव्यपदेशनिबन्धनस्याप्रत्यक्षत्वात्[5]"—इतीयमनालोचितपौर्वापर्यस्यानुपासितगुरोः परिचोदना ; यतो नानेन प्रत्यक्षनिवृत्तिरभावे प्रमाणमुच्यते, अपि तु सर्वज्ञसद्भावे प्रमाणं नास्तीति सकलस्य तात्पर्यम् । आसीत् सर्वज्ञ इत्यत्रापि नास्ति प्रमाणम् ; नासीत् सर्वज्ञ इत्यत्र त्वनुमानमेव प्रमाणम्—अतीतोऽपि कालः सर्वज्ञशून्यः, कालत्वादिदानीन्तनकालवत् ॥

आगमोऽपि पुरुषप्रणीतः सर्वज्ञसद्भावग्राहको नास्तीत्याह—**न चेति** ॥

नापि नित्यागमगम्यत्वम्, तत्परे सत्यनित्यत्वात् ; अतत्परे च [6]तत्राप्रामाण्यादित्याह—**न चाप्येवमिति** ॥

सिद्धे चागमस्य नित्यत्वे तत एव धर्माधर्मौ प्रमास्येते, किमन्तर्गड्डुना सर्वज्ञेनेत्याह—**आगमस्येति** ॥

इदानीं तदीयमेवानुमान सद्भावे प्रमाणं दूषयितुमुपन्यस्यति स—**योऽपीति** । प्रमाणान्तरगोचरार्थप्रतिपादके हि क्षणिकादिवाक्ये बुद्धोक्तत्वं प्रमाणत्वेन व्याप्तमुपलब्धम्, इदानीं चैत्यवन्दनादिवाक्येऽपि तदुपलभ्यमानं साधयतीत्यर्थः ॥

1. तदीयोऽन्य. मा.
2. यत्ततः प्रतिपत्स्यन्ते. मा.
3. अद्धेयार्थे. अनन्त. मु.
4. तदुत्तरं हन्त. मा.
5. त्वादितियदाना. मा.
6. तत्र प्रामा. मा.

तेनापि पारतन्त्र्येण साधिता स्यात् प्रमाणता ।
प्रामाण्यं चेत् स्वयं तस्य कापेक्षान्येन्द्रियादिषु ॥ १२२ ॥

यथैवात्रेन्द्रियादिभ्यः परिच्छेदात् प्रमाणता ।
श्रद्धेयेऽपि तथैव स्यान्न स्वातन्त्र्येण लभ्यते ॥ १२३ ॥

यथा च तेषां सत्यत्वं सिध्यत्येतेन हेतुना ।
तथान्यानवबुद्धार्थप्रमाण्याभावसाधनम् ॥ १२४ ॥

अश्रद्धेयार्थसत्यत्वं श्रद्धेये [1]चाप्यसत्यता ।
पूर्वज्ञानानुवादित्वं दृष्टान्तवदिहेष्यताम् ॥ १२५ ॥

अपि चालौकिकार्थत्वे सति पुंवाक्यहेतुकम् ।
[2]मिथ्यार्थं वेदबाह्यानां स्यादन्योन्यसपक्षता[3] ॥ १२६ ॥

तत्र हेतोर्बुद्धोक्तत्वस्याप्रजोजकत्वं नाम दूषणमाह—**तेनापीति** । प्रमाणान्तरसंवादप्रयुक्तं हि क्षणिकादिवाक्ये प्रामाण्यम्, न बुद्धोक्तत्वादित्यर्थः ॥

किं तत इत्याह—**यथैवेति** । यदेव हि[4] क्षणिकादिवाक्येषु प्रमाणान्तरसंवादरूपं प्रामाण्यस्य प्रयोजकम्, तदेव चैत्यवन्दनादिवाक्येषूपलभ्यमानं प्रामाण्यं साधयति; न बुद्धोक्तत्वमित्यर्थः ॥

इदानी[5]मुपगम्य प्रयोजकत्वं विरुद्धतामाह—**यथा च तेषामिति** । तदेवं विरुद्धत्वमुद्भावनीयम्—चैत्यवन्दनादिवाक्यं धर्मि, प्रमाणान्तरानवबुद्धेऽर्थे न प्रमाणमिति साध्यो धर्मः, बुद्धोक्तित्वात्, क्षणिकादिवाक्यवत् ॥

एतदेव विरुद्धत्वं प्रमाणान्तरेणोद्भावयति स्म—**अश्रद्धेयार्थसत्यत्वमिति** ॥

[6]सत्प्रतिसाधनश्चायं हेतुरित्याह—**अपि चेति** । चैत्यवन्दनादिवाक्यं[7] मिथ्यार्थमिति साध्यो धर्मः, अतीन्द्रियार्थप्रतिपादकत्वे सति पुंवाक्यत्वादिति हेतुः, [8]केशोल्लुञ्छनादिवाक्यवदिति दृष्टान्तः ॥

1. वार्थसत्यता. मा.
2. मिथ्यात्वं वेदवाक्यानाम्. चौ. अनन्त. मु.
3. न्यं सपक्षतः चौ. मु.
4. हि कर्मणिकादि. मा.
5. जपगम्य प्रयोजनकत्वम्. मा.
6. सप्रतिस्वान. मा.
7. वाक्यत्वं मिथ्यैतदिति. मा.
8. केशोज्जरादि. मा.

**धर्माधर्मातिरिक्तार्थे प्रामाण्यं च प्रसज्यते ।**
**साङ्ख्यादिषु च जीवत्सु दृष्टान्तो [1]दुर्लभस्त्वया ॥ १२७ ॥**

**[2]अलौकिकार्थवादित्वात् पुंवाक्यत्वे सतीति च ।**
**परस्परमपेक्ष्यैव [3]बौद्धादेः स्यान्मृषार्थता ॥ १२८ ॥**

**वदेदेवं च यो नाम वादी प्रथमसङ्गतः ।**
**तस्यापि हेतुः स्यादेष भवन्तं प्रत्यसंशयम् ॥ १२९ ॥**

**बुद्धादीनामसार्वज्ञ्यमिति सत्यं वचो मम ।**
**मदुक्तत्वाद् यथैवाग्निरुष्णो भास्वर इत्यपि ॥ १३० ॥**

**प्रत्यक्षं च मदुक्तत्वं त्वया साध्या तदुक्तता ।**
**तेन हेतुर्मदीयः स्यात् सन्दिग्धासिद्धता तव ॥ १३१ ॥**

**प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च ।**
**सद्भावावारणे शक्तं को नु तं कल्पयिष्यति ॥ १३२ ॥**

इदमपरं विरुद्धत्वोद्भावनम्—**धर्माधर्मातिरिक्तेऽर्थे प्रामाण्यं च प्रसज्यत इति** । तत्तु "अश्रद्धेयार्थसत्यत्वम्" इत्यनेनैव गतत्वात् पुनरुक्तमित्युपेक्षणीयम् । साध्यविकलश्चायं दृष्टान्त इत्याह—**सांख्यादिष्वित्यर्धेन** ॥

पूर्वोक्तस्यैव प्रतिसाधनस्य विशेषणविशेष्यभावान्यत्वेन पुनरुपन्यास इत्याह—**अलौकिकार्थवादित्वादिति** ॥

यदि वा प्रयोजकमपि बुद्धोक्तत्वं चैत्यवन्दनादिवाक्यसत्यताद्वारेण सर्वज्ञतां साधयतीति, हन्त ! तर्हि मदुक्ततापि सर्वज्ञभावं साधयेदित्याह—**वदेदेवमिति** ॥

तद्दर्शयति—**बुद्धादीनामसार्वज्ञ्यमिति** । बुद्धः सर्वज्ञो न भवतीति [4]मदीयं वाक्यं धर्मि, सत्यमिति साध्यो धर्मः, मदुक्तत्वादिति हेतुः, उष्णोऽग्निरित्यादिवाक्यवदिति दृष्टान्तः ॥

चैत्यवन्दनादिवाक्येषु च [5]बुद्धोक्तत्वं सन्दिग्धत्वादसिद्धम्; बुद्धः सर्वज्ञो न भवति इत्यत्र तु मदुक्तता प्रत्यक्षेति विशेष इति दर्शयति—**प्रत्यक्षं चेति** ॥

यस्य च सद्भाववारणं प्रमेयत्वादयोऽपि कर्तुं समर्थाः, तस्य सद्भावं कः साधयतीत्याह—**प्रत्यक्षाद्यविसंवादीति** ॥

1. भोऽस्य च. चौ. अनन्त. मु.
2. वाग्मित्वं नृवा. चौ. अनन्त. मु.
3. बुद्धादेः मा.
4. तदीयम्. मा.
5. बुद्धोक्तं स. मा.

**न चापि स्मृत्यविच्छेदात् सर्वज्ञः परिकल्प्यते ।**
**विगानाच्छिन्नमूलत्वात् कैश्चिदेव परिग्रहात् ॥ १३३ ॥**

**सर्वज्ञोऽसाविति ह्येव [1]तत्काले च बुभुत्सुभिः ।**
**तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥ १३४ ॥**

**कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।**
**य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥ १३५ ॥**

**सर्वज्ञोऽनवबुद्धश्च येनैव स्यान्न तं प्रति ।**
**तद्वाक्यानां प्रमाणत्वं मूलाज्ञानेऽन्यवाक्यवत् ॥ १३६ ॥**

**रागादिरहिते चास्मिन् निर्व्यापारे व्यवस्थिते ।**
**देशनान्यप्रणीतैव स्यादृते प्रत्यवेक्षणात् ॥ १३७ ॥**

न चाष्टकादिवत् सर्वज्ञसद्भावे स्मरणं प्रमाणम्, विच्छिन्नमूलत्वादित्याह— **न चापीति** । अविच्छिन्नमूला हि स्मृतिः प्रमाणोपस्थापनेन प्रमाणीभवति ; इयं तु सर्वज्ञस्मृतिर्विगीता कैश्चिदेव शाक्यभिक्षुभिः परिगृहीतत्वान्न मूलकल्पनायालम् । अष्टकादीनां तु विशेषं समस्तभवदीयस्मरणविपर्ययेण वक्ष्यामः ॥

इदानीं सर्वज्ञाभावे युक्तितः प्रमाणमाह—**सर्वज्ञ इति** । भवद्भिर्हि बुद्धः सर्वज्ञोऽभीष्टो नान्यः ; ततश्च तज्ज्ञानज्ञेयविज्ञानरहितैः बुद्धज्ञानविज्ञेयक्षणिकशून्यदुखात्मकत्वादिविषयज्ञानवर्जितैरतीतानागतवर्तमानैः पुरुषैः सर्वज्ञग्रहणासम्भवात् सर्वप्रमाणाभावेनाभावः प्रतीयत इत्यर्थः । तदयं प्रयोगार्थः—त्रिकालवर्तिनः पुरुषाः कालत्रयेऽपि सर्वज्ञं न गृह्णन्ति, तज्ज्ञानज्ञेयविज्ञानरहितत्वात्, अस्मदादिवत्, यश्च न कदाचित् गृह्यते, स नास्ति शशविषाणवदिति ॥

[2]अथैतद्ग्रहणसिद्ध्यर्थं सर्वज्ञान्तरमिष्यते, ततस्तस्य कल्पनायामनवस्था स्यात् ; न चैतद् दृष्टमित्याह—**कल्पनीयाश्चेति** ॥

न चानवगत एव सर्वज्ञः सत्तामात्रेण क्वचिदुपयुज्यते ; यावत् स न विज्ञातस्तावत् तद्वाक्यानां मूलाभावान्न प्रामाण्यम्, इतरपुरुषवाक्यवदित्याह— **सर्वज्ञ इति** ॥

इदानीं भवतु नाम सर्वज्ञः, तथापि तस्य वीतरागस्य निर्व्यापारत्वेनानुपदेशकत्वाद् विप्रणीता एवैताश्चैत्यवन्दनादिदेशनाः, विना प्रत्यक्षादिभिः प्रत्यवेक्षणादित्याह—**रागादिरहित इति** । तदनेन बुद्धोक्तत्वादित्यस्य हेतोरसिद्धत्वमुक्तम् ॥

1. काले तु. चौ. मु. 2. हणविध्यर्थम्. मा.

**साम्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।**
**निस्तरन्ति यथाकामं कुड्यादिभ्योऽपि देशनाः ॥ १३८ ॥**

**एवमाद्युच्यमानं तु श्रद्दधानस्य शोभते ।**
**कुड्यादिनिःसृतत्वाच्च नाश्वासो देशनासु नः ॥ १३९ ॥**

**किं [1]नु बुद्धप्रणीताः स्युः किमु कैश्चिद् दुरात्मभिः ।**
**अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥ १४० ॥**

**एवं यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः ।**
**सूक्ष्मातीतादिविषयं जीवस्य परिकल्पितम् ॥ १४१ ॥**

**नर्ते तदागमात् सिध्येन्न च तेनागमो विना ।**
**दृष्टान्तोऽपि न तस्यान्यो नृषु कश्चित् प्रवर्तते ॥ १४२ ॥**

**नित्यागमावबोधोऽपि प्रत्याख्येयोऽनया दिशा ।**
**न हि तत्रापि विश्रम्भो [2]दृष्टोऽनेन कुतोऽथ वा ॥ १४३ ॥**

**साम्निध्यमात्रत** इत्यादि । श्लोकत्रये[3] न तिरोहितमिवास्ति ॥

एवं शाक्यसर्वज्ञं निराकृत्य संप्रत्यर्हत्सर्वज्ञं निराकर्तुमाह—**एवं यैरिति ॥**

एवं ह्याहुः क्षपणकाः—स्वभावत एवातीतानागतवर्तमानार्थग्रहणशक्त आत्मा; तस्य धर्माधर्मोपात्तं शरीरमावरणम्; इन्द्रियाण्यपि तस्यावृतप्रदेशाः; न पुनरर्थग्रहणे स तान्यपेक्षते; स यदा धर्माधर्मक्षयादपगतशरीरसम्बन्धः केवलो भवति, तदास्यावरणापाये समं तावत् स्वाभाविकमतीतानागतसूक्ष्मविप्रकृष्टार्थविषयं ज्ञानं भवति; [4]अतोऽर्हन्तः सर्वज्ञा इति; तदनेन निरस्यति स—**नर्ते इति ।** अत्र वस्तुन्यागमोऽनुमानं वा प्रमाणं स्यात्; न तावदागमः, नित्यस्य भवद्भिरेवानिष्टत्वात्; तत्कृतिश्चेदितरेतराश्रयप्रसङ्गात्—न विना आगमेन तस्य सिद्धिः, न च तेन विना आगमस्य प्रामाण्यं यतः । नाप्यनुमानम्, दृष्टान्ताभावात्; न ह्येवमतिशयवान् कश्चित् पुमानुपलभ्यते ॥

येऽप्याहुर्वेदान्तवादिनः—सृष्ट्यादौ नित्य एवागमः सुप्तप्रतिबुद्धन्यायेन हिरण्यगर्भस्य प्रतिभातः; ततः प्रभृत्येषा स्वाध्यायपरम्परेति, तदेतदपि निराकर्तुमाह—**नित्यागमावबोधोऽपीति ।** अनया दिशेत्यनेन क्षपणकन्यायोऽतिदिश्यते ॥

1. किन्तु. चौ. अनन्त. मु.
2. लोके दृष्टः श्रुतोऽथवा. मा.
3. त्रयेनाति. मा.
4. असावर्हन्तः मा.

सर्वदा चापि पुरुषाः प्रायेणानृतवादिनः ।
यथाद्यत्वे न विस्रम्भस्तथातीतार्थकीर्तने ॥ १४४ ॥

स्वप्नादिज्ञानवच्चापि प्रत्ययोऽस्यागमार्थयोः
भवेदिति सशङ्कानां प्रामाण्यं गम्यते कथम् ॥ १४५ ॥

पुरुषातिशयश्चेष्टः सैव चागमनित्यता ।
कल्पितं स्मरणं [1]चास्य जन्मान्तरनिबन्धनम् ॥ १४६ ॥

ग्राह्यत्वे चागमस्यैवं द्वेषोऽर्थग्रहणे वृथा ।
यो ह्यनुच्चरितं शब्दं गृह्णात्यर्थेऽस्य का कथा ॥ १४७ ॥

पुमांस्तावत् स्वतन्त्रः स्यादर्थग्रहणवादिनाम् ।
आगमप्रतिभाने तु पारतन्त्र्यं द्वयोरपि ॥ १४८ ॥

न तावदनभिव्यक्तशब्दग्रहणसमर्थपुरुषसद्भावेऽनुमानं प्रमाणम्, दृष्टान्ताभावात्; नापि हिरण्यगर्भवाक्यमेव प्रमाणम्, विप्रलम्भभूयिष्ठत्वात् पुरुषाणाम्; अद्यत्ववच्चातीतेऽपि काले विप्रलम्भभूयिष्ठा एव पुरुषा इति दर्शयति—**सर्वदा चापीति** ॥

भवतु वा तस्यागमविषयं ज्ञानम्; तत्तु स्वप्नज्ञानतुल्यमप्याशङ्क्येतेत्याह—**स्वप्नादीति** ॥

अर्हत्सर्वज्ञपक्षाच्च कल्पनागुरुत्वेन पापीयानयं पक्ष इत्याह—**पुरुषातिशय इति** ॥

यदि तावन्नित्यागमग्रहणरूपं प्रतिभानमभिप्रेतम्, तच्चानभिव्यक्तं शब्दं गृह्णातीत्याशयकल्पना, आगमस्य चापौरुषेयत्वकल्पना स्थितैव; अथापि जन्मान्तरानुभूतस्मरणरूपं प्रतिभानम्, तथाप्यशेषसंस्कारोच्छेदलक्षणत्वान्मरणस्य जन्मान्तरानुभूतं च स्मर्यत इत्यदृष्टपूर्वम्; '[2]एवं सः' इति यदि परद्वेषोऽत्र सर्वज्ञपरित्यागे कारणमित्याह—**ग्राह्यत्वे चेति** । उभयत्राप्यदृष्टसामर्थ्यं कल्पनीयम् । इयं कल्पना मम रोचते, नेयम्—इति प्रद्वेषः ॥

बौद्धपक्षादपि पापीयानयं पक्ष इत्याह—**पुमांस्तावदिति** । बुद्धस्य तावत् स्वातन्त्र्यं धर्माधर्मौ प्रति, आगमस्य तु चैत्यवन्दनादेरस्वतन्त्रता । हिरण्यगर्भस्ताव-

1. चान्यजन्मा. 2. एवं सति यदि. मा.

अनेकपुरुषस्थत्वादेकत्रैव च जन्मनि ।
ग्रहणस्मरणाद् वेदे न स्वातन्त्र्यं विहन्यते ॥ १४९ ॥

अन्यथाकरणे चास्य बहुभिः स्यान्निवारणम् ।
एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥ १५० ॥

अतश्च संप्रदाये [2]च नैकः पुरुष इष्यते ।
बहवः परतन्त्राः स्युः सर्वे ह्यद्यत्ववन्नराः ॥ १५१ ॥

एवं च कल्पयन्त्यन्ये यावदागमसिद्धये ।
तावन्न कल्पयत्येतत् समत्वं जैमिनेः परैः ॥ १५२ ॥

दागमाद्धर्मं प्रतिपद्यते, आगमस्य तु तत्प्रतिभातत्वेन प्रामाण्यमित्यनयोः पारतन्त्र्यम् ॥

इदानीं हिरण्यगर्भेण सह सुप्तप्रतिभानस्य वैलक्षण्यमाह—**अनेकपुरुषस्थ-त्वादिति**। अनेकपुरुषस्थत्वादित्यनेनैकस्य स्वातन्त्र्यं नास्तीत्युक्तम्। एकत्रैव च जन्मनि ग्रहणस्मरणादित्यनेनाप्येतत् प्रतिपादयति—स्मरणमिदम्, न प्रतिभानम्; तच्चोपपन्नमेकजन्मन्याहितसंस्कारस्येति ॥

मीमांसकपक्षेऽपि कथमनादौ संसारे नायं वेदोऽपभ्रष्ट इति चेदित्या-शङ्क्याह—**अन्यथाकरण** इत्यर्धेन। एकपुरुषप्रतिभानपक्षे तु सर्वमेव तु संभव-तीत्याह—**एकस्ये**त्यर्धेन ॥

अतश्चाध्ययनमपि नैकस्मात् कर्तव्यं सम्भवत्प्रमादनिदानमित्याह—**अतश्चे**-त्यर्धेन। युधिष्ठिरकालापभ्रंशस्यैव वेदस्येदानीमनेकाध्येतृधारणमिति चेदित्या-शङ्क्याह—**बहव** इत्यर्धेन। तदयं प्रमाणार्थः—अतीतोऽपि कालः पारतन्त्र्याध्ये-तृयुक्तः, कालत्वाद्, इदातीन्तनकालवत् ॥

**एवं चेति**। यदुक्तं कैश्चित्—यथा सर्वज्ञकल्पना निष्प्रमाणिका तथा वेद-स्यापौरुषेयतेति, तदेवमुक्तेन न्यायेन यथा सर्वज्ञकल्पनायां प्रमाणं नास्ति, तथो-

1. बहुभ्यः चौ, मु. मा.
2. दायेऽपि. मा.
3. सर्वेऽप्य. मा.

न हि दृष्टाधिकं किंचित् प्रामाण्ये तेन कल्प्यते ।
अप्रामाण्यनिमित्त [1]ञ्च परस्यादृष्टकल्पना ॥ १५३ ॥

[2]दृष्टप्रामाण्यबाधश्च नास्तिकस्य प्रसज्यते ।
उत्पन्ने सति विज्ञाने बलाद् बाधप्रकल्पना[3] ॥ १५४ ॥

साधिते पुरुषाभावे निर्दोषज्ञानजन्मनः ।
प्रत्यक्षान्नास्तिकैर्वाच्यो विशेषश्चोदनाधियः ॥ १५५ ॥

क्तम्; वेदस्य तु पौरुषेयत्वे प्रमाणं वक्तव्यम्: नापौरुषेयत्वे, तस्य दृश्यमानत्वादेव सिद्धेः । एवं सिद्धे वैषम्ये यत् साम्यमुच्यते तदेतावता—यावच्चैत्यवन्दनादि वाक्यप्रामाण्यसिद्ध्यर्थम् "अग्निहोत्रं जुहोति" इत्येवमादिवाक्याप्रामाण्यसिद्ध्यर्थं च कल्पयन्ति तावदयं जैमिनिः वेदप्रामाण्यसिद्ध्यर्थं न कल्पयतीत्येतावदेवात्र[4] समत्वं जैमिनेः परैः ॥

तदेतदाह—**न हीत्यर्धेन** ।

बोधकत्वादेव प्रामाण्यं न चेत् बाधकारणदोषज्ञानाभ्यामपोद्यते; भवति च चोदनातो ज्ञानम्, न च बाधक उत्पद्यते, पुरुषाभावेन च कारणदोषा अपि न सन्ति; प्रत्युत यो नास्तीत्यप्रामाण्यं चोदनाया वदति, तस्य दृष्टव्याघातोऽदृष्टकल्पनागौरवं च । बोधकत्वान्निरपवादं प्रामाण्यमुक्तम्, तस्य कर्ता न दृश्यते, सोऽदृष्टः कल्पित इत्याह—**अप्रामाण्यनिमित्त** इति ।

पूर्वोक्तमेव दृष्टहान[6]मदृष्टकल्पनं च स्पष्टयति—**उत्पन्न** इत्यर्धेन ॥

वक्तव्यश्च नास्तिकेनाभिमतप्रामाण्येन प्रत्यक्षेण सह चोदनाया विशेष इत्याह—**साधित** इति । नास्तिकास्तावत् प्रत्यक्षस्य प्रामाण्यमिच्छन्ति; यावत् तत्र प्रामाण्यसामग्री दोषविरहबोधकत्वलक्षणा, सा सकला चोदनाजनिते विज्ञानेऽस्त्येव; यतो न शब्दस्य स्वतो दोषत्वम्, पुरुषद्वारकाश्च ये दोषास्तान् सम्बन्धग्रन्थे निराकरिष्यामः ॥

1. च प्रामाण्या. मा पु पर. चौ, अनन्त. मु
2. बुद्धप्रामाण्य दृष्टेश्च. मा.
3. नात्. मा.
4. त्र........तदेत. मा.
5. नास्तीत्यादिप्रा. मा.
6. दृष्टहान्यदृष्ट. मा.

उपदेशोऽन्यथा न स्यादतीन्द्रियनिबन्धनः ।
तस्य कर्ता न चेद् दृष्टः सोऽर्थ इत्यर्थकल्पना ॥ १५६ ॥

यद् वानुमानमेवेदमुपदेशित्वमुच्यते ।
[1]दृष्टार्थपूर्वताव्याप्तं व्यतिरेकोऽस्य नन्निति ॥ १५७ ॥

अन्यथाप्युपपन्नत्वं व्यामोहादिति कथ्यते ।
लिङ्गस्य व्यभिचारो वा [2]बालवाक्येऽपि दर्शनात् ॥ १५८ ॥

"नन्वविदुषामुपदेशो नावकल्पते : उपदिष्टवन्तश्च मन्वादयः" इति पूर्वपक्षभाष्यम् । तदनेन सर्वज्ञसद्भावेऽर्थापत्तिरनुमानं वा प्रमाणमुपन्यस्तम् । अर्थापत्तिं तावदाह–**उपदेशोऽन्यथेति** । योऽयमतीन्द्रियार्थप्रतिपादक उपदेशः– "चैत्यवन्दनात् स्वर्गो भवति" "अष्टका कर्तव्या" इत्येवमादिः, तत्प्रमाणं वचनान्यथानुपपत्त्यैव तत्प्रणेतुर्बुद्धादेस्तदर्थदर्शनमस्तीत्येव प्रतीयते ॥

अनुमानमाह–**यद्वेति** त्रिगाथा । अष्टकाचैत्यवन्दनादिविषय उपदेशो धर्मी, दृष्टार्थपूर्व इति साध्यो धर्मः, पूर्वशब्दः कारणवाची, उपदेशत्वादिति हेतुः, उभयप्रसिद्धाप्तप्रणीतोपदेशवदिति दृष्टान्तः । दृष्टार्थपूर्वताभावे हेतुरप्युपदेशलक्षणो नास्तीत्याह–**व्यतिरेकोऽस्य नन्नितीति** । "नन्वविदुषामुपदेशो नावकल्पते" इत्यस्य[2] प्रतीकेन ग्रहणमुपन्यस्तम्–**नन्निति** । तदयमाक्षितान्वयो न व्यतिरेकः ; पक्षधर्मत्वं च "उपदिष्टवन्तश्च मन्वादयः" इत्युक्तम् ॥

"उपदेशो हि व्यामोहादपि भवति" इति सिद्धान्तभाष्यम् , तद् व्याचष्टे **अन्यथेत्यर्धेन** । अर्थापत्तिप्रयोगपक्षे व्यामोहादप्युपदेशो घटत इत्यन्यथाप्युपपत्ति- र्दर्शिता । अथानुमानं पूर्वपक्षवादिना प्रयुक्तम् , तत्राप्याह–**लिङ्गस्य व्यभिचारो वेति** । यदि तावत् प्रत्यक्षदृष्टपूर्वत्वं साध्यते, तदोपदेशलक्षणस्य[4] व्यभिचरणाद- नैकान्तिकत्वमाह–**बालवाक्येऽपि दर्शनादिति** ॥

1. अदृष्टार्थवता, मा.
2. क्ये नि. अनन्त. क्यनि. चौ. मु.
3. स्य केन, मा.
4. स्य साध्यकार. मा.

**वेदाज्ज्ञात्वोपदिष्टं चेदित्येवं सिद्धसाधनम् ।**
**वेदादपीत्यनेनोक्तं मन्वादेश्चैतदिष्यते ॥ १५९**

**अन्यथा संविदानोऽपि विवक्षत्यन्यथा यतः ।**
**तस्मादेकान्ततो नास्ति पुंवाक्यात् तद्धियां गतिः ॥ १६० ॥**

**भ्रान्तस्यान्यविवक्षायामन्यद् वाक्यं हि [1]दृश्यते ।**
**यथाविवक्षमप्येतत् तस्मान्नैव प्रवर्तते ॥ १६१ ॥**

**वक्तृधीराप्तवाक्येन[2] गम्यतेऽन्यत्र विप्लुतिः ।**
**तेनोत्सर्गापवादाभ्यां वचसः शक्तिरुच्यते ॥ १६२ ॥**

अथोपदेशत्वेन वेदपूर्वकत्वं साध्यते तत्राप्याह—**वेदाज्ज्ञात्वेति** । पक्षैकदेशेऽष्टकावाक्ये सिद्धसाध्यत्वं दर्शितम् ; वेदादपीति "असति व्यामोहे वेदादपि भवति" इत्यस्य प्रतीकेन ग्रहणम् ॥

इदानीं चोदनालौकिकवाक्ययोः वैलक्षण्यप्रतिपादनपरम् "अपि च पौरुषेयाद् वचनादेवमयं पुरुषो वेदेति भवति प्रत्ययः, नैवमर्थः" इति । तस्यायमर्थः—न लौकिकवाक्यस्य बाह्येऽर्थे प्रामाण्यम् ; क्व तर्हि ? वक्तृज्ञान इति । तद् विकल्प्य दूषयितुमाह—**अन्यथेति** । वक्तृज्ञानप्रतिपादनपरं वा लौकिकं वाक्यं स्यात्—यं[3] यमर्थं प्रतिपादयति, सोऽनेन प्रतिपन्नः विवक्षाप्रतिपादनपरं वा ? न तावद् विज्ञानं प्रतिपादयति, व्यभिचारात् ; यतोऽन्यथापि प्रतिपन्नमन्यथा प्रतिपादयन्तो दृश्यन्ते लौकिकाः ॥

विवक्षामपि व्यभिचरतीत्याह—**भ्रान्तस्येति** । अथान्यार्थप्रतिपादनविवक्षायामपि प्रमादादन्यद् वाक्यमुच्चारयति ॥

एवं दूषिते समर्थयितुमाह—**वक्तृधीरिति** । "अपि च पौरुषेयाद् वचनात्" इत्याप्तवाक्यविषयमिदं द्रष्टव्यम् ; येनोपरितनं भाष्यमनाप्तवाक्यस्य वक्तृज्ञानेऽपि विप्लवमाह—"विप्लवते खल्वपि कश्चित् पुरुषकृताद् वचनात्" इति । तेनेदृशं सामर्थ्यमुत्सर्गापवादरूपेण भाष्येण वाक्यद्वयस्योक्तम् । आप्तवाक्यस्य वक्तृज्ञाने प्रामाण्यम् ;

1. च. चौ. अनन्त. मु.
2. वाक्येषु. चौ. मु.
3. यद्ययमर्थम्. मा.

पदार्थरचनायत्तो वाक्यार्थप्रत्ययोद्भवः ।
विवक्षापूर्वविज्ञानवशाच्च रचनाकृतिः ॥ १६३ ॥

विवक्षान्तरयुक्ता हि कुर्वाणा रचनान्तरम् ।
आवापोद्वाप[1]योगेन दृश्यन्तेऽर्थेषु मानवाः ॥ १६४ ॥

तेनार्थप्रत्ययोत्पादे श्रोतुर्जातेऽपि वाक्यतः ।
ज्ञातो नूनमनेनेति वक्तुर्ज्ञाने मतिर्भवेत् ॥ १६५ ॥

आप्तोक्तिकारणं कंचिदनुयुङ्क्ते नरं यदा ।
तदा च निर्दिशत्याप्तं स जानात्येतदित्यसौ ॥ १६६ ॥

तज्ज्ञानान्तरितत्वाच्च शब्दास्तावदुदासते ।

यतो यथार्थदर्शनप्रतिपादनमाप्तत्वम्, न त्वयथार्थदर्शनम्, यथादर्शनं च प्रतिपादनादिति । अनाप्तवाक्यस्य तु बाह्यार्थवद् वक्तृज्ञानेऽपि [3]न प्रामाण्यमस्तीत्यर्थः ॥

इदानीं यथा वक्तृज्ञाने प्रामाण्यम्, तथा प्रतिपादयितुमाह—**पदार्थेति ।** प्रत्यक्षादिना तावदर्थं विषयीकरोति, ततस्तं प्रतिपादयितुं विवक्षति, ततस्तत्प्रतिपादनसमर्थां पदरचनां करोति, ततस्तस्मात् पदरचनात्मकाद् वाक्यात् प्रत्येति श्रोता; तदनेन विवक्षाद्वारेण वक्तृज्ञानकार्यत्वं पदरचनात्मकस्य वाक्यस्य प्रदर्शितमव्यभिचारसिद्ध्यर्थम् ॥

इदानीं तदेवान्वयव्यतिरेकाभ्यां प्रदर्शयितुमाह—**विवक्षान्तरयुक्ता हीति** ॥

कार्यं च पदरचनात्मकं वाक्यं कारणे वक्तृज्ञाने प्रमाणमित्याह—**तेनेति** ॥

लोकेऽपि च वक्तृज्ञानपरतैव वाक्यस्य प्रतीयत इत्याह—**आप्तोक्तिकारणमिति** ॥

भवतु विवक्षा यावत्पर्यन्तमर्थे प्रतीयमाने प्रामाण्यम्, किमिति परित्यज्यत इत्याशङ्क्याह—**तज्ज्ञानेत्यर्धेन** । वक्तृज्ञानेनान्तरित[4]त्वान्न बाह्यार्थे वाक्यस्य प्रामाण्यमित्यर्थः । कथं तर्हि वाक्यार्थे प्रामाण्यम्, कथं च तन्निबन्धनो व्यवहारः

1. पमेदेन. चौ. मु.
2. तदा स निर्दिशेदाप्तम्. मा.
3. Omitted. न. मा.
4. रितार्था न. मा

[1]प्रामाण्यस्थापनं तस्माद् वक्तृधीहेतुसंभवात् ॥ १६७ ॥

अर्थे पूर्वप्रतीतेऽपि निश्चयो हि तदाश्रयः ।
तेनार्थज्ञानगम्यापि प्रामाण्ये सैव पूर्वभाक् ॥ १६८ ॥

अतोऽत्र पुंनिमित्तत्वादुपपन्ना मृषार्थता ।
न तु स्यात् तत्स्वभावत्वं वेदे वक्तुरभावतः ॥ १६९ ॥

तद्बुद्ध्यन्तरयो[2] नास्तीत्यर्थोऽर्थैश्च प्रतीयते ।
अतो न ज्ञानपूर्वत्वमपेक्ष्यं [3]नायथार्थता ॥ १७० ॥

इत्याशङ्क्याह—**प्रामाण्यस्थापनमित्यर्धेन** । येन प्रमाणेन विषयीकृत्यार्थं प्रत्येति यदि तददुष्टकारणारब्धं भवति तदा तथात्वमर्थस्य प्रतिपद्यत इति ॥

ननु वाक्यात् प्रथममर्थप्रतिपत्तिः, ततस्तदर्थविषयं वक्तृज्ञानम्; अतः कथं वक्तृज्ञानेऽन्तराय इत्याशङ्क्याह —**अथ पूर्वमिति** । यद्यप्यर्थः प्रथमं प्रतीयते तथापि तस्य [4]तथार्थत्वं वक्तृज्ञानप्रामाण्यप्रतिपत्तिपूर्वकमेव । प्रतिपत्तिक्रममङ्गीकृत्य चोद्यम्, तद्विपर्ययेण प्रामाण्यक्रममङ्गीकृत्य परिहारः ॥

इदानीं चोदनालौकिकवाक्ययोः वैलक्षण्यप्रतिपादकं भाष्यम्—"न वेद-वाक्यस्य मिथ्यात्वे किंचन प्रमाणमस्ति" इति, तद् व्याचष्टे—**अतोऽत्रेति** । विवक्षापरत्वात् पौरुषेयस्य युक्तं यद् बाह्येऽर्थेऽप्रामाण्यम्; वेदस्य त्वपौरुषेयत्वान्न तत्साधर्म्यं युक्तमिति ॥

अतो वक्तुरभावेन च वक्तृज्ञानपरत्वाभावात् पदार्थप्रतिपादनद्वारेण भाव-नायामेव तात्पर्यमित्याह —**तद्बुद्ध्यन्तरय इति** । यदि पौरुषेयत्वं वेदस्य स्यात् ततोऽस्य वक्तृज्ञानपरं प्रामाण्यं स्यात्' वक्तृज्ञानप्रामाण्यपूर्वक एव कार्येऽर्थे निश्चयः स्यात्; न च कार्ये पुरुषस्य प्रामाण्यमस्तीत्यप्रामाण्यं वेदस्य स्यात्; न तु तदस्ति; अतो न ज्ञानपूर्वकत्वमपेक्षणीयम् । अत एव कारणान्नायथार्थतेति ।

इदं त्विह वक्तव्यम्—किमिति बाह्येऽर्थे वाक्यस्य प्रामाण्यं नाभिमतम्? प्रत्ययस्तावदुत्पद्यते; न च बाधकप्रत्ययोऽस्ति; न चाप्तवाक्यं बाह्यमर्थं व्यभि-चरति । यस्य तु व्यभिचारः, तस्य वक्तृज्ञानेऽपि प्रामाण्यं नैवेष्टम् । अथ

1. न तु स्याद. चौ अनन्त. मु.
2. रयोर्ना. मा. चौ, अनन्त. मु.
3. नोयथार्थता. मा.
4. तथार्थेव. मा.

यत [1]प्रतिबन्धे सत्यन्यस्यान्यत्र प्रामा[2]ण्यम् ; स कार्यलक्षणः स्वभावलक्षणो वा; न च बाह्येऽर्थे शब्दस्य तौ ; विवक्षायां तु कार्यत्वात् प्रामाण्यमुपपद्यत इति । तदनुपपन्नम्; पदं तावत् स्वभावकार्यवर्जितमपि पदार्थबुद्धिमुत्पादयति योग्यतावशेन चक्षुरिन्द्रियमिव रूपे ; वाक्यार्थेऽपि पदार्थेभ्योऽपेक्षासन्निधियोग्यत्वेन सम्बन्धरहितेभ्यः प्रतीयत इति तद्भूताधिकरणे वक्ष्यामः । कथं च वेदस्य बाह्यार्थप्रामाण्यवा द्येवं ब्रूयात् ? अपि च वक्तृज्ञानमप्यनुमेयं वा स्यात्, वाक्यार्थो वा? [3]तत्रानुमेयत्वं स्वयमेव निराकरिष्यते—“न शब्दार्थ[4]स्य सा लिङ्गं न शब्दोऽस्याः कथंचन” इति । नापि वाक्यार्थः, अनन्वितपदार्थकत्वप्रसङ्गात् न च जानातिपदाध्याहारः, निराकाङ्क्षत्वप्रसङ्गात् । नापि पदरचनायार्थात् प्रतिपादितस्य वाक्यार्थत्वम्, पूर्वा धावति' इत्यलापरस्यापि वाक्यार्थत्वप्रसङ्गात् । बाह्ये चार्थे वैलक्षण्यत्यागात् प्रमाणान्तरतां वक्ष्यति—“वाक्येष्वदृष्टेषु” इति । वक्तृज्ञाने त्वनुमानमर्थापत्तिर्वा स्यात् लौकिकानाम् । अपि च तद्भूताधिकरणे स्वयमेव भावनापरत्वं वक्ष्यति । तस्मादाल्लनविशीर्णोऽयं सह विवरणेन भाष्यग्रन्थः ॥

अत्र केचिदाहुः—इष्टमेवास्य बाह्येऽर्थे प्रामाण्यम्, बाधकप्रत्ययनिवृत्तिपरस्त्वयं ग्रन्थः । तदुक्तम्—

“प्रामाण्यस्थापनं तु स्याद् वक्तृधीहेतुसंभवात् ।
अर्थे पूर्वप्रतीतेऽपि निश्चयो हि तदाश्रयः ॥” इति

एवं तु व्याख्यायमाने “तच्चेत् प्रत्ययितात्” इत्यस्मात् भेदोपन्यासो व्यर्थः । विरुद्धश्चायमुपरितनो ग्रन्थः—“अर्थे तु व्यापारो नैव विद्यते ।” तथा “अभ्युपेत्यार्थविषयं वाक्यव्यापारमुच्यते ।” इति ॥

तस्मादयमर्थः—“नन्वतथाभूतमप्यर्थं ब्रूयाच्चोदना यथा यत् किंचन” इत्यत्र बौद्धश्चार्वाको वा पूर्वपक्षवादी । तत्र बौद्धे पूर्वपक्षवादिनि सिद्धान्तवादिना स्वमतेन बाह्य एवार्थे प्रामाण्याङ्गीकरणेन लौकिकस्य वाक्यस्य साध्यविकलत्वमुक्तम्—“तच्चेत् प्रत्ययितात्” इति इदानीं तु तन्मतेनैव साध्यविकलतामाह—“अपि च पौरुषेयात्” इति । तस्मात् सह विवरणेन परमतेनायं भाष्यग्रन्थो द्रष्टव्यः, चैत्यवन्दनवाक्यदृष्टान्तेन ॥

1. प्रतिहतिसत्य. मा.
2. ण्यं कार्ये. मा.
3. तत्रमेयत्वम् मा.
4. स्याप्यसौ लिङ्गम्. मा.

अप्रमाणत्वसिद्धौ वा दृष्टान्तो य उदाहृतः ।
बुद्धादिवचनं तस्य [1]साध्यानासाङ्गितोच्यते ॥ १७१ ॥

तेषामपि हि यत् कार्यं पूर्वत्र प्रतिपादितम् ।
तत्र सम्यक्त्वमर्थे तु व्यापारो नैव विद्यते ॥ १७२ ॥

स्वव्यापारातिरिक्तेऽर्थे वेदस्यापि मृषार्थता ।
पूर्वपक्षार्थवत्त्वेन प्रसक्ता सिद्धसाध्यता ॥ १७३ ॥

[2]अज्ञात्वेत्थमभिप्रायं कृतकाकृतकत्वयोः ।
सत्यमिथ्यात्वहेतूक्तिमात्रज्ञानात् परोऽब्रवीत् ॥ १७४ ॥

ननु सामान्यतो दृष्टं नान्यत्वादित्यदूषणम् ।
एतस्मादेव दृष्टान्तो न हि पक्षे समक्षता ॥ १७५ ॥

चार्वाके तु पूर्वपक्षवादिन्यस्यैव भाष्यग्रन्थस्यार्थान्तरमाह—**अप्रमाणत्वसिद्धौ वेति**श्लोकद्वयेन । यदि स्वविषयमेव चैत्यवन्दनादिवाक्यमङ्गीकृत्य दृष्टान्तत्वेनोपादानम्, तदा साध्यविकलत्वं दृष्टान्तस्येति श्लोकद्वयस्यार्थः ॥

अथान्यविषयत्वम्, तदा सिद्धसाध्यतेत्याह—**स्वव्यापारेति** । "न तु वेदवचनस्य मिथ्यात्वे किंचन प्रमाणमस्ति" इत्येवमुपसंहृते सिद्धान्तवादिना पूर्वपक्षवाद्याह—"ननु सामान्यतोदृष्टं लौकिकं वचनं वितथमुपलभ्य वचनसामान्याद् वैदिकमपि तथा स्यात्" इति; कस्य पुनर्लौकिकस्य मिथ्यात्वमभिप्रेतम्? यदि तावदनाप्तवाक्यस्य, युक्तं तत्र दोषसद्भावात्; न तु वेदे दोषाणां सद्भावः; वाक्यत्वं त्वप्रयोजकमेव; नाप्याप्तवाक्यस्य, विवक्षाविषयत्वेन तस्य सत्यत्वात् ॥

अपि चायमेव प्रयोगः पूर्वमुपन्यस्य दूषितः कथमिदानीमपूर्ववदुपन्यस्यत इत्याशङ्क्याह—**अज्ञात्वेति** सपादेन । सर्वमेतदजानन् पूर्वपक्षवादी कृतकस्य मिथ्याहेतुमुपसृत्य "विप्लवते खल्वपि" इति, अकृतकस्य सम्यक्त्वे "न तु वेदवचनस्य" इति दृष्टान्तबलेन पुनरुपन्यस्तवान् । अस्य दूषणपरं भाष्यम्—"न, अन्यत्वात्; न ह्यन्यस्य वितथभावेऽन्यस्य वैतथ्यं भवति, अन्यत्वादेव; न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्य श्यामत्वं भवितुमर्हति" इति । तस्यायमर्थः-न लौकिकवाक्यसाधर्म्येण वैदिकस्य मिथ्यात्वं भवति, वैदिकादन्यत्वाल्लौकिकस्येति;

1. नासङ्गतोच्यते. चौ. मु.    2. अज्ञात्वेममभि. मा.

तस्मादयमभिप्रायो भाष्यकारस्य वर्ण्यते ।
अभ्युपेत्यार्थविषयं वाक्यव्यापारमुच्यते ॥ १७६ ॥

यदि स्याद् व्यवधानेऽपि वाक्यार्थापेक्षयानृतम् ।
दृष्टान्तो नृवचोऽत्रापि हेतुः साधारणो भवेत् ॥ १७७ ॥

मर्त्येष्वपि हि दृष्टैव पौरुषेयेषु वाक्यता ।
अतीन्द्रियेऽपि किंचिद्धि सत्यं दृष्टं यदृच्छया ॥ १७८ ॥

नान्यत्वादिति चानेन परोक्तादन्यतोच्यते ।
अन्यो ह्येष तदाभासो विपक्षं वान्यमब्रवीत ॥ १७९ ॥

तद्दूषयितुमाह—**नान्यत्वादिति** त्रिपाद्या । यत एव हि वैदिकादन्योऽयम्, अत एव साध्यस[1]मासामान्येन सपक्षत्वात् दृष्टान्तत्वम्; अनन्यत्वे तु पक्ष एवायं स्यादिति ॥

एवमाक्षिप्ते सत्युत्तरभाष्यं तावत् समर्थयितुमाह—**तस्मादिति** श्लोकत्रयेण । तत्र प्रथमं तावदिदमेव दूषणम् यदुत साध्यविकलता दृष्टान्तस्य, विवक्षाविषयत्वेन सर्वेषां सत्यत्वाभ्युपगमात् । अथ बाह्यार्थविषयाभ्युपगमेन दृष्टान्तोपादानम्, तत्राप्याप्तवाक्यस्य सत्यत्वेन वाक्यत्व[2]लक्षणस्य हेतोरनैकान्तिकत्वम् । अथातीन्द्रियार्थप्रतिपाद[3]कत्वे सति वाक्यत्वादित्ययं हेतुः, तत्र लौकिकमपि किंचिद् वाक्यमतीन्द्रियार्थप्रतिपादकं सत्यं दृष्टमित्यनैकान्तिकतेत्येतावत् श्लोकत्रयस्यार्थः ॥

इदानीमस्मिन्नेवार्थे " न, अन्यत्वात् " इत्येतावन्मात्रं भाष्यं योजयितुमाह—**नान्यत्वादिति** त्रिपाद्या । यत्तु पूर्वपक्षवादिना प्रयुक्तम्—" ननु सामान्यतो दृष्टम् " इति, तस्मादन्यत्वमुदाहृतस्योच्यते—तदाभासोऽयमनैकान्तिकत्वाद्धेतोरिति । योजनान्तरमाह—**विपक्षं वान्यमब्रवीदिति** । सामान्यतोदृष्टविपक्षादन्योऽत्र विपक्षः हेतुशून्यस्तस्य विपक्षः अस्य तु सत्येऽपि वाक्यत्वदर्शना[4]द्धेतुर्युक्तः—इत्यनैकान्तिकत्वप्रदर्शनमेतत् ॥

1. समसामा. मा  3. कत्वेन सति. मा.
2. त्वस्य ल. मा.  4. हेतुः प्रयुक्तः मा.

यद्वान्यस्माद् विसंवादान्मिथ्यात्वं तत्र न त्विह ।
विषयस्यापि चान्यत्वात् [1]साध्यानासङ्गितैव सा ॥ १८० ॥

न ह्यन्यस्येति नैकस्मिन् मृषार्थेऽन्यमृषार्थता ।
विवक्षाया मृषार्थत्वे न च वाक्ये मृषार्थता ॥ १८१ ॥

श्यामत्वे पुंस्त्ववच्चैतत् साधारण्ये निदर्शनम् ।
परोक्तेर्वापि दुष्टत्वाद् विकल्पसममुच्यते ॥ १८२ ॥

व्याख्यानान्तरमाह—**यद्वेत्यर्धेन**। विसंवादाल्लौकिकस्य मिथ्यात्वम्, न तु वाक्यत्वेन; तदनेन हेतोरप्रयोजकत्वं दर्शितम्। व्याख्यानान्तरमाह—**विषयस्यापीत्यर्धेन**। विवक्षाविषयं लौकिकम्, तत्र च सत्यमेवेति साध्यविकलता ॥

इदानीम् "न ह्यन्यस्य वितथभावेऽन्यस्य वैतथ्यं भवति, अन्यत्वादेव" [2]इतीदं भाष्यमुपरितने "न, अन्यत्वात्" इत्यस्य व्याख्यानद्वये योजयितुमाह—**न ह्यन्यस्येति**। नैकस्मिन् लौकिकवाक्ये मृषार्थेऽन्यस्यापि वैदिकस्य मृषार्थत्वं भवति, अप्रयोजकत्वाद्धेतोरिति। ननु वक्तृज्ञानविषयत्वे तन्मिथ्यात्वपक्षेऽस्त्येव वाक्यस्य मिथ्या[3]त्वमिति, तत्राप्याह—**न ह्यन्यस्येति**। न ह्यन्यस्य वक्तृज्ञानस्य मिथ्यात्वेऽन्यस्यापि तत्प्रतिपादकस्य वाक्यस्य मिथ्यात्वमित्यर्थः। विवक्षाग्रहणं च श्लोके वक्तृज्ञानोपलक्षणार्थम् ॥

इदानीम् "न हि देवदत्तस्य श्यामत्वे" इत्यादिभाष्यम्, तद्व्याचष्टे—**श्यामत्व इत्यर्धेन**। यादृशं श्यामत्वे साध्ये पुंस्त्वं साधारणानैकान्तिकम्, गौरेऽपि दर्शनात्, तादृशं मिथ्यात्वे वाक्यत्वमित्यर्थः। "न, अन्यत्वात्" इत्यस्यैव व्याख्यानान्तरमाह—**परोक्तेरित्यर्धेन**। जात्युत्तरद्वारेण परप्रयुक्तस्य साधनस्य दुष्टत्वमापादयति—यदि हि साधर्म्यमात्रादप्रयोजकात् मिथ्यात्वम्, वैधर्म्यमात्रादप्यन्यत्वलक्षणात् तथात्वं किमिति न भवति? विकल्पसमसंज्ञाकश्चायं जातिप्रयोगः—"न, अन्यत्वात्" इति ॥

1, साध्यानां सङ्गतैव. मा. साधनासङ्ग. तैव. चौ. मु.
2. इत्यमुं. मा.　　3. थ्यातत्व. वा.

**यद्वा प्रमाणमेवेदं सम्यक्त्वेऽन्यत्वमुच्यते ।**
**विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ १८३ ॥**

**चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।**
**कारणैर्जन्यमानत्वाल्लिङ्गाप्तोक्त्यक्षबुद्धिवत् ॥ १८४ ॥**

**तथानाप्तप्रणीतोक्तिजन्यत्वाद् बाधवर्जनात् ।**
**देशकालादिभेदेन चाप्तोक्तिप्रत्ययो यथा ॥ १८५ ॥**

**अकर्तृकत्वसिद्ध्या च हेतुत्वं साधयिष्यते ।**
**एवमाद्यवबुध्यायं नान्यत्वादित्यवोचत ॥ १८६ ॥**

अस्यैवार्थान्तरमाह—**यद्वा प्रमाणमिति ।** नैतदेवम्, अन्यस्यापि सम्यक्त्वसाधनस्यानुमानान्तरस्य भावात्; तत्रेदं दूषणं विरुद्धाव्यभिचारित्वम्, अनुमानेन वा बाधः ॥

कीदृशं पुनस्तदनुमानान्तरम्? अत्राह—**चोदनाजनितेति ।** बुद्धिर्धर्मिणी प्रमाणमिति साध्यो धर्मः, चोदनाजनितेति सिद्धसाध्यतापरिहारार्थं विशेषणम, दोषवर्जितैः कारणैर्जन्यमानत्वादिति हेतुः, लिङ्गाप्तोक्त्यक्षबुद्धिवदिति दृष्टान्तः । अयं बुद्धिशब्दः प्रत्येकं सम्बन्धयितव्यः । ननु चानुमानेन[1] प्रामाण्ये साध्ये शब्दस्यानवस्था, साधकस्यापि साधकान्तरसाध्यत्वात् प्रामाण्यस्य । तदुक्तम्

"न चानुमानतः साध्या शब्दादीनां प्रमाणता" इति ।

दोषवर्जितैः कारणैर्जन्यमानत्वादित्यस्य च घटादावपि भावादनैकान्तिकत्वम्; बुद्धित्वविशेषणपक्षे च स्मृतिज्ञानेनानैकान्तिकत्वम् । नैतदेवम्; [2]अयथार्थभावाभावोऽत्र प्रतिज्ञातार्थः; न च कश्चिद् दोषः ॥

तस्मिन्नेव साध्ये हेतुद्वयं दृष्टान्तान्तरं चाह—**तथेति ॥**

देशकालादिभेदेन बाधवर्जनादित्यहेतुरिति चेत् इत्याशङ्क्याह—**अकर्तृकत्वसिद्ध्या चेत्यर्धेन ।** उपसंहरति—**एवमित्यर्धेन ॥**

1. अनुमाने प्रामाण्ये. मा.    2. यथार्थ. मा.

**प्रत्यक्षस्त्विति दार्ढ्यं वा प्राथम्यं वापि लक्षयेत् ।**
**स्वरूपतः प्रमाणत्वं मिथ्यात्वं पररूपतः ॥ १८७ ॥**

**ज्ञानाभावश्च मिथ्यात्वं द्वयस्यासम्भवाद् यदि ।**
**प्रत्यक्षं तत् परेषां च सिद्धमस्यानुमानतः ॥ १८८ ॥**

**यथा च तव मिथ्यात्वं साधनं साधयेदिदम् ।**
**तथा च बाधकाधीनं मिथ्यात्वमपि साधयेत् ॥ १८९ ॥**

**धर्म इत्युपसंहार्ये यच्छ्रेयस्करभाषणम् ।**
**तद् धर्मपदवाच्यार्थनिरूपणविवक्षया ॥ १९० ॥**

'अपि च लौकिकवचनसाधर्म्याद् वैदिकमप्रमाणमित्यनुमानम् प्रत्यक्षन्तु वेदवचने प्रत्ययः ; न चानुमानं प्रत्यक्षविरुद्धं प्रमाणीभवितुमर्हति, इत्यत्र भाष्ये चोदनाजनिते विज्ञाने प्रत्यक्षशब्दः प्रयुक्तः, तदसम्बद्धमिव दृश्यते, यतोऽपरोक्षार्थविषयत्वेन वा विज्ञानस्य प्रत्यक्षत्वम् , अर्थजन्यत्वेन वा [1]नापरोक्षतया "ज्ञाते तु अनुमानादवगच्छति" इति परोक्षत्वाभ्युपगमात् , न च तदस्ति प्रकारद्वयम्—शब्दजन्यत्वात् परोक्षार्थविषयत्वाच्चेति । सत्यमेवम् ; किन्तु गौणवृत्त्या प्रत्यक्षशब्दः प्रयुक्तः । किं पुनः प्रवृत्तेर्निमित्तमित्यत आह—**प्रत्यक्षस्त्विति** । निमित्तचतुष्टयमनुमानबाधोपयोगीति दर्शितम् ॥

इदानीं परमतेन मुख्यमेव प्रत्यक्षविरोधं दर्शयितुमाह—**ज्ञानाभावश्चेति** । विपर्ययसन्देहयोरभावेन ज्ञानानुत्पत्तिलक्षणं मिथ्यात्वम् ; साधनवादिनः स्वयंप्रकाशत्वेन प्रतिवादिनश्चानुमेयत्वेन प्रत्यक्षानुमानविरोधः ॥

साधयदपीदं वाक्यत्वं मिथ्यात्वम् , बाधकाधीनं साधयेदित्याह—**यथा चेति** । तदनेन पराधीन[2]मिथ्यात्वदर्शनेनाप्रयोजकत्वं वाक्यत्वस्य प्रदर्शितम् ॥

"चोदनालक्षणोऽर्थो धर्मः" इत्युपक्रान्तम् ; तेन "तस्माच्चोदनालक्षणोऽर्थः श्रेयस्करः" इत्युपसंहारभाष्यमसम्बद्धम् ; एवं तूपसंहर्तव्यम्—'तस्माच्चोदनालक्षणोऽर्थो धर्मः' इति ; अशङ्क्याह—**धर्म इतीति** । तीर्थान्तरपरिकल्पितधर्मत्वनिषेधेन द्रव्यक्रियागुणादीनां धर्मत्वं साधयितुं श्रेयस्करशब्दपर्यायतां धर्मशब्दस्य दर्शयति ॥

1. अपरोक्ष. मा. 2. न मिथत्वप्रदर्शनेम प्रयोजकत्व वाच्यस्य. मा.

**श्रेयो हि पुरुषप्रीतिः सा द्रव्यगुणकर्मभिः ।**
**चोदनालक्षणैः साध्या तस्मात् तेष्वेव धर्मता ॥ १९१ ॥**

**अन्यत् साध्यमदृष्ट्वैव यागादीननुतिष्ठतः ।**
**धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते ॥ १९२ ॥**

**पश्वादीनि च धर्मस्य फलानीति व्यवस्थितम् ।**
**चित्रागोदोहनादीनां तान्युक्तानि फलानि च ॥ १९३ ॥**

**तस्मात् तेष्वेव धर्मत्वं धर्माणीति च दर्शनात् ।**
**लिङ्गसङ्ख्याविनिर्मुक्तो धर्मशब्दो निदर्शनम् ॥ १९४ ॥**

एतदेव विवृणोति—**श्रेयो हीति** । तत्र भाष्यम्—"यो यागमनुतिष्ठति, तं धार्मिक इति हि समाचक्षते" इति । तस्यायमर्थः—यागादीननुतिष्ठन् लोके धार्मिकशब्देनोच्यते, तस्माद्यागादीनामेव धर्मत्वमिति ॥

अत्र चोदयन्ति—नन्वपूर्वमपि तत्रानुमीयते ; [1]तत्र यागयोगेनैवायं धार्मिकशब्दः, न पुनरपूर्वयोगेनेत्यत्र किं मानमिति ; आशङ्क्याह—**अन्यत्साध्यमिति** । लौकिका हि प्रत्यक्षसमधिगम्यमेवार्थं प्रतिपद्यन्ते, न शास्त्री[2]यामपूर्वनिर्वृत्तिम् ; लौकिकश्चाय प्रयोग इति ॥

इतश्च नापूर्वस्य धर्मत्वमित्याह—**पश्वादीनीति** सपादश्लोकेन । पश्वादयो हि लोके धर्मफलत्वेन प्रसिद्धाः ; चित्रादीनां च तानि फलानि दर्शयन्ति चोदनाः "चित्रया यजेत पशुकामः" इत्येवमाद्याः ; तस्मात् तेष्वेव द्रव्यक्रियागुणादिषु धर्मत्वम्, नापूर्वस्येति । लिङ्गदर्शनादप्येवमेवार्थः प्रतीयत इत्याह—**धर्माणीति च दर्शनादिति** । "यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि" इत्यत्र मन्त्रे यागसामानाधिकरण्येन प्रयोगो धर्मशब्दस्य लिङ्गम् । कथं पुनर्बहुवचनान्तस्य नपुंसकलिङ्गस्य धर्मशब्दस्य पुंलिङ्गैकवचनान्तेन यज्ञेनेत्यनेन सह सम्बन्ध इत्याशङ्क्याह—**लिङ्गेत्यर्धेन** ॥

1 तत्र यागेनैवा. मा.  2 यमपूर्वनिवृत्तिम्. मा.

अन्तःकरणवृत्तौ वा वासनायां च चेतसः ।
पुद्गलेषु च पुण्येषु नृगुणेऽपूर्वजन्मनि ॥ १९५ ॥

प्रयोगो धर्मशब्दस्य न दृष्टो न च साधनम् ।
पुरुषार्थस्य ते ज्ञातुं शक्यन्ते चोदनादिभिः ॥ १९६ ॥

न च वस्त्वन्तरं शक्यमपूर्वं स्वर्गयागयोः ।
ज्ञातुं साधनभूतं वा साध्यं वा नाप्यतोऽन्यथा ॥ १९७ ॥

श्रुतसाधनसाध्यत्वत्यागेनाश्रुतकल्पना ।
प्रसज्येतास्य ताद्रूप्ये व्यतिरेके त्वरूपता ॥ १९८ ॥

तस्मात् फले प्रवृत्तस्य यागादेः शक्तिमात्रकम् ।
उत्पत्तौ वापि पश्वादेरपूर्वं न ततः पृथक् ॥ १९९ ॥

शक्तयः सर्वभावानां भावशब्दैर्विशेषतः ।
नोपाख्यायन्त इत्येवं नापूर्वे धर्मशब्दता ॥ २०० ॥

एवं द्रव्यक्रियागुणादीनां धर्मत्वमभिधायेदानीं तीर्थान्तरपरिकल्पितानां धर्मत्वनिषेधमाह - अन्तःकरणेति श्लोकद्वयेन । अन्तःकरणवृत्तिवासनाविशेषपुद्गलनृगुणापूर्वेषु साङ्ख्यबौद्धार्हतवैशेषिकमीमांसककल्पितेषु धर्मशब्दप्रयोगाभावात् विधिना च तेषां श्रेयस्साधनत्वानवगमान्नास्ति तेषां धर्मत्वमिति श्लोकद्वयस्यार्थः ॥

इतश्चापूर्वस्य धर्मत्वं नास्तीत्याह—न चेति श्लोकचतुष्टयेन । तद्धि कल्प्यमानमपूर्वं फलयागयोरर्थान्तरं वा कल्प्येत तयोर्वा शक्तिः । न तावदर्थान्तरं फले साधनभूतं कल्प्यते, श्रुतयागसाधनत्वत्यागेन अश्रुतापूर्वसाधनत्वप्रसङ्गात्; नापि साध्यभूतम्, श्रुतयागादिसाध्यत्वत्यागेनाश्रुतापूर्वसाध्यत्वसङ्गात्; नाप्युभयरूपरहितम्, [3]असत्त्वप्रसङ्गात् । तस्मादवश्यं यागस्य वा फलोत्पादिका शक्तिः, आत्मनो वा फलोपभोग्यता, फलस्य वाङ्कुरावस्थाद्यपूर्वशब्देनाभिधीयते; न चायं यागवाचको धर्मशब्दस्तच्छक्तिं प्रतिपादयति; न हि भावशब्दो भाव-

1. पुष्कलेषु चौ. मु.
2. साध्यप्र. मा.
3. ते सत्त्व मा.

पुरस्ताच्चोदनाशब्दो विधावेव व्यवस्थितः ।
न च तल्लक्षणा हिंसा प्रत्युदाहरणं कथम् ॥ २०१ ॥

चोदनालक्षणो यश्च श्येनादिरिह गम्यते ।
निषेधाभावतस्तस्य कथं ब्रूयादनर्थताम् ॥ २०२ ॥

यद्यपि स्याद् विधिस्पृष्टे निषेधो नैव तादृशः ।
विज्ञायते ह्यनर्थत्वं षोडशिग्रहणादिवत् ॥ २०३ ॥

चोदनालक्षणं चोक्त्वा निषिद्धत्वाद् विरुद्ध्यते ।

शक्तिं निष्कृष्टां प्रतिपादयति; न ह्युदकाहरणोत्पादकशक्तिर्घटशब्देनाभिधीयते— इत्येतावान् श्लोकचतुष्टयस्यार्थः ॥

एवं चोदनालक्षणधर्मशब्देषु व्याख्यातेष्वधुनार्थशब्दव्याख्यानपरं भाष्यम् "उभयमिह चोदनया लक्ष्यते" इत्यादि; तद्विकल्प्य दूषयितुमाह—**पुरस्ताच्चेति** ॥

यदि तावच्छ्येनादिसाध्यः प्राणवियोगसाधको व्यापारो हिंसाशब्दवाच्यः प्रत्युदाहरणम्, [1]न तदैकाङ्गविकलत्वम्; तस्य यद्यपि निषेधादनर्थत्वम्, तथापि "चोदनेति क्रियायाः प्रवर्तकं वचनम्" इति भाष्ये चोदनाशब्देन प्रवर्तकं वाक्यमुक्तम्, न च तल्लक्षणा हिंसा । श्येनादीनां तु सत्यपि चोदनालक्षणत्वे प्रतिषेधाभावा[2]दनर्थत्वं नास्तीत्याह—**चोदनालक्षणो यश्चेति** ॥

इदानीमभ्युपगम्यापि श्येनादीनां निषेधम्, अर्थत्वं नास्तीत्याह—**यद्यपि स्यादिति** । लोके तावत्प्राणवियोजकव्यापारे हिंसाशब्दः प्रयुज्यते; स च यद्यपि श्येन एव, तद्व्यतिरेकेण व्यापारान्तरानुपलब्धेः; यद्यपि च विशेषशास्त्रविषयमपि सामान्यशास्त्रं प्रवर्तते, तथापि नैव निषेधोऽनर्थतां बोधयति श्येनादीनाम्' रागादिलक्षणायाः प्रवृत्तेर्निषेधोऽनर्थतां बोधयति, न विधिलक्षणायाः— इति दशमे वक्ष्यामः ॥

"कथं पुनरसावनर्थः?" इत्यस्य उत्तरभाष्यम् "हिंसा हि सा, सा च प्रतिषिद्धा" इति । एतद्विकल्प्य दूषयितुमाह—**चोदनालक्षणमित्यर्धेन** । यदि तावत्करणभूताः श्येनादयोऽत्र हिंसाशब्देनाभिधीयन्ते, तदोपक्रमोपसंहारयोर्विरोधः;

1 omitted न. मा

2. दनर्थकत्वम्. मा.

श्येनादावुपदिष्टे च हिंसा हीति न युज्यते ॥ २०४

हिंसा हि फलमेतेषां भिन्ना तेभ्यः स्वरूपतः ।
सा हि प्राणवियोगात्मा श्येनस्त[1]त्रासिवत् पृथक् ॥ २०५ ॥

उपदेशाभिधानं च [2]नाविधेयेऽवकल्पते ।

"उभयमिह चोदनया लक्ष्यते" इत्यत्रोपक्रमे श्येनादीनां च चोदनालक्षणत्वमभिधायोपसंहारे "हिंसा हि सा, सा च प्रतिषिद्धा" इति निषेधाभिधानात् । अथ श्येनादिसाध्यः प्राणवियोगभावको व्यापारो हिंसाशब्देनाभिधीयते, तत्राप्याह—श्येनादाविति सार्धेन । श्येनादीनामनर्थत्वं प्रतिज्ञायेदानीं तत्साध्यस्य प्राणवियोगभावकव्यापारस्य निषिद्धत्वेनानर्थत्वकथनमसम्बद्धम्, सा हि प्राणवियोगात्मेत्युक्तम्, तदनुपपन्नम्; मारणं हिंसाशब्देनोच्यते, न तु मरणम्; न हि म्रियमाणम् 'हिनस्ति' इत्युच्यते; न च तत्र विधिप्रतिषेधौ स्तः, प्रयोजकव्यापारविषयत्वात् तयोः; स एव स्वमरणफलः परमरणफलो वा निषिध्यते; न तु प्राणवियोगाख्यः प्रयोज्यव्यापारः, तत्राप्रवृत्तत्वात् । तस्मादयमर्थः—साध्यविशेषावच्छेदेन प्रयोजकव्यपारस्यैव हिंसात्वं कथयति—प्राणवियोगाविच्छिन्नः प्रयोजकव्यापारो हिंसा, न तु स्वर्गाद्यवच्छिन्नः ॥

इदानीम् "कथं पुनरनर्थः कर्तव्यतयोपदिश्यते?" इत्यस्योत्तरभाष्यम् "नैव श्येनादयः कर्तव्या विज्ञायन्ते" इति तद् विकल्प्य दूषयितुमाह—उपदेशाभिधानमित्यर्धेन । यदि तावद् विधिकर्मत्वनिषेधपरमिदं भाष्यम् "नैव श्येनादयः कर्तव्या विज्ञायन्ते"—नैव श्येनादयो विधीयन्त इति, तदोपरितनं भाष्यं विरुध्यते "यो हि हिंसितुमिच्छेत्, तस्यायमभ्युपाय इति हि तेषामुपदेशः" इति; कथमविधीयमानस्योपदिश्यमानत्वम्? ननु च द्वौ विधेर्व्यापारौ—एकस्तावत् काम्यमानभावार्थयोरुपायोपेयभावज्ञापनाख्यः, अपरोऽनुष्ठापकत्वरूपः; तत्र योऽधिकारविधिप्रमितोपायोपेयभावोत्तरकालीनस्तदनुष्ठापकत्वरूपः प्रयोगरूपो विधिव्यापारः, सोऽनेन भाष्येण विरुध्यते "नैव श्येनादयः कर्तव्या विज्ञायन्ते";—नैव श्येनादयः प्रयोज्या इति यावत्, तत्र पुरुषस्य लिप्सयैव प्रवृत्तत्वात् । उक्तं च "तस्य लिप्सार्थलक्षणा"

1. तत्रापि सा. मा.　　2. नाभिधेये. मा.

इति । यस्तु ततः पूर्वभाव्युपायोपेयभावप्रतिपादनरूपोऽधिकारविधिव्यापारः, तदभिप्रायम् "यो हि हिंसितुमिच्छेत्, तस्यायमभ्युपाय इति हि तेषामुपदेशः" इति; एतद् भाष्यमुपायमात्रतयैव विधानप्रतिपादनपरमुपपद्यते । एतदेवोपरितनेन भाष्यद्वयेन स्पष्टयति । "श्येनेनाभिचरन् यजेत इति हि समामनन्ति" इति श्येनस्योपायमात्रतां दर्शयति; "न अभिचरितव्यमिति" इति च प्रयोज्यतां निषेधति । एवं सति निषिद्धेषु चोदनालक्षणेषु उपायेष्वनर्थत्वम्, अनिषिद्धेषु च ज्योतिष्टोमादिष्वर्थत्वमिति । यस्तु न पुरुषार्थो नापि पुरुषार्थसाधनम्, तस्याधिकारविधिसहितैः श्रुत्यादिभिरवगततादर्थ्यस्यापि प्रयोगविधिरेवानुष्ठानं प्रयुङ्क्ते यथा अग्नीषोमीयादिषु । तदुक्तम् "क्रत्वर्थो हि शास्त्रादवगम्यते" इति । तदनुपपन्नम्; न ह्यत्र प्रथममुपायोपेयभावः प्रतीयते, अपि त्वनवगतोपायत्वस्य भावार्थस्य विधिरनुष्ठानं बोधयति—'इदं त्वं कुरु' इति; यावदधिकारहेतुसद्भावमनुष्ठापको विध्यर्थः, न श्रुत्यादिवदुपायमात्रप्रतिपादकः; उत्पत्तिविनियोगयोरपि प्रयोगविधिरेव; फलद्वारेण त्वेतौ व्यपदेशौ—अयं विनियोगविधिरयमुत्पत्तिविधिरिति, यथा "दध्ना जुहोति" इत्युत्पत्तिविधिरेव विनियोगविधिरित्युच्यते । तस्मा[1]दग्निहोत्रे "दध्ना जुहोति" इति "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति सर्वत्र प्रयोगरूप एव विधिः । तदुक्तम्—

"अभिधात्री श्रुतिर्ह्येका विनियोक्त्र्यपरा स्मृता ।
विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धनः" ॥ इति ।

तस्माद् विधेयो भावार्थः, न च विधिरनुष्ठापयति—इति चित्रम् । अनवगतोपायत्वमेव भावार्थं विधिरनुष्ठापयतीत्युत्तरकालं विधित एवावगतोपायत्वं लिप्सति, तदा च विधित एव प्रवृत्तत्वाल्लिप्सैव नानुष्ठापयति ।

अथ यस्य प्रेरणात्मको विध्यर्थः, तस्यैवम्; कार्यस्वभावे तु विध्यर्थेऽर्थाप्रवर्तकत्वम्, लिप्सयैव च प्रवृत्तत्वात् प्रवृत्तिक्षय इति; तदयुक्तम्, अनवगतोपायभावमेव विषयं विधिः प्रयुङ्क्ते; अनवगतोपायत्वस्य च न लिप्सा प्रवर्तिकेत्युक्तम् । अपि च प्रेरकेऽपि विधौ यत्रान्यत एव प्रवृत्तः; तत्र किमसौ करोति? अप्रवृत्तो हि प्रेर्यते यतः । तस्मात् सुष्ठूक्तम्—"उपदेशाभिधानं च नाविधेयेऽवकल्पते" । इति ।

1. अग्निहोत्री. मा.

**श्येनादेरविधाने च[1] कस्यान्यस्य विधेयता ॥ २०६ ॥**

**सर्वत्रावस्थितो न्यायो भावनांशद्वये विधिः ।**
**स बाध्येतेह ये चामी ज्योतिष्टोमादयो मताः ॥ २०७ ॥**

लिप्सायाश्च प्रवर्तकत्वे विषयवदितिकर्तव्यतायामपि सैव प्रवर्तयति, सेतिकर्तव्यताकस्यैव विषयस्य फलोत्पत्तौ निमित्तत्वात्; अवान्तरविभागस्त्वयं करणेतिकर्तव्यतालक्षणः; ततश्च प्रयोगविधेरुच्छेद एवेत्याह—**श्येनादे**रित्यर्धेन ॥

इदानीं तत्र विरोधं दर्शयितुमाह—**सर्वत्रेति बाध्येतेहे**त्यन्तेन ।

"**चोदनेति** क्रियायाः प्रवर्तकं वचनम्" "यो हि हिंसितुमिच्छेत् तस्यायमभ्युपाय इति हि तेषामुपदेशः" "न ह्यत्र यागाय स्वर्गकाम उपदिश्यते, अपि तु स्वर्गकामाय यागः" इत्येवमादिभिरुपायैः प्रेरकत्वं दर्शयति ।

स्यादेतत्—करणानुबन्धवदितिकर्तव्यतानुबन्धेऽपि प्रवृत्तिक्षयो भवतु, को दोष इति चेत् तत्राप्याह—**य इत्यादि त** इत्यन्तेन । ज्योतिष्टोमादेरपि निषिद्धाग्नीषोमीयसम्बन्धादनर्थत्वेन "कोऽर्थः ? यो निःश्रेयसाय ज्योदिष्टोमादिः" इत्यनुपपन्नमित्यर्थः । ननु भावार्थगतो विधिः स्वर्गकामादिपदोपात्तेन पुरुषेण काम्यमानस्वर्गाद्युपायापेक्षिणा सम्बध्यमानस्तदपेक्षितमेव तावदुपायत्वमन्योत्पादनस्य भावार्थस्य बोधयति; ततस्तस्य स्वर्गादिलिप्सानि[2]बन्धनदृष्टानुष्ठापकत्वात् प्रच्युतः सन्नु[3]पायोपेयमात्रमनुष्ठापयति । तदनुपपन्नम्, स्वर्गकामादेर्यागाद्यवच्छिन्नायां भावनायां नियोगावगमात् । वक्ष्यति च—

"स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते ।" इति ।

विधिपुरुषयोर्हि प्रेर्यप्रेरकलक्षणः सम्बन्धः; तत्र यागादयो विषयत्वेन संबध्यन्ते, न पुनरिष्यमाणोपायतया तथापेक्षणम्; अन्यथा च प्रेरकत्वविघातात्; प्रेर्यप्रेरकविषयप्रतिपत्त्युत्तरकालं तु विषयस्येष्यमाणं प्रत्युपायत्वकल्पनात् । तदुक्तम्—"न च तेनानियुज्यमानः फलकल्पनानिमित्तं लभते ।" इति । [3]अथ प्रयाजादिगतो

1. हि. मा.
2. निबन्धननिबन्धनम्. मा.
3. यथा. मा.

**धर्मत्वेन न तेऽपि स्युः हिंसासाधनका हि ते ।**
**न चाविधीयमानस्य फलतत्साधनाङ्गता ॥ २०८ ॥**

**साधनत्वेन विहितं न चाविहितमुच्यते ।**
**साध्यत्वेन विधानं तु नैवेष्टं लोकवेदयोः ॥ २०९ ॥**

**तेनैवमर्थशब्दस्य प्रयोजनमिहोच्यते ।**
**प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः ॥ २१० ॥**

**सा चोदनेति सामान्यं लक्षणं हृदये स्थितम् ।**
**प्रवर्तकगृ[1]हीतेस्तु स्यादुदाहरणार्थता ॥ २११ ॥**

विधिः करणोपकारकामेन सम्बध्यमानो नियोगावगमपूर्वकं प्रयाजादेराग्नेयादीन् प्रत्युपायत्वं बोधयति ; अन्यथा प्रयाजादेरपि विधिर्विषयोपकारकामेन सम्बध्यमानस्तदपेक्षितमेव विषयं प्रति प्रयाजादेरुपायत्वं बोधयेत् ; उपादानं तूपकारलिप्सयैव, यतोऽधिकारविधिर्विषयवदितिकर्तव्यताया अपि विषयं प्रत्युपायत्वं बोधयति । तत्र प्रयोगविधेरुच्छेदः, अग्नीषोमीयादिषु वानर्थत्वम् । तदाह— **न चाविधीयमानस्येत्यर्धेन** । यथा प्रयाजादेरविधीयमानस्य फलतत्साधनाङ्गत्वं नास्ति ; यथोक्तम् "न चाविहितमङ्गं भवति" इति प्रयोगविधिरभ्युपगतस्तत्र, तथा आग्नेयादेरप्यविधीयमानस्य फलभावनां प्रति करणत्वं नास्तीति करणेतिकर्तव्यतानुबन्धयोरविशेषः ॥

अपि च साधनत्वेनापि विधिसंस्पर्शेनार्थत्वं नास्त्येवेत्याह—**साधनत्वेने**त्यर्धेन । प्राणवियोगकामस्य दुष्टोपायपरित्यागेनादुष्टोपायापेक्षायामदुष्टोपायप्रतिपादकोऽयमधिकारविधिरित्यर्थः । भावनाकर्मत्वनिराकरणमप्ययुक्तम्, अनभ्युपगमादेवेत्याह—**साध्यत्वेने**त्यर्धेन ॥

एवं दूषितं भाष्यं व्याख्यातुमाह—**तेनैवमिति** सार्धेन । प्रवर्तकं निवर्तकं च वाक्यं चोदनाशब्देनोच्यत इत्यर्थः । कथं तर्हि तद्भाष्यम् "चोदनेति क्रियायाः प्रवर्तकं वचनम्" इति ? तत्राह —**प्रवर्तके**त्यर्धेन ॥

1. गृहीतैस्तु. चौ, अनन्त. मु.

**तात्पर्ये ह्यर्थशब्दस्य नेयं व्याख्योपपद्यते ।**
**अर्थग्रहणलभ्यं वा तत्प्रवर्तकभाषणम् ॥ २१२ ॥**

तस्मादेवं व्याख्यायत इत्याह—**तात्पर्ये हीत्यर्धेन** । निवर्तकवाक्यनिषेधपरे हि तस्मिन् भाष्ये इयमर्थशब्दस्य व्याख्या नोपपद्यत इत्यर्थः । इदानीं तस्यैव भाष्यग्रन्थस्यापरं व्याख्यानद्वयमाह—**अर्थग्रहणलभ्यमिति** । अर्थपदावच्छिन्नस्य धर्मपदावच्छिन्नस्य वा चोदनाशब्दस्य योऽर्थः तस्य वा लक्षणमुक्तवानित्यर्थः ।

नन्वेवमपि प्रवर्तकनिवर्तकवाक्यपरेऽपि तस्मिन् भाष्ये नैवेयमर्थशब्दस्य व्याख्योपपद्यते ; यदि हि भावार्थविषयो विधिः विधेयस्य निःश्रेयसफलतामवगमयति, निषेधविधिर्निषिध्यमानस्य प्रत्यवायफलताम् ; तत इयमनर्थनिवृत्तिद्वारेणार्थशब्दस्य व्याख्यावकल्पेत, न तु तदुभयमप्यस्ति ; न खलु ज्योतिष्टोमादेः करणत्वं स्वर्गादेर्वा साध्यत्वं केनचिदभिहितम् ; तस्य काममात्रसम्बन्धोपादानात् धात्वर्थस्य च भावनामात्रविशेषणत्वश्रुतेः । न च विधिः फलं विना विधातुमसमर्थः, तस्य नियोज्यविषयमात्रापेक्षणात् । अत एष वाक्यार्थः—यः पुरुषः स्वर्गादि कामयते, स यागादिविशिष्टां भावनां कुर्यादिति । किमर्थं पुनरसौ निष्फलानुष्ठाने प्रवर्तत इति चेत्, विधिस्तावदेवमवगम्यते ; यदि तु तथा न प्रवर्तते, किमत्र कुर्मः ? अपि च जीवनाधिकारे भवतः का वार्ता ? यत्र पुरुषविशेषणत्वेनापि स्वर्गादि न श्रूयते तत्र या विधेर्गतिः, सा कामनाधिकारेष्वपि भविष्यति । अपि च विधिः साध्यसाधनभावमनापाद्य किं न विदधात्येव, उत विदधदपि न पर्यवस्यतीति ? यदि तावदाद्यः पक्षः, तत इतरेतराश्रयत्वम् ; वैधं हीदं फलमुच्यते, न च फलं विना विधिर्विदधातीति । अथापर्यवसानम्, तन्न जानीमः किमेतदपर्यवसानं नामेति । विधिना सफले निष्फले वा व्यापारे पुरुषः प्रवर्तते—इत्येतावान् लिङर्थः । न हि प्रवर्तकत्वं मुक्त्वान्यो विधेर्व्यापार इत्युक्तं पुरस्तात् ; स च पर्यवसित एवेति । अथ भावनाया भाव्यनिष्ठत्वात् भवनक्रियाकर्तृभूतेन भाव्येन विना [1]न पर्यवस्यति, सन्निहि[2]तात्मसम्बन्धिना भवनक्रियाकर्तृतयैव कमिपदोपात्तेन स्वर्गादिना पूर्यमाणा पर्यवस्यति; विधिपुरुषावपि च पुरुषार्थसाधके नाञ्जस्येन

1. omitted न. मा.  2. तामसम्बन्धिभवन. मा

[1]धर्मे प्रमाणभूतायास्तद्वा लक्षणमुक्तवान् ।
एवं सति विधिभ्यः [2]स्याद्विधेयार्थावधारणम् ॥ २१३ ॥

प्रवर्तेते इति तदनुरोधादप्येषैव कल्पना ज्यायसीति मतम्, तदयुक्तम्; भवेदेतदेवम्, यद्यत्र प्रमाणमभविष्यत्; अपेक्षामात्रमेवैतदुक्तम्, न त्वत्र प्रमाणमभिहितम्। अथ प्रमाणमन्तरेणैव सन्निधानमात्रेण स्वर्गादेः साध्यत्वं कल्प्यते, ततो वरमेकपदोपात्तस्य सन्निहिततरस्य तत् कल्पितम्; तस्य हि तावत् सामान्यतो भावनाविशेषणत्वमभ्युपगतमेव; केवलं विशेषसम्बन्धः कल्पनीयः, कर्मरूपत्वाद् धात्वर्थस्य; उत्तरत्र त्वादित आरभ्य सामान्यविशेष[3]सम्बन्धादीत्यलमतिविस्तरेण। प्रतिषेधाधिकारे तु "ब्राह्मणो न हन्तव्यः" इत्येवमादिषु कर्मिपदोपादानमपि दूरोत्सारितमेव। तत्र नरकपातः फलम्; तद्धि हननस्य वा कल्प्येत नञर्थस्य वा? न तावद् द्विजहननस्य, तत्र पुरुषस्याप्रवर्त्यमानत्वात्; न ह्यविधीयमानानां फलसम्बन्धः क्वचिदभिमतः। नापि नञर्थस्य, तत्र पुरुषस्याप्रवर्त्यमानत्वात्; न हि नरकफले व्यापारे कश्चित् प्रवर्तते। अथ मतम्—प्रतिषेधविधिना रागतो हनने प्रवर्तमानस्ततो निवर्तते; स यदि हननस्यानिष्टफलतां नावगच्छति, ततः किमिति निवर्तेत इति। उक्तमेव तद्विधेस्तावदियमवगतिः; यदि न निवर्तते, किमत्र कुर्म इति। यदि च पुरुषेष्वनिवर्तमानेषु विधेरप्रामाण्यं भवति, ततः कल्पितेऽपि हननस्य नरकपाते फलेऽतिवृद्धरागान्धो न निवर्तत एवेति विधेरप्रामाण्यमपरिहार्यमेव। तस्मान्न भावार्थाधिकारेषु निःश्रेयसफलं नापि प्रतिषिद्धाधिकारेषु नरकपातः—इत्यर्थानर्थविवेको दुर्भण एवेत्याशङ्क्याह—**एवमिति**श्लोकद्वयेन। अयमर्थः—विधिस्तावद् भावनायां पुरुषं प्रवर्तयति; भाव्यनिष्ठश्च भावकव्यापारो भावना; तस्यां भवनक्रियाकर्तुर्भाव्यत्वमिति वक्ष्यति—

"नित्यं न भवनं यस्य यस्य वा नित्यभूतता।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव॥
तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः।
प्रयोजकक्रियामाहुः [4]भावनां भावनाविदः॥" इति॥

1. धर्मप्रमाण. मा.
2. सा विधेया. मा.
3. सम्बन्धादित्यलम्. मा.
4. भावना भावना....मा.

**निषेधेभ्यो निषेध्यानामनर्थत्वेन निर्णयः ।**
**तेनार्थग्रहणेनोक्ता विधेयस्येह धर्मता ॥ २१४ ॥**

**निषेध्यानामनर्थत्वमर्थसिद्धं न सूत्रितम् ।**
**तस्मादुभयमित्यत्र विधेयप्रतिषेध्य[1]योः ॥ २१५ ॥**

**यागादिब्रह्महत्यादिवर्गयोः स्यान्निदर्शनम् ।**
**श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात् ॥ २१६ ॥**

विधिरपि वा पुरुषार्थसाधके व्यापारे पुरुषेष्वप्रवर्तमानेष्वात्मनः प्रवर्तकत्वविगतिमाशङ्कमानः पुरुषार्थरूपमेव साध्यमाक्षिपन् सन्निहिततरमपि धात्वर्थं भवतिक्रियाकर्तृत्वानुपादानादपुरुषार्थत्वाच्च न भावनायां भाव्यत्वेनावगमयति ; स्वर्गादिषु यद्यपि कामसम्बन्धेनोपक्षीणम्, तथापि तस्य 'स्वर्गो मे भूयात्' इत्येवं काम्यमानत्वेन भवतिक्रियाकर्तृत्वेनोपादानात् पुरुषार्थत्वाच्च विधिर्भावनाभाव्यत्वमवगमयन्न विहन्यत इत्येषा तावत्प्रक्रिया । वयं तु ब्रूमः—"ज्योतिष्टोमेन स्वर्गकामो यजेत," "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" "ब्राह्मणो न हन्तव्यः" इत्येवमादिषु वाक्येषु प्रेरणाप्रतिपत्त्युत्तरकालं काम्यमानोपात्तदुरितक्षयनरकपातादयः साध्यत्वेन प्रतीयन्ते ; न च तत्र बाधः कारणदोषज्ञानं वा कदाचि[2]दुदेति । किंनिबन्धना पुनरियं प्रतिपत्तिरिति चेत् ; यदनन्तरमुत्पद्यते, तदेवास्य निबन्धनम् ; एवंविधवाक्यानन्तरं चेयमुत्पद्यते ; तस्मादिदमेव कारणमिति । तस्माद् भावनार्थविधिर्विधेयार्थतामवगमयति, निषेधविधिश्च निषेध्यस्यानर्थतामिति ।

एवमर्थशब्दस्यार्थं व्याख्याय भाष्यं योजयितुमाह—**तस्मादुभयमिति ।** "उभयमिह चोदनया लक्ष्यते" विधेयं निषेध्यं च ; तत्र विधेयस्येष्टसाधनत्वादर्थत्वम्, निषेध्यस्य चानिष्टफलत्वादनर्थत्वमिति ॥

एवं तर्हीदं भाष्यमसम्बद्धम्—"[3]कोऽनर्थः ? यः प्रत्यवायाय श्येनादिः" इत्यादि । एवं तु वक्तव्यं स्यात् 'कोऽनर्थः ? यः प्रत्यवायाय ब्रह्महत्यादि इत्याशङ्क्याह—**श्येनादीनामिति** । श्येनादिसाध्ये प्राणवियोगभावके व्यापारे हिंसाशब्दवाच्ये विधिसंस्पर्शभ्रान्त्यपनयनार्थं लक्षणया श्येनादिशब्दः प्रयुक्त इति—

1. धयोः चौ. मु.
2. दुदेति निब. मा.
3. कोऽर्थः. मा.

उपचारादनर्थत्वं फलद्वारेण वर्ण्यते ।
प्रतिषिद्धा हि सेत्यत्र स्फुटमेतत् करि[1]ष्यति ॥ २१७ ॥

हिंसा हीति च यच्चापि ब्रूते नाभिचरेदिति ।
श्येनादीनां स्वरूपे तु नोत्तरग्रन्थसङ्गतिः ॥ २१८ ॥

विहितत्वान्निषेधस्य प्रवृत्तिस्तेषु दुर्लभा ।
यदा तु चोदनाशब्दो विधावेव व्यवस्थितः ॥ २१९ ॥

तदोभयादिको ग्रन्थः साध्यसाधनसंश्रितः ।
साध्यसाधनसम्बन्धे विधिना प्रतिपादिते ॥ २२० ॥

लक्ष्यमाणत्वमुभयोर्द्विविधं च फलं क्रतोः ।
स्वर्गादि प्राप्यते तत्र प्रतिषेधानतिक्रमात् ॥ २२१ ॥

"श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात्"। इत्येतेन श्येनशब्दस्य मुख्यार्थपरित्यागे कारणमुक्तम् ।

इमं चार्थमुपरितनेन भाष्यग्रन्थेन स्वयमेव भाष्यकारः स्पष्टयतीत्याह— **प्रतिषिद्धेति** श्लोकद्वयेन । श्येनादि[2]स्वरूपेऽनर्थत्वेन प्रतिज्ञाते "हिंसा हि सा, सा च प्रतिषिद्धा" "नाभिचरितव्यम्" इति च सर्वमिदं प्राणवियोगभावकस्य व्यापारस्य हिंसाशब्दवाच्यस्य स्यादिति ।

इदानीं विधायकव्यापाराङ्गीकारेणैवादित एवारभ्य भाष्यं व्याचष्टे— **यदात्विति** । भवतु विधायकमेव वाक्यं चोदना, तथापीदं भाष्यमेवं व्याख्यायते— "उभयमिह चोदनया लक्ष्यते"। साध्यं साधनं चेत्यर्थः ।

साध्यांशस्याविधेयत्वात् कथं चोदनालक्षणत्वम्, विधेयत्वे वा कथमनर्थत्व-मित्याशङ्क्याह—**साध्येति** त्रिपाद्या । स्वर्गकामस्य धात्वर्थापरिच्छिन्नभावनाकर्त-व्यताप्रतिपत्त्युत्तरकालं काम्यमानधात्वर्थयोर्या साध्यसाधनभावावगतिः तदभिप्राय-मिदं चोदनालक्षणत्वमुभयोरिति ।

साध्यमपि द्विविधमर्थोऽनर्थश्चेत्याह—**द्विविधमिति** सपादश्लोकेन । प्रतिषे-धमनतिक्रम्य यदुपभुज्यते सोऽर्थः, प्रतिषेधातिक्रमेण तु यदुपभुज्यते सोऽनर्थः इति ।

1. ष्यते. चौ, अनन्त. मु.    2. स्वरूपानर्थ. मा.

अतिक्रमेण हिंसादि शास्त्रान्तरनिरीक्षया ।
फलांशे भावनायाश्च प्रत्ययो न विधायकः ॥ २२२ ॥

वक्ष्यते जैमिनिश्चाह तस्य लिप्सार्थलक्षणा ।
तेन सामान्यतः प्राप्तो विधिना च निवारितः ॥ २२३ ॥

फलांशोपनिपातिन्या हिंसायाः प्रतिषेधकः ।
अनर्थप्राप्तिहेतुत्वं बोध्यते तत्र यद्यपि ॥ २२४ ॥

श्येनस्वरूपं नानर्थस्तत्फलस्य त्वनर्थता ।
परस्तूभयमित्यादेः फलस्यापि विधेयताम् ॥ २२५ ॥

भावनान्त[1]र्गतत्वाद् वा मत्वानर्थत्वमा[2]क्षिपत् ।
नैवेत्येतावता चास्य विधेयत्वनिराक्रिया ॥ २२६ ॥

श्येनसाध्याया हिंसायाः विहितत्वेन प्रतिषेधाभावात् कथं तदवाप्तिः प्रतिषेधातिक्रमेणेत्याशङ्क्याह—**फलांश इति** । लिप्सयैव प्रवृत्तत्वान्न साध्यांशे विधिः प्रेरयति । वक्ष्यति च भाष्यकारः—“जानात्येवासौ मयैतत् कर्तव्यमिति ; उपायं तु न वेद; यथा स्वर्गकाममुद्दिश्य” इति । जैमिनिरप्याह—“तस्य लिप्सार्थलक्षणा” इति ।

ततश्चाविहितत्वादस्ति प्रतिषेधशास्त्रस्यावसर इत्याह—**तेन सामान्यत इति** ।

श्येनस्य तु सत्यप्यनर्थहेतुत्वे निषेधाभावादनर्थत्वं नास्तीत्याह—**अनर्थेति** ।

“कथं पुनरसावनर्थः कर्तव्यतयोपदिश्यते” इति चोद्यभाष्यम्, तस्याभिप्रायमाह—**परस्त्विति** । परश्चोद्यवाद्येवं मन्यते—“उभयमिह चोदनया लक्ष्यते” इत्यनेन भाष्येण साधनवत् साध्यस्यापि चोदनालक्षणत्वमभिदधता विधेयत्वमेवाभिहितम्, भावनान्तःपातित्वाद् वा फलस्येति मत्वा अनर्थत्वमाक्षिपति स्मेत्यर्थः ।

इदानीं फलविधिद्वारेण चोद्ये कृते [3]तस्यापि विधेयत्वादाक्षिपदिति परचोद्यावसरे श्येनादीनामविधेयत्वप्रतिपादनपरम्—“नैव श्येनादयः कर्तव्या विज्ञायन्ते” इत्युत्तरभाष्यमसम्बद्धम्, “तेषामुपदेशः” इति चानेन [4]विरुद्धम्, उक्तेन प्रकारेण वस्तुतोऽप्यनुपपद्यमानम्—आशङ्क्य “नैव” इत्येतावद् विच्छिद्य व्याचष्टे—**नैवेत्यर्धेन** । नैव फलं विधीयत इत्यर्थः ॥

1. नान्तंमत. मा.
2. माक्षिपेत्. मा.
3. तस्याविधेयत्वमाक्षिपदिति. मा.
4. विरुद्धत्वमुक्तेन. मा.

**किं विधेयमिदानीं स्यादाह श्येनादयस्त्विति ।**
**प्रश्नापाकरणे चात्र तव्यो विधिविवक्षया ॥ २२७ ॥**

**प्रयुक्तो न तु साध्येऽर्थे द्वयेऽप्यनुपयोगतः ।**
**अनर्थस्यापि साध्यत्वमविधेयस्य हीष्यते ॥ २२८ ॥**

**साध्यत्वरहिते चेष्टा विधेये नित्यमर्थता ।**
**शतुश्च लक्षणार्थत्वं तेषां चाप्युपदेशनम् ॥ २२९ ॥**

उपरितनं तु भाष्यं श्येनादीनां विधेयत्वप्रतिपादनपरमित्याह—**किमित्य-र्धेन** । इदानीं यद्यपि च तव्यप्रत्ययः कर्मणि विधौ च [1]स्मर्यते, तथापि "**श्येनादयः** [2]कर्तव्या विज्ञायन्ते" इत्यत्र विधिविवक्षया प्रयुज्यत इत्याह—**प्रश्नापाकरण इति** । फलस्य विधिविषयत्वे निराकृते किं विधेयमिति विधिविषयप्रश्नापाकरणार्थ एव तव्यप्रत्ययोऽत्र विधिविवक्षया प्रयुक्त इति गम्यते ; न पुनः साध्ये कर्मणि प्रयुक्तः, प्रश्नेनासम्बन्धात् ; अर्थानर्थत्वयोरनुपयोगाच्च ।

इदानीं यथा अर्थत्वानर्थत्वयोरनुपयोगस्तथा दर्शयति—**अनर्थस्यापीति** । अर्थत्वप्रतिपादनार्थं वा श्येनादीनां कर्मत्वमभिधीयेत, अनर्थत्वपरिहारार्थं वा ? न च तदुभयमप्यत्रोपयुज्यते, तयोर्विधिप्रतिषेधाधीनत्वात् ; सत्यपि साध्यत्वे विधिरहिते प्रतिषेधाक्रान्ते हिंसादावनर्थत्वदर्शनात् ; विनापि साध्यत्वेन विधेयेषु ज्योतिष्टो-मादिष्वर्थत्वसिद्धेः ।

भाष्यकारस्यापि चैतदेवाभिमतमित्याह—**शतुश्चेति** । "अभिचरन्" इति [3]शतुः "लक्षणहेत्वोः क्रियायाः" इति पुरुषलक्षणार्थत्वम् "यो हि हिंसितु-मिच्छेत्", इति वदन्—"तेषामुपदेशः" इति च वदन् भाष्यकारः स्फुटं करोति करणांशस्य विधेयत्वम् ; अन्य[4]था ह्युपदेशवचनं नावकल्पत इति ।

इदं वार्तिककारीयं दूषणं समर्थनं च सर्वमेवाल्पविशीर्णम् । तथा ह्ययं दूषणमार्गोऽत्र कृतः—विधायकं वाक्यं चोदनाशब्देनोक्तं भाष्यकारेण "चोदनेति

1. समर्प्यते. मा.
2. omitted कर्तव्याः. मा.
3. शकृत्. मा.
4. थाप्युप. मा.

क्रियायाः प्रवर्तकं वचनम्" इत्यत्र, न निषेधकवचनम्; न च विधायकवाक्यलक्षणा ब्रह्महत्यादयः; तेनार्थपदस्य व्यावर्त्यं नास्तीति। तदनुपपन्नम्; सत्यं विधिरेव चोदनोच्यते; भावार्थाधिकारवन्निषेधाधिकारेऽपि स एव प्रमाणम्, विषयमात्रं तु भिद्यते; "यजेत स्वर्गकामः" इत्यत्र स्वर्गकामो भावार्थे नियुज्यते, "ब्राह्मणो न हन्तव्यः" इत्यत्र तु रागतो हननावच्छिन्नायां भावनायां प्रवर्तमानो नञर्थावच्छिन्नायां भावनायां नियुज्यते, न तु निषेधाधिकारे नञः प्रामाण्यम्, [1]भावार्थवद्विषयकोटिनिक्षेपात्। नन्वेवमपि नानर्थस्य चोदनालक्षणत्वम्; हननादयश्चानर्थाः। उच्यते—नञर्थविषय एव विधिः प्रतीयमानो हननस्याप्यनिष्टफलतामवगमयति यथा भावार्थविषयोऽवगम्यमानो नियोज्यविशेषणस्य स्वर्गादेः साध्यताम्। ननु "ब्राह्मणो न हन्तव्यः" इत्यत्र नियोगनियोज्यविषयश्रवणान्नैराकाङ्क्ष्ये सति कल्प्यमानो नरकपातः पुरुषबुद्धिप्रभव एव स्यात्। एवं तर्हि "यजेत स्वर्गकामः" इत्यत्रापि नियोगनियोज्यविषयश्रवणान्नैराकाङ्क्ष्ये सति नियोज्यविशेषणस्य साध्यत्वकल्पना पुरुषबुद्धिप्रभवैव स्यात्; यतो नियोज्यविशेषणं स्वर्गादि भावार्थसाध्यतामप्रतिपद्यमानमेव जीवनवन्नियोज्यं विशेषयितुं शक्नोत्येव। नापि भावार्थस्य साध्याकाङ्क्षायां सन्निहितत्वान्नियोज्यविशेषणस्य साध्यत्वम्, जीवनस्यापि साध्यत्वप्रसङ्गात्। अथासिद्धस्येष्य[2]माणत्वेनोपात्तस्यैतल्लोके दृष्टम् "हरीतकीं भक्षयेद् विरेककामः" इत्यादौ; प्रतिपाद्यमानमेव जीवनवत्; नियोज्यजीवनं तु सिद्धम्। तदनुपपन्नम्, सर्वत्र नियोज्यविशेषणस्य सिद्धत्वात्; जीवनाधिकारे च सन्निहितस्यायोग्यत्वात् साध्यान्तरं कल्पयतु भवान्। अथ तत्र नियोगार्थ एव साध्यः; सकामाधिकारेष्वप्यविशिष्ट एवायमर्थ इति चेत्; न तर्हि स्वर्गादेः साध्यत्वम्, जीवनवत् केवलाधिकारहेतुत्वात्। अपि च न तावत् भावार्थ एव द्वयमुत्पादयति, वाक्यार्थत्वेनान्विताभिधानेन विषयविषयिभावेन च तस्य विध्यर्थनिष्पादकत्वात्; उभयपरत्वे च भावार्थस्यैकस्मिन् पदग्रामे वाक्यार्थद्वयप्रसङ्गात्। नापि भावार्थनिष्पादितो विध्यर्थः स्वर्गं निष्पादयति, अन्योत्पादकत्वेन निष्पाद्यमानस्य भावार्थवदवाक्यार्थत्वप्रसङ्गात्; स्वर्गस्यैवेष्यमाणस्यानन्यनिष्ठस्य चोत्पद्यमानस्य वाक्यार्थत्वप्रसङ्गात्। नापि भावार्थ एव स्वर्गाद्युत्पत्तिमवान्तरव्यापारीकृत्य कार्यं निष्पादयति; कार्यनिष्पत्तेस्तर्हि पूर्वं स्वर्गाद्युत्पत्त्या भवितव्यम्; भावार्थानन्तरम्' कालान्तरे

1. भावनार्थवत्. मा.  2. माण उत्पन्नोपात्त. मा.

वा? न तावदनन्तरम्, पुत्रादेरदर्शनात्; नापि कालान्तरे, भावार्थस्य क्षणिकत्वेन तदानीमभावात्, विध्यर्थातिरिक्तापूर्वानभ्युपगमाच्च। अपि च भावार्थसाध्ये नियोगफले किं युगपदुत क्रमेणेति। न तावद् युगपत्, उभयत्र व्यापारायोगात् समप्रधानत्वप्रसङ्गाच्च। अथ क्रमपक्षः, तत्रापि किं नियोगसिद्धिः फलस्यावान्तरव्यापारः, उत फलसिद्धिर्नियोगस्येति? यदि प्रथमः पक्षः, तदा नैव लिप्सया विषये प्रवृत्तिः; अपि तु विधित एव। अथ फलसिद्धिर्नियोगस्यावान्तरव्यापारः, तदानुष्ठानानन्तरं फलस्य दर्शनं स्यात्; नियो[1]गस्यानिष्पन्नत्वात्, अपूर्वानभ्युपगमाच्च। न च शाब्दी सिद्धिर्द्वयस्य, अभावात्। तस्मान्न कामाधिकारे फलस्य साध्यत्वम्। अथ भावार्थविषयो विधिः नियोज्यविशेषणस्य भावार्थसाध्यतामनापाद्य न पर्यवस्यत्येवेति, हन्त तर्हि "ब्राह्मणो न हन्तव्यः" इत्यत्रापि नञर्थविषयो विधिः हनन[2]स्यानिष्टफलतामनापाद्य न पर्यवस्यत्येवेति। एवं समाने सति यः स्वर्गस्य साध्यतां कल्पयति, स न नरकपातस्येत्येतदपि दुर्भणम्। अपि च वार्तिककारस्येदं दर्शनम् निषेधविधौ विपर्यये नरकपात एव फलमिति। तदुक्तम्—

"निषेधेभ्यो निषेध्यानामनार्थत्वेन निर्णयः।" इति।

तस्माद् विधिरेव चोदनोच्यतां तल्लक्षणावेव त्वर्थानर्थाविति॥

यदपि समर्थनमुक्तं विधिनिषेधौ द्वावपि चोदनाशब्दवाच्यौ; तत्र विधिलक्षणत्वं ब्रह्महत्यादीनां मा भूत्, निषेधलक्षणास्तु भविष्यन्तीति; तदयुक्तम्; यतो विधिरेव चोदना; निषेधाधिकारे तदेव प्रमाणम्; ब्रह्महत्यादयोऽपि तल्लक्षणा एवेत्युक्तम्।

इदमपरं समर्थनम्—भवतु विधिरेव चोदना; तथापीदं भाष्यमेवं नेयम्—"उभयमिह चोदनया लक्ष्यते" साध्यं साधनं च; साध्यमपि द्विविधम् अर्थोऽनर्थश्चेति; ज्योतिष्टोमादिसाध्यः स्वर्गाद्यर्थः, श्येनादीनां तु यत् साध्यं हिंसात्मकं सोऽनर्थ इति। एतदप्यसमञ्जसम्। तथाहि—का पुनरियं हिंसा नाम? यदि प्राणवियोगः, तस्य प्रयोज्यव्यापारत्वेन प्रतिषेधसम्बन्धाभावान्नानर्थत्वम्। अथ तदुत्पादको व्यापारः, स तर्हि श्येन एव; तस्यानर्थत्वे साधनस्यैवानर्थत्वम्। अथ प्राणवियोगभावकः करोत्यर्थो हिंसा, स च श्येनसाध्यः, तत-

1. गस्य निष्पन्न. मा.        2. स्यानिष्फलता. मा.

**ब्रुवन् स्फुटीकरोतीष्टमुपदेशो हि नान्यथा ।**
**विधित्वमादिशब्दात् स्यादितिकर्तव्यतास्वपि ॥ २३० ॥**

अयमर्थः — यः प्राणवियोगं कर्तुमिच्छेत्, स श्येनेन कुर्यादिति; स एव प्राणवियोगावच्छिन्नः करोत्यर्थो नियोज्यविशेषणम्, स एव श्येनावच्छिन्नो विधेविषय इति प्राणवियोगावच्छिन्नस्य च प्रतिषेधादनर्थत्वम् "न हिंस्यात् सर्वा भूतानि" इति । तदनुपपन्नम् प्राणवियोगावच्छिन्नानां पुरुषस्याप्रवृत्तेरप्रतिषेधात्; अनुबन्धद्वयावच्छिन्न एव भावार्थे पुरुषः प्रवर्तते [1]निवर्तते वा; फलानुबन्धस्तु सर्वदेच्छाविषय एव, न तु तत्र प्रवृत्तिर्लिप्सया विधिना वा; उपाय एव हि तौ प्रवर्तकावगतानवगतभेदेन; तस्मात् श्येनादावितिकर्तव्यतानुबन्धवत् करणानुबन्धेऽपि वैधी प्रवृत्तिरित्यतः श्येनादौ न कस्यचिदनर्थत्वम्; ब्रह्महत्यादय एव त्वनर्थत्वेनार्थपदव्यावर्त्याः । तदुक्तम्—

"तस्मादुभयमित्यत्र विधेयप्रतिषेध्ययोः ।
यागादिब्रह्महत्यादिवर्गयोः स्यान्निदर्शनम् ॥" इति ।

श्येनादीनां तु न साक्षान्नाप्युपचारेण नापि तत्फलस्यानर्थत्वमिति तस्यानर्थत्वप्रतिपादनपरम्—"श्येनो वज्र इषुः" इत्येवमादि भाष्यमुपेक्षणीयम् । तदुक्तम्—

"गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥" इति ।

"श्येनादीनां विधेयत्वादिष्टस्यापि च साधनात् ।
उपचारादनर्थत्वं फलद्वारेण वर्ण्यते ॥"—

इति व्याख्यानान्तरं त्वनभिप्रेतमेव भाष्यगमनिकामात्रेणोक्तमिति कृतमतिविस्तरेण, प्रकृतमनुसरामः ॥

"श्येनादयः कर्तव्या विज्ञायन्ते" इत्यत्र आदिशब्देन करणवदितिकर्तव्य[2]ताया विधिसंस्पर्शेन प्रतिषे[3]धाविषयत्वं दर्शयति भाष्यकारः । [4]तदभिप्रायं व्याचष्टे—**विधित्वमिति ।**

1. omitted निवर्तते. मा,
2. तावगतायाः. मा.
3. धादविषय. मा.
4. तदयं प्रत्याचष्टे. मा.

तस्मात् फलांशे या हिंसा वैदिकी सा निषिध्यते ।
अंश[1]द्वयेऽपि या हिंसा तन्निषेधाभिधायिनाम् ॥ २३१ ॥

अविशेषेण यच्छास्त्रं शिरोवदिति चोत्तरम् ।
निषेधेनानवष्टब्धे विषये न ह्यनर्थता ॥ २३२ ॥

प्रत्यक्षादेरशक्यत्वात् कल्प्यते निष्प्र[2]माणिका ।
न हि हिंसाद्यनुष्ठाने तदानीं दोषदर्शनम् ॥ २३३ ॥

बाह्येऽपि विचिकित्सा तु शास्त्रादेवोपजायते ।
हिंस्यमानस्य [3]दुःखित्वं दृश्यते यन्न तावता ॥ २३४ ॥

कर्तुर्दुःखानुमानं स्यात् तदानीं [4]तु विपर्ययात् ।
वि[5]षयेऽस्याः फलं यादृक् प्रेत्य कर्तुस्तथाविधम् ॥ २३५ ॥

यस्तु साङ्ख्यः शब्दप्रमाणानभिज्ञो बाह्यहिंसावदस्यापि निषेधमाह, तस्य "अविशेषेण यच्छास्त्रम्" "शिरोवत्" इति चोत्तरद्वयं दातव्यमित्याह—**अंशद्वयेऽपीति** । "अविशेषेण यच्छास्त्रम्" इत्यनेन पदाहवनीयन्यायेन सामान्यविशेषबाधं दर्शयति; "शिरोवत्" इत्यनेनापि शवप्रतिषेधशास्त्रस्य "नारं स्पृष्ट्वास्थि सस्नेहं सवासा जलमाविशेत्" इति; तस्य विधिशास्त्रेण "पुरुषशीर्षमुपदधाति" इत्येनेन बाधः ।

नापि प्रत्यक्षादिना तत्रानर्थत्वं प्रतीयत इत्याह—**निषेधेनेति** सार्धेन ॥

नापि बाह्यहिंसावद् विचिकित्सा[6]बलेनात्रानर्थत्वम्, शास्त्रानुसारित्वेन विचिकित्साया एवाभावादित्याह—**बाह्योऽपीत्यर्धेन** ।

नापि हिंस्यमानदुःखित्वदर्शनेन कर्तृदुःखानुमानम्, प्रत्यक्षविरोधादित्याह—**हिंस्यमानस्येति** ।

इदानीं साङ्ख्योक्तमेव प्रयोगदूषणायोपन्यस्यति—**विषयेऽस्या इति** । विमत्यधिकरणभावा हिंसा धर्मिणी, विषयफलतुल्यं ददातीति साध्यो धर्मः; क्रियाविशेषत्वादिति हेतुः; शास्त्रोक्तदानवदिति दृष्टान्तः ।

1. द्वये तु या नाम. चौ, अनन्त. मु.
2. प्रमाणता. अनन्त. मु.
3. दुःखत्वम्. मा.
4. तद्विपर्ययतः. चौ. अनन्त. मु.
5. विषयोऽस्याः. चौ. मु.
6. बलेनात्रनार्थं. मा.

हिंसा क्रियाविशेषत्वात् सूते शास्त्रोक्तदानवत् ।
य एवमाह तस्यापि गुरुस्त्रीगमनादिभिः ॥ २३६ ॥

सुरापानादिभिश्चापि विपक्षैर्व्यभिचारिता ।
विरुद्धता च यादृग्घि दानैस्तादृक् फलं भवेत् ॥ २३७ ॥

विधिगम्यफलावाप्तिरदुःखात्मकता तथा ।
न च या संप्रदानस्य प्रीतिस्तादृक् फलं श्रुतम् ॥ १३८ ॥

[1]दातुस्तेन हि दृष्टान्तः साध्यहीनः प्रतीयते ।
संप्रदानं च दाने ते विषयः कर्म हिंसने ॥ २३९ ॥

वैषम्यं संप्रदाने तु [2]पक्षस्थे तद्विरुद्धता ।
प्रीयते संप्रदानं हि देवतेति [3]स्थितं तव ॥ २४० ॥

तत्र क्रियाविशेषत्वादित्यस्य हेतोः विपक्षेऽपि सुरापानगुरुस्त्रीगमनादौ भावादनैकान्तिकत्वमित्याह—**य एवमिति**। यतः पाने पीयमाना[4] सुरा पानादिविषयः तस्य न किञ्चित् फलम्; अभिगमेऽप्यभिगम्यस्य सुखमिति ।

इदानीमभ्युपगम्यैकान्तिकत्वं विरुद्धतामापादयति—**विरुद्धेति**। हिंसा विधिगम्यमदुःखात्मकं फलं प्रेत्य कर्तुर्दिशति, क्रियाविशेषत्वाच्छास्त्रोक्तदानवदित्यर्थः ।

साध्यविकलत्वेन दृष्टान्तमपि दूषयितुमाह—**न च येति**। दातुरमृतत्वं फलम्, संप्रदानस्य तु सुखलवप्राप्तिः फलमित्यर्थः ।

अपि च—**संप्रदानं च दाने ते विषयः कर्म हिंसने ॥ वैषम्यमिति**। अयमभिप्रायः—विषयफलतुल्यफलं ददातीत्यत्र कर्मप्रतिपादको वा विषयशब्दः, संप्रदानप्रतिपादको वा? तत्रोभयप्रतिपादकत्वमभिप्रेतं भवतः; यतो दाने संप्रदानं विषयः, प्रदेयस्य हिरण्यादेः फलात्मताभावात्; हिंसायां तु कर्म विषयः; यतः तस्यैव दुःखात्मकं फलम्; तदेतस्मिन् प्रयोगे उभयपरत्वं विरुद्धमिति ।

अथैतद्दोषपरिजिहीर्षया अग्नीषोमीयादिहिंसाया अपि देवतारूपं संप्रदानमेव विषयः, तत्राप्यभिमतसाध्याङ्गविरोधिनी प्रतिज्ञेत्याह—**संप्रदाने त्विति**।

1. दावस्तुतेनहिदृष्टो....यते. मा.
2. पक्षस्त्वेतद्विरुद्धता. चौ. मु, पक्षे त्वेतद्विरुद्धता. अनन्त. मु.
3. मतम्. चौ. मु.
4. न सुरापानादिविषयम्. मा.

दृष्टान्ते कर्म [1]दाने चेत् तस्य कीदृक् फलं भवेत् ।
जपहोमादिदृष्टान्तात् परपीडादिवर्जनात् ॥ २४१ ॥

चोदितत्वस्य हेतुत्वाद् विरुद्धाव्यभिचारिता ।
विहितप्रतिषिद्धत्वे [2]त्यक्त्वान्यन्नैव कारणम् ॥ २४२ ॥

धर्माधर्मावबोधस्य तेनायुक्तानुमानगीः ।
अनुग्रहा[3]च्च धर्मत्वं पीडातश्चाप्यधर्मताम् ॥ २४३ ॥

वदतो [4]जपशीध्वादिपानादौ नोभयं भवेत् ।
क्रोशता हृदयेनापि गुरुदाराभिगामिनाम् ॥ २४४ ॥

[5]भूयान् धर्मः प्रसज्येत भूयसी ह्यपकारिता ।
अनुमानप्रधानस्य प्रतिषेधानपेक्षिणः ॥ २४५ ॥

विषये । दुःखरूपं फलं [6]दातुरभिप्रेतं हिंसायाः ; न च संप्रदानस्य देवताख्यस्य दुःखरूपं फलम् , असत्पक्षे फलाभावात् । साङ्ख्यपक्षे तु प्रीतिः फलम् , देवताराधनत्वाद् यागस्येति ॥

अथ हिंसायामिव दृष्टान्तेऽपि दाने कर्मैव विषयः, तत्रापि साध्यविकलत्वं दृष्टान्तस्येत्याह—**दृष्टान्त** इत्यर्धेन ।

विरुद्धाव्यभिचारी चायं हेतुरित्याह—**जपहोमादीति** ।

निराकृतं च धर्माधर्मविषयत्वमनुमानस्येत्याह—**विहितेति** ।

नापि विधिप्रतिषेधौ मुक्त्वा परपीडानुग्रहौ धर्माधर्मत्वे लक्षणमित्याह—**अनुग्रहाच्चेति** ।

एव[7]मव्यापकत्वमभिधायेदानीमतिव्याप्तिं दर्शयितुमाह—**क्रोशतेति** । ननु चित्तोद्वेगादात्मन एव पीडोत्पद्यत इति कथमतिव्यापकत्वमित्याशङ्क्याह—**अनुमानेति** ।

1. दानं. चौ, अनन्त. मु.
2. त्यक्त्वान्यन्न च. चौ, अनन्त. मु.
3. च्चाधर्मत्वं पीडातश्चाप्यधर्मता. चौ, अनन्त. मु.
4. जपसीध्वा. चौ. मु.
5. भूयोऽर्थत्वम्. मा.
6. दातुमभि. मा.
7. मपापकर्मत्वम्. मा.

हृदयक्रोशनं कस्माद् दृष्टां पीडामपश्यतः ।
पीडातश्चाप्यधर्मत्वं तथा पीडाऽधर्मतः ॥ २४६ ॥

अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन् ।
एवमादावशास्त्रज्ञो म्लेच्छो नोद्विजते क्वचित् ॥ २४७ ॥

तस्य नाधर्मयोगः स्यात् पूर्वोक्ता यदि कल्पना ।
तस्मादनुग्रहं पीडां तदभावमपास्य च ॥ २४८ ॥

धर्माधर्मार्थिभिर्नित्यं मृग्यौ विधिनिषेधकौ ।
क्वचिदस्या निषिद्धत्वात् शक्तिः शास्त्रेण बोधिता ॥ २४९ ॥

नन्वधर्मत्वेनाभिगम्यस्य पीडामुत्पादयत्यवेत्याशङ्कयाह **पीडातश्चेति** ।

अशास्त्रज्ञस्य त्वेवमादिपदार्थकरणे चित्तोद्वेगोऽपि नास्तीत्याह—**एवमादाविति** ।

प्रकृतमुपसंहरति—**तस्मादिति** ।

**साङ्ख्यनायकमाधवस्त्वाह**—विहायानुमानादीन् विधिप्रतिषेधत्वनिबन्धनत्वमेव धर्माधर्मयोरवलम्ब्याग्नीषोमीयादिष्वधर्मतामाह—**क्वचिदिति** श्लोकत्रयेण । अयमर्थः—सत्यं विधिप्रतिषेधनिबन्धनावेव धर्माधर्मौ; तौ तु विधिप्रतिषेधौ तयोरिष्टानिष्टशक्तिज्ञापकौ, न पुनः कारकौ; ततः किमिति चेत्, इदं ततो भवति—हिंसा नाम तावदेका व्यक्तिस्त्रैलोक्येऽपि; तस्याश्च क्वचिल्लोके ब्रह्महत्यादिषु "न हिंस्यात् सर्वा भूतानि" इति प्रतिषेधादनिष्टसाधनत्वशक्तिरवगमिता; न च प्रतिहता सेदानीम्; विधेयेष्वग्नीषोमीयादिषु हिंसाया अविशेषान्नापगच्छति; न हि तेषु विधेः अनिष्टसाधनत्वावगमे अग्नीषोमीयादिषु ब्रह्महत्यादिषु वा कश्चिद् विशेषः; तत्र यदि नामाग्नीषोमीयादिषु विधिरपरः प्रतीयते किं तावता पूर्वप्रमिता शक्तिरपगच्छति? न हि विधेः अवगतानिष्टसाधनशक्त्यपगमे कश्चिद् व्यापारः, तत्र विधितः श्रेयस्साधनत्वावगमात् । अतः सर्वशास्त्रानुसारादेव हिंसादीनामधर्मत्वं कल्प्यते, न पुनरनुमानत इति स्थितमग्नीषोमीयादिष्वधर्मत्वम् ।

प्रत्यवायनिमि[1]त्तत्वं विधानान्नापगच्छति ।
शास्त्रेण न हि शक्तीनामावापोद्वापनक्रियाः ॥ २५० ॥
विद्यमाना हि कथ्यन्ते शक्तयो द्रव्यकर्मणाम् ।
तदेव चेदं कर्मेति शास्त्रमेवानुधावता ॥ २५१ ॥
हिंसादीनामधर्मत्वं [2]कल्प्यते नानुमानतः ।
एवं ये निपुणं प्राहुस्तैरप्येतत् परीक्ष्यताम् ॥ २५२ ॥
सुरापानादिभिः शूद्रः किं याति नरकं कृतैः ।
वैश्यस्तोमेन वा किं स्याद् विप्रराजन्ययोः फलम् ॥ २५३ ॥
पञ्चम्यामिष्टिकरणान्मध्याह्ने चाग्निहोत्रतः ।
तस्माद् यद् यादृशं कर्म यत्फलोत्पत्तिशक्तिकम् ॥ २५४ ॥
शास्त्रेण गम्यते तस्य तादृशस्यैव तत् फलम् ।
हिंसा चांशद्वयादन्या या तस्याः प्रतिषेधजम् ॥ २५५ ॥
प्रत्यवायार्थतज्ज्ञानं विधिनान्यत्र [3]वार्यते ।
ज्ञानमेव [4]तु शक्तीनां नावापोद्वापनक्रियाः ॥ २५६ ॥

एवं चोदिते सति अतिप्रसङ्गापादनद्वारेण तद्दूषणमाह—**एवमिति** श्लोकद्वयेन । [5]विप्रकर्तृकस्य सुरापानस्य निषिद्धत्वेनावधारिता नरकोत्पादिका शक्तिः शूद्रकर्तृकेऽपि नापगच्छति ; तथा वैश्यकर्तृकस्य वैश्यस्तोमस्य विहितत्वेनावधारिता स्वर्गोत्पादिका शक्तिः विप्रराजन्यकर्तृकेऽपि नापगच्छति ; पौर्णमास्यमावास्या-कालविशिष्टस्य दर्शपूर्णमासस्य विहितत्वेनावधारिता स्वर्गोत्पादिका शक्तिः पञ्चम्या-मपि नापगच्छतीत्यादि ; तत्रैवं दूषिते सत्यवश्यमेवं परिहारो वक्तव्य इत्याह —**तस्मादिति** ।

किमेवं सतीत्याह—**हिंसा चेति** । निषेधशास्त्रं च करणेतिकर्तव्यताव्यति-रिक्तायाः प्रत्यवायोत्पादिकां शक्तिं बोधयति ; तस्या एव तु करणेतिकर्तव्यतायां विधिशास्त्रेण बाधितत्वान्न ज्ञापयतीत्यर्थः । यत् पुनरिदमुक्तम्—“ शास्त्रेण न हि शक्तीनामावापोद्वापनक्रियाः ” इति, सत्यम् ; तदेव तु ज्ञापकत्वं विषयभेदेनेत्याह —**ज्ञानमेवेति** ।

1. त्तत्वे विधिना नापगच्छति, चौ, अनन्त, मु.
2. कथ्यते. चौ, अनन्त. मु.
3. बाध्यते. मा.
4. च. चौ, अनन्त. मु.
5. वर्णकर्तृकस्य. मा.

[1]क्रियन्ते शास्त्रतस्तास्तु क्रिया[2]भेदे व्यवस्थिताः ।
व्यवस्थाः शक्तिभेदानां दृष्टार्थेष्वपि कर्मसु ॥ २५७ ॥

अभिन्नत्वेऽपि दृश्यन्ते भुजेः स्वस्था[3]तुरेष्विव ।
रूपाभेदेऽपि हिंसादेः भेदोऽङ्गान[4]ङ्गहेतुकः ॥ २५८ ॥

तथाप्येकफलत्वं चेत् क्रियात्वात् सर्वसङ्करः ।
यजित्वाद्यविशेषाच्च चितादिफलतुल्यता ॥ २५९ ॥

भेदात् तत्र व्यवस्था चेदिहाप्येवं भविष्यति ।
विधीनां [5]चापि सर्वेषां साक्षाद् व्यवहितोऽपि वा ॥ २६० ॥

पुरुषार्थः फलं तेन [6]नानर्थोऽपि प्रतीयते ।
न चेषु श्रूयतेऽनर्थो [7]निषेधान्न च कल्प्यते ॥ २६१ ॥

एकस्यापि कर्मणः शक्तिविशेषाणां व्यवस्था दृश्यत एवेत्याह—**व्यवस्था** इति । यथैकमेव दधिभोजनं पित्तश्लेष्मोपहतेन क्रियमाणमनारोग्याय, वातुलेन तु क्रियमाणं शान्तये ।

यत्त्विदमुक्तम्—"तदेवं चेदं कर्म" इति, तत्राप्याह—**रूपाभेदेऽपी**त्यर्धेन ॥

एवं भेदे सत्यपि यदि हिंसारूपक्रियैक्यमभ्युपगम्य प्रत्यवायोत्पादकत्वमुच्यते, तदा क्रियारूपतयैक्यात् स्वर्गोत्पादकत्वमपि स्यात्; तदाह—**तथापीति** ॥

अथैक्ये सत्यवच्छेदमङ्गीकृत्य परिहारस्तत्र, तथेहापि भविष्यतीत्याह—**भेदादि**त्यर्धेन । अपि च पुरुषार्थपर्यवसायित्वाद् विधेः तद्विशेषाकाङ्क्षायां सत्यामनर्थस्यावसर एव नास्तीत्याह—**विधीनामिति** ।

न चात्रानर्थः फलत्वेन श्रूयते, नापि कल्प्यत इत्याह—**न चे**त्यर्धेन ॥

1. ज्ञायन्ते. चौ, अनन्त. मु.
2. भेदव्यव. चौ, अनन्त. मु.
3. तुरेष्वपि. चौ, अनन्त. मु.
4. ङ्गकारिनः. चौ, अनन्त. मु.
5. वापि. चौ, अनन्त. मु.
6. नानर्थोऽतः. चौ, अनन्त. मु.
7. निषेध्यान्न. मा.

**न च प्रकरणस्थत्वात् पुरुषार्थः फलं भवेत् ।**
**कर्मोप[1]कारः कल्प्यस्तु दृष्टोऽ[2]दृष्टोऽपि वा ततः ॥ २६२ ॥**

**कल्पनावसरस्तत्र नानर्थस्यानपेक्षणात् ।**
**क्रत्वर्थश्चापि संस्कारः पशोर्नारादुपक्रिया ॥ २६३ ॥**

**दृष्टैव त्ववदानानां निष्पत्तिः क्रत्वपेक्षिता ।**
**अभिचारेऽप्युपायस्था हिंसा नाधर्म [3]इष्यते ॥ २६४ ॥**

**तस्मादनङ्गभूतायां हिंसायामेतदुच्यते ।**
**उद्देशाच्च फलत्वेन श्येनादौ न विधीयते ॥ २६५ ॥**

**भावनाविधि[4]रप्येष फलांशाद् विनिवर्तते ।**
**अतः स्वतो न धर्मत्वं श्येनादेर्नाप्यधर्मता ॥ २६६ ॥**

अपि च निरधिकारस्य अधिकारान्तरसन्निधौ श्रवणात् तादर्थ्येनैव भवितव्यम्, कुतस्तत्रानर्थगन्धोऽपीत्याह—**न चेति** सार्धेन ।

क्रत्वर्थतापि शेषभूतपशुसंस्कारकत्वेन तत्राप्यपेक्षितावदाननिष्पत्तिसमर्पकत्वेनेत्याह—**क्रत्वर्थश्चेति** ।

तस्मादवस्थितमेतत्—अंशद्वयगताया विहि[5]तत्वेनाप्रतिषेधान्नानर्थत्वम्; अतश्च श्येनेऽपि चोदकप्राप्तायां नैवाधर्मत्वम्; श्येनसाध्याया हिंसायाः विधिसंस्पर्शाभावेन प्रतिषिद्धत्वादधर्मत्वमित्याह—**अभिचारेऽपीति** ।

उक्तमेव फलांशस्याविधेयत्वं स्मारयति—**उद्देशाच्चेति** ।

श्येनादीनां तु न स्वतो धर्मत्वम्, पारम्पर्येणानिष्टफलत्वात्; नाप्यधर्मत्वम्, प्रतिषेधाभावात्; औपचारिकस्तु तत्रानर्थशब्दप्रयोग इत्युक्तमित्याह—**अत इति** ।

1. कारकल्प्यस्तु. मा.
2. अदृष्टोऽथवा. पुनः. चौ, अनन्त. मु.
3. उच्यते. चौ, अनन्त. मु.
4. रप्येवम्. चौ, मु.
5. तत्वेन प्रतिषेधासानर्थ. मा.

फलानर्थानुबन्धित्वात् तद्द्वारेणोपचर्यते ।
निराकाङ्क्षस्य चैकेन श्येनस्य न फलद्वयम् ॥ २६७ ॥

तस्मात् क्रियान्तरादेव[1] हिंसातोऽधर्म उच्यते ।
फलतोऽपि च यत् कर्म नानर्थेनानुबध्यते ॥ २६८ ॥

केवलप्रीतिहेतुत्वात् तद्धर्मत्वेन गीयते[2] ।
ननु चेष्टाभ्युपायत्वात् श्येनादेर्धर्मता भवेत् ॥ २६९ ॥

फलं तावदधर्मोऽस्य श्येनादेः संप्रधार्यते ।
यदि येनेष्टसिद्धिः स्या[3]दनिष्टाननुबन्धिनी ॥ २७० ॥

तस्य धर्मत्वमुच्येत ततः श्येनादिवर्जनम् ।
यदा तु चोदनागम्यः कार्याकार्यानपेक्षया ॥ २७१ ॥

धर्मः प्रीतिनिमित्तं स्याद् तदा श्येनेऽपि धर्मता ।
यदि त्वप्रीतिहेतुर्यः साक्षाद् व्यवहितोऽपि वा ॥ २७२ ॥

ननु किमिति श्येने फलस्यानिष्टानुबन्धित्वम्, श्येनस्यैवानिष्टफलत्वं किमिति न भवतीत्याशङ्क्याह—**निराकाङ्क्षस्येति** । धर्मत्वं तर्हि श्येनस्य भवत्वित्याशङ्क्याह—**फलतोऽपीति** । एवं स्थिते सति श्लोकार्धेन चोदयति—नन्विति त्यर्धेन ॥

अत्रोच्यते—श्येनसाध्यस्य प्राणवियोगभावकव्यापारस्य निषिद्धत्वेन तावदधर्मत्वम्; श्येनादीनां तु धर्मत्वमधर्मत्वं वेत्येतद् विचारयाम इत्याह—**फलमित्यर्धेन** । वृद्धव्यवहारपर्यालोचनं चात्र संप्रधारणम् । कीदृशेऽर्थे वृद्धैर्धर्माधर्मशब्दौ प्रयुक्तावित्याह—**यदीति** । यदि यः पुरुषार्थं साधयत्यनिष्टानुबन्धी च न भवति, तत्र वृद्धैर्धर्मशब्दः प्रयुज्यते; तदा श्येनादयो धर्मशब्देन वर्ज्यन्ते; यदि विधेये प्रीतिसाधके च पदार्थे सत्यप्यनिष्टानुबन्धित्वे धर्मशब्दः प्रयुज्यते, तदा श्येनेऽपि धर्मत्वमित्याह—**यदा त्विति** । यदा त्वनिष्टानुबन्धिनि लोके धर्मशब्दः प्रयुज्यते, तदा श्येनेऽप्यधर्मत्वमित्याह—**यदि त्विति** । तत्र पूर्वेण श्येनादेः धर्मत्वं नास्ती-

1. वा हिंसातो नार्थः. चौ, अनन्त. मु.
2. हीष्यते. चौ, अनन्त. मु.
3. स्यादनुष्ठानानु. चौ, मु.

[1]तस्याधर्मत्वमुच्येत तदा श्येनेऽप्यधर्मता ।
[2]ये तु हिंसात्वसाधर्म्याद् बाह्य[3]वचोदितास्वपि ॥ २७३ ॥

[4]वदन्त्यनर्थहेतुत्वं तेषामागमबाधनम् ।
तमनादृत्य यो ब्रूयाद्या[5]गादावप्यसौ वदेत् ॥ २७४ ॥

स्वर्गादिसाधनाशक्ति क्रियात्वाद् भोजनादिवत् ।
गीतामन्त्रार्थवादैर्या कल्प्यतेऽनर्थहेतुता ॥ २७५ ॥

प्रत्यक्षश्रुतिबाध्यत्वात् सान्यार्थत्वेन [6]वारिता ।
शिष्यान् प्रत्यविशिष्टत्वात् सूत्रवैदिकवाक्ययोः ॥ २७६ ॥

त्युक्तम् मध्येन धर्मत्वमुक्तम् तृतीयेनाधर्मत्वमिति । ये तु हिंसात्वसाधर्म्येण बाह्यहिंसावदग्नीषोमीयादेरधर्मत्वमाहुः, तेषामागमविरोधो वक्तव्य इत्याह—**ये त्विति**। यस्त्वागमविरोधमनादृत्य ब्रवीति, तस्येष्टविघातकृद् विरुद्धश्चोद्भावनीय इत्याह—**तमनादृत्येति**। यदप्यर्थवादरूपेण मन्त्रेण संशब्दितम् , तदप्यन्यार्थत्वादग्नीषोमीयस्य फलं न भवतीत्याह—**गीतामन्त्रार्थवादैरिति**। विधिविरोधादन्यार्थत्वाच्च नेदं फलमित्यर्थः ।

"नन्वशक्तमिदं सूत्रमिमावर्थौ वदितुम्" इति ; अस्योत्तरभाष्यम्—"उच्यते, यत्र वाक्यादर्थोऽवगम्यते, तत्रैवम् ; तत्तु वैदिकेषु, न सूत्रेषु" इत्यादि । तस्यायमर्थः—यत्र शब्दैकसमधिगम्योऽर्थः, तत्रैकत्वात् तात्पर्यस्यार्थद्वयपरत्वे वाक्यं भिद्यते; वैदिकेषु चैतत् प्रमाणान्तराप्रतिपन्नार्थसमर्पकत्वात् ; लौकिकस्य सूत्रवाक्यस्य नायं दोष इति । तदेतद् दूषयितुमाह—**शिष्यानिति**। सूत्रवाक्यमपि प्रमाणान्तराप्रतिपन्नमेव वेदार्थं शिष्यान् प्रतिपादयति । तदुक्तम्—

"नान्यतो वेदविद्भ्यश्च सूत्रवृत्तिक्रियेष्यते" इति ।

अन्यपरस्य चान्यार्थप्रतिपादनाशक्तिर्वेदवाक्यवत् सूत्रवाक्येऽप्यस्त्येवेति अनुत्तरमिदमिति ।

1. सोऽधर्मश्चोदनार्थःस्यात्. चौ, अनन्त. मु.
2. यस्तु. चौ, अनन्त. मु.
3. वच्चोदनास्व. चौ, अनन्त. मु.
4. वदत्यनर्थहेतुत्वं तस्याप्या. चौ, अनन्त. मु.
5. गादेरप्य. चौ, अनन्त. मु.
6. नीयते. चौ, अनन्त. मु.

अशक्तेश्चोभयोः साम्यान्न सूत्रेष्वित्यनुत्तरम् ।
प्रागुक्तपरिसंख्यायाः फलमेतत् प्रकाश्यते ॥ २७७ ॥

सूत्रेषु ह्यनया युक्त्या गतिरेषापि युज्यते ।
तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः ॥ २७८ ॥

एकदेशानुमानाद् वा द्वे सूत्रे परिकल्पिते ।
इतरेतरसमीप्यादेतावेव परस्परम् ॥ २७९ ॥

कल्प्येते वाक्यशेषाय नान्याश्रयवकल्पना ।
विशिष्टार्थानुवादित्वादथवेत्यपि भाषिते ॥ २८० ॥

वाक्यभेदः स एवेति संज्ञातन्त्रत्वमुत्तरम् ।
अर्थं वा प्रत्युपा[1]दानं संज्ञालक्षणशब्दयोः ॥ २८१ ॥

तन्त्रं लक्षणशब्दो वा वाच्यो धर्मार्थशब्दयोः ।
धर्मे सामान्यतः सिद्धे प्रमाणं कथ्यते यदा ॥ २८२ ॥

एवं दूषिते समर्थयितुमाह—**प्रागुक्तेति** । अयमभिप्रायः—प्रमाणान्तर-प्रतिपन्नार्थसूचकत्वात् [2]न सूत्रस्यायं दोष इति ।

प्रमाणान्तरेण च चोदनालक्षणोऽर्थो धर्मत्वेन प्रसिद्धः ; अतो यथा तमर्थं समर्थयति, तथा व्याख्येयमित्याह—**तस्मादिति** ।

ननु सूत्रद्वयपरिकल्पनायाम् ' चोदनालक्षणो धर्मः ' इत्यत्रानर्थस्यापि धर्मत्वं प्राप्नोति, ' अर्थो धर्मः ' इत्यत्र कृष्णादेरपीत्याशङ्क्याह—**इतरेतरसामीप्यादिति** ।

इदमपरं परिहारभाष्यम्—"अथवार्थस्य सतश्चोदनालक्षणस्य धर्मत्वमित्येकार्थत्वमेव" इति ; तदेतत् दूषयितुमाह—**विशिष्टार्थेति** त्रिपाद्या । तस्मात् पूर्वैव व्याख्या शोभनेत्याह—**संज्ञातन्त्रत्वमुत्तरमिति** । संज्ञाशब्देन धर्मशब्दमाह ।

अर्थलक्षणशब्दयोर्वा तन्त्रत्वमाह—**अर्थं वेति** ।

ननु यदा ' सामान्यतः सिद्धं धर्ममनूद्य चोदना प्रमाणत्वेन प्रतिज्ञायते ' इतीयं वचनव्यक्तिः, तदानर्थस्य धर्मत्वं न प्राप्नोत्येव[3] ; किमर्थशब्देन व्युदस्यत इति चोदयति—**धर्म इति** ।

1. दानात् संज्ञा. चौ. अनन्त मु.
2. omitted न. मा.
3. वमर्थश. मा.

प्राप्तमेव तदार्थत्वं किमर्थं पुनरुच्यते ।
चोदनालक्षणत्वस्य धर्मं प्रति विधेयता ॥ २८३ ॥
लभ्यतेऽर्थानुवादेन संशयो ह्यन्यथा भवेत् ।
तथा च येऽप्यनर्थस्य साधनत्वेन [2]लक्षिताः ॥ २८४ ॥
निषेधैस्तेऽपि धर्माः स्युश्चोदनालक्षणत्वतः ।
तस्मादर्थापरित्यागादेकार्थग्रहणं [3]यया ॥ २८५ ॥
लभ्यते वचनव्यक्त्या सा स्यादर्थानुवादतः ।
विशेषणाद् विना चैतदर्थसामर्थ्यकारितम् ॥ २८६ ॥
कथ्यते भाष्यकारेण फलं हिंसादिवर्जनम् ।

सत्यमेवम् ; एषैव वचनव्यक्तिः अर्थपदेन विना लभ्यत इत्याह—**चोदनेति** त्रिपाद्या । 'यश्चोदनालक्षणः, स धर्मः' इत्येतस्यां वचनव्यक्तावर्थशब्दस्य न विधेयत्वम्, वाक्यभेदप्रसङ्गात्; नानुवादत्वम्, अतिप्रसङ्गात्; धर्मानुवादेन चोदनाख्यप्रमाणविधानमिति तु वचनव्यक्तावनुवादत्वेनान्वयः; 'चोदनालक्षणो धर्मः' इत्येतावति सूत्रे सत्येषापि वचनव्यक्तिराशङ्क्येत—यश्चोदनालक्षणः स धर्म इति, ततश्च ब्रह्महत्त्यादीनामपि निषेधलक्षणानामधर्माणामपि धर्मत्वप्रसङ्गः; तदाह—**संशयो ह्यन्यथा भवेत्** इत्यादिना सपादश्लोकेन ।

अभिमता वचनव्यक्तिरर्थशब्दप्रयोगे सति लभ्यत इत्याह—**तस्मादिति** । ननु 'यो धर्मः, स चोदनालक्षणः' इति वचनव्यक्तौ "उभयमिह चोदनया लक्ष्यतेऽर्थोऽनर्थश्चेति, तत्रानर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम्" इति । इदं भाष्यमसम्बद्धमित्याशङ्क्याह—**विशेषणादिति** । नैवानर्थस्य धर्मत्वं प्राप्तम्, यन्निवृत्त्यर्थमर्थपदम्; अर्थपदप्रयोगे तु सा वचनव्यक्तिरेव न भवति ययानर्थस्य धर्मत्वं प्राप्नोतीति फलमर्थशब्दप्रयोगस्यानर्थनिवृत्तिरिति वक्तुं भाष्यकारेण "अनर्थो धर्म उक्तो मा भूदित्यर्थग्रहणम्" इत्युक्तमिति ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
द्वितीयसूत्रं समाप्तम्

---

1. वृत्तमेव तदार्थत्वे. चौ, अनन्त. मु.
2. कल्पिताः. चौ, अनन्त. मु.
3. यथा चौ, अनन्त. मु.
4. ब्रह्महत्या. मा.

# तस्य निमित्तपरीष्टिः ॥

**प्रतिज्ञाव्यतिरेकेण भाष्यकारेण यद्यपि ।**
**वक्ष्यमाणा स्वपक्षस्य युक्तिः पूर्वं निदर्शिता ॥ १ ॥**

**प्रतिज्ञामात्रमित्येतज्जैमिनेर्मतमुच्यते ।**
**वृत्तिकारोऽधिकं वापि भूतादि द्वारमब्रवीत् ॥ २ ॥**

अत्र भाष्यम्—"उक्तं चोदनानिमित्तं धर्मस्य ज्ञानमिति ; तत् प्रतिज्ञामात्रेणोक्तम्" इति । अत्र केचिच्चोदयन्ति—प्रतिज्ञाव्यतिरेकेण युक्तिरपि तत्रोक्तैव—"चोदना हि भूतम्" इत्यादिना "भाष्यग्रन्थेन नान्यत् किंचनेन्द्रियम्" इत्येवमन्तेन ; अतः कथं तत् प्रतिज्ञामात्रेणोक्तमित्याशङ्क्य परिहरति—**प्रतिज्ञाव्यतिरेकेणेति** सार्धेन श्लोकेना "चोदना हि भूतम्" इत्यादि वक्ष्यमाणं प्रतिज्ञासमर्थनार्थं भाष्यकारेण तत्रोक्तम् ; सूत्रकाराभिप्रायेण त्विदमुच्यते "तत् प्रतिज्ञामात्रेणोक्तम्" इति ।

परिहारान्तरमाह—**वृत्तिकार** इत्यर्धेन । प्रतिज्ञासमर्थनार्थं प्रामाण्यसम्भावनाज्ञानजनकत्वेन तत्रोक्तं यत् "चोदना हि भूतम्" इत्यादिना, तत्प्रतिज्ञार्थसिद्ध्यर्थम् । तदुक्तम् "एवंजातीयकमर्थं शक्नोत्येवावगमयितुम्" इति । वार्तिककारेणापि तथैव व्याख्यातं भाष्यम्—"संभाव्यते प्रमाणत्वम्" इति प्रतिज्ञार्थाभिप्रायेण तु "तत्प्रतिज्ञामात्रेणोक्तम्", सत्संप्रयोगसूत्रापातनार्थमित्यदोषम् ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
निमित्तसूत्रं समाप्तम्

**सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ १-१-४ ॥**

वर्ण्यते सूत्रभेदेन येन प्रत्यक्षलक्षणम् ।
तेन सूत्रस्य सम्बन्धो वाच्यः पूर्वप्रतिज्ञया ॥ १ ॥

लक्षणस्याभि[1]धानं च केनांशेनोपयुज्यते ।
किमर्थं चानुमानादेर्लक्षणं नात्र कथ्यते ॥ २ ॥

न तावदप्रमाणत्वं तेषां नाप्यक्षबुद्धिषु ।
शक्यतेऽन्तर्गतिर्वक्तुं न च लक्षणतुल्यता ॥ ३ ॥

केचिदेतत् सूत्रं द्विधा कृत्वा "सत्संप्रयोगे" इत्यादि "तत्प्रत्यक्षम्" इत्येवमन्तं प्रत्यक्षलक्षणपरत्वेन व्याचक्षते, "अनिमित्तं विद्यमानोपलम्भनत्वात्" [2]इतीदं तस्य धर्मं प्रत्यनिमित्तत्वपरत्वेन । भाष्यकारेण तु सकलमेवेदं सूत्रमनिमित्तत्वपरत्वेन व्याख्यातम् । तत्र पूर्वप्रस्थानपरित्यागे कारणमाह वार्तिककारः—**वर्ण्यत इति** । यः प्रत्यक्षलक्षणपरमिदं सूत्रं व्याचष्टे, तेनास्य सूत्रस्य "चोदनालक्षणोऽर्थो धर्मः" [3]इत्यनया प्रतिज्ञया सह सम्बन्धो वक्तव्यः ; न चासावस्तीत्यभिप्रायः ॥

शब्दप्रमाणाधिकारे च प्रत्यक्षलक्षणमतीवानुपयोगीत्याह—**लक्षणस्येत्यर्धेन** ।

अथानुक्तस्वरूपस्यानिमित्तत्वमेव प्रतिपादयितुं न शक्यत इत्युच्यते, तत्राप्याह—**किमर्थमित्यर्धेन** । तत्र न तावदप्रमाणत्वं तेषाम् ; नाप्यक्षबुद्धिषु शक्यतेऽन्तर्गतिर्वक्तुम् ; न च लक्षणतुल्यता—इति निगदव्याख्यातम् ॥

अथ मतम्—प्रत्यक्षलक्षणादेव तत्पूर्वकत्वेनानुमानादीन्यपि सिद्ध्यन्तीति न पृथग्लक्षणं प्रयोजयिष्यन्तीति, तत्रोच्यते—प्रामाण्येन [4]वा तत्पूर्वकत्वेन सिद्ध्यन्ति ?

1. तु. चौ, अनन्त. मु.
2. इतीदं तु स्वधर्मम्. मा.
3. इत्यनयाज्ञया. मा.
4. ण्येत तावत्पूर्व. मा.

न चापि [1]सिद्धिस्तेषां स्यादर्थात् प्रत्यक्ष[2]लक्षणात् ।
न हि तत्पूर्वकं सर्वं प्रमाणमिति निश्चितम् ॥ ४ ॥

प्रत्यक्ष[3]लक्षणोक्तिश्च नानुमानादिलक्षणात् ।
विना न सिध्यतीत्येवमर्थाक्षेपो न विद्यते[4] ॥ ५ ॥

[5]तदतत्पूर्वकत्वे धीर्न च तल्लक्षणाद् भवेत् ।
तदुक्तेर्वानुमानादि किं न स्यात् तदपूर्वकम् ॥ ६ ॥

न च लक्षणभेदस्य स्वरूपे यत्तयोरपि ।
प्रत्यक्षलक्षणादेषां कथंचिदवधारणा ॥ ७ ॥

प्रसिद्धत्वादवाच्यत्वं प्रत्यक्षेऽपि प्रसज्यते ।
तेनान्यपरिसंख्यार्थं [6]सूत्रं मूढेन वोच्यते ॥ ८ ॥

लक्षणतो वा ? न तावत् प्रा[7]माण्येनेत्याह—**न चापीति** । यतः प्रत्यक्षपूर्वजापि स्मृतिः न प्रमाणम् ॥

नापि लक्षणत इत्याह—**प्रत्यक्षेति** ॥

आस्तां तावदिदं प्रामाण्यं स्वरूपं वा ; प्रत्यक्षलक्षणादेषां तत्पूर्वकत्वातत्पूर्वकत्वे एव न सिद्ध्यत इत्याह—**तदतत्पूर्वकत्व इति** ॥

न च प्रत्यक्षलक्षणादेषां स्वरूपमियत्ता वा प्रतीयत इत्याह— **न च लक्षणभेदस्येति** ॥

प्रसिद्धत्वे चानुमानादीनां लक्षणाकरणं प्रत्यक्षेऽपि समानमित्याह—**प्रसिद्धत्वादित्यर्धेन** ।

एवं च सति केवलप्रत्यक्षलक्षणकरणमन्यनि[8]वृत्तिं मूढतां वा सूत्रकारस्य सूचयतीत्याह—**तेनान्येति** ।

1. सिद्धिरेषाम्. चौ, अनन्त. मु.
2. लक्षणम्. मा.
3. लक्ष्माशक्तिश्च. मा.
4. युज्यते. चौ, अनन्त. मु.
5. तदेतत्, चौ, मु.
6. सूत्रमूढेन चो. मा.
7. माण्येत्याह. मा.
8. वृत्तिमूढ. मा.

[1]न ह्येकं लक्षयेदेषु बुद्धिपूर्वं कथंचन ।
सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ॥ ९ ॥

न [2]चाप्यनेन सूत्रेण प्रत्यक्षं लक्ष्यते स्फुटम् ।
तदा[3]भासेऽपि तुल्यत्वात् स्वप्नज्ञानैकवर्जनात् ॥ १० ॥

तद्धीन्द्रियार्थ[4]संयोगव्यापारेण विना भवेत् ।
केनचित् संप्रयोगे तु भ्रान्त्यादिः स्यान्नियोगतः ॥ ११ ॥

ग्राह्येणान्येन वेत्येतत् कृतं नैव विशेषणम् ।
संप्रयोगस्य येन स्याद् विशेषो वक्ष्यमाणवत् ॥ १२ ॥

असामर्थ्यं च मत्वास्य वृत्तिकारेण लक्षणे ।
तत्संप्रयोग इत्येवं पाठान्तरमुदाहृतम् ॥ १३ ॥

तेनान्येनापि संयोगे चक्षुरादेर्यदुत्थितम् ।
विषयान्तरविज्ञानं तत् प्रत्यक्षं प्रसज्यते ॥ १४ ॥

अनिमित्तप्रतिपादकत्वेन चैकवाक्यत्वे सति न वाक्यभेदो युक्त इत्याह—**सम्भवतीत्यर्धेन** ॥

इदानीमतिव्यापकत्वं लक्षणस्य दर्शयितुमाह—**न चाप्यनेनेति** श्लोकद्वयेन । यतः शुक्तिकायामपि रजतज्ञानमिन्द्रियार्थसंप्रयोगजमेव, तद्भावभावित्वेनावगमात् ॥

अथ प्रतिभासमानोऽर्थः संप्रयोगस्य विशेषणम्, न चात्र तदस्तीत्याह—**ग्राह्येणेति** । "सत्संप्रयोगे" इत्येतावदुक्तम्, न तु तद्विशेषितम्—प्रतिभास्येनान्येन वेति, यथा 'तत्संप्रयोगे' इत्यादि वृत्तिकारमते व्याख्यास्यति ॥

यथाश्रुतस्य चासामर्थ्यं मत्वा तत्सतोर्व्यत्ययं कृत्वोपवर्षेण व्याख्यातम्; तदपि तैर्न दृष्टमित्याह—**असामर्थ्यमिति** ॥

उक्तमतिव्यापकत्वमुपसंहरति—**तेनान्येनापीति** ॥

1. न त्वेकम्. चौ, अनन्त. मु.
2. चाप्येतेन. चौ, अनन्त. मु.
3. भासेषु तुल्य. अनन्त. मु
4. सम्बन्ध. चौ, अनन्त मु.

सत्संप्रयोगनिर्देशो व्यर्थश्चेदेतदेव हि ।
प्रतिपाद्यं परस्यापि लक्षणासिद्धिरेव च ॥ १५ ॥

स्वप्नादीनां निवृत्तिर्वा फलं [1]तस्य भविष्यति ।
तस्माद् विध्यनुवादित्वं नानुक्ते लक्षणे भवेत् ॥ १६ ॥

तेन नैषा वचोव्यक्तिर्यत् सतीन्द्रियसङ्गमे ।
विज्ञानं जायते तस्य प्रत्यक्षत्वं प्रतीयताम् ॥ १७ ॥

प्रत्यक्षं यज्जने सिद्धं तस्यैवंधर्मकत्वतः
विद्यमानोपलम्भ[2]त्वं तेन धर्मेऽनिमित्तता ॥ १८ ॥

एवंलक्षणकत्वं च न स्वरूपविवक्षया ।
एवंलिङ्गकमित्येतद् भाष्यकारेण वर्ण्यते ॥ १९ ॥

यतोऽस्ति तत्र धर्मोऽयं विद्यमानोपलम्भनम् ।
तस्मात् तेन प्रसिद्धेन गम्यतामनिमित्तता ॥ २० ॥

नन्वेवं सत्यपार्थकमिदं सत्संप्रयोगसूत्रपदोपदानम् । अयमपरो दोषोऽस्तु, नातिप्रसङ्गनिवृत्तिः स्वप्नप्रत्ययनिवृत्तिर्वा फलं तस्येत्याह—**सत्संप्रयोगनिर्देश**' इति सार्धेन । अतिव्यापकत्वे चासंपूर्णत्वाल्लक्षणस्य न तदुद्दिश्य लक्ष्यं विधीयत इत्याह —**तस्मादि**त्यर्धेन । तेन[3] नात्र लक्षणमुद्दिश्य लक्ष्यं विधीयते । [4]किं तु लोकप्रसिद्धस्य प्रत्यक्षस्य सत्संप्रयोगजत्वेन विद्यमानोपलम्भनत्वात् धर्मे प्रत्यप्रामाण्यमिति ॥

सूत्रस्य तात्पर्यं श्लोकद्वयेन दर्शयितुमाह—**तेन नैषेति** श्लोकद्वयेन ॥

नन्वनिमित्तपरेऽपि सूत्रे सति कथमिदं भाष्यम् "एवंलक्षणकं हि तत्" इत्याशङ्क्याह—**एवंलक्षणकत्वमिति** श्लोकद्वयेन । एवंलिङ्गकम् एवंहेतुकमित्यर्थः ॥

1. तस्यः अनन्त. मु.
2. त्वमाने धर्मोऽनि. मा.
3. तेनात्र. मा.
4. न तु. मा.

**प्रत्यक्षत्व[1]मदो हेतुः शेषं हेतुप्रसिद्धये ।**
**अस्मदादौ प्रसिद्धत्वाद् योग्यर्थमभिधीयते ॥ २१ ॥**

**प्रकृतेन च सम्बन्धः शेषाप्रामाण्यदर्शनात् ।**
**तदप्रामाण्यसिद्धेश्च सम्बन्धादेरनीक्षणात् ॥ २२ ॥**

**शक्यमन्याप्रमाणत्वमिति सूत्रैर्न[3] बध्यते ।**
**न च पर्यनुयोगोऽत्र लक्षणानुपयोगतः ॥ २३ ॥**

यदि हि लक्षणमुद्दिश्य लक्ष्यं विधीयते, तदा प्रत्यक्षलक्षणमर्थवद् भवति; अनिमित्तपरे तु सत्संप्रयोगजत्वविद्यमानोपलम्भनत्वाभ्यां तत्सिद्धेरपार्थकमिदमित्याशङ्क्याह—**प्रत्यक्षत्व[5]मदोहेतु**रित्यर्धेन । अनिमित्तप्रतिपादनपरेऽप्यप्रामाण्यप्रतिपादकहेतुद्वयसिद्ध्यर्थमित्यदोषः ।

नन्वेवमनिमित्तप्रतिपादकमपीदं सूत्रमनर्थ[6]कमेव अस्मदादिप्रत्यक्षस्य धर्मं प्रत्यप्रामाण्यस्य सिद्धत्वादित्याशङ्क्याह—**अस्मदादा**वित्यर्धेन ॥

अनिमित्तप्रतिपादनस्य तु 'चोदनैव धर्मे प्रमाणम्' इत्यनया प्रतिज्ञया सह सम्बन्धोऽस्तीत्याह—**प्रकृतेन** चेत्यर्धेन ।

नन्वनिमित्तप्रतिपादकेऽपि सूत्रे सति प्रत्यक्षवदनुमानादीनामनिमित्तप्रतिपादकं सूत्रान्तरं कर्तव्यमित्याशङ्क्याह—**तदप्रामाण्यसिद्धेरिति** । प्रत्यक्षस्यानिमित्तत्वे प्रतिपादिते सम्बन्धग्रहणापेक्षत्वेन तत्पूर्वकत्वादनुमानादीनामप्यप्रामाण्यं सिद्ध्यत्येवेति न पृथक्सूत्रमनुमानादीनामनिमित्तत्वप्रतिपादकं कर्तव्यमित्यर्थः ।

न चास्मिन् पक्षे लक्षणानुपयोगे पर्यनुयोगो वक्तव्यः । कस्मात्? अतत्परत्वादित्याह—**न च पर्यनुयोग** इत्यर्धेन ॥

1. मतो हेतुः. मा.
2. सिद्धिश्च. चौ, अनन्त. मु.
3. बाध्यते. मा.
4. प्रयोगत. अनन्त. मु.
5. मतो हेतुः. मा.
6. कत्वमेव. मा.

न च न्यूनातिरेकादिप्रसङ्गो लक्षणं प्रति ।
सर्वथा लोकसिद्धत्वाद् धर्मोऽयं तावदिष्यत ॥ २४ ॥

ततश्च मृगतृष्णादि न प्रत्यक्षं प्रसज्यते ।
अनिमित्तप्रसङ्गस्तु [1]तस्यापि विनिवार्यते ॥ २५ ॥

अतीतानागतेऽप्यर्थे सूक्ष्मे व्यवहितेऽपि च ।
प्रत्यक्षं योगिनामिष्टं कैश्चिन्मुक्तात्मनामपि ॥ २६ ॥

विद्यमानोपलम्भत्वमसिद्धं तत्र तान् प्रति ।
भविष्यत्त्वस्य [2]वा हेतोस्तद्ग्राह्यैर्व्यभिचारिता ॥ २७ ॥

मा भूतामिति तेनाह लोकसिद्धं सदित्ययम् ।
न लोकव्यतिरिक्तं हि प्रत्यक्षं योगिनामपि ॥ २८ ॥

अत एवाव्याप्त्यतिव्याप्ती नैवात्र भविष्यत इत्याह—**न च न्यूनातिरेके**त्यर्धेन । यतो नात्र सूत्रे लक्षणमुद्दिश्य लक्ष्यं विधीयते ; अपि तु यत् सत्सं[4]प्रयोगजम्, तद् धर्मं प्रत्यनिमित्तम् ; अस्ति चायं धर्मो लोकप्रसिद्धस्य प्रत्यक्षस्येत्याह—**सर्वथेत्यादि**सार्धेन ॥

ननु विद्यमानोपलम्भनत्वादप्रामाण्यमित्येतावतैवालम्, सत्संप्रयोगग्रहणमनर्थकमित्याशङ्क्याह—**अतीतानागत इति** सार्धश्लोकद्वयेन । अतीतानागतविषयत्वेन योगिप्रत्यक्षे विद्यमानोपलम्भनत्वस्यासिद्धत्वमाशङ्क्य तत्परिहारार्थम्, अत एव तद्ग्राह्यैर्भविष्यत्त्वस्य हेतोरनैकान्तिकत्वमाशङ्क्य तत्परिहारार्थं च सत्संप्रयोगग्रहणमर्थवद् भवतीति सार्धश्लोकद्वयस्यार्थः । तदयं प्रमाणार्थः—योगिप्रत्यक्षं विद्यमानोपलम्भनम्, सत्संप्रयोगजत्वादस्मदादिप्रत्यक्षवत् ।

यच्चाप्युक्तम्—"प्रत्यक्षत्वमदोहेतुः शेषं हेतुप्रसिद्धये" इति, तत्रापि प्रयोगमाह—**न लोकव्यतिरिक्त**मिति सार्धेन । तत्राप्ययं प्रयोगार्थः—योगिप्रत्यक्षं

1. तस्यापि न नि. मा.
2. वा. अनन्त. मु.
3. omitted हेतोः. मा.
4. प्रयोजकम्. मा.

प्रत्यक्षत्वेन तस्यापि विद्यमानोपलम्भनम् ।
सत्संप्रयोगजत्वं वाप्यस्मत्प्रत्यक्षवद् भवेत् ॥ २९ ॥

तेषामवर्तमानेऽर्थे या नामोत्पद्यते मतिः ।
प्रत्यक्षं सा ततस्त्वेव नाभिलाषस्मृतादिवत् ॥ ३० ॥

लोके चाप्यप्रसिद्धत्वात् प्रत्यक्षत्वप्रमाणतः ।
प्रतिभावद्द्वयासत्त्वं सदित्येतेन कथ्यते ॥ ३१ ॥

लौकिकी प्रतिभा यद्वत् प्रत्यक्षाद्यनपेक्षिणी ।
न निश्चयाय पर्याप्ता तथा स्याद् योगिनामपि ॥ ३२ ॥

अविद्यमानसंयोगात् स्याच्चेत् प्रत्यक्षधीः क्वचित् ।
भविष्यत्यपि धर्मे [1]स्याच्छक्तेत्याह सदित्ययम् ॥ ३३ ॥

विद्यमानोपलम्भनम्, सत्संप्रयोगजत्वे सति विद्य[2]मानोपलम्भनत्वात् अस्मदादि-प्रत्यक्षवदिति ॥

यदि चातीतानागतविषयं तदुच्यते, तदा तत एवाभिलाषस्मृतादिवत् तेषां तत्प्रत्यक्षमेव न भवतीत्याह—**तेषामिति** ॥

अथ प्रत्यक्षमेव सद्धर्मं प्रति प्रमाणम्, भवतु; किं प्रत्यक्षत्वेनेत्याशङ्क्याह—**लोके चाप्यप्रसिद्धत्वादिति** । तदयं प्रयोगार्थः—अप्रत्यक्षमप्रमाणं च योगि[3]ज्ञानम्, प्रत्यक्षत्वेन प्रमाणत्वेन च लोकेऽप्रसिद्धत्वात् प्रतिभावदिति । सत्संप्रयोगफलं चेदम्, सत्संप्रयोगजस्य लोके प्रत्यक्षत्वेन प्रमाणत्वेन च प्रसिद्धत्वात् । तदुक्तम्—"सदित्येतेन कथ्यते" इति ॥

इदानीं हेतोः साध्येनानुगमप्रदर्शनपूर्वकं पक्षधर्मतामाह—**लौकिकीति** ॥

यदि तु सत्संप्रयोगजत्वेन विद्यमानोपलम्भनत्वं न साध्यते योगिज्ञाने, तदा अयं दोषः स्यादित्याह—**अविद्यमानसंयोगादिति** ॥

1. स्याच्छक्तेत्याह. मा.
2. विद्यानोप्रत्यक्ष. मा.
3. ज्ञानप्रत्य. मा.

[1]प्रत्यक्षः [2]प्रागनुष्ठानान्न धर्मोऽनुष्ठितोऽपि वा ।
फलसाधनरूपेण तदानीं येन नास्त्यसौ ॥ ३४ ॥

अस्मत्प्रत्यक्षवच्चापि विद्यमानोपलम्भनम् ।
प्रत्यक्षं[6] योगिनां धर्मेऽप्रत्यक्षत्वाच्च नेष्यते ॥ ३५ ॥

अविद्यमानसंयोगात् प्रत्यक्षत्वनिराकृतिः ।
योगिनां केन लभ्येत नेष्टं सद्ग्रहणं यदि ॥ ३६ ॥

इदानीं भवतु नाम सत्संप्रयोगजत्वेन विद्यमानोपलम्भनत्वं प्रत्यक्षस्य, तथापि धर्मस्य विद्यमानत्वात् किमिति प्रत्यक्षगम्यत्वं न भवतीत्याशङ्क्याह—**प्रत्यक्ष इति** ॥

तदनुपपन्नम्; द्रव्यक्रियागुणादीनां श्रेयःसाधनत्वं नाम धर्मत्वम्; तच्चानुष्ठानात् प्रागुत्तरकालं च विद्यत एव। यो ह्यनुष्ठानात् प्रागुत्तरकालं च श्रेयःसाधनं [3]न, कस्तत्र निष्फले प्रवर्तते? न च फलभवनकाले श्रेयः[4]साधनतेति, तदानीं साधनस्य विनष्टत्वात्। यदि त्वप्रत्यक्षत्वं धर्मस्य वाच्यम्, [5]ततोऽपरं सत्संप्रयोगजत्वादेवोक्तम्। तस्मादेवं व्याख्येयम्—विधिरिह भावनायाः कार्यत्वमवगमयति। तच्च कालत्रयासंस्पृष्टम्; ताद्रूप्येण च सैव भावना धर्म इत्युच्यते। तस्माद् विद्यमानोपलम्भनस्य प्रत्यक्षस्यागोचरो धर्म इत्यर्थः। तदनेन प्रकारेण विध्यस[6]मानार्थतां प्रत्यक्षस्य दर्शयतीत्यनवद्यम् ॥

मा भूदस्मत्प्रत्यक्षस्य विधिविषयता, योगिप्रत्यक्षस्य भविष्यतीत्याशङ्क्याह—**अस्मदित्यादियोगिनामित्यन्तेन**। स चायमर्थः "न लोकव्यतिरिक्तं हि प्रत्यक्षं योगिनामपि" इत्यनेनोक्त एव स्मारितः। इदानीमभ्युपगम्यापि वर्तमानतां धर्मस्य, अगोचरत्वात् प्रत्यक्षेण न गृह्यते रसवच्चाक्षुषेणेत्याह—**धर्मेऽप्रत्यक्षत्वाच्च नेष्यत इति** ॥

एवं संप्रयोगशब्दं व्याख्यायाधुना सच्छब्दं व्याचष्टे—**अविद्यमानसंयोगादिति** ॥

1. प्रत्यक्षम्. मा.
2. ध्यायिनां धर्मे प्र. चौ, अनन्त. मु.
3. omitted न. मा.
4. धन......तदा. मा.
5. ततो वरं. मा.
6. मानार्थानाम्. मा.

[1]सप्तम्यैव तु लभ्येत सदर्थः कल्पना पुनः ।
परेषां वारणीयेति यतो जैमिनिना कृतः ॥ ३७ ॥

सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।
प्रयोग इन्द्रियाणां च व्यापारोऽर्थेषु कथ्यते ॥ ३८ ॥

दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात् ।
एवं सत्यनुवादत्वं लक्ष[2]णत्वेन संभवेत् ॥ ३९ ॥

ततश्चाप्राप्यकारित्वाद् यद् बौद्धैः श्रोत्रचक्षुषोः ।
लक्षणव्याप्तिसिद्ध्यर्थं संयोगो नेति कीर्त्यते ॥ ४० ॥

नन्वयमर्थः सप्तम्यैव तु लभ्यते, "यस्य च भावेन भावलक्षणम्" इति स्मरणादित्याशङ्क्याह—**सप्तम्येति** । सत्यमेवं ; सैव तु [3]सप्तमी सतिलक्षणेति ; परेषां सन्देहव्युदासार्थं सच्छब्दोपादानमिति ॥

इदानीं [4]संशब्दग्रहणस्य प्रयोजनमाह—**सम्यगर्थे** चेत्यर्धेन ॥

अधुना प्रयोगशब्दं व्याचष्टे—**प्रयोग** इत्यर्धेन ॥

अधुना संशब्दव्यावर्त्यं दर्शयति—**दुष्टत्वादि**त्यर्धेन । असम्बद्धत्वेन लक्षणपरत्वं न व्याख्यातं भाष्यकारेण, [5]ईदृशि त्ववयवार्थव्याख्याने लक्षणपरत्वेऽपि न दोष इत्याह—**एवं सती**त्यर्धेन ॥

ततश्च यदप्राप्यकारित्वाच्चक्षुश्श्रोत्रयोरव्यापकत्वं नाम दूषणमुक्तम्—अप्राप्यकारित्वं च सान्तराधिष्ठानार्थाधि[6]कार्थग्रहणेन ; नहि निरन्तरदेशे गन्धस्पर्शादौ सान्तरा प्रतिपत्तिरधिकार्थग्रहणं चेति, तदसद्व्याख्याने न भविष्यति ; यतो न संप्रयोगशब्देन संयोग इत्युच्यते, अपि तु व्यापारमात्रमित्याह—**ततश्चेति** सार्धश्लोकद्वयेन ।

1. सप्तम्यापि, चौ, अनन्त. मु.
2. णस्यापि. चौ, अनन्त. मु.
3. सप्तमीतिलक्षणेति. मा.
4. स...प्र. मा.
5. omitted ई. मा.
6. कारार्थ. मा.

प्राप्यग्रहण[1]पक्षे च सान्त[2]राग्रहणं किल ।
अधिष्ठानाधिकश्चार्थो न गृह्येत त्वगादिवत् ॥ ४१ ॥

व्यापारमात्रवाचित्वादविरुद्धं तदत्र नः ।
यदि वार्थार्जवस्थानं संप्रयोगोऽत्र वर्ण्यते ॥ ४२ ॥

योग्यतालक्षणो [3]वान्यः संयोगः कार्यलक्षितः ।
सांख्यादीन् वा विनिर्जित्य [4]प्राप्तिपक्षोऽत्र दूष्यताम् ॥ ४३ ॥

तयोश्च प्राप्यकारित्वमिन्द्रियत्वात् त्वगादिवत् ।
केचित् तयोः शरीराच्च बहिर्वृत्तिं प्रचक्षते ॥ ४४ ॥

चिकित्सादिप्रयोगश्च योऽधिष्ठाने प्रयुज्यते ।
सोऽपि तस्यैव संस्कार आधेयस्योपकारकः ॥ ४५ ॥

तद्देशश्चापि संस्कारः सर्वव्याप्त्यर्थ [5]इष्यते ।

कः पुनरसौ व्यापारः? अर्थस्य वा ऋजुदेशत्वेनावस्थानमिन्द्रियस्य वा योग्यतां [6]कार्यलक्षितां संप्रयोगशब्दो ब्रवीतीत्याह—**यदि वेति** ।

इदानीं संयोगमेव संप्रयोगशब्दस्यार्थमभ्युपगम्य साङ्ख्यमतेन परिहरति—**सांख्यादीन् वेति** । अयं प्रयोगार्थः—प्राप्यकारिणी चक्षुःश्रोत्रे, इन्द्रियत्वात् त्वगादिवदिति ।

कथं पुनः प्राप्यकारित्वमित्याशङ्क्याह—**केचिदित्यर्धेन** । केचिद्ग्रहणं श्रोत्रविषयम् । केचिदाहुः—श्रोत्रवृत्तिरेव शब्दसमीपं गच्छतीति । अपरेषां तु दर्शनम्—संयोगविभागादुत्पन्नः शब्दः शब्दान्तरारम्भक्रमेण श्रोत्रदेशं गच्छतीति ॥

यत्पुनरिदमुक्तम्—अधिष्ठानदेश एवेन्द्रियम्, तत्र चिकित्सादिप्रयोगादिति; तत्राह—**चिकित्सादीति** । अधिष्ठानसंस्कार एवासाविन्द्रियमुपकरोतीत्यर्थः ॥

एवं तर्हि तत्स्थाया एवेन्द्रियवृत्तेरुपकारकोऽसौ, बहिर्वृत्तेर्न प्राप्नोतीत्याशङ्क्याह—**तद्देशश्चेत्यर्धेन** ।

1. पक्षेऽपि. चौ, अनन्त. मु.
2. रग्रहणम्. मा.
3. वाच्यः चौ, अनन्त. मु
4. प्राप्तपक्षः. चौ, मु.
5. उच्यते. चौ, अशेन्त. मु.
6. कार्यलक्ष्यताम्. मा.

चक्षुराद्युप[1]कारस्तु पादादावपि दृश्यते ॥ ४६ ॥

तस्मान्नैकान्ततः शक्यं संस्कारात् तत्र वर्तनम् ।
बहिर्वृ[2]त्तिस्ततश्चेष्टा पृथ्वग्रा सन्ततापि च ॥ ४७ ॥

अधिष्ठानाधिकं तेन गृह्यते यत्र यादृशम् ।
पार्थवं वृत्तिभागे स्याद् दूरेऽपि ग्रहणं [3]तथा ॥ ४८ ॥

दीपप्रभा यथा [4]तस्मिन् विनश्यति विनश्यति ।
तथा बहिर्गताप्येषा मूलच्छेदाद् विनश्यति ॥ ४९ ॥

अधिष्ठानपिधाने [5]च [6]सत्यप्युच्छिन्नयत्नया ।
तयार्थोऽनुपनीतत्वादात्मना नानुभूयते ॥ ५० ॥

दृष्टं चैतदन्यत्र संस्कारोऽन्यत्र चोपकार इत्याह—**चक्षुरादीत्यर्धेन** ॥

तस्मादनैकान्तिको हेतुः । अधिष्ठानसमानदेश एवेन्द्रियम्, तत्र चिकित्सादिप्रयोगादित्याह—**तस्मान्नेत्यर्धेन** ।

यत्पुनरिदमुक्तम्—अधिष्ठानाधिकस्य ग्रहणं न प्राप्नोतीति, तत्राप्याह—**बहिर्वृत्तिरिति** सार्धेन ॥

नन्वेवं तर्हि बहिर्जातायां वृत्तौ यदाधिष्ठानविनाशः [7]तदापि ग्रहणं प्राप्नोतीत्याशङ्क्याह—**दीपप्रभेति** ॥

अधिष्ठानपिधाने तर्हि अविनष्टत्वान्मूलस्यार्थग्रहणं प्राप्नोतीत्याशङ्क्याह—**अधिष्ठानपिधाने चेति** ॥

अधिष्ठानापेक्षया च सान्तराप्रतिपत्तिरित्याह—**विच्छिन्न** इत्यर्धेन ।

1. कारश्च. चौ, अनन्त. मु.
2. तयोश्चेष्टा. चौ, अनन्त. मु.
3. यथा. अनन्त. मु.
4. तस्माद्विनश्यति.......मा.
5. तु. चौ, अनन्त. मु.
6. सत्याप्युच्छिन्नयत्नया. । योऽर्थो. मा.
7. तथापि. मा.

**विच्छिन्न इति बुद्धिः स्यादधिष्ठानमपेक्ष्य [1]तु ।**
**शब्दे त्वाधिक्यविच्छेदौ भ्रान्त्यैवोक्तावसंभवात् ॥ ५१ ॥**

**पुरुषेन्द्रियशब्दौ च व्यवधानेन कल्पितौ ।**
**पुरुषो लौकिको वा स्याद् यो वास्मिन् साधयिष्यते ॥ ५२ ॥**

**विक्रिया ज्ञानरूपास्य न नित्यत्वे विरोत्स्यते ।**

शब्दस्य तु नित्यत्वविभुत्वाभ्यामधिष्ठानाधिक्यं सान्तरत्वं च न भवतीत्याह—**शब्दे त्वित्यर्धेन** ॥

"सत्संप्रयोगे पुरुषस्य" इत्युच्यमाने पुरुषस्य सर्वगतत्वात् 'सत्संप्रयोगे' इत्यविशेषणम्, अव्यभिचारात् सर्वक्रियासाधारणत्वाच्च; "इन्द्रियाणां बुद्धिजन्म" इत्युच्यमान इन्द्रियचैतन्यप्रसङ्गादयुक्तमर्थद्वयमाशङ्क्याह—**पुरुषेन्द्रियशब्दावित्यर्धेन** । सत्संप्रयोग इन्द्रियाणां पुरुषस्य बुद्धिजन्मेत्यर्थः ।

कः पुनरत्र पुरुषोऽभिप्रेतः? यदि तावल्लौकिकः [2]कायः, तदा तस्याचेतनत्वात् कथं बुद्धिजन्म? अथात्मा, तत्रापि बुद्धावुत्पन्नायां तस्य विकार उत्पद्यते, न वा? तत्राविकृतिपक्षे पूर्ववदेवावस्थानप्रसङ्गः; उत्पत्तिपक्षेऽपि व्यतिरेके सति स एव दोषः; अव्यतिरेकपक्षेऽप्यात्मनोऽनित्यत्वप्रसङ्गः । तदुक्तम्—

> "बुद्धिजन्मनि पुंसश्च विकृतिर्यद्यनित्यता ।
> अथाविकृतिरात्मान्यः प्रमातेति न युज्यते ॥" इति ।

तदाशङ्क्याह—**पुरुष इत्यर्धेन** । अन्यपरत्वात् सूत्रस्य नात्र तात्पर्यमित्यर्थः ॥

[3]अथापि लक्षणपरत्वम्, तथापि न कश्चिद् दोष इत्याह—**विक्रियेत्यर्धेन** । बुद्धावुत्पन्नायामुत्पद्यत एवात्मनो ज्ञातृरूपो विकारः, तथापि नासौ नित्यत्वं विनाशयति, प्रत्यभिज्ञाप्रत्ययेनावस्थाद्वयेऽप्यनुसन्धानात्: स एवात्मा केनचिदात्मना नष्टः, केनचिदुत्पन्नः, केनचिदास्त इति; तथावभासनात् कुण्डलादिषु सर्पवदिति ।

1. च. चौ, अनन्त. मु.
2. कार्यः. मा.
3. अथ विलक्षण, मा.

बुद्धिजन्मेति चाप्याह जायमानप्रमाणताम् ॥ ५३ ॥

व्यापारः कारकाणां हि दृष्टो जन्मातिरेकतः ।
प्रमाणेऽपि तथा मा भूदिति जन्म विवक्ष्यते ॥ ५४ ॥

न हि तत् क्षणमप्यास्ते जायते वाप्रमात्मकम् ।
येनार्थग्रहणे पश्चात् व्याप्रियेतेन्द्रियादिवत् ॥ ५५ ॥

तेन जन्मैव विषये बुद्धेर्व्यापार [1]उच्यते ।
तदेव च प्रमारूपं तद्वती [2]करणं च धीः ॥ ५६ ॥

"बुद्धिजन्म प्रत्यक्षम्" इत्युक्तम् । तदनुपपन्नमिवाशङ्क्यते—बुद्धिर्वा जन्मशब्देनोच्यते, अर्थान्तरं वा ? तत्र बुद्धिपक्षे बुद्धिसमानार्थत्वादप्रयोगप्रसङ्गः ; अर्थान्तरपक्षेऽपि जन्मशब्दस्य तत् कीदृशम् ? अपरिभाषणाद् वैशेषिककल्पितस्य ग्रहणम् ; तैश्च जन्मशब्देन समवाय उच्यते, तस्य च नित्यत्वेनानक्षजत्वादप्रत्यक्षत्वप्रसङ्गः—इतीदमाशङ्क्य स्वमतेनाव्यतिरेकपक्षं तावदाह—बुद्धिजन्मेतिसार्धेन । [3]जायमाना बुद्धिः प्रमाणम् ; न भूता, नापि भाविनी । तदनेन प्रमाणेन कारकान्तरवैलक्षण्यं बुद्धेर्दर्शयति ; कारकान्तरं हि जन्मातिरेकेण व्यापारान्तरेण च प्रधानक्रियां निष्पादयति ; न तथा बुद्धेः कारकत्वमित्यर्थः ॥

कस्मादित्याह न हि तत्क्षणमपीति । यदि ह्यकारकरूपा बुद्धिरुत्पद्यते, उत्पन्ना [4]वा किञ्चिदन्तरमवतिष्ठेत, इन्द्रियादि[5]वदेवं स्यात् ; न तु तदुभयमप्यस्तीत्यर्थः । सामग्र्यन्तरनिषेधपरं चेदं क्षणिकत्वसङ्कीर्तनम् ; न तु क्षणिकत्वप्रतिपादनाय, विद्युदादिवदनिमिषदृष्टेर्बुद्धिगतयोरुत्पत्तिविनाशयोरप्रतिभासनात् । आशुतरविनाशमूला चेयं क्षणिकत्ववाचोयुक्तिर्ज्वालादिवत् तत्र तत्र द्रष्टव्या ; आशुतरं विनाशोऽपि कस्यांचिदवस्थायाम् , न सर्वत्रेति ॥

कः पुनरत्रावान्तरव्यापारः, का च प्रधानक्रियेत्याह—तेन जन्मैवेति ॥

1. इष्यते. चौ, अनन्त. मु.
2. करणधीः. मा.
3. ज्ञायमाना. मा.
4. वाकाङ्क्षादन्तर. मा.
5. वद्दैवम्. मा.

जन्म चाव्यतिरेकेण भाष्यकारेण वर्णितम् ।
तच्च भूतभविष्यत्वात् कृतं बुद्धेर्विशेषणम् ॥ ५७ ॥

यदाप्यौलूक्यसिद्धान्तात् समवायस्य जन्मता ।
[1]व्यक्तिस्तस्येन्द्रियाधीना तेन प्रत्य[2]क्षमुच्यते ॥ ५८ ॥

प्रमाणफल[3]भावश्च यथेष्टं परिकल्प्यताम् ।
सर्वथाप्यनिमित्तत्वं विद्यमानोपलम्भनात् ॥ ५९ ॥

[4]यद्वेन्द्रियं प्रमाणं स्यात् तस्य [5]वार्थेन सङ्गतिः ।
मनसो वेन्द्रियैर्योग आत्मना सर्व एव वा ॥ ६० ॥

इदमपि कारकान्तरवैलक्षण्यप्रतिपादनपरमेव व्याख्येयम् । कारकान्तरं ह्यवान्तरव्यापारेण प्रधानक्रियां निष्पादयति । इन्द्रियार्थसन्निकर्षोत्पन्नायास्तु बुद्धेरर्थप्रकाशस्वभावत्वान्नास्त्यवान्तरव्यापारः । अथावश्यमवान्तरव्यापारेणैव प्रयोजनम् ' तदा स एवार्थानुभावोऽवान्तरव्यापारः, स एव प्रधानक्रियेति एकत्वात् तस्य नात्र काष्ठज्वाला पाक इव कारकान्तरव्यापारः प्रधानक्रियायां योजनीयः ॥

भाष्यकारेणापि 'जायमाना बुद्धिः प्रत्यक्षप्रमाणम्'—इत्येवं वदतैवमेव जन्मशब्दो व्याख्यात इत्याह—जन्म चाव्यतिरेकेणेति ॥

अथापि परमतमप्रतिषिद्धमनुमतं भवतीति वैशेषिकः स्वकारणसत्तासम्बन्धः समवायो जन्मापतति, तथापि तस्य नित्यत्वेऽप्यक्षाधीना हि व्यक्तिः; व्यक्तेः प्रत्यक्षत्वमविरुद्धमित्याह—यदेति ॥

"बुद्धिर्वा जन्म वा सन्निकर्षो वा" इत्यादि भाष्यं, तद् व्याचष्टे—**प्रमाणफलभावश्चेति**। अनिमित्तपरं हीदं सूत्रम् ; अतो यद्यत् प्रमाणम् , तस्य तस्य विद्यमानोपलम्भनत्वाद् धर्मे प्रत्यप्रामाण्यं सिद्ध्यत्येवेति किमनेनावधारितेनेत्यर्थः ॥

तां यथेष्टतां दर्शयति—यद्वेन्द्रियमिति । इन्द्रियं वा प्रमाणम् , इन्द्रियार्थसन्निकर्षो वा, इन्द्रियमनः संयोगो वा, आत्ममनः संयोगो वा, सर्वसंयोगो वा ;

1. बुद्धिस्तत्रे. चौ, अनन्त. मु.
2. क्षामस्तुन्ते. चौ, मु.
3. भावस्तु. अनन्त. मु.
4. यश्चेन्द्रियम्. मा.
5. वाक्षेण. मा.

यदा ज्ञानं फलं तत्र व्यापाराच्च प्रमाणता ।
व्यापारो न यदा तेषां तदा नोत्पद्यते फलम् ॥ ६१ ॥

न च सर्वात्मनाक्षेण सम्बन्धोऽर्थस्य विद्यते ।
येन सर्वार्थबोधः स्यात् तत्प्रमाणाभिधायिनाम् ॥ ६२ ॥

[1]प्राप्तिमात्रं हि [2]संयोगो नेन्द्रियस्याभ्युपेयते ।
मा भूत् कारण[3]मात्रेण त्वचा रूपावधारणम् ॥ ६३ ॥

यथा प्रमाणनिष्पत्तौ योग्यत्वादिन्द्रियार्थयोः ।
नियता सङ्गतिर्हेतुः फलेऽप्येवं भविष्यति ॥ ६४ ॥

"आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन" इति संयोगत्रितयमेकं वा प्रमाणम्; यतः प्रमाणशब्दः करणवाची ; "साधकतमं करणम्"; तमबर्थश्चातिशयः; स चापेक्षित इति विवक्षावशेनात्रातिशयकल्पना । अतः प्रमाणविकल्पः पञ्चधा दर्शितः ॥

किं पुनस्तेषां प्रमाणत्वेन फलमित्याह—**तदा ज्ञानं फलमिति** । कथं पुनरेतेषां तत्र प्रमाणत्वमित्याशङ्क्याह—**तत्र व्यापाराच्च प्रमाणतेति** । तत्र तेषां व्यापारः कथमवगम्यत इत्याह—**व्यापार** इत्यर्धेन । तद्भावभावित्वं दर्शितम् ॥

नन्विन्द्रियार्थसन्निकर्षप्रमाणपक्षे सर्वात्मना अर्थस्येन्द्रियसन्निकृष्टत्वात् सर्वविषयफलोत्पत्तिप्रसङ्ग इत्याशङ्क्याह—**न च सर्वात्मनेति** । योग्यतालक्षण एव सन्निकर्षः; योग्यता च कार्यानुमेया; नियतं ज्ञानाख्यं कार्यमुपलभ्यमानं नियतामेव योग्यतामवगमयतीत्यर्थः ॥

यस्यापि ज्ञानं प्रमाणम्, इन्द्रियार्थसन्निकर्षः प्रमाणोत्पादकः; तेनापि योग्यतालक्षण एव सन्निकर्षो व्याख्येयः; अन्यथा सर्वविषयफलोत्पत्तिवत् सर्वविषयप्रमाणोत्पत्तिप्रसङ्ग [4]इत्याह—**प्राप्तिमात्रमिति** ॥

अतो यः प्रमाणातिप्रसक्तौ परिहारस्ते, स नोऽत्रापि भविष्यतीत्याह—**यथा प्रमाणेति** ॥

1. प्रमाणं हि. मा.
2. सम्बन्धः. चौ; अनन्त. मु:
3. मात्रेऽपि त्वया. मा.
4. इत्यपीह. मा.

योगस्य [1]द्व्याश्रयत्वेपि भवत्यन्यतराश्रयः ।
व्यपदेशोऽथ[2]वाप्यक्षं तत्रासाधारणं भवेत् ॥ ६५ ॥

संयोगे त्वात्ममनसोः स्याच्चेद् विषयभिन्नता ।
प्रमाणफलयोर्नासावर्थे हि व्यापृतं द्वयम् ॥ ६६ ॥

अथाप्याश्रय इष्टस्ते [3]विज्ञेयाविषयान्तरम् ।
आत्मस्थत्वेन विज्ञानं न भिन्नविषयं ततः ॥ ६७ ॥

प्रकृष्टसाधनत्वाच्च प्रत्यासत्तेः स एव नः ।
करणं तेन नान्यत्र कारके स्यात् प्रमाणता ॥ ६८ ॥

प्रमाणे सर्वसंयोगे दोषो नैकोऽपि विद्यते ।

उभयाश्रितत्वेऽपि सन्निकर्षस्य भवत्येकेन व्यपदेशो भेरीशब्दवत्, अथवाक्षस्यासाधारणत्वेनेत्याह—**योगस्येति** ॥

नन्वात्ममनः संयोगप्रमाणपक्षे प्रमाणफलयोर्विषयभेदः प्राप्नोति; आत्ममनः-[4]संयोगो ह्यात्ममनसोर्विषयः, फलं च ज्ञानाख्यं बाह्यार्थविषयम्; न चैतद् युक्तम्, क्रियाकारकयोरेकविषयत्वाभ्युपगमादिति स्वयमेवाशङ्कते—**संयोग** इत्यादिना **फलयोरि**त्यन्तेन । उत्तरेण परिहरति—**नासावर्थे हि व्यापृतं द्वयमिति** । अयमभिप्रायः—प्रमेयवचनो वा विषयशब्दः, आश्रयवचनो वा? तत्र प्रमेय[5]वचनं विषयपदमङ्गीकृत्य प्रमाणफलयोर्विषयैक्यमाह—**अर्थे हि व्यापृतं द्वयमिति** ॥

आश्रयवचनेऽपि विषयशब्दे विषयैक्यमाह—**अथापीति** । आत्ममनस्संयोगविज्ञानयोरुभयोरप्यात्माश्रितत्वान्नास्ति विषयभेद इत्यर्थः ॥

प्रत्युत ज्ञानाख्यां क्रियां प्रतीन्द्रियापेक्षया सन्निकृष्टत्वेन करणत्वादात्ममनः-संयोगस्यैव प्रामाण्यं युक्तम्, सन्निकृष्टं च उभयोरप्येकार्थसमवायादित्याह—**प्रकृष्टसाधनत्वाच्चेति** ॥

संयोगत्रितयप्रमाणपक्षे तु न सर्वविषयफलोत्पत्तिः, नापि विषयभेद इत्याह—**प्रमाण इत्यर्धेन** ।

1. व्याश्रय. मा.
2. वाप्रत्यक्षम्. मा.
3. न योगाद्वि. चौ, अनन्त. मु.
4. संयोगोऽस्यात्म. मा.
5. वाचिनं विषयमङ्गी. मा.

प्रमाणं त्विन्द्रियं यस्य तस्यैको विषयः स्फुटः ॥ ६९ ॥

प्रमाणफलते बुद्ध्योर्विशेषणविशेष्ययोः ।
यदा तदापि पूर्वोक्ता भिन्नार्थत्व[1]निवारणा ॥ ७० ॥

विशेषणे तु बोद्धव्ये यदालोचनमात्रकम् ।
प्रसूते निश्चयं पश्चात् तस्य प्रामाण्यकल्पना ॥ ७१ ॥

निश्चयो हि फलं तस्य[2] नासा[3]वालोचिते यदा ।
तदा नैव प्रमाणत्वं स्यादर्थानवधारणात् ॥ ७२ ॥

हानादिबुद्धिफलता प्रमाणं चेद् विशेष्यधीः ।

इन्द्रियप्रमाणपक्षे तु स्फुटमेव विषयैक्यमित्याह—**प्रमाणन्त्वित्यर्धेन** ॥

एवं तावत् [4]स्वपक्षे भिक्षुणोक्तानि दूषणानि परिहृत्य नैयायिकपक्षेऽपि परिहर्तुमाह—**प्रमाणफलते इति** । यद्यपि विशेष्ये प्रमेये विशेषणज्ञानं प्रमाणं विशेष्यज्ञानं च फलम्, तदुक्तम्—"समवायिनः [5]श्वैत्यात् श्वैत्यबुद्धेश्च श्वेते बुद्धिस्ते कार्यकारणभूते"—इत्येवं वदद्भिः, तथापि विशेषणज्ञानस्य विशेष्य एव व्यापृतत्वान्नास्ति विषयभेदः । तदुक्तम्—"तत्र व्यापाराच्च प्रमाणता" इति ॥

यदा तर्हि जिघृक्षितत्वेन विशेषणे प्रमेये तज्ज्ञानं प्रमाणम्, तदा किं फलमित्याशङ्क्याह—**विशेषण इति** सपादश्लोकेन । निर्विकल्पकज्ञानं प्रमाणम्, सविकल्पं फलमित्यर्थः ।

यदा तर्हि निर्विकल्पकज्ञानानन्तरं सविकल्पकं नोत्पद्यते, तदा किं फलमित्याशङ्क्याह—**नासाविति** पादत्रयेण । तत्र केचिदाहुः—अनुपपन्न एवायमर्थः; यतः सविकल्पकं ज्ञानमन्तरेण निर्विकल्पकं ज्ञानमुत्पद्यमानं प्रामाण्यमासादयत्येव । तदियमग्रन्थज्ञस्य परिचोदना, नैयायिकमतमेतदित्यादावेवोक्तं यतः ॥

यदा तर्हि विशेषज्ञानं प्रमाणं तदा किं फलमित्याशङ्क्याह—**हानादिबुद्धिफलतेत्यर्धेन** ।

1. निराक्रिया. चौ, अनन्त. मु.
2. स्तु फलं तत्र. चौ. अनन्त. मु.
3 वालोकिते. मा. चितो. चौ, अनन्त. मु.
4. एक्षेदि....नि, मा.
5. श्वैत्यार्थश्वैत्य. मा.

उपकारादिसंस्मृत्या व्यवायश्चेदियं फलम् ॥ ७३ ॥

विषयैकत्वमिच्छंस्तु यः प्रमाणं फलं वदेत् ।
साध्यसाधनयोर्भेदो लौकिकस्तेन [1]बाधितः ॥ ७४ ॥

छेदने खदिरप्राप्ते पलाशे न च्छिदा यथा ।
तथैव परशोर्लोके छिदया सह नैकता ॥ ७५ ॥

भवते भेदहानेन रुचिता विषयैकता ।
तत्त्यागेन परेभ्यस्तु भेदो रुचिमुपागतः ॥ ७६ ॥

करणत्वोपचारस्तु [2]फले चेत् कल्प्यते त्वया ।

ननु हानादिबुद्धय उपकारादिस्मरणव्यवहिताः कथं फलत्वेनोच्यन्त इति स्वयमेवाशङ्क्याह—**उपकारादीत्यर्धेन** । उपकारसंस्मरणमेव फलं सर्वथास्ति प्रमाणाद् भिन्नं फलमित्यर्थः ॥

एवं मीमांसकपक्षे नैयायिकपक्षे च प्रमाणफलयोर्भेदं विषयैक्यं चोक्त्वा इदानीं बौद्धपक्षे प्रमाणफलभावं दूषयति । तत्र सौत्रान्तिकपक्षे तावद् दूषणमाह—**विषयैकत्वमिति** ॥

योऽपि प्रमाणफलयोर्विषयैकत्वमिच्छन्नेवमाह—"बाह्योऽर्थः प्रमेयं विज्ञानं फलं तदेव च प्रमाणम् । तदुक्तम्—

सव्यापारप्रतीतत्वात् प्रमाणं फलमेव सत् ।"

इति; अनेन क्रियाकारकयोरैक्याभ्युपगमेन लोकप्रसिद्धिर्बाधितैव, तयोर्विषयैक्यवत् स्वतो भेदोऽपि लोकप्रसिद्ध एवेत्याह—**छेदन इति** ॥

तत्र तयोर्लोकप्रसिद्धभेदपरित्यागेन विषयैक्यवदभ्युपगतं भवद्भिः; अस्माभिस्तु विषयैक्यपरित्यागेन लोकप्रसिद्धयोस्तयोर्भेदोऽभ्युपगत इत्यावयोः साम्यमेवेत्याह—**भवते भेदहानेनेति** ॥

ननु प्रमाणफलयोरौपचारिकस्तैरभ्युगत एव भेदः । अस्मत्पक्षेऽपि तर्हि विषयैक्यमौपचारिकं भविष्यतीत्याह—**करणत्वोपचारस्त्विति** ॥

1. बोधितः अनन्त. मु.  2. फल. चौ, मु.

**कथञ्चिद् विषयैकत्वं परैर्वा किं न कल्प्यते ॥ ७७ ॥**

**परिच्छेदफलत्वेन वृत्तस्यानन्तरस्य नः ।**
**[1]करणत्वं भवेज्ज्ञाने प्रमाणे तु परं फलम् ॥ ७८ ॥**

**स्वसंवित्तिफलत्वं तु तन्निषेधान्न युज्यते ।**
**प्रमाणे विषयाकारे भिन्नार्थ[2]त्वान्न मुच्यते ॥ ७९ ॥**

**स्वाकारश्च स्वसंवित्तिं मुक्त्वा नान्यः प्रतीयते ।**
**प्रामाण्यं यस्य कल्प्येत स्वसंवित्तिफलं प्रति ॥ ८० ॥**

असत्पक्षे च यदीन्द्रियादीनां प्रमाणत्वम्, ज्ञानं फलम्, तदा प्रमाणफलयोः भेदः स्पष्ट एव; ज्ञानप्रमाणपक्षेऽपि हानादीनां फलत्वादस्त्येव प्रमाणफलयोर्भेद इत्याह—**परिच्छेदफलत्वेनेति** ॥

येऽपि सौत्रान्तिकपक्षमेवं व्याचक्षते—बाह्योऽर्थः प्रमेयम्, विज्ञानस्य विषयाकारता प्रमाणम्, स्वसंवित्तिः फलमिति; तत्रापि दूषणमाह—**स्वसंवित्ती-त्यर्धेन** । "ज्ञाते त्वनुमानादवगच्छति" इत्यत्र स्वसंवित्तेर्निराकरिष्य[3]माणत्वादि-त्यर्थः । अपि च सा स्वसंवित्तिः किं विज्ञानाद् भिन्ना, अहोस्विदभिन्ना? यदि तावदभिन्ना, ततः पुनरपि प्रमाणफलयोरैक्यप्रसङ्गः; अथ भिन्ना, तत्रापि स्वदर्शन-हानिप्रसङ्गः, "अपरसाधनमेकं [4]स्वसंवित्तं ज्ञानतत्त्वम्" इत्यभ्युपगमात् । अभ्यु-पेत्यापि तु भेदमाह—**प्रमाण** इत्यर्धेन । विषयाकारता हि विषयविषया तत्र व्यापारः; स्वसंवित्तिस्तु विज्ञानविषयेति भिन्नविषयता ॥

एवं सौत्रान्तिकपक्षे प्रमाणफलभावं निराकृत्येदानीं योगाचारपक्षेऽपि निरा-करिष्यन्नाह—**स्वाकारश्चेति** । तेषां चैतद् दर्शनम्—बाह्यार्थो नास्ति; विज्ञानस्य विषयाकारता प्रमेया; स्वाकारता प्रमाणम्; स्वसंवित्तिः फलमिति । तदुक्तम्—

"यदाभासं प्रमेयं तत् प्रमाणफलते पुनः ।
ग्राहकाकारसंवित्त्योस्त्रयं नातः पृथक् कृतम् ॥" इति ।

1. प्रमाणत्वं चौ, अनन्त. मु.
2. त्वान्न युज्यते. चौ, अनन्त. मु.
3. माणादित्यर्थः. मा.
4. स्वसंवित्तंज्ञान. मा.

**स्वाकारस्य परिच्छेदो न चाकारान्तराद् विना ।**
**तस्याप्येवं तथा च स्यान्नाकारान्तः कदाचन ॥ ८१ ॥**

**न चासञ्चेतितः सत्तां स्वाकारः प्रतिपद्यते ।**
**ग्राह्ये च विषयाकारे ग्राहकोऽन्यो न लभ्यते ॥ ८२ ॥**

**मनसस्त्विन्द्रियत्वेन प्रत्यक्षा धीः सुखादिषु ।**
**मनसा संप्रयुक्तो हि [1]तानात्मा प्रतिपद्यते ॥ ८३ ॥**

अपि च यो विषयाकारतायां प्रमेयायां स्वाकारस्य प्रामाण्यमिच्छति, स विकल्प्य प्रष्टव्यः—किमसौ स्वाकारः सञ्चेतितो विषयाकारं प्रतिपादयति? उतासञ्चेतितः? तदापि स्वसंवित्तिः? आहोस्विदाकारान्तरेण प्रतिपन्नः? इति। तत्र यदि तावदनन्तरः पक्षः, तत्रानवस्थामाह—**स्वाकारस्येति** ॥

अप्रतिपन्नस्तु सत्तामेव न लभते, कुतस्तस्य प्रामाण्यमित्याह—**न चेत्यर्धेन**। अथ स्वसंवित्तोऽनुभवाकारः प्रमाणम्; तत्र विषयाकारता किं स्वसंवित्ता, उत न? तत्र यदि स्वसंविन्ना, तत उभयोर्विषयकारानुभवाकारयोः स्वसंविन्नयोः नीलपीतयोरिव परस्परतः प्रमाणप्रमेयत्वहानिः; अथासंविन्नो विषयाकारः, ततः "अपरसाधनमेकं ज्ञानतत्त्वम् इति" प्रतिज्ञा हीयेत; जडात्मकस्य विषयाकारस्याजडात्मकेनानुभवाकारेण प्रतीयमानत्वान्मीमांसकपक्षगातप्रसङ्गः; न चेदृशी प्रतिपत्तिः, यदुत अप्रकाशे ग्राह्ये स्वयंप्रकाशो ग्राहकः इति, युष्माभिरेवाङ्गीकृतेत्याह—**ग्राह्ये चेत्यर्धेन** ॥

नन्वेवमपि सुखादिविषयं यद् विज्ञानं तस्य प्रत्यक्षत्वं न प्राप्नोति, इन्द्रियार्थसन्निकर्षोत्पन्नत्वाभावात्। यत् प्रत्यक्षस्य लक्षणं तस्यभावादव्यापकत्वं लक्षणस्येत्याशङ्क्याह—**मनसस्त्विति** ॥

1. नान्यात्मा. चौ, अनन्त. मु.

**सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना ।**
**सामान्यं वा विशेषो वा ग्राह्यं नातोऽत्र [1]कथ्यते ॥ ८४ ॥**

**लक्षणं यच्च यैरुक्तं प्रत्यक्षे लौकिके सति ।**
**विद्यमानोप[2]लम्भत्वात् सर्वस्यैवानिमित्तता ॥ ८५ ॥**

**निर्विकल्पकपक्षे तु सुतरामनिमित्तता ।**
**साध्यसाधनसम्बन्धो नाविकल्प्य हि गृह्यते ॥ ८६ ॥**

**कथं प्रत्यक्षपूर्वत्वमनुमानादिनो भवेत् ।**
**यदा स्मृत्यसमर्थत्वान्निर्विकल्पेन्द्रियस्य धीः ॥ ८७ ॥**

नन्वेवमपि विषयाकथनादसंपूर्णमिदं लक्षणमित्याशङ्क्याह—**सम्बद्धमिति** । प्रतिभासमानत्वेन [3]सुज्ञानत्वात् न कथ्यत इत्यर्थः ॥

अभ्युपगम्य लक्षणपरत्वमस्माभिः समर्थितम्; इदानीं प्रकृतमनिमित्तपरत्वमुपसंहरन्नाह—**लक्षणमिति** ॥

ननु सत्संप्रयोगजत्वेन नैयायिकादिलक्षितस्य विद्यमानोपलम्भनत्वादनिमित्तत्वं भवतु; बौद्धलक्षितस्य तु कल्पनारहितस्य कथं तदित्याशङ्क्याह— **निर्विकल्पकपक्षे त्विति** । विकल्पगोचरोऽयमित्यभिप्रायः ॥

प्रत्यक्षद्वारत्वाच्चानुमानोपमानार्थापत्तीनामप्यकारणत्वम्" इति भाष्यम् । तस्यायमर्थः—अनुमानोपमानार्थापत्तीनामिति धर्मिनिर्देशः, धर्मं प्रत्यकारणत्वमिति साध्यो धर्मः, प्रत्यक्षद्वारत्वादिति हेतुः । तद् दूषयितुमाह—**कथं प्रत्यक्षपूर्वत्वमिति** । अयमभिप्रायः—सविकल्पकं निर्विकल्पकं च विज्ञानम् । तत्र निर्विकल्पकमेवेन्द्रियजम्, अर्थसामर्थ्येनोत्पद्यमानत्वात् प्रत्यक्षस्य, सविकल्पकं तु स्मृतशब्दसंयोजनद्वारेणोत्पद्यते । न चास्मृतः शब्दः शक्यो योजयितुम् । न चेन्द्रियस्य स्मरणादौ सामर्थ्यं नापि योजनायाम् । तदुक्तम्—"न हीदमियतो व्यापारान् कर्तुं समर्थम्" इति ।

1. कल्प्यते. चौ, अनन्त. मु.
2. लम्भित्वात्. चौ. मु.
3. सुज्ञातत्वात्. मा.

**न चाविकल्प्य लिङ्गस्य लिङ्गिसम्बन्धयोस्तथा ।**
**गृहीतिरुपमानेऽपि सादृश्यग्रहणात् स्मृतः ॥ ८८ ॥**

**अर्थापत्तिः पुनः प्रायो नान्यदृष्टेऽर्थ इष्यते ।**
**प्रवर्तते च यं दृष्ट्वा सोऽप्यर्थः सविकल्पकः ॥ ८९ ॥**

**यत्र चानुमितं लिङ्गं सूर्यगत्यादि लिङ्गि च ।**
**तत्र प्रत्यक्षपूर्वत्वं कथमध्यवसीयते ॥ ९० ॥**

भवतु निर्विकल्पकमेव प्रत्यक्षम्; तत्पूर्वत्वमेवानुमानादीनां भविष्यति यथोक्तम्—"तत्र दर्शनं प्रत्यक्षतोऽनुमानतो वा" इत्याशङ्क्याह—**न चेत्यादि-गृहीतिरन्तेन** । लिङ्गं लिङ्गिनं सम्बन्धं च प्रत्यक्षेण गृहीत्वानुमानमुत्पद्यमानं प्रत्यक्ष-पूर्वकमित्युच्यते, न च लिङ्गलिङ्गिनोः सामान्यरूपत्वात् स्वलक्षणविषये निर्विक-ल्पकेन ग्रहणमित्यर्थः । नोपमानस्यापि प्रत्यक्षपूर्वकत्वमित्याह—**उपमानेऽपि सादृश्यग्रहणात् स्मृत इति** । प्रत्यक्षविषये चोपमानमुत्पद्यमानं प्रत्यक्षपूर्वकमि-त्युच्यते? प्रत्यक्षगृहीतमुपमानज्ञानमुत्पादयतीति वा? न तदुभयमप्यस्ति । तत्र स्मृत इति प्रत्यक्षविषयतां दर्शयति । सादृश्यग्रहणादित्यनेनाप्यवस्तुत्वात् सादृ-श्यस्य निर्विकल्पकप्रत्यक्षाविषयतां दर्शयति । तस्मादुपमानेऽपि प्रत्यक्षपूर्वकत्वं नास्तीत्यर्थः ॥

एवमर्थापत्तेरप्युभयथापि प्रत्यक्षपूर्वकत्वं नास्तीत्याह—**अर्थापत्तिरित्यर्धेन** । तत्र प्रायोग्रहणं शक्त्यादिविषयम्। यच्च श्रुतार्थापत्त्या तार्तीयश्रुत्यादिकल्पनमिति, यच्चानुपपद्यमानं दृष्ट्वा अर्थापत्तिज्ञानमुत्पद्यते, तस्यापि सविकल्पकप्रत्यक्षगोचर-त्वान्न निर्वि[1]कल्पकेन प्रत्यक्षेण ग्रहणमित्याह—**प्रवर्तत इत्यर्धेन** ॥

एवं तावत् प्रत्यक्षपूर्वकत्त्वादित्यस्य हेतोरसिद्धत्वमुद्भावितं श्लोकत्रयेण । इदानीमभ्युपगम्यापि सविकल्पकस्य प्रत्यक्षत्व भागासिद्धतां दर्शयितुमाह—**यत्र चानुमितमिति** । अनुमितानुमानेन लिङ्गालिङ्गिनोरुभयोरपि प्रत्यक्षाविषयत्वान्नास्ति प्रत्यक्षपूर्वकत्वमित्यर्थः ॥

1. कल्पके प्रत्य. मा.

प्रत्यक्षावगते चार्थे कृतस्नेषां प्रमाणता ।
तैर्यदा[1] संप्रतीयेत तदा नाक्षस्य गोचरः ॥ ९१ ॥

अथ कस्यचिदर्थस्य ज्ञानात् तत्पूर्वता भवेत् ।
तदार्थस्य भविष्यत्त्वं न स्यादज्ञानकारणम् ॥ ९२ ॥

वर्तमाने हि कस्मिंश्चिद् विज्ञातेऽर्थेऽक्षबुद्धिभिः ।
लिङ्गादविद्यमानोऽपि धर्मो गम्येत तैस्तदा ॥ ९३ ॥

प्रत्यक्षेण गृहीत्वा च वर्णान् वेदेऽपि गृह्यते ।
प्रमेयमिति सोऽपि स्यात् तत्पूर्वत्वादकारणम् ॥ ९४ ॥

केचित् तत्पूर्वकत्वं तु हेतुर्नैवेति मन्वते ।
तत्पूर्वकत्वाद् यत्तावत् प्रमाण्यं तदसम्भवः ॥ ९५ ॥

अपि च, प्रत्यक्षप्रमिते वस्तुन्युत्पद्यमानत्वादनुमानादीनां प्रत्यक्षपूर्वकत्वम् ? प्रत्यक्षगृहीतमुत्पादयतीति वा ? पूर्वस्मिन् पक्षेऽसिद्धतामाह—**प्रत्यक्षावगते चेति**। **सन्निकृष्टविषयत्वात्** [2]प्रत्यक्षस्य असन्निकृष्टार्थविषयत्वादनुमानादीनाम् । तदुक्तम्—"**असन्निकृष्टेऽर्थे** बुद्धिः" इति ॥

उत्तरपक्षेऽपि प्रत्यक्षपूर्वकमपि भविष्यद्विषयं भविष्यति भस्मदर्शनादतीताग्निविषयानुमानवत्; ततश्च भविष्यत्त्वाद् धर्मस्य न प्रत्यक्षेण ग्रहणम्, नापि तत्पूर्वकत्वादनुमानादिभिः—इतीदमयुक्तमित्याह—**अथ कस्यचिदिति श्लोकद्वयेन** ॥

ईदृशे प्रत्यक्षपूर्वकत्वे विरुद्धतापि हेतोरित्याह—**प्रत्यक्षेणेति**। इष्टविघातकृल्लक्षणश्चायं विरुद्धः ॥

एवं स्वदूषितं भाष्यं समर्थयितुमाह—**केचिदित्यर्धेन**। हेतोः [3]प्रयोगे सति असिद्धत्वादय उद्भाव्येरन्, न त्वयं 'प्रत्यक्षपूर्वकत्वात्' इति हेतोः प्रयोगः। हेतुप्रयोगमन्तरेण कस्तर्ह्येतस्य प्रत्यक्षद्वारत्वादिति भाष्यस्यार्थ इत्याशङ्क्याह—**तत्पूर्वकत्वादित्यर्धेन**। तदिदं परस्परपराहतम्—यदेव तु निषिद्धं प्राक्तनेन,

1. स प्रतीयेत. चौ, अनन्त. मु.
2. प्रत्यक्षसन्नि. मा.
3. अप्रयोगे. मा.

प्रत्यक्षेण गृहीत्वा च लिङ्गाद्यन्यतमं ध्रुवम् ।
प्रवृत्तिरनुमानादेर्न च धर्मेऽस्ति तादृशम् ॥ ९६ ॥

अनुमानानुमानादेः न चाप्यस्तीह सम्भवः ।
[1]सम्बन्धलिङ्गिलिङ्गानां पूर्वसिद्धेरसम्भवात् ॥ ९७ ॥

सत्ता च नानुमानेन कस्यचित् प्रतिपद्यते ।
धर्मेणान्यद् विशेष्यं चेत् पक्षोऽसिद्धविशेषणः ॥ ९७ ॥

तस्माददृष्टपूर्वत्वात् केनचिद् वस्तुना सह ।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत् ॥ ९९ ॥

पुनरपि तदेवाभ्युपगतमुपरितनेन । तस्मादयमभिप्रायः—न धर्मे प्रत्यप्रामाण्ये साध्ये प्रत्यक्षद्वारत्वादित्ययं हेतुरुपदिश्यते, अपि तु यत् प्रत्यक्षपूर्वकत्वेन प्रामाण्यमित्येतदनूद्य तस्य धर्मे प्रत्यसम्भव इत्येतदत्र विधीयत इत्यर्थः ॥

कस्मात् प्रत्यक्षपूर्वकत्वेन यत्प्रा[2]माण्यं तस्य धर्मे प्रत्यसम्भव इत्याशङ्क्याह—**प्रत्यक्षेणेति** ॥

अनुमितानुमानस्यापि पारम्पर्येण प्रत्यक्षपूर्वकत्वाद् धर्मे प्रत्यसम्भव इत्याह—**अनुमानानुमानादेरिति** ॥

अपि च स्वतन्त्रस्य वा धर्मस्यानुमेयत्वम्? अस्ति धर्मः—इत्यन्यविशेषणस्य वा? न तावत् स्वतन्त्रस्येत्याह—**सत्तेत्यर्धेन**। सत्तायां हि साध्यायां भावधर्मस्य वा हेतुत्वं स्यात्? अभावधर्मस्य वा? उभयधर्मस्य वा? तत्र भावधर्मस्यासिद्धत्वम्, अभावधर्मस्य विरुद्धत्वम्, उभयधर्मस्यानैकान्तिकत्वमित्येषोऽभिप्रायः। अथ धर्मवानयं पुरुषः—इत्येवं साध्यते, तत्राप्यसिद्धविशेषणत्वं पक्षस्येत्याह—**धर्मेणेत्यर्धेन** ॥

अमुमेवार्थं त्रैलक्षण्येनोपनिबध्नाति स्म । तत्रानुमानोपमानसम्बन्धिप्रयोगद्वयमाह **तस्मादित्यादिना** श्लोकद्वयेन । धर्म इति धर्मिनिर्देशः, अनुमेयत्वोपमेयत्वाभावः साध्यो धर्मः, अदृष्टपूर्वत्वाददृष्टसदृशत्वादिति यथासङ्ख्येन हेतुद्वयम्, असाधारणवदिति दृष्टान्तः ॥

1. सम्बन्धि. अनन्त. मु. 2. माण्यं धर्मे तस्य. मा.

**अदृष्टसदृशत्वाच्च स्वयं चानुपलम्भनात् ।**
**धर्मस्य नोपमेयत्वमसाधारणवद् भवेत् ॥ १०० ॥**

**नन्वर्थापत्तिरेवं स्याज्जगद्वैचित्र्यदर्शनात् ।**
**सुखिदुःख्यादिभेदो हि नादृष्टात् कारणादृते ॥ १०१ ॥**

**दृष्टस्य व्यभिचारित्वात् तदभावेऽपि सम्भवात् ।**
**सेवाध्ययनतुल्यत्वे दृष्टा च फलभिन्नता ॥ १०२ ॥**

**स्यादेवं यदि शक्येत स्वाभाविकनिवारणा ।**
**[1]धर्मशक्तेश्च वैचित्र्ये हेतुरन्यो भवेद् यदि ॥ १०३ ॥**

**[2]यथा वा फलवैचित्र्ये कर्मणां शक्तता स्वतः ।**
**[3]तथा विचित्रता लोके स्वभावादुपपत्स्यते ॥ १०४ ॥**

ननु जगद्वैचित्र्यान्यथानुपपत्त्या प्रतीयत एव धर्मः, किमित्यर्थापत्तिगम्यो न भवतीत्याह—**नन्वर्थापत्तिरेवमिति** ॥

सुखदुःखादिभेदेन कदाचित् जगद्वैचित्र्यमनुपपद्यमानं विलक्षणमदृष्टं कल्पयति । न च सेवाध्ययनादि दृष्टं कारणं जगद्वैचित्र्योपपादकम्, व्यभिचारादित्याह—**दृष्टस्य व्यभिचारित्वादिति** ॥

एवं नैयायिकमतमुपन्यस्य लोकायतदर्शनाभ्युपगमेन परिहारमाह—**स्यादेवमित्यर्धेन** । स्वभावत एव कानिचित् कारणानि सुखिरूपं पदार्थमुपजनयन्ति, कानिचित् दुःखिरूपम्; किमदृष्टकल्पनयेत्यर्थः । अवश्यं चायं स्वाभाविकपक्षोऽदृष्टवादिनाऽप्यभ्युपगन्तव्य इत्याह—**धर्मशक्तेश्चेत्यर्धेन** ॥

अदृष्टमपि जगद्वैचित्र्योपपादकं विचित्रमेवाभ्युपगन्तव्यम् । तच्चापि वैचित्र्यमदृष्टस्य स्वाभाविकम्, अदृष्टान्तरकल्पनायामनवस्थाप्रसङ्गात् । एवं च सति जगद्वैचित्र्यमेव स्वाभाविकं भविष्यतीत्यपार्थकमदृष्टकल्पनमित्याह—**यथावेति** ॥

इदानीमभ्युपगम्याप्यदृष्टमात्रे प्रत्यर्थापत्तेः प्रामाण्यं अदृष्टविशेषाभिप्रायेण "अथातो धर्मजिज्ञासा" इत्युक्तम् । तत्रैव च प्रत्यक्षाद्यनुप्रवेशव्यवच्छेदेन चोद-

1. कर्म. चौ, अनन्त. मु.
2. वथा. च. चौ, अनन्त. मु.
3. तथापि. चि. चौ, मु.

**अधर्मे धर्मरूपे वा ह्यविभक्ते फलं प्रति ।**
**किमप्यस्तीति विज्ञानं नराणां कोपयुज्यते ॥ १०५ ॥**

**किं नु यागादितो दुःखं हिंसादेः किं सुखोद्भवः ।**
**स्वर्गपुत्रादिभेदश्च कीदृशात् कर्मभेदतः ॥ १०६ ॥**

**इति यावदविज्ञानं तावन्नैव प्रवर्तते ।**
**प्रवृत्त्यङ्गं च यज्ज्ञानं तस्य मूलं प्रतीक्ष्यते ॥ १०७ ॥**

**तस्मात् सिद्धेऽपि सामान्ये विशेषो नागमादृते ।**
**विशेषस्य तु जिज्ञासा सूत्रकारेण सूत्रिता ॥ १०८ ॥**

**गम्यमाने विशेषे च तदन्तर्भावकारितः ।**
**सामान्यप्रत्ययोऽपि स्याच्छास्त्रादेवेत्यकारणम् ॥ १०९ ॥**

**यथार्थापत्तिरेवं च नानुमा नोपमेष्यते ।**
**शास्त्रं चेत् तदपेक्षेत तस्यैव स्यात् प्रमाणता ॥ ११० ॥**

**प्रत्यक्षाग्रहणं यत्तु लिङ्गादेरविकल्पनात् ।**

नायाः प्रामाण्यं प्रतिज्ञातम्—"चोदनालक्षणोऽर्थो धर्मः"—इति, तस्यैव प्रवृत्त्यङ्गत्वात् । तत्र च नार्थापत्तेः प्रामाण्यमित्येतत् श्लोकचतुष्टयेनाह—**अधर्म इत्यादिना** ॥

यदा च विशेषे चोदना प्रमाणं तदा तदन्तर्गतत्वेनादृष्टमात्रेऽपि सैव प्रमाणम्, यदि तेन प्रयोजनमित्याह—**गम्यमान इति** ॥

एवमनुमानोपमानोयोरर्थापत्तिवददृष्टविशेषं प्रति शास्त्रापेक्षित्वादकारणत्वमित्याह **यथार्थापत्तिरिति** ॥

एवं तावत् प्रत्यक्षद्वारत्वादिति भाष्यं परमतेन व्याख्यायाधुना स्वमतेन व्याचष्टे—**प्रत्यक्षग्रहणमित्यर्धेन** ॥

प्रयोगसमर्पकमेवेदं भाष्यम् । अयं प्रयोगार्थः—अनुमानोपमानार्थापत्तीनामिति धर्मिनिर्देशः, धर्मं प्रत्यकारणत्वमिति साध्यो धर्मः, प्रत्यक्षद्वारत्वादिति हेतुः ।

"प्रत्यक्षग्रहणं यत्तु लिङ्गादेरविकल्पनात्" इति ।

**तन्नेष्टत्वाद् विकल्पस्याप्यर्थरूपोपकारिणः ॥ १११ ॥**

**अस्ति ह्यलोचनाज्ञानं प्रथमं निर्विकल्पकम् ।**
**बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥ ११२ ॥**

ततश्चासिद्धो हेतुरिति युक्तम्; तस्य कः परिहारस्तत्राप्याह—**तन्नेष्टत्वादित्यर्धेन** । सविकल्पस्याप्यर्थरूपोपकारिणः प्रत्यक्षत्वेनेष्टत्वान्नासिद्धत्वं हेतोः । तत्रार्थरूपोपकारिणः इत्यनेन भ्रान्तिस्मृतिज्ञानयोः व्यवच्छेदं करोति; ते हि नार्थरूपमुपकुरुतः, एकत्र विपरीतप्रतिभानात्, अन्यत्र च गृहीततया प्रतिभासेन पूर्वप्रमाणशेषत्वात् ॥

इदानीं निर्विकल्पकमस्तित्वेन प्रमाणत्वेन च साधयितुमाह—**अस्ति हीति** । ननु सविकल्पकं विज्ञानमाक्षिप्तं तदेव च साध्यत्वेन प्रतिज्ञातम्; तदनन्तरं निर्विकल्पकज्ञानसाधनमसम्बन्धमुच्यते । अपिशब्दात् तस्यापि प्रतिज्ञानात् तेन च विना सविकल्पकस्यानुत्पत्तेः सद्भावादारभ्य विप्रतिपत्तेश्च नासम्बन्धत्वम् । तथाचाहुः—

"[1]न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते" ॥ इति ।

तत्रास्तीत्यनेन संवेदनसद्भावे प्रमाणमाह; संवेद्यगतं हि शब्दसंजल्परहितमर्थसंवेदनम् । तथा चोक्तमन्यैरपि—

"संहृत्य सर्वतश्चिन्तां स्तिमितेनान्तरात्मना ।
स्थितोऽपि चक्षुषा रूपमीक्षते साक्षजा मतिः" ॥ इति ।

आलोचनज्ञानमित्यनेन बोधकत्वं प्रामाण्ये हेतुमाह; । प्रथममित्यनेनाप्यस्तित्वंनिर्विकल्पकत्वं च युक्त्या साधयति । वाचकशब्दस्मरणसमनन्तरं हि सविकल्पकज्ञानमुत्पद्यते; प्रबुद्धश्च संस्कारः स्मृतिमुपजनयति; अर्थदर्शनं च संस्कारोद्बो[2]धकमिष्यते । वाचकस्मरणाच्च पूर्वं यदर्थदर्शनम्, तदेव शब्दसञ्जल्परहितत्वान्निर्विकल्पकं शब्दसम्बन्धग्रहणाभावेन बालमूकयोरिव विज्ञानम्; शुद्ध-

1. न हि सोऽस्ति. मा.
2. बोधकत्वमिष्यते. मा.

न विशेषो न सामान्यं तदानीमनुभूयते ।
तयोराधारभूता तु व्यक्तिरेवावसीयते ॥ ११३ ॥

महासामान्यमन्यैस्तु द्रव्यं सदिति चोच्यते ।
सामान्यविषयत्वं च प्रत्यक्षस्यैवमाश्रितम् ॥ ११४ ॥

विशेषास्तु प्रतीयन्ते सविकल्पकबुद्धिभिः ।
ते च केचित् [1]प्रतिद्रव्यं केचिद् बहुषु संश्रिताः ॥ ११५ ॥

[2]तानकल्पयदुत्पन्नं [3]व्यावृत्तानुगतात्मना ।
गव्यश्वे चोपजातं तु प्रत्यक्षं न विशिष्यते ॥ ११६ ॥

वस्तुजमितीदं च शब्दसंजल्पव्युदासेनेन्द्रियजत्वसिद्ध्या[4]र्थसामर्थ्येनोत्पन्नतां दर्शयति ॥

इदानीं बौद्धदर्शनाभिप्रायेण तस्य विषयं दर्शयितुमाह—**न विशेष इति**। व्यक्तिशब्देन स्वलक्षणमाह। सामान्यविशेषसंकीर्तनं तु पराभिप्रायेण; न तु बौद्धदर्शने सामान्यविशेषयोः स्वलक्षणं प्रत्याधाराधेयभावोऽस्ति, तयोरभावात् ॥

वेदान्तवादिनस्तु—महासामान्यं निर्विकल्पकस्य विषयमाहुः। तच्च केचित् सत्तामाहुः, अपरे द्रव्यमित्येतद् दर्शयति—**महासामान्यमिति** ॥

यत्र तु सविकल्पके भेदावगमः, तत् प्रत्यक्षमेव न भवतीत्याह—**विशेषास्त्विति**। यत्सामान्यमेव गोत्वादिर्महिष्यादिभ्यो निवर्तमानो विशेषः, स बहुषु संश्रित इति ॥

एवं सत्त्वभेदप्रतिपादकस्य "आत्मा वा इदं सर्वम्" इत्येवमादेः आगमस्य नास्ति प्रत्यक्षेण विरोधः। ततश्च सिद्धाद्वैतसिद्धिरित्याह—**तानकल्पयदिति**। विशेषाप्रति[5]भासादगम्यत्वे चोपजातस्य निर्विल्पकस्य न कश्चिद्विशेषः ॥

1. omitted प्रतिद्रव्यं केचित्. मा.
2. तान्न कल्प. मा.
3. व्यावृत्यनु. अनन्त. मु.
4. सिध्यर्थसाम. मा.
5. भासागम्यत्वे. मा.

**तदयुक्तं प्रतिद्रव्यं भिन्नरूपोपलम्भनात् ।**
**न ह्याख्यातुमशक्यत्वाद् भेदो नास्तीति गम्यते ॥ ११७ ॥**

**निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः ।**
**ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते ॥ ११८ ॥**

तत्रानन्तरं श्रोत्रियपक्षमेव तावद् विशेषविकल्पकसिद्ध्यर्थं निराकर्तुमाह—**तदयुक्तमित्यर्धेन** । संवेदनं परामृशतु भवान्; अश्वे गवि च यत् संवेदनद्वयं तयोः किं भिन्नं संवेद्यमुताभिन्नम्? एकस्यां व्यक्तौ संवेदद्वयवत् तत्रास्माकं तावद्भिन्नं संवेद्यम् । तपस्विनां तु न विद्मः कीदृशमिति । यदि च विषयतो भेदो न प्रतिभासते, किमिति तर्हि गोदर्शनादश्वार्थी निवर्तते? किमिति वा गोदर्शने सत्यश्वशब्दस्मरणं न भवति? नन्वितरेतराभावो भेदः, स कथमिव प्रत्यक्षस्य ते विषयः? स च यदि भासते, किमिति विषयो न भवति? अथ न प्रतिभासत एव, तर्हि वक्तव्यं किमभावत्वेन? न चेतरेतराभावो भेदः । किं तर्हि? भिन्नयोरितरेतराभावः । कः पुनरसौ भेदः? कश्चेतरेतराभावः? पदार्थयोर्यत्स्वरूपं स एव भेदः; परस्परवैविक्त्यमभावः । न चाश्ववैविक्त्यमेव गोस्वरूपम्, अश्वत्वगोत्वयोरेकत्वप्रसङ्गात् । अपि च यो भेदप्रत्ययेऽवभासते, स एव भेदः; अभावप्रत्ययेऽभावः । इदं चायमितरेतराभाववादी विकल्प प्रष्टव्यः;—किं भिन्नयोरितरेतराभावः, उताभिन्नयोः? यदि भिन्नयोरितरेतराभावः, तर्ह्यन्यो भेदः; अथाभिन्नयोः; कथमितरेतरव्यपदेशः? कथं च तस्यैव तत्राभावः? इति । ननु निर्विकल्पके 'भिन्नः' इत्येवं नास्त्यवभासः । मा भूदेवम्, तथापि भिन्नमवभासत एवेत्याह—**न ह्याख्यातुमित्यर्धेन** । तदुक्तमन्यैरपि "चक्षुर्विज्ञानसमं हि नीलं विजानाति नीलं नीलम्" इति ॥

यदप्युक्तम्—व्यक्तिरेवावसीयत इति, तत्रापि सामान्यविकल्पसिद्ध्यर्थमाह—**निर्विकल्पकेति** । गवये पुरोऽवस्थिते सति तत्र भेदप्रतिभासोऽप्यस्ति; नीलशुक्लयोरिव भेदानुवृत्तौ सत्यामेवाभेदप्रतिभासोऽप्यस्ति । तत्र भेदप्रतिभासान्नानात्वमनयोरभेदप्रतिभासाच्चैक्यम्; यच्च भिन्नयोरैक्यम्, तदेव सामान्यम्; नानात्वं यदैक्यस्य, सा व्यक्तिः; तथैवैकस्यां बाहुलेयव्यक्तावुपलब्धायां व्यक्त्यन्तरं

[1]न त्वसाधारणत्वेन [2]परव्यावृत्त्यकल्पनात् ।
विशेषानु[3]गमाकॢप्तेः सामान्यमिति नापि तत् ॥ ११९ ॥

ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन सम्मता ॥ १२० ॥

शाबलेयाख्यमुपलभ्यमानं पूर्वानुभूतव्यक्त्यैक्येन नानात्वेन चावभासते ; इदमेव च तद्भिन्नाभिन्नत्वम् ; न तु जातेः स्वलक्षणं प्रति भेदाभेदौ ॥

ननु प्रथमव्यक्तिसन्दर्शने सति जात्यवगमो नास्तिः तत्कथं लक्ष्यान्तरोपलब्धौ 'स एवायम्' इति प्रत्यभिज्ञा प्रत्ययः ? न च प्रत्यभिज्ञाप्रत्ययान्यथानुपपत्त्यैव पूर्वं जात्यनुभवोऽप्यासीदिति कल्पयितुं शक्यते, कल्प्येऽनुभवे प्रत्यभिज्ञानुत्पादात् । कथं च प्रकाशरूपस्य अस्तित्वमसंवेद्यमानस्य ? उच्यते—केन वा प्रत्यभिज्ञाप्रत्ययोत्पत्तिर्दर्शिता ? व्यक्त्यन्तरमुपलभ्यमानं पूर्वानुभूतव्यक्त्यैक्येन नानात्वेन चावभासत इति वयं ब्रूमः । किञ्च प्रत्यभिज्ञाप्रत्ययं मुक्त्वा ऐक्यावगमोऽप्यस्ति ? बाढमस्ति ; अननुभूतपूर्वः प्रथममेव युगपद् यदा गवयद्वयं प्रतिपद्यते, तदा किमैक्यावगमो नास्ति ? यदि च निर्विकल्पके सामान्यावगमो नास्ति, कथं तदनन्तरं सामान्यशब्दयोजनात्मकं विज्ञानमुत्पद्यते ? स्वलक्षणदर्शने सति सामान्यशब्दस्मरणानुपपत्तेः, "यत्सन्निधाने यो दृष्टः" इति न्यायात् । अस्य त्वक्षरत्रयन्यूनस्य कारिकार्धस्य सत्यमर्थं न विद्मः —"लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते" इति । विशेष इत्येवं सामान्यमि[4]त्येवं न गृह्णाति, व्यावृत्त्यनुगमविकल्पयोरभावादित्याह— **न त्विति** । शब्दानुसन्धानप्रतिषेधपरोऽयं श्लोकः । सामान्यविशेषेण तु सामान्यविशेषरूपतया प्रतिभासते । तदुक्तम् "द्व्यात्मकस्यापि वस्तुनो ग्रहणम्" इति ॥

एवं तावन्निर्विकल्पकस्यास्तित्वं प्रत्यक्षत्वं च सामान्यविशेषविषयत्वं च साधितम् । इदानीं सविकल्पकस्य यत् प्रत्यक्षत्वं प्रतिज्ञातम् , तत् साधयितुमाह— **ततः परमिति** । तत्र ततः परमित्येतेन निर्विकल्पकादुत्पन्नतां सविकल्पकस्य दर्श-

1. न ह्यासा, अनन्त. न. चासा. चौ, मु.
2. परावृत्त्यविक. मा.
3. गमाकारः. मा.
4. त्येवं च गृ. मा.

करणं चेन्द्रियं बुद्धेर्न तत्र ज्ञानमाहितम् ।
[1]ततः स्मृत्यसमर्थत्वाद् विकल्पोऽतो न वार्यते ॥ १२१ ॥

आत्मन्येव स्थितं ज्ञानं स हि बोद्धात्र गम्यते ।
स्मरणे चास्य सामर्थ्यं सन्धानादौ च विद्यते ॥ १२२ ॥

तेनेन्द्रियार्थसम्बन्धे विद्यमाने स्मरन्नपि ।
विकल्पयन् स्वधर्मेण वस्तु प्रत्यक्षवान् नरः ॥ १२३ ॥

तच्चैतदिन्द्रियाधीनमिति तैर्व्यपदिश्यते ।
तदसम्बन्धजातं तु नैव प्रत्यक्षमिष्यते ॥ १२४ ॥

यति । (पुनरिति) पारम्पर्येणाप्यक्षजत्वमस्तीत्येतत् प्रदर्शयितुं बौद्धपरिकल्पितमानसप्रत्यक्षवत् । वस्त्वित्यनेनार्थसामर्थ्योत्पन्नतां निर्विकल्पकवद् दर्शयति । धर्मैरित्यनेनार्थान्तरन्यासं निराकरोति । जात्यादिभिरित्यनेनापि शब्दाध्यासः । एतदुक्तं भवति—जात्यादिभिर्धर्मभूतैर्विशिष्टोऽर्थो यथावसीयते, न शब्दविशिष्टो नाप्यर्थान्तररूपेण । बुद्ध्यावसीयते इत्यनेन बोधकत्वं प्रामाण्ये हेतुमाह । सापि प्रत्यक्षत्वेन संमतेत्यनेनापि तद्भावभावित्वेनाक्षजत्वं दर्शयति ॥

यत् पुनरिदमुक्तम्—किञ्चित् सविकल्पकं ज्ञानं स्मृत[2]शब्दसंज्ञत्वेनोत्पद्यते—'देवदत्तोऽयम्' इति, किञ्चित् पूर्वानुभूतार्थानुसन्धानेनोत्पद्यते 'स एवायम्' इति; न चेन्द्रियस्य स्मरणादौ सामर्थ्यम्, अचेतनत्वादिति । तत्राह—**करणं चेति** श्लोकद्वयेन । अयमभिप्रायः—क्रिया कर्मणि कर्तरि वा समवैति; न चेन्द्रियस्य ज्ञानक्रियायां कर्मत्वम्, अप्रतिभासनात् । नापि कर्तृत्वम्, अबोद्धृत्वात् । आत्मनि तु क्रिया समवैति, तस्यैव चेतनत्वाद[3]स्त्येव स्मरणादौ सामर्थ्यमिति ॥

यद्यात्मनः स्मरणादौ सामर्थ्यमस्तीति कृत्वा सविकल्पस्य प्रत्यक्षत्वमुच्यते, हन्त तर्हि निवृत्तेन्द्रियव्यापारस्यापि शब्दं स्मरतो यत् सविकल्पकं ज्ञानमुत्पद्यते 'गौरयम्' इति, तस्यापि प्रत्यक्षत्वं प्राप्नोतीत्याशङ्क्याह—**तेनेन्द्रियार्थसम्बन्ध इति** । इन्द्रियार्थसन्निकर्षोत्पन्ने ज्ञाने लोके प्रत्यक्षशब्दः प्रयुज्यत इत्यर्थः ॥

इदानीं प्रत्यक्षशब्दप्रयोगस्य निमित्तं दर्शयितुमाह—**तच्चैतादित्यर्धेन** ।

1. तत्स्मृत्याद्यसमर्थ. अनन्त. मु.
2. शब्दसजत्वेन. मा.
3. अस्येव. मा

पुनःपुनर्विकल्पेऽपि [1]यावानधिगमो भवेत् ।
तत्सम्बन्धानुसारेण सर्वं प्रत्यक्षमिष्यते ॥ १२५ ॥

न हि प्रविष्टमात्राणामुष्णाद् गर्भगृहादिषु ।
अर्था न प्रतिभान्तीति गृह्यन्ते नेन्द्रियैः पुनः ॥ १२६ ॥

यथा त्वाभासमात्रेण पूर्वं ज्ञात्वा स्वरूपतः ।
पश्चात् तत्रावबुध्यन्ते तथा जात्यादिधर्मतः ॥ १२७ ॥

यदि त्वालोच्य संमील्य नेत्रे कश्चिद् विकल्पयेत् ।
न स्यात् प्रत्यक्षता तस्य सम्बन्धाननुसारतः ॥ १२८ ॥

अतदधीने तु प्रत्यक्ष[2]शब्दो न प्रयुक्त इत्याह—**तदसम्बन्धजातन्त्वित्यर्धेन** । ननु [3]यदीन्द्रियजत्वेन प्रत्यक्षत्वम्, एवं तर्हि सविकल्पकस्य तन्न प्राप्नोति; तद्धि सामान्यावभासमुत्पद्यते । न चेन्द्रियस्य सामान्येन सह सम्बन्धोऽस्ति । तदभावाद्यदि स्यात्, प्रथमचक्षुस्सन्निपातेऽपि प्रतीयेत । तत्र " निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनो ग्रहणम् " इत्युक्तमेव ॥

अभ्युपगमवादेन त्वाह—**पुनः पुनरिति** ॥

इदमत्र [4]भवान् विकल्प्य प्रष्टव्यः—अनुपरतेन्द्रियव्यापारस्य निर्विकल्पकज्ञानस्यानन्तरं सविकल्पकं सामान्यावभासं ज्ञानमुत्पद्यते, उत न ? यदि नोत्पद्यते, ततस्तदभावादेवाप्रत्यक्षत्वम्, किमिन्द्रियजत्वेन ? अथोत्पद्यते, तत्प्रतिभासादेव स्वलक्षणवत् सामान्यादीनामस्तित्वमिन्द्रिययोग्यत्वं चायातु; प्रथमचक्षुस्सन्निपातादप्रतीतिः, तयैतावत् सिद्ध्यति—यदुत निर्विकल्पकग्रहणयोग्याः सामान्यादयो न भवन्तीति; न तु प्रतीयमानस्य सविकल्पकेन नास्तित्वम् । न च प्रथमचक्षुस्सन्निपातादप्रतीत्या नास्तित्वमित्याह—**न हि प्रविष्टमात्राणामिति** ॥

अस्तित्वेन तु प्रतिभासं साधयतः स्वलक्षणप्रतिभासकाले सामान्यादीनामपि प्रतिभासप्रसङ्गः, स्वलक्षणधर्मत्वात् तेषामित्याह—**यथा त्विति** ॥

उपरतेन्द्रियव्यापारोत्पन्नस्य तु प्रत्यक्षत्वं नास्तीत्याह—**यदि त्विति** ॥

1. सती जातिः प्रतीयते' चौ, अनन्त. मु
2. शब्देन प्रयु. मा.
3. यदिन्द्रिय. मा.
4. भावाद्विकल्प्य .मा.

असम्बन्धविकल्पेऽपि तुल्यमात्मादि कारणम् ।
[1]तेनासाधारणत्वं स्यादत्राक्षस्यैव कल्पने ॥ १२९ ॥

निर्विक[2]ल्पकबोधेऽपि नाक्षं केवलकारणम् ।
तत्पारम्पर्यजाते वा रूढिः स्यात् पङ्कजादिवत् ॥ १३० ॥

अनिमित्तैव वा रूढिः सुतरां सविकल्पकम् ।
प्रत्यक्षं संमतं लोके न तथा निर्विकल्पकम् ॥ १३१ ॥

वृद्धप्रयोगगम्याश्च शब्दार्थाः सर्व एव नः ।
तेन यत्र प्रयुक्तोऽयं न तस्मादपनीयते ॥ १३२ ॥

सिद्धानुगममात्रं हि कर्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्तनम् ॥ १३३ ॥

आत्मेन्द्रियकारणत्वे समानेऽप्यसाधारणत्वादक्षेणैव व्यपदेशो नात्मनेत्याह—**असम्बन्धविकल्पेऽपीति** ॥

सामग्र्यन्तरोत्पन्नेऽपि च यथाक्षेणैव व्यपदेशो निर्विकल्पके, तथा सविकल्पकेऽपि भविष्यतीत्याह— **निर्विकल्पकबोधेऽपीत्यर्धेन** ।

इदानीमेतद् दर्शयितुमाह—**तत्पारम्पर्यजाते वेति** सार्धेन । अपरोक्षार्थावभासि यत् सविकल्पकं ज्ञानमुत्पद्यते, तत्र तावद् बुद्धैः प्रत्यक्षशब्दः प्रयुज्यते ; तत्र यदि साक्षात् पारम्पर्येण वाक्षव्यापारस्तत्रास्ति, तदा यौगिकोऽयं प्रत्यक्षशब्दस्तत्र भविष्यति उत्पले पङ्कजशब्दप्रयोगवत् ; अथ नास्ति, तदा देवदत्तादिशब्दवदव्युत्पन्नैव संज्ञा ; सर्वथा प्रत्यक्षशब्दप्रयोगादस्ति प्रत्यक्षत्वं सविकल्पकस्य ॥

अथैवं सत्यपि कल्पनापोढलक्षणविरहान्नास्तीत्युच्यते, तत्राप्याह—**वृद्धप्रयोगगम्याश्चेति** ॥

अपि च, कल्पनापोढलक्षणविरहाद् वा सविकल्पकस्य प्रत्यक्षत्वं नेष्टम्, इन्द्रियजत्वाभावाद् वा ? तत्र लक्षणस्यायं विषय एव न भवतीत्याह— **सिद्धानुगम-**

1. तेन साधारण. मा.   2. ल्पेऽपि विज्ञाने. मा.

कल्प[1]नायाः स्वसंवित्ताविन्द्रियाधीनता कथम् ।
मनस्तत्रेन्द्रियं चेत् स्याद् गोत्वादावपि तत् समम् ॥ १३४ ॥

स्वसंवित्तौ तदिष्टं चेल्लोको न ह्येवमिच्छति ।
तस्माद् रूढित्वमेष्टव्यं पारिभाषिकतापि वा ॥ १३५ ॥

मनसस्त्विन्द्रियत्वेन सुखदुःखादिबुद्धिषु ।
यथा प्रत्यक्षतैवं नस्तदधीना भविष्यति ॥ १३६ ॥

तदधीनत्वसाम्येऽपि कल्पनापोढशब्दनात् ।
प्रत्यक्षं किञ्चिदेवेष्टं यथा तव तथैव नः ॥ १३७ ॥

**मात्रमिति** । लोकप्रसिद्धिरेव लक्षणेनानुगम्यते न सर्वलोकप्रसिद्धस्य स्वेच्छावशेन लक्षणं कृत्वा निवृत्तिः, निर्मूलत्वप्रसङ्गात् ॥

अक्षजत्वाभावेन तु सविकल्पकस्यापि स्वसंवित्तौ प्रत्यक्षत्वमिष्टम्, तन्न प्राप्नोतीत्याह—**कल्पनाया** इत्यर्धेन ।

अथाक्षजमानससंज्ञसमनन्तरप्रत्ययजन्यत्वेनाक्षाधीनत्वात् प्रत्यक्षमिष्टमित्याशङ्क्य—**मनस्तत्रेन्द्रियं चेत्स्यादि**त्यनेन **गोत्वादावपि तत्सममि**त्यनेन परिहरति । स्वप्रकाशवद् विषयप्रकाशेऽपि तस्य तुल्यत्वादित्यर्थः ॥

स्वप्रकाश एव तस्य व्यापार इति चेत् तदाह—**स्वसंवित्तौ तदिष्टं चेदिति** । अत्र परिहारमाह—**लोको न ह्येवमिच्छतीति** । अंशांशिभावस्याविद्यमानत्वादित्यर्थः । अतो यथा स्वसंवित्तौ प्रत्यक्षशब्दो रूढः पारिभाषिको वा, तथा विषयप्रकाशेऽपि भविष्यतीत्याह—**तस्मादि**त्यर्धेन ॥

अपि च बाह्याक्षजन्यत्वं विनापि यथा सुखादिविषयविज्ञानं मनोजन्यत्वात् प्रत्यक्षमिष्टं नैयायिकानाम्, तथात्रापि भविष्यतीत्याह—**मनसस्त्विति** ॥

समानेऽपि च मनोजन्यत्वे प्रत्यक्षशब्दप्रयोग एव नियामको भविष्यति भवतामिव कल्पनापोढलक्षणमित्याह—**तदधीनत्वसाम्येऽपीति** ॥

1. नाि. मा.

**लिङ्गाद्यभावतश्चापि नानुमानादिधीरियम् ।**
**[1]न च पूर्वमदृष्टत्वात् स्मृतित्वमुपपद्यते ॥ १३८ ॥**

**बाधकप्रत्ययासत्त्वान्नाप्रामाण्यं च युज्यते ।**
**तस्मात् प्रत्यक्षमेवेदं व्यवहार[2]स्तथैव वः ॥ १३९ ॥**

**जात्याद्यर्थान्तरं यस्मादसद्रूपेऽपि वस्तुनि ।**
**भवत्यध्यस्य धीस्तस्मान्मृगतृष्णादिभिः समा ॥ १४० ॥**

**नैतदश्वादिबुद्धीनामध्यारोपाद्यसम्भवात् ।**
**स्थितं नैव हि जात्यादेः परत्वं व्यक्तितो हि नः ॥ १४१ ॥**

परिशेष्यादपि सविकल्पकस्य प्रत्यक्षत्वं प्रमाणप्राप्तमित्याह—**लिङ्गाद्यभावत** इत्यर्धेन । त्रिरूपलिङ्गानुत्पत्त्या तावन्नानुमानम् ।

भवद्दर्शने च सामान्यप्रतिभासत्वात् सविकल्पकस्य स्वलक्षणविषयनिर्विकल्पकप्रत्यक्षविषयता नास्तीति न स्मृतित्वम् ; तदाह—**न च पूर्वमि**त्यर्धेन ।

नाप्यप्रामाण्यं [3]बाधकप्रत्ययासत्त्वात् तदाह—**बाधके**त्यादित्रिपाद्या ।

भवतामपि सविकल्पकेन प्रत्यक्षेणैव व्यवहारः । तथा हि—ज्ञातसम्बन्धो दृश्यमानोऽर्थोऽर्थान्तरमवगमयति ; सामान्यरूपत्वाच्च लिङ्गलिङ्गिनोर्न निर्विकल्पकेन स्वलक्षणविषयेण च सम्बन्धग्रहणमित्याह **व्यवहारस्तथैव वः इति** ॥

इदानीं "बाधकप्रत्ययासत्त्वान्नाप्रामाण्यं च युज्यते" इति यदुक्तम्, तदाक्षिपन्नाह—**जात्याद्यर्थान्तरमिति** । स्वलक्षणाद् भिन्ना हि जातिगुणक्रियादय इष्यन्ते, अनन्यश्वेतवत् सद्भावप्रसङ्गात् । अयं प्रमाणार्थः —सविकल्पकं विज्ञानमप्रमाणमिति प्रतिज्ञा, अर्थान्तरे अर्थान्तरारोपेणोत्पद्यमानत्वादिति हेत्वर्थः, ऊषरे सलिलज्ञानवदिति दृष्टान्तः ॥

तदेतद् दूषयितुमाह—**नैतदिति** । यदि हि जात्यादयः स्वलक्षणाद् भिन्नाः स्युः, तदार्थान्तरे द्रव्येऽर्थान्तरजात्यादिरूपेणोत्पद्यमानत्वादध्यासः स्यात् ; न तु

1. 'बाधक' इत्यस्यानन्तरम् 'न च' इत्यर्द्धः मा.
2. तथैव च. चौ, अन. मु.
3. बौधक. मा.

यदि ह्येकान्ततो भिन्नं विशेष्यात् स्याद् विशेषणम् ।
स्वानुरूपां सदा बुद्धिं विशेष्ये जनयेत् कथम् ॥ १४२ ॥

स्फटिकादौ तु लाक्षादिस्वरूपा या मतिर्भवेत् ।
अव्युत्पन्नस्य सा मिथ्या व्युत्पन्नायां हि भेदधीः ॥ १४३ ॥

न [1]तु जा[2]त्यादिभिर्मुक्तं वस्तु दृष्टं कदाचन ।
तद्विमोकेन वा तानि लाक्षादिस्फटिकादिवत् ॥ १४४ ॥

तत्रापि चेन्न दृश्येत भेदः कैश्चित् कदाचन ।
रक्तादिबुद्धिसम्यक्त्वं विनिवार्येत केन वा ॥ १४५ ॥

न चाप्ययुतसिद्धानां सम्बन्धित्वेन कल्पना ।
नानिष्पन्नस्य सम्बन्धो निष्पत्तौ युतसिद्धता ॥ १४६ ॥

तदस्तीत्युक्तम्—निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः । ग्रहणम्" इति । तदनेन हेतोरसिद्धत्वमुद्धारितम् (मुद्धाटितम्) ॥

जात्यादीनां द्रव्यादभेद एव प्रमाणान्तरमाह—**यदि हीति** । अयं प्रमाणार्थः—विशेष्यादभिन्नं विशेषणमिति प्रतिज्ञा, विशेष्ये सदा स्वानुरूपबुद्धिजनकत्वादिति हेत्वर्थः स्वलक्षणस्वरूपवदिति दृष्टान्तः ॥

ननु भिन्ना अपि लाक्षादयो भिन्ने स्फटिकादौ स्वानुरूपां बुद्धिं जनयन्त्येवेत्यनैकान्तिकत्वमाशङ्क्य सदेतिविशेषणफलं दर्शयितुमाह—**स्फटिकादाविति** ॥

न तु जात्यादयः स्वलक्षणविविक्ताः, स्वलक्षणं वा जात्यादिविविक्तमुपलब्धमित्याह—**न तु जात्यादिभिरिति** ॥

यदि तु तत्रापि सदैवाभेदबुद्धिः स्यात्, तदा सपक्ष एव स्यादित्याह—**तत्रापि चेदिति** ॥

ननु च भिन्ना अपि जात्यादयः समवायाद् द्रव्ये स्वानुरूपां बुद्धिं जनयिष्यन्तीति अप्रयोजकत्वं हेतोरित्याशङ्क्याह—**न चापीति** । अयमभिप्रायः—अयुत-

1. न हि. अनन्त. मु.   2. त्यादिनिर्मुक्तम्. चौ, अनन्त. मु.

**तथा च सति सम्बन्धे हेतुः कश्चिन्न विद्यते ।**
**षण्णामपि न सम्बन्धः पदार्थानां प्रतीयते ॥ १४७ ॥**

**समवायनियोगाच्च विश्लेषः स्यात् परस्परम् ।**
**तत्फलभावव्यवस्था स्यात् तस्य तस्यान्यसङ्गतेः ॥ १४८ ॥**

**अथ तस्यात्मरूपत्वान्नान्यसम्बन्धकल्पना ।**
**अभेदात् समवायोऽस्तु स्वरूपं धर्मधर्मिणोः ॥ १४९ ॥**

**न हि स व्यतिरिक्तः सन् सम्बन्धं प्रतिपद्यते ।**

सिद्धानां सम्बन्धः समवाय इष्यते; तच्चानुपपन्नम्; अनिष्पन्नस्याविद्यमानत्वेन सम्बन्धाभावात् । अत एव न निष्पद्यमानयोः, निष्पत्त्युत्तरकालं च सम्बन्धनिष्पत्तौ युतसिद्धताप्रसङ्गादित्यर्थः ॥

युतसिद्धत्वे च द्रव्यगुणयोर्युतसिद्धत्वेन द्रव्याश्रितत्वेन च समवायसंयोगयोरभावात् तयोः सम्बन्धो न प्राप्नोतीत्याह—**तथा चे**त्यर्धेन । आस्तां तावद् द्रव्यगुणयोः समवायं विना सम्बन्धाभावः, षण्णामपि पदार्थानां सम्बन्धो न प्राप्नोतीत्याह—**षण्णामि**त्यर्धेन । द्रव्यगुणकर्मसामान्यविशेषाणां द्रव्येण सह समवायलक्षणः सम्बन्धः परस्परं चैकार्थसमवायलक्षणः समवायं विना न प्राप्नोतीत्यर्थः ॥

अपि च, समवायः समवायिभ्यां व्यतिरिक्तो वा स्यादव्यतिरिक्तो वा? व्यतिरिक्तपक्षेऽपि ताभ्यां सम्बन्धोऽसम्बन्धो वा स्यात्? यदि तावद् व्यतिरिक्तोऽसम्बन्धश्च, तदा दूषणमाह—**समवाये**त्यर्धेन । अथ सम्बन्धः, तत्रापि संयोगस्तावन्नास्त्येव, समवायस्याद्रव्यत्वात्; समवायान्तराभ्युपगमे चानवस्थेत्याह—**तदि**त्यर्धेन ॥

अव्यतिरेकपक्षे दूषणमाह—**अथ तस्येति** । अव्यतिरेकपक्षे ताभ्यामनन्यत्वेन समवायस्य यदि सम्बन्धान्तरकल्पनाभाव इष्यते, तदा धर्मधर्मिणो रूपानुप्रविष्टस्य तस्याभावप्रसङ्ग इत्यर्थः ॥

व्यतिरिक्तस्तु समवायः सम्बन्धरूपोऽपि सम्बध्यमानः संयोगवत् सम्बन्धान्तरमपेक्षत एवेत्याह—**न ही**त्यर्धेन । सम्बन्धान्तरं विनेति वाक्यशेषः ।

तस्मिंस्ताभ्यामभिन्ने तु न नानात्वं तयोर्भवेत् ॥ १५० ॥

ननु धर्मातिरेकेण धर्मिणोऽनुपलम्भनात् ।
तत्सङ्घमात्र एवायं गवादिः स्याद् वनादिवत् ॥ १५१ ॥

आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद् भवेत् ॥ १५२ ॥

अतो जात्यादिरूपेण धर्मि यद् गृह्यते नरैः ।
पाररूप्यं न तस्यास्तीत्यप्रामाण्यं न युज्यते ॥ १५३ ॥

यस्यापि व्यतिरेकः स्याद् धर्मेभ्यो धर्मिणः स्फुटः ।

अव्यतिरिक्तपक्षे दूषणमाह—**तस्मिन्नित्यर्धेन** । यदि समवायः समवायिभ्योऽव्यतिरिक्तः स्यात् तदा तयोरेकस्मादनन्यत्वेन पदार्थत्रयविनाशः स्यादित्यर्थः ॥

"ततः परं पुनर्वस्तु धर्मैः" इत्युक्तम्, तदनुपपन्नम्; यतो न रूपरसादिव्यतिरिक्तमन्यं धर्मिणमुपलभामहे, रूपादीनामग्रहणे तस्याप्रतिभासनात् यथा वृक्षाग्रहणे वनमित्यप्रतिभासनात् न वृक्षव्यतिरेकेण वनं नामान्यत् स्यात् । एकदेशस्थितांस्तु वृक्षानालोच्य 'वनम्' इति प्रत्यक्ष उत्पद्यते, तथैकदेशावस्थितान् रूपादीनालोच्य 'गौरयम्,' 'घटोऽयम्' इति वा प्रत्यय उत्पद्यते । तदाह—**ननु धर्मातिरेकेणेति** ॥

तत्र तावद्धर्मिसद्भावे प्रमाणमाह—**आविर्भावादितद्धर्म्यन्तेन** । आमावास्यायां हरितं बदरमुपलभ्य पुनस्तदेव पक्वं पीतविशिष्टमुपलभमानः 'स एवायमुपहतहरितावस्थ उपसञ्जातपीतावस्थः' इत्यवस्थाद्वयेऽप्यनुसन्धत्ते । तस्मादेवमवस्थोपस्थानमस्तीति सिद्धम् । एवं धर्मिसद्भावे प्रमाणमभिधायेदानीं "तदग्रहे तद्बुद्ध्यभावात्" इति यदुक्तं तत्रासिद्धत्वं नाम हेतोर्दूषणमाह—**यत्र वेति शेषेण** । धर्मग्रहणेऽपि धर्मी प्रतीयते, यथा प्रदोषसमये शुक्लाग्रहणेऽपि बलाकापङ्क्तिरवधार्यते ॥

प्रकृतमुपसंहरन्नाह— **अतो जात्यादिरूपेणेति** ॥

अथापि द्रव्यव्यतिरिक्ता जात्यादयः, तथापि जातिविशिष्टतयैव नित्यमवगम्यमानत्वान्न मिथ्यात्वमित्याह—**यस्यापि व्यतिरेक इति** ॥

नित्यं तस्यापि ताद्रूप्यान्न मिथ्यात्वं प्रसज्यते ॥ १५४ ॥

यो ह्यन्यरूपसंवेद्यः [2]संवेद्येतान्यथा पुनः ।
स मिथ्या न तु तेनैव यो नित्यमवगम्यते ॥ १५५ ॥

न चानेकेन्द्रियग्राह्यं भिन्नतां प्रतिपद्यते ।
मा भूद् भिन्नशरीरस्य ग्राह्य[3]त्वाद् रूपभिन्नता ॥ १५६ ॥

जात्यभेदादभेदश्चेदिन्द्रियत्वेन तत्समम् ।
तुल्यबुद्धेरतो भिन्ना न सत्तेन्द्रियभेदतः ॥ १५७ ॥

बुद्धिभेदाच्च नैकत्वं रूपादीनां प्रसज्यते ।
एकानेकत्वमिष्टं वा सत्तारूपादि[4]रूपतः ॥ १५८ ॥

बाधकप्रत्ययोऽपि हि मिथ्यात्वे हेतुः, न व्यतिरिक्तविशिष्टत्वमित्याह—**यो हीति** ॥

ननु जात्यादिविशिष्टमेकं द्रव्यं प्रतीयते ; न च तदेकम्, अनेकेन्द्रियग्राह्यत्वात् रूपरसवत् । तदुक्तम् "दर्शनं स्पर्शनं च द्रव्यम्" इति । तत्कथमिव न मिथ्यात्वमित्याशङ्क्याह **न चानेकेन्द्रियग्राह्यमिति** । तदनेन हेतोरनैकान्तिकत्वं दर्शयति । एतस्मिन्नपि रूपस्वलक्षणे भिन्नशरीरस्थानेकेन्द्रियग्राह्यत्वदर्शनादिति ॥

अथ चक्षुष्ट्वजातेरेकत्वेनानेकेन्द्रियग्राह्यता नास्तीत्यनेकान्तिकत्वं परिह्रियते, तदेन्द्रियजातेरेकत्वादनेकेन्द्रियग्राह्यता द्रव्यस्य नास्तीत्यसिद्धत्वं हेतोरित्याह—**जात्यभेदादित्यर्धेन** । प्रतिभासभेदो हि प्रतिभास्यभेदावगमे प्रमाणम्, न भिन्नेन्द्रियग्राह्यत्वम् ; तेन रूपरसगन्धस्पर्शशब्देषु भिन्नेन्द्रियग्राह्यापि सत्तैकैवेत्याह—**तुल्यबुद्धेरित्यर्धेन** । अनेनाप्यनैकान्तिकत्वमेव दर्शितम् । सत्ताया विपक्षे धर्मिणि दर्शनात् ॥

इदानीमप्रयोजकत्वं दर्शयितुमाह—**बुद्धिभेदादित्यर्धेन** । प्रतिभासभेदप्रयुक्तो हि रूपरसादिभेदः न भिन्नेन्द्रियग्राह्यत्वादित्यर्थः ।

1. omitted अयमर्धः. चौ. मु.
2. संवेद्यो वान्य. अनन्त. मु.
3. त्वाद्भिन्नरूपता. चौ. अनन्त. मु.
4. भेदतः. अनन्त. मु.

क्वचिच्च सङ्करान्नाक्षमेकमित्यवसीयते ।
दार्ढ्यदौर्बल्यभेदेन व्यवस्थापि यतः क्वचित् ॥ १५९ ॥

यथा हि मनसः सार्धं रूपादौ चक्षुरादिना ।
प्रवृत्तिः सुखदुःखादौ केवलस्यैव [1]दृश्यते ॥ १६० ॥

न क्वचित् सङ्कराभावात् सर्वत्रैव निवर्तते ।
क्वचिच्च सङ्करं दृष्ट्वा सङ्करोऽन्यत्र कल्प्यते ॥ १६१ ॥

श्रोत्रादेरुपघातेऽपि शब्दादिस्मृतिदर्शनात् ।
वर्तमानस्य चाज्ञानाद् व्यवस्था संप्रतीयते ॥ १६२ ॥

सिद्धसाध्यतां प्रत्यक्षविरोधं च दर्शयन्नाह—**एकानेकत्वमित्यर्धेन** । द्रव्यस्य हि रूपरसादिरूपतया भेदोऽप्यस्त्येव 'यमहमद्राक्षं तमहं स्पृशामि' इति तत्त्वप्रत्ययादित्यर्थः ॥

एवं तर्हि इन्द्रियान्तरविषयेऽपि इन्द्रियान्तरं प्रवर्तत इत्यनेकेन्द्रि[2]याकत्वं वृथैवेत्याशङ्क्याह—**क्वचिच्चेति** । यदि नाम द्रव्ये दर्शनस्पर्शनयोः सङ्करस्तथापि रूपस्पर्शादौ व्यवस्थादर्शनादस्त्येवेन्द्रियान्तरफलमित्यर्थः ॥

तत्र तावदान्तरस्येन्द्रियान्तरे सुखदुःखादौ बाह्ये च रूपरसादौ चक्षुरादिभिः सार्धं सङ्करे व्यवस्थायां च दृष्टान्तं दर्शयितुमाह—**यथा हीति** ॥

तदेव विवृणोति—**न क्वचिदिति** । न क्वचित् सुखदुःखादौ सङ्कराभावादन्यत्रापि रूपरसादौ सङ्कराभावः ; क्वचिद्वा रूपरसादौ सङ्करदर्शनादन्यत्रापि सुखदुःखादौ सङ्कर इत्यर्थः ॥

इदानीं "दार्ढ्यदौर्बल्यभेदेन" इति यदुक्तं तद्विवृणोति—**श्रोत्रादेरिति** । बाह्येन्द्रियोपघातेऽपि शब्दादयः स्मर्यन्ते, सुखदुःखादयश्च प्रतीयन्ते ; न त्वपरोक्षतया शब्दादयश्च प्रतीयन्त इत्यर्थः ॥

ननु च त्वगव्यतिरेकात् त्वगेवैकमिन्द्रियमिष्टमितीष्टमेवैकेन्द्रियत्वमिति केचित् । ततश्चानेकेन्द्रियपरिकल्पनं वृथैवेति का तत्रानिष्टापत्तिरित्याशङ्क्य दूषय-

1. गम्यते. अनन्त. मु.  2. याङ्कत्वम्. मा.

एकं यदि भवेदक्षं [1]सर्वं गृह्येत वा न वा ।
कल्प्यते शक्तिभेदश्चे[2]च्छक्तिरेवेन्द्रियं भवेत् ॥ १६३ ॥

शृणुयाद् बधिरः शब्दं सङ्करे चक्षुरादिना ।
मनसो वा स्वतन्त्रत्वे वर्तमानार्थबुद्धिषु ॥ १६४ ॥

न स्मरेद् बधिरः शब्दं श्रोत्रं चेत् स्मृतिकारणम् ।
[3]स्मृतिवद् वा भवेदस्य वर्तमानार्थधीरपि ॥ १६५ ॥

स्मृतिश्च न भवेत् पश्चाद् गृह्णीयात् तन्न चेन्मनः ।

त्राह—**एकं यदी**त्यर्धेन । एकाक्षपरिकल्पनायां हि तस्य दुष्टत्वे सर्वस्यैव रूपरसादेरप्रतिपत्तिः, अदुष्टरूपत्वे वा प्रतिपत्तिः स्यात् ; रूपस्पर्शयोर्ग्रहणाग्रहणे न स्यातामित्यर्थः । अनेकशक्तिकल्पनायामप्यस्सत्पक्ष एवेत्याह—**कल्प्यत** इत्यर्धेन । तस्मादनेकमिन्द्रियं क्वचित् सङ्कीर्णं क्वचिद् व्यवस्थितमिति ॥

यस्तु क्वचित् सङ्करदर्शनादन्यत्रापि सङ्करमापादयति, तस्यायं दोष इत्याह—**शृणुयादि**त्यर्धेन । यदि च [4]यथान्तरे बाह्येन्द्रियनिरपेक्षं मनः प्रवर्तते, तथा बाह्येऽपि स्यात् ; तथापि स एव दोष इत्याह—**मनस** इत्यर्धेन । "शृणुयाद् बधिरः शब्दम्" इति वाक्यशेषः ॥

यदि बाह्यवदान्तरेऽप्यर्थे बाह्येन्द्रियसहितं मनः प्रवर्तते, तदा स एव दोष इत्याह—**न स्मरे**दित्यर्धेन ।

आन्तरस्य तु बाह्येऽर्थे बाह्येन्द्रियनिरपेक्षस्य प्रवृत्तावयं दोष इत्याह—**स्मृतिवद्वे**त्यर्धेन ॥

कथं पुनरिदमवगम्यते—मनसः सार्धं रूपादौ चक्षुरादिभिः प्रवृत्तिः, न पुनश्चक्षुरादेरेव तद्भावभावित्वेनेत्याशङ्क्याह—**स्मृतिश्चेति** त्रिपाद्या । यदि रूपादौ चक्षुरादिप्रवृत्तिकाले मनसोऽपि प्रवृत्तिर्न स्यात् तदा उत्तरकालमगृहीतत्वात् स्मरणं न प्राप्नोतीत्यर्थः । तदनुपपन्नम् ; आत्मा ग्रहीता ; तस्य च चक्षुरादिभिर्ग्रहणं मनसा

1. सर्वैर्गृह्येत. चौ, अनन्त. मु.
2. शक्तिर्मेव. मा.
3. स्थितिवद्वा. मा.
4. आन्तरम्. मा.

**श्रोत्रग्रहणवेलायां न च सर्वा स्मृतिर्भवेद् ॥ १६६ ॥**

**बोधात्मकतया पुंसः सर्वत्र ग्रहणं भवेत् ।**
**युगपद्वि[1]षयेऽप्यस्य [2]करणापेक्षिता न चेत् ॥ १६७ ॥**

**तस्माज्ज्ञानानुसारेण व्यवस्थासङ्करौ क्वचित् ।**
**ग्राह्यग्राहकशक्तिभ्यः कार्यद्वारेण कल्पितौ ॥ १६८ ॥**

**चक्षूरूपादिभेदस्तु पञ्चधैव व्यवस्थितः ।**

च स्मरणमनुपपन्नमेव । अथ मतम्—अमनस्कस्य चक्षुरादेः प्रवृत्तौ मनसोऽप्रवृत्तत्वेनाव्यग्रत्वात् ग्रहणवेलायामेव स्मरणं प्राप्नोति, नोत्तरकालम्; तदुक्तम्—"स्मृतिश्च न भवेत् पश्चात्" इति । तदनुपपन्नम्, ग्रहणस्मरणयोर्यौगपद्यासम्भवात्; अतिक्रान्तविज्ञानान्तरकर्मतया ग्रहणं स्मरणं च गतः । तस्मादयमर्थः—अन्वयव्यतिरेकाभ्यामिदमवगम्यते, न बाह्येन्द्रियविषयालोकात्मान एव केवला बाह्यार्थावगतेः कारणम्, सत्स्वपि तेषु किञ्चिद् विज्ञानानुत्पत्तेः । अतोऽन्यदपि कारणम् । तच्च मनः । तदपि च ग्राहकम् । तच्चेन्न श्रोत्रग्रहणवेलायां प्रवर्तते, ततः सामग्रीवैकल्यात् ग्रहणभावपूर्विका स्मृतिरपि न प्राप्नोतीत्यर्थः ।

इदानीमन्तःकरणसद्भावे प्रमाणमाह—**न च सर्वा स्मृतिर्भवेदिति** । चक्षुराद्यभावेऽपि शब्दादिस्मरणं सुखादिग्रहणं चात्मनस्तावत् समुपजायते । क्रियायां च प्रवर्तमानः कर्ता करणमपेक्षत इति करणान्तरकल्पनमापतति, तच्च मनः ॥

अत्रैव प्रमाणान्तरमाह—**बोधात्मकतयेति** । यदि हि बाह्येन्द्रियविषयालोकात्मान एव केवला बाह्यार्थावगमे कारणम्, तदानीं कालादिषु च पुरोऽवस्थितेषु या कदाचिद् युगपज्ज्ञानाद्युत्पत्तिः, सात्मादिव्यतिरिक्तकारणान्तरं कल्पयतीत्यर्थः ॥

साम्प्रतं सङ्करे व्यवस्थायां च कार्यदर्शनं प्रमाणमाह—**तस्मादिति** । रूपरसगन्धस्पर्शशब्देषु व्यवस्थोपलब्धिदर्शनात् चक्षुरादेर्व्यवस्था प्रतीयते; सत्तायां द्रव्ये चाव्यवस्थितोपलब्धिदर्शनादव्यवस्थेत्यर्थः ॥

यदि रूपापेक्षया रसादिविषयान्तरदर्शनादिन्द्रियान्तरं रसनाख्यं परिकल्प्यते हन्त तर्हि पीतापेक्षया नीलादिविषयान्तरदर्शनादानन्त्यमिन्द्रियाणामित्याशङ्क्याह—**चक्षूरूपादिभेदस्त्विति** ॥

1. विषयेष्वस्य. मा.    2. कारणा. अनन्त. मु.

तेन नीलादिभेदेऽपि नेन्द्रियानन्त्यकल्पना ॥ १६९ ॥

तस्मात् पञ्चभिरप्यक्षैः बोधः सत्तागुणत्वयोः ।
[1]द्रव्यमूर्ती पुनर्द्वाभ्यां रूपादावेकशः स्थितिः ॥ १७० ॥

ननु जात्यादिरूपेऽपि शब्दाभेदोपचारतः ।
प्रवर्तमाना मिथ्या स्याद् बुद्धिरूपेऽम्बुबुद्धिवत् ॥ १७१ ॥

न शब्दाभेदरूपेण बुद्धिरर्थेषु जायते ।
प्राक् शब्दाद् यादृशी बुद्धिः शब्दादपि हि तादृशी ॥ १७२ ॥

सांप्रतमुक्तां सङ्करव्यवस्थां सोदाहरणमुपसंहरति—**तस्मात् पञ्चभिरिति** ॥

ननु जात्यादिरूपेऽपि वस्तुनि शब्दसमारोपेण 'गौरयम्' इति सविकल्पक विज्ञानमुत्पद्यमानमूषरेऽम्बुबुद्धिवदप्रमाणं स्यादित्याह—**ननु जात्यादिरूपेऽपीति** ॥

स चायं शब्दसमारोपस्त्रिप्रकारः 'गौरयम्' इत्यक्षजं सविकल्पकं विज्ञानं शब्दविशिष्टमर्थं प्रतिभासयति ; गोशब्द एव वा शाबलेयादिष्वध्यस्तः समानतया प्रकाशते, न गोत्वादयः ; गोशब्द एव वा बहीरूपतया प्रतिभासमानोऽर्थो न द्रव्य-गुणादयः । तदुक्तम्—

"अनादिनिधनं ब्रह्म [3]शब्दतत्त्वे व्यवस्थितम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥" इति ।

शब्दोऽप्यात्मविशिष्टमर्थं प्रतिपादयति आत्मानं वा शाबलेयादिषु अध्यस्तबहीरूप-तया, न द्रव्यगुणादयः ; तदेतन्निराकर्तुमाह—**न शब्दाभेदरूपेणेत्यर्धेन** ।

अगृहीतसम्बन्धस्तावद् वर्णत्रयविविक्तमर्थं प्रत्येति ; गृहीतसम्बन्धस्यापि प्रमेयावगतिस्तादृश्येव, न वर्णत्रयविशिष्टा 'शुक्लोऽयं घटः' इतिवत् तदाह—**प्रागित्यर्धेन** ॥

1. द्रव्यमूर्तिः मा. मूर्तौ. चौ. अनन्त. मु.
2. बुद्धीरूपेषु बुद्धिवत्. चौ. अनन्त. मु.
3. "शब्दतत्त्वं यदक्षरम्" इति मुद्रितवाक्यपदीयपाठः

**ननु गोत्वादिरूपेण गवाकारादिबुद्धयः ।**
**[1]न प्राक् शब्दार्थसम्बन्धज्ञानात् सन्ति कदाचन ॥ १७३ ॥**

**जात्यादेस्तत्स्वरूपं चेदशब्दज्ञोऽपि लक्षयेत् ।**
**अन्वयव्यतिरेकाभ्यां शब्दरूपत्वनिश्चयः ॥ १७४ ॥**

**यथा रूपादयो भिन्नाः प्राक् शब्दात् स्वात्मनैव तु ।**
**गम्यन्ते [2]तद्वदेवैतत् संज्ञित्वं केवलं परम् ॥ १७५ ॥**

**न चाविकल्पितः शब्दादिति वाच्यो न गृह्यते ।**
**तेनागृहीतशब्दोऽपि गोत्वादीन् प्रतिपद्यते ॥ १७६ ॥**

**श्रुतिसंस्पर्शबोधेऽपि नैवाभेदोप[3]चारता ।**

अत्र केचिच्चोदयन्ति—**ननु गोत्वादिरूपेणेति** द्वयेन । किमिदमुच्यते—"प्राक् शब्दाद् यादृशी बुद्धिः शब्दादपि हि तादृशी" इति ? गृहीतसम्बन्धस्य 'गौरयम्' इति प्रतिभासः, नागृहीतसम्बन्धस्य । तदत्र यदभ्यधिकं प्रतिभासते, यदि तदर्थरूपमेव स्यादगृहीतसम्बन्धस्यापि प्रतिभासेत । ततोऽन्वयव्यतिरेकाभ्यां शब्दरूपमिदमर्थसमानाधिकरणं प्रतिभासत इति श्लोकद्वयस्यार्थः ॥

अत्र समाधिमाह—**यथा रूपादय इति** ॥

यथा हि रूपरसगन्धादीनगृहीतसम्बन्धः परस्परविविक्तानात्मीयेनैव स्वरूपेण प्रत्येति ; न शब्दस्वरूपतया, तथा गवादीनपि । यत्तु गृहीतसम्बन्धस्य 'गौरयम्' इत्यभ्यधिकं प्रतिभासते, न तदर्थस्य शब्दविशिष्टत्वम् ; किन्तु सम्बन्धग्रहणकाले प्रतिपन्नपदार्थस्य संज्ञित्वम् , तदत्राभ्यधिकं प्रतिभासते । तथाहि 'गौरयम्' इति नायं वाक्यार्थः प्रतिभासते, गोशब्दोऽयं चेति नीलमुत्पलमितिवत् । नापि शब्दात्मक एवार्थः, शब्दसङ्कल्पविरहेणापि प्रतीयमानत्वात् तदाह—**न चाविकल्पित इति** ॥

अथापि सदा शब्दानुसारो येनैवार्थावगतिः तथापि नाध्यासः, नापि शब्दात्मकत्वमर्थस्येत्याह—**श्रुतिसंस्पर्शबोधेऽपीति** । शब्दविशिष्टतार्थस्य न श्रोत्रेण प्रती-

1. Omitted. न. मा.
2. तद्वदेवैते सं. मा.
3. चारतः. मा.

**विवेकादर्थशब्दानां चक्षुश्श्रोत्रधिया कृतात् ॥ १७७ ॥**

**अनन्तधर्मके धर्मिण्येकधर्मावतारणे ।**
**शब्दोऽभ्युपायमात्रं स्यान्नात्माध्यारोपकारणम् ॥ १७८ ॥**

**न चोपेयेऽभ्युपायस्य [1]रूपाध्यासः प्रसज्यते ।**
**न हि दीपेन्द्रियादीनां रूपेऽध्यारोप इष्यते ॥ १७९ ॥**

**नित्यं यदि च गोत्वादि शब्दरूपेण गृह्यते ।**
**रूपान्त[2]रमदृष्टं चेद् भेदाध्यासौ कुतोन्विमौ ॥ १८० ॥**

**यद्यभेदो न मिथ्यात्वं [3]भेदश्चेत् स्यात् स्वरूपतः ।**
**नाध्यारोपप्रसङ्गः स्याद् भ्रान्त्या त्वध्यासकल्पना ॥ १८१ ॥**

**शब्देनैव च निर्देशो गृहीतेऽर्थेऽवकल्पते ।**
**गौरित्येव [4]च निर्देशो वाच्यतद्बुद्धि[5]वाचिनाम् ॥ १८२ ॥**

यते, यस्य शब्दमात्रविषयत्वात् । नापि चक्षुषा, तस्यापि रूपविषयत्वादित्यर्थः ॥

प्रतिनियमसंज्ञित्वावधारणे तु प्रतिनियतशब्दस्मरणमुपायतां प्रतिपद्यते; तेनात्मानमारोपयतीत्याह—**अनन्तधर्मक इति** ॥

यस्तूपायत्वादेवारोपं मन्यते, तस्य चक्षुःप्रदीपाभ्यामनैकान्तिकत्वं वक्तव्यमित्याह—**न चोपेय इति** ॥

यदि च गोत्वादिलक्षणोऽर्थः सदा शब्दाकारेणैव प्रतीयते, तदा भेदाभावात् कुतोऽध्यासः, तदभावात् कुतो मिथ्यात्वमित्याह—**नित्यं यदि चेति** सपादेन ।

भेदावगतौ तु सुतरामध्यासो नास्तीत्याह—**भेदश्चेत् स्यात् स्वरूपत इति** त्रिपाद्या ॥

इदानीमारोपभ्रान्तेर्मूलमाह श्लोकद्वयेन—**शब्देनैवेत्यादिना** ॥

1. रूपाध्यारोपः. चौ, अनन्त. मुः
2. रं न दृष्टम्. चौ. अनन्त. मु.
3. भेनश्च स्यात्. मा.
4. हि. मा.
5. वादिनाम्. चौ. अनन्त. मु.

निर्देशतुल्य[1]तायां च श्रोता वक्तृस्वरूपता ।
शब्दज्ञानप्रमेयेषु विज्ञानस्यावसीयते ॥ १८३ ॥

भ्रान्तिहेतुसमानत्वेऽप्युपायत्वान्मतिश्रुती ।
मन्यतेऽर्थे समध्यस्ते नार्था[2]ध्यासं तयोः पुनः ॥ १८४ ॥

गोत्वे साक्षादिमद्रूपा गादिरूपाभिधायके ।
निराकारोभयज्ञाने संवित्तिः परमार्थतः ॥ १८५ ॥

यदि चाभेदरूपेण शब्देनार्थः प्रतीयते ।
एकरूपत्वमक्षादौ देवनादेः प्रसज्यते ॥ १८६ ॥

स्यादनक्षनिवृत्त्या चेत् न प्राक् शब्दात् प्रतीयते ।

अर्थज्ञानशब्देषु त्रिष्वपि समाननिर्देशत्वं भ्रान्तेर्मूलम् । तदाहि—कीदृशोऽर्थस्त्वया प्रतिपन्नः—इति पृष्टः सन्नेवमाह 'गौः' इति; तथा कीदृशोऽयं शब्दः ? 'गौः' इति; कीदृशं च ज्ञानमुत्पन्नम् ? 'गौः' इति; त्रिषु समाननिर्देशाच्छब्दवदर्थोऽपि शब्दाकारः प्रतीयत इति 'गौरयम्' इति शब्दसमानाधिकरणोऽयमध्यासभ्रमः । भ्रान्तिहेतुसमानत्वेऽप्यर्थस्य प्रतिपत्तावुपायत्वाच्छब्दज्ञानयोरर्थे शब्दारोपं मन्यन्ते, न शब्दे चाध्यारोपमित्याह—**भ्रान्तिहेतुसमानत्वेऽपीति** ॥

परमार्थतस्तु विविक्ता एवैते प्रत्यया इत्याह—**गोत्व इति** । 'गौरयम्' इत्यत्र गकारौकारविसर्जनीयविविक्तोऽर्थोऽपरोक्षतया साक्षादिमद्रूपोऽवभासते । अभिधायकस्तु तद्विविक्त एव गकारादिरूपोऽवभासते । अभिधानाभिधेयज्ञानं तु उभयविविक्तत्वान्निराकारमेवेत्यर्थः ॥

एवमक्षजे प्रत्यये शब्दसमारोपं निराकृत्येदानीं शब्दोऽपि नाम समारोपेणार्थं प्रतिपादयतीत्याह—**यदि चाभेदरूपेणेति** । त्रिष्वप्यारोप्यमाणस्यैवैकत्वादित्यर्थः ॥

ननु चाक्षनिवृत्त्यास्त्येवैकरूपतेति चोदयति—**स्यादनक्षनिवृत्त्या चेदिति** । तत्र तावदिदं विवेक्तव्यम्—भवत्वनक्षनिवृत्तिरूपा प्रतिपत्तिः ; अक्षशब्दाकारा तु न प्राप्नोतीति वक्तव्यम् । अभ्युपगम्यैतदपि नास्तीत्याह—**न प्राक् शब्दात्प्रतीयत इति** ।

1. तायाश्च श्रोत्रवक्तृ. मा. 2. अध्यासयोः. मा.

**गवादिष्वपि तुल्यं चेन्नैकरूपस्य दर्शनात् ॥ १८७ ॥**

**त्रये विभीतकादीनां नैकधर्मान्वयोऽस्ति[1] हि ।**
**शब्दः साधारणस्तेषां जातिशब्दाद् विलक्षणः ॥ १८८ ॥**

**[2]परस्परविभिन्नं तु ज्ञायतेऽत्राकृतित्रयम् ।**
**तदध्यासे न युज्येत तद्रूपस्याविभागतः ॥ १८९ ॥**

**भिन्नाः स्युरक्षशब्दाश्चेन्नार्थे संशयदर्शनात् ।**
**[3]न सामान्यादृते स स्याद् [4]रूपाभेदश्च गम्यते ॥ १९० ॥**

अनक्षनिवृत्तेरवस्तुत्वेन प्रत्यक्षाद्यगोचरत्वाद् ग्रहणाभावः, तदभावाच्च न शब्दविषयतेत्यर्थः । एवमेव तर्हि गोशब्दस्यापि सामान्यवाचकत्वं न प्राप्नोतीति चोदयति—**गवादिष्वपि तुल्यं चेदिति** । तत्रापोहेन सहास्मदभ्युपगतस्य सामान्यवैलक्षण्यमाह—**नैकरूपस्य दर्शनादिति** । वस्तुरूपतयाऽस्मत्सामान्यस्य प्रत्यक्षत्वे नास्ति सम्बन्धग्रहणमित्यर्थः ॥

विभीतकादित्रये तु वस्तुरूपं सामान्यं नास्तीत्याह—**त्रये विभीतकादीनामिति** द्वयेन ॥

विभीतकत्रये तु वाचकैकत्वमुक्त्वा त्रिष्वनुगतमेवावान्तरसामान्यं शाबलेयादिष्विव गोरूपमन्यन्नास्तीति परस्परविलक्षणार्थत्रयप्रतिपत्तिरध्यासपक्षे न प्राप्नोति भिन्नत्वादक्षशब्दस्य न दोष इति दूषणपरिहारकाम आह—**भिन्नाः स्युरक्षशब्दाश्चेदिति** । इदानीं दूषणमापादयितुं शब्दैकत्वमाह—**नार्थ इति** द्विपाद्या । यदि ह्येकोऽयमक्षशब्दो जातित्रयस्य वाचकः स्यात्, तदा शाबलेयादिष्विव गोत्वसामान्यशब्दश्रवणे सत्यर्थे संशयः स्यात्—कतमार्थप्रतिपादनविषयोऽनेन प्रयुक्तः इति । अन्यथा तु शब्द एव संशयः स्यादित्यर्थः । एवं तावद् युक्त्या शब्दस्यैकत्वं प्रतिपाद्येदानीं तदेव प्रतिभासेन साधयितुमाह—[5]**रूपाभेदश्च गम्यत इति** ॥

1. अस्ति. तु मा.
2. पूर्वोत्तरार्धौ व्यत्यासेन वर्तेते } मा.
3. Omitted. ना. मा.
4. रूपभेदश्च. मा.
5. रूपभेदश्च. मा.

भवत्यादौ च भिन्नेऽपि नामाख्याततत्वसञ्ज्ञया ।
रूपैकत्वेन चाध्यासे तुल्यार्थत्वं प्रसज्यते ॥ १९१ ॥

शब्दनिष्पत्त्यभेदाच्च तिङन्तार्थस्य साध्यता ।
कथं कथं च मूर्तार्थो वाचके मूर्तिवर्जिते ॥ १९२ ॥

गवाश्वशुक्लशब्दादेः वाच्यरूपानपेक्षणे ।
वाचकत्वव्यवस्थानं कथं जातिगुणादिषु ॥ १९३ ॥

वृक्षप्लक्षादिशब्दानां तुल्ये भेदे घटादिभिः ।
विशेषणविशेष्यत्वं कथमर्थानपेक्षया ॥ १९४ ॥

सामानाधिकरण्यं च न स्याद् वाचकबुद्धिवत् ।
एकत्र चोपसंहारो न बुद्ध्योर्निर्विकल्पके[1] ॥ १९५ ॥

वस्तुमात्रे स चेदेवं सर्वेषामेकवाच्यता ।

भवति—भवति—शब्दयोः सुप्तिङन्तयोरध्यासपक्षेऽध्यस्यमानरूपैकत्वेन पर्यायत्वं प्राप्नोतीत्याह—**भवत्यादौ चेति** ॥

शब्दाध्यासपक्षे तु निष्पन्नत्वाच्छब्दस्य साध्यावगमो न प्राप्नोतीत्याह—शब्देत्यादिकथमन्तेन । मूर्तामूर्तत्वं शब्दार्थयोर्न प्राप्नोतीत्याह—**कथञ्चेति** शेषेण ॥

देवदत्तो - गौः - पचति - शुक्ल - इत्येवमादिषु द्रव्यजातिगुणक्रियावाचकत्वं न प्राप्नोतीत्याह —**गवाश्वशुक्लशब्दादेरिति** ॥

अध्यासपक्षे च वृक्षप्लक्षशब्दयोः सामान्यविशेषरहितत्वेन भिन्नार्थत्वाद् घटपटयोरिव[2] विशेषणविशेष्यभावो न प्राप्नोतीत्याह—**वृक्षप्लक्षादिशब्दानामिति** ।

अत एव सामानाधिकरण्यं शब्दालम्बनयोरिव तद्बुद्ध्योर्न प्राप्नोतीत्याह—**सामानाधिकरण्यमित्यर्धेन** । अथ द्वयोः शब्दयोरेकस्मिन्नात्माध्यासेन प्रवर्तमानयोः सामानाधिकरण्यमुच्यत इत्याशङ्क्याह—**एकत्रेत्यर्धेन** ॥

न तावदेकस्मिन् स्वलक्षणे द्वयोर्वृत्तिः, अतद्विषयत्वात्; नापि वस्तु, तन्मात्रत्वलक्षणव्यतिरेकेण तस्यानवगमात् । अभ्युपगम्यापि दूषणमाह—**वस्तुमात्रे स चेदिति** । सर्वेषां हि गवादिशब्दानां वस्तुमात्रविषयत्वेन पर्यायत्वप्रसङ्गादित्यर्थः ॥

1. कल्पकः. मा.
2. घटघटयोरिव. मा.

भवेद् गवादिशब्दानां सर्वैर्वस्तु हि गम्यते ॥ १९६ ॥

न चासा[1]धारणे भेदे नीलोत्पलमितीष्यते ।
न हि शब्दप्रवृत्तिः स्यादन्यत्रान्यत्र चे[2]ष्यते ॥ १९७ ॥

न च नीलोत्पलं नाम वस्त्वेकं किंचिदिष्यते ।
शब्दार्थयोर्यतो भेदो गम्यतेऽवयवानुगः ॥ १९८ ॥

शब्दद्वयस्य चाध्यासः पर्यायेष्वपि [3]दृश्यते ।
एकाधिकरणा[4]स्तेन स्युस्ते नीलोत्पलादिवत् ॥ १९९ ॥

न चानवगते पूर्वं पदमर्थे प्रयुज्यते ।
तत्र सम्बन्धवेलायां की[5]दृशोऽर्थः प्रतीयते ॥ २०० ॥

ननु नीलोत्पलं नामैकं स्वलक्षणमभिन्नम्; न हि तत्र नीलत्वोत्पलत्वे स्तः; नीलोत्पलशब्दोऽपि निर्विभागः तस्यैव वाचकः; न हि तत्रापि नीलोत्पलशब्दौ स्तः; अर्थान्तरे तु नीलत्वोत्पलत्वादौ दर्शनान्नीलशब्दोत्पलशब्दयोः अपोहद्वारेणैकस्मिन्नात्माध्यासेन प्रवृत्तयोः सामानाधिकरण्यमित्याशङ्क्याह—**न चेति**। अवयवार्थरहितनीलोत्पलस्वलक्षणान्तराभ्युपगमे हि तेषां बहुत्वाद् यस्मिन्नेव नीलोत्पलस्वलक्षणे सम्बन्धग्रहणं ततोऽन्यत्र नीलोत्पलशब्दप्रयोगो न प्राप्नोतीत्यर्थः ॥

अपि च ययोरर्थयोर्नीलोत्पलशब्दौ प्रयुक्तौ तयोरन्यत्रापि नीलोत्पले दर्शनान्नावयवशक्तितिरस्कारेण समुदायस्य शक्त्यन्तरं कल्पयितुं लभ्यत इत्याह—**न च नीलोत्पलमिति** ॥

यदि च द्वयोरेकस्मिन्नात्माध्यासेन प्रवृत्तयोः सामानाधिकरण्यमुच्यते, तदा पर्यायाणामपि सामानाधिकरण्यं प्राप्नोति, बहूनामेकस्मिन्नात्माध्यासेन प्रवृत्तिदर्शनादित्याह—**शब्दद्वयस्य चेति** ॥

अपि च सम्बन्धग्रहणसापेक्षः शब्दोऽर्थं प्रत्याययति, सम्बन्धग्रहणकाले च शब्दविशिष्टस्यार्थस्यादर्शनात् कथमात्मविशिष्टं शब्दोऽर्थं प्रत्याययतीत्याह—**न चेति** सार्धेन ।

1. रणो भेदः. मा.
2. चेक्षणात्. मा.
3. विद्यते. मा.
4. स्तेऽपि. मा.
5. कीदृगर्थः. मा.

तदानीं नार्थ[1]रूपे हि शब्दरूपस्य सम्भवः ।
न चासाधारणांशेन सम्ब[2]न्धानुगमः क्वचित् ॥ २०१ ॥

तत्र पूर्वानपेक्षत्वे यद्यात्माध्यासशक्तता ।
शब्दस्य प्रथमेऽपि स्याच्छ्रवणेऽध्यस्तरूपता ॥ २०२ ॥

मम वाच्यानभिज्ञ[3]त्वान्न भवेत् स्मरणं ततः ।
भवतस्त्वर्थरूपस्य [4]वाचकेष्वपि दर्शनात् ॥ २०३ ॥

यथा त्वज्ञातशब्दानां वाच्ये तद्धीर्न जायते ।
तथैवाज्ञातवाच्यानामुपलब्धेऽपि वाचके ॥ २०४ ॥

तस्मान्नातीव वाच्यानां वाचकाधीनता भवेत् ।
स्मारकत्वाच्च तेष्वेव पारतन्त्र्यं प्रतीयते ॥ २०५ ॥

भवत्पक्षे च सम्बन्धग्रहणं न प्राप्नोति तावत् स्वलक्षणेषु, ते[1]षामानन्त्यात्; नापि सामान्ये, शब्दादन्यस्य शब्दाध्यासवादिनां सामान्यस्याभावात्; शब्द एवैको बहुषु स्वलक्षणेष्वध्यस्तः प्रतीयत इत्यध्यासवादिनां दर्शनम्; तदाह—**न चासाधारणेत्यर्धेन** ॥

तत्र यदि शब्दरहितेऽप्यर्थे सम्बन्धग्रहणादात्मविशिष्टं प्रत्याययति, हन्त तर्हि प्रथमश्रवणेऽपि प्रत्याययेदित्याह—**तत्र पूर्वानपेक्षत्व इति** ॥

येषामपि शब्दविपरिवर्त[6]रूपोऽर्थः तेषामगृहीतसम्बन्धानामेवार्थागतिः प्राप्नोति; सम्बन्धसापेक्षतायां हि क्व कस्य सम्बन्धग्रहणं स्यात्? अस्मत्पक्षे तु भिन्नत्वादस्ति सम्बन्धग्रहणापेक्षेत्याह—**मम वाच्यानभिज्ञत्वादिति** ॥

**यथेति** । अस्मत्पक्षे तु यथा गृहीतसम्बन्धोऽप्यश्रुतशब्दोऽर्थं न प्रत्येति, तथा श्रुतशब्दोऽप्यगृहीतसम्बन्ध इत्यर्थः ॥

तस्माच्छब्दविपरिवर्तरूपत्वान्न शब्दतन्त्रोऽर्थः, अपि तु स्मारकत्वेन शब्दस्य, तत्तन्त्रत्वमर्थस्येत्याह—**तस्मादिति** ॥

1. रूपेऽपि शब्द. मा.
2. न्धानुभवः मा.
3. त्वं न भवेत्कारणान्तरम्. मा.
4. वाचकेष्वेव. मा.
5. नैषामान. मा.
6. रूपोऽर्थो मा तेषाम्. मा.

तेन सम्बन्धवेलायामर्थात्मा योऽवसीयते ।
शब्दादपि स एवेति नार्थरूपं प्रणश्यति ॥ २०६ ॥

प्रवृत्तौ वा निवृत्तौ वा यां शब्दः कुरुते मतिम् ।
तादात्म्यं तस्य शब्दस्य न कथञ्चित् प्रतीयते ॥ २०७ ॥

करहस्तादिशब्देभ्यः शब्दरूपस्य भेदतः ।
भिन्नोऽर्थः संप्रतीयेत तदध्यारोपकल्पने ॥ २०८ ॥

आत्माध्यासश्च सादृश्यादुपरागाच्च दृश्यते ।
न तावदर्थसादृश्यं शब्दस्येह प्रतीयते ॥ २०९ ॥

न चानुरागः शब्देन भिन्नदेशस्य युज्यते ।
दूरस्थप्रतिबिम्बं च नारूपस्य प्रतीयते ॥ २१० ॥

शब्दसर्वगतत्वेन यद्यर्थप्राप्तिरुच्यते ।
सर्वार्थानां भवेच्छब्दः सर्वैरेवानुरञ्जनम् ॥ २११ ॥

उपसंहरति—**तेन सम्बन्धवेलायामिति**। सम्बन्धग्रहणवेलायां हि यादृगर्थः प्रतीयते शब्दादपि हि तादृगेव प्रतीयते, न शब्दविशिष्टो नापि विपरिवर्तरूपः ॥

अध्यासपक्षे च प्रवृत्तिनिवृत्तिरूपार्थावगतिर्न प्राप्नोति, अतदात्मकत्वाच्छब्दस्येत्याह—**प्रवृत्तौ वेति** ॥

अध्यासपक्षे च करहस्तादिशब्दानां पर्यायत्वं न प्राप्नोतीत्याह—**करहस्तादीति** ॥

अपि च अर्थान्तरमर्थान्तरे आत्मानमारोपयति सादृश्यानुरागाभ्यां यथा शुक्तिकायां रजतम्, लाक्षादि वा स्फटिकादौ ; तद्दर्शयति—**आत्माध्यासश्चे**त्यर्धेन ।

तत्रार्थसादृश्यं शब्दस्य नास्तीत्याह—**न तावदि**त्यर्धेन ॥

भिन्नदेशत्वादर्थस्य शब्देनानुरागोऽपि नास्तीत्याह—**न चानुराग** इत्यर्धेन ।

नीरूपत्वाच्च प्रतिबिम्बोऽपि नास्तीत्याह—**दूरस्थे**त्यर्धेन ॥

ननु सर्वगतत्वेनास्त्येवार्थसमानदेशत्वं शब्दस्येत्याशङ्क्याह—**शब्दसर्वगतत्वेनेति** ॥

न च भिन्नेन्द्रियग्राह्यं किञ्चिदस्त्यनुरागकृत् ।
न हि लाक्षानुरक्तेऽपि स्फटिके धीस्त्वगादिभिः ॥ २१२ ॥

अनुमानागमौ मिथ्या स्यातामध्यासकल्पने ।
निरूपणस्य मिथ्यात्वात् सर्वाभावः प्रसज्यते ॥ २१३ ॥

[1]भवत्विति यदि ब्रूयान्मिथ्या स्ववचने सति ।
कथमेवं वदेदर्थो नानृताद्धि प्रतीयते ॥ २१४ ॥

शून्यवादोत्तराच्चापि यथार्थं बुद्धिशब्दयोः ।
प्रवृत्तिर्न तु तत्तन्त्रमर्थरूपं कदाचन ॥ २१५ ॥

तस्मात् प्रागपि ये शब्दाद् भिन्नैकत्वादिबुद्धिभिः ।
गृह्यन्ते सर्वदा तेषां परमार्थास्तिता भवेत् ॥ २१६ ॥

शब्दाभ्युपायकेऽप्यर्थे तदभावे च यद्यपि ।
अर्थबुद्धिर्न जायेत नार्थे रूपं प्रणश्यति ॥ २१७ ॥

न च शब्दानुरक्तार्थश्चक्षुरिन्द्रियेण श्रोत्रेण वा प्रतीयते, भिन्नेन्द्रियग्राह्यत्वात् तयोरित्याह—**न च भिन्नेन्द्रियग्राह्यमिति** ॥

यदि सविकल्पकं ज्ञानं शब्दसमारोपेणोत्पद्यमानत्वादप्रमाणं तदागमानुमानयोरपि मिथ्यात्वं प्राप्नोति, तयोरपि निरूपणात्मकत्वादित्याह—**अनुमानागमाविति** । निरूपणशब्देन सविकल्पकं ज्ञानमुच्यते ॥

भवत्वेवं को दोष इति चेदित्याशङ्क्याह—**भवत्वितीति** ॥

अपि च "स हि बहिर्देशसम्बन्धः प्रत्यक्षमुपलभ्यते" इत्यनेनैव यथार्थबुद्ध्योः भिन्नत्वं प्रतिपादितम्, तथैव शब्दाध्यासोऽपि निराकृतः; यतः 'गौरयम्' इत्यत्र बहिरर्थः प्रतीयतेऽन्तःसञ्जल्पश्च शब्द इत्याह—**शून्यवादोत्तराच्चापीति** ॥

प्रकरणार्थमुपसंहरति—**तस्मादिति** ॥

एवं तावच्छब्दसमारोपं निराकृत्येदानीं तद्विपरिवर्तं निराकर्तुमाह—**शब्दाभ्युपायक इति** । यद्यपि शब्दैकसमधिगम्या गोत्वादयस्तथापि न शब्दविपरिवर्तरूपोऽर्थात्मा; तथापि गवादिशब्दतत्त्वमर्थभावेन विपरिवर्तत इत्यस्य भाषितस्य

1. तथास्तिति. चौ. अनन्त. मु

**चक्षुरादेरभावे हि रूपाद्यात्मा न गृह्यते ।**
**स्वरूपनाशो रूपादेस्तावन्मात्रेण नेष्यते ॥ २१८ ॥**

**सम्बन्धस्य च नित्यत्वान्नार्थस्य स्यादरूपता ।**
**युगपन्न हि सर्वेषामन्याका[1]रार्थवेदनम् ॥ २१९ ॥**

**तदाकारेऽपि तद्वच्चेद् द्वये सति परीक्ष्यताम् ।**
**किन्त्वर्थस्यातथाभावो ग्रहीतुः किन्त्वशक्तता ॥ २२० ॥**

**सदसद्भावयोरर्थे विरोधित्वादसम्भवः ।**

कोऽर्थः ? न तावत् 'गौरयम्' इत्यत्र गोशब्द एव बहिरवस्थितः 'अयम्' इति अत्र प्रतिभासते; नापि गोशब्द एव गोत्वादिरूपेण विपरिवर्तमानः 'अयम्' इति प्रतिभासत इत्यत्र प्रमाणमस्ति; शब्दपरिणामपक्षेऽपि परिणतस्य गोत्वादेरशब्दात्मकत्वान्न शब्दात्मकोऽर्थः । अतः शब्दात्मैवा[2]र्थभावेन विपरिवर्तत इति परिणामप्रतिपादनप्रयोजनमपि नोपलभ्यते ॥

अत्रैव दृष्टान्तमाह—**चक्षुरादेरिति** । येऽपि चक्षुरिन्द्रियाद्येकसमधिगम्या रूपादयस्तेऽपि नेन्द्रियविपरिवर्तरूपाः ॥

इदानीमभ्युपगम्य शब्दाध्यासं विकल्पकस्य प्रामाण्यमाह—**सम्बन्धस्य चे**त्यर्धेन । यद्यपि सविकल्पकविज्ञानं शब्दविशिष्टमर्थं गृह्णाति; तथापि नैवाप्रामाण्यम्, तदाकारत्वेनाध्यासाभावात् । नापि शब्दसम्बन्धात् पूर्वमतदाकारता, गोत्वादेरर्थशब्दयोः सम्बन्धस्य नित्यत्वादित्यर्थसम्बन्धग्रहणात् पूर्वं तदाकारप्रतिपत्तिर्बाधिता भविष्यतीति चेदित्याशङ्क्याह—**युगपदि**त्यर्धेन । यद्यप्यगृहीतसम्बन्धानामतदाकारत्वेन प्रतिपत्तिः, तथापि गृहीतसम्बन्धाः शब्दाकारमेवार्थं प्रतिपद्यन्ते; कथमियमतदाकारप्रतिपत्तिः बाधिका भविष्यतीति ॥

ननु तदाकारतापि न सर्वे तदाकारतावत् प्रतीयत इति चोदयति—**तदाकारेऽपि तद्वच्चेदिति** । तत्राह—**द्वये सतीति** त्रिपाद्या ॥

अस्त्येतद् द्वयम्; इदं तु विचारयामः—यद् गृहीतसम्बन्धैः शब्दाकारत्वेन ग्रहणमर्थस्य, तत् किमतदाकारत्वादुतोपायाभावादिति ? तत्र किं युक्तमित्याह—**सदसद्भावयोरिति** सार्धेन ।

1. रार्थबोधनम् मा.     2. अर्थाभावेन. मा.

ग्रहीतृभेदाच्छक्तत्वमशक्तत्वं च युज्यते ॥ २२१ ॥

यथान्धानन्धयोः पार्श्वे रूपस्येत्यभिधास्यते ।
तेनार्थे ध्वन्युपायस्य तद्धीर्नान्यस्य जायते ॥ २२२ ॥

देवदत्तादिशब्दे तु सम्बन्धाद्यत्वदर्शनात् ।
अर्थस्यानित्यतायां च ताद्रूप्यस्याप्यनित्यता ॥ २२३ ॥

तत्राप्यौत्पत्तिकी शक्तिस्तद्रूपप्रत्ययं प्रति ।
ग्राह्यग्राहकयोरिष्टा नियोगस्य त्वनित्यता ॥ २२४ ॥

तत्र सर्वैरताद्रूप्यं प्राङ् नियोगात् प्रतीयते ।

सदसद्भावयोरेकस्मिन्नर्थे विरोधादिदमेव युक्तमुत्तरम्—यदगृहीतसम्बन्धैः शब्दाकारत्वेनास्याग्रहणम्, तदगृहीतसम्बन्धानां शब्दस्मरणोपायाभावात्; गृहीतसम्बन्धैस्तु शब्दस्मरणोपायसद्भावात् ग्रहणं यथा घटसमवधाने सत्यन्धा[1]नन्धानामग्रहणग्रहणे । एतदेवोपसंहरन्नाह—**तेनार्थ** इत्यर्धेन । गोत्वादिलक्षणमर्थं ध्वन्युपायः पुरुषः शब्दविशिष्टः प्रत्येति, नान्य इत्यर्थः ॥

यत्र[2] तु यदृच्छाशब्देष्वर्थस्यानित्यत्वेन सम्बन्धस्यानित्यत्वम्, तत्र भवत्वध्यासस्य मिथ्यात्वमित्याह—**देवदत्तादिशब्दे त्विति** ॥

ननु यदृच्छाशब्दस्यापि जातिशब्दवदर्थेन सह नित्य एव सम्बन्ध इति वक्ष्यति—"देवदत्तेऽपि वा व्यक्तां शक्तिमिच्छन्ति युक्तयः" इति । किमुच्यते "देवदत्तादिशब्दे तु सम्बन्धाद्यत्वदर्शनात्" इति चोदयति—**तत्रापीति** त्रिपाद्या । तत्र जातिशब्देन सह यदृच्छाशब्दस्य वैलक्षण्यमाह—**नियोगस्य त्वनित्यतेति** सपादश्लोकेन । यदि नाम यदृच्छाशब्दस्यापि कैश्चिन्नित्यार्थप्रतिपादिका शक्तिरभिप्रेता, तथापि समयस्यानित्यत्वात् प्राक् समयात् सर्वैरताद्रूप्यप्रतिपत्तिस्ताद्रूप्यप्रतिपत्तेर्बाधिका भविष्यतीति जातिशब्दाद् विशेषः । नियोगशब्देन समयमाह; स चानित्योऽपि नित्यसम्बन्धाभिव्यञ्जकत्वेनेष्ट इति समयात् पूर्वं जातमात्रावस्थायां सर्वैरशब्दविशिष्ट एवार्थः प्रतीयते ॥

1. न्धाना....नाग्रहणे. मा.

2. तत्र तु. मा.

तेनेष्टमेव मिथ्यात्वं कैश्चिदध्यासकल्पने ॥ २२५ ॥

यदा तु यादृशः पिण्डः पूर्वं शब्दात् प्रतीयते ।
तादृशस्मरणे [1]हेतुः शब्दस्तत्र यथार्थता ॥ २२६ ॥

नियोगात् परतो वापि शब्देन [2]व्यज्यतामियम् ।
तद्ग्राह्यशक्तिरर्थस्य पाररूप्यं न तावता ॥ २२७ ॥

सर्वाकारपरिच्छेद्यशक्तेऽर्थे वाचकेऽपि वा ।
सर्वाकारार्थविज्ञानसमर्थे नियमः [3]कृतः ॥ २२८ ॥

अभ्युपगम्याध्यासं यदृच्छाशब्दे मिथ्यात्वमभिहितम्; परमार्थतस्तु नाध्यासो न मिथ्यात्वमित्याह—**यदा तु यादृश इति** ॥

अन्ये त्वाहुः—जातिशब्दवद् देवदत्तशब्दोऽपि नित्येनैव सम्बन्धेनार्थं प्रतिपादयति, समयोऽपि तस्यैवाभिव्यञ्जकः, न तु सम्बन्धान्तरतिरस्कारेणार्थप्रतिपादकः। तेन यदुक्तं जातिशब्दे "सम्बन्धस्य च नित्यत्वात्" इति, तत्तुल्यमत्रापीत्याह—**नियोगादिति**। नियोगो हि व्यञ्जको ग्राह्यग्राहकशक्त्योरर्थशब्दगतयोः, तयोश्च नित्यत्वेन शब्दाकार(त)ार्थस्य नापैतीत्यर्थः ॥

यदि यदृच्छाशब्दस्यापि नित्यनव सम्बन्धेनार्थप्रतिपादकत्वम्, किमेवं सति समयेनेति समयस्योपयोगमाह—**सर्वाकारेति**। यदृच्छाशब्दानां हि सर्वार्थविषया नित्या वाचिका शक्तिरिष्यते; सर्वार्थानां च सर्वशब्दविषया वाच्यशक्तिः; यतो देवदत्तशब्दे उच्चरिते सति संशयः—कमर्थं प्रतिपादयितुमनेनोच्चारित इति बुद्धिर्भवति। यत्तु स्वगृहे नामकरणं तन्नियमार्थम् इह—देवदत्तशब्देनास्मिन्नर्थे व्यवहर्तव्यम्; अमुमेवार्थमङ्गीकृत्य "वृद्धिरादैच्" इति [4]नियमार्थं व्याख्यातम् ॥

एवं तावत् सविकल्पके ज्ञानमात्रे शब्दसमारोपं निराकृत्येदानीम् 'स एवायं देवदत्त उपलब्धः,' शाबलेयस्य च पिण्डान्तरदर्शने सति 'सैवेयं गौः' इति

1. हेतुशब्दः चौ. मु.
2. त्यज्यतां मिथः. अनन्त. मु.
3. कुतः मा.
4. नियमार्थं व्याख्यार्थम्. मा.

तत्र शब्दार्थसम्बन्धं प्रमातुः स्मरतोऽपि या ।
बुद्धिः पूर्वगृहीतार्थ[1]सन्धानादुपजायते ॥ २२९ ॥

चक्षुषा सन्निकृष्टेऽर्थे नाप्रत्यक्षमसौ भवेत् ।
विविक्ता एव तेऽप्यर्थाः स्मृतिप्रत्यक्षगोचराः ॥ २३० ॥

स्मर्येते शब्दसम्बन्धौ मा भूत् प्रत्यक्षता तयोः ।
तदप्रत्यक्षभावेन न त्वर्थस्यापि वार्यते ॥ २३१ ॥

गृहीतमपि गोत्वादि स्मृतिस्पृष्टं च यद्यपि ।
तथापि व्यतिरेकेण पूर्वबोधात् प्रतीयते ॥ २३२ ॥

[2]व्यक्तिकालादिभेदेन तत्रास्त्यवसरो मितेः ।

शब्दप्रत्यभिज्ञारूपस्य सविकल्पकस्य विस्फारिते चक्षुषि शब्दसम्बन्धस्मरणोत्तरकालं पूर्वगृहीतार्थानुसन्धानेन चोत्पद्यमानत्वादनक्षजत्वेनाप्रत्यक्षत्वमनुभूते वस्तुन्यनुभूततयैवाभ्रष्टसंस्कारस्य उत्पद्यमानत्वात् स्मृतित्वमाशङ्क्य प्रत्यक्षत्वं तावत् समर्थयन्नाह—**तत्रेति** सार्धश्लोकेन ।

यद्यपि प्रत्यभिज्ञारूपं विज्ञानं शब्दस्मरणोत्तरकालं पूर्वगृहीतार्थानुसन्धानेन चोत्पद्यते 'स एवायं देवदत्तः' इति; तथापीन्द्रियार्थसन्निकर्षेण अपरोक्षार्थावभासितया चोत्पद्यमानत्वात् प्रत्यक्षत्वमस्त्येवेत्यर्थः । न तावत् स्मर्यमाणशब्दानुसन्धानेनोत्पद्यमानत्वादप्रत्यक्षत्वम् , अर्थशब्दयोः विवेकप्रतिभासेन तदभावादित्याह—**विविक्ता इति** सार्धश्लोकेन ॥

नापि प्रमितेऽर्थे प्रमिततयैवाभ्रष्टसंस्कारस्योत्पद्यमानत्वात् स्मृतित्वम् , अभ्यधिकार्थप्रतिभासादित्याह—**गृहीतमपीति** । अपिशब्दद्वयेन प्रथमग्रहणे प्रतियोगिग्रहणाभावेनानुगतप्रतिभासाभावात् जातेरग्रहणम् , तदभावे चास्मरणम् , उभयाभावेन च जातिप्रत्यभिज्ञाभावं दर्शयति ॥

अभ्युपगम्य तु ग्रहणं स्मरणं च गोत्वादेरधिकग्रहणेन स्मरणादुत्तारयति, तदाधिक्यं दर्शयितुमाह—**व्यक्तिकालेत्यर्धेन** । पूर्वमन्यकालविशिष्टं प्रतिपन्नमिदानीं

1. र्थसम्बन्धादुप. अनन्त. मु. 2. व्यतिरेकादि. मा.

यः पूर्वावगतोंऽशोऽत्र स न नाम प्रतीयते ॥ २३३ ॥

वर्तमानकालविशिष्टतया 'स एवायं देवदत्तः' इति । तच्च सामान्यप्रत्यभि[1]ज्ञानमपि पूर्वमन्यव्यक्तिगतत्वेन [2]गृह्यमाणमासीत इदानीमन्यव्यक्तिगतत्वेनानुभूयते । तदेव विस्पष्टयन्नाह—यः पूर्वमित्यर्धेन । नात्र पूर्वावगतमात्रं प्रतीयते । किं तर्हि? तदेवान्यकालविशिष्टमन्यव्यक्तिगतत्वेन च प्रतीयते ; न च वर्तमानकालविशिष्टता पूर्वावगतेत्यर्थः ॥

नन्वतीतविज्ञानकर्मतापरोक्षत्वे प्रतिभासेते; न[3] चेन्द्रियस्यातीतादौ [4]सामर्थ्यम्, नाप्यपरोक्षे संस्कारस्य ; तस्मादनु[5]भयद्वयमिदम् ; एकं तत्र स्मरणमपरं च ग्रहणम् ; न चान्यदुपायान्तरमस्ति, यत् स्मर्यमाणापरोक्षयोरेकत्वं गृह्णीयात् । कथं [6]चाप्रत्यक्षे काले तद्विशिष्टं प्रत्यक्षे प्रतिभासते ? तदनुपपन्नम् ; एको ह्ययमनुभवः अतीतविज्ञानकर्मतापरोक्षत्वे एकाधिकरणे गृह्णन्नुत्पद्यत इति सर्वस्वसंवेद्यम्, 'शुक्लोऽयं पटः' इतिवत् । यच्च अप्रत्यक्षे काले कथं तद्विशिष्टः प्रतिभासत इति । तद्विशिष्टता चेत्प्रतिभासते, कथमप्रत्यक्षता कालस्य ? अथ न प्रतिभासते, एतदेव तर्हि वाच्यम् ; किमप्रत्यक्षत्वेन ? न च लिङ्गार्थस्येव कालत्रयानवच्छिन्नस्य 'घटोऽयम्' इति प्रतिभासः । [7]तथा अप्रतिभासे च घटार्थिनः प्रवृत्तिर्न स्यात्; न ह्यतीते भाविनि वा प्रवृत्तिः । यत्तु किमेतस्य जनकमिति; किमनेन बाधोपहतसेचनेन कारणविकल्पेन ? न हि प्रकाशमानस्य कारणविकल्पेन नास्तित्वं शक्यं प्रतिपादयितुम् ; नाप्यप्रकाशमानस्य तद्विकल्पैरस्तित्वम् ; न च कार्यार्थिनः कारणैरस्ति प्रयोजनम् । अथोत्पन्नेऽपि कार्ये कारणेऽपि [8]तत्र, अस्त्येव संस्कारसहितमिन्द्रियम्, तद्भावभावित्वेनावगमात् । अथापि प्रत्ययद्वयमिदं ग्रहणस्मरणरूपम् ; तथापि घटस्मरणघटग्रहणयोः निरन्तरोत्पन्नयोर्विलक्षणमिदम्, परस्परविषयैकत्वेन प्रतिभासनात्; अपरोक्ष एवार्थोऽतीतविज्ञानकर्मतया स्मृतौ प्रतिभासते; अतीतविज्ञानविशिष्टता अपरोक्षतया प्रत्यक्षे 'तदयम्, स्मराम्यहमेतत्' इति प्रतिभासनात् ।

1. ज्ञानामपि. मा.
2. ग्रहण. मा.
3. भासते तेन चेन्द्रियस्य. मा.
4. सामर्थ्यान्नाप्य. मा.
5. भवद्वय. मा.
6. चाप्रत्यक्षकाले. मा.
7. तथाप्रति. मा.
8. तदास्त्येव. मा

**इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम् ।**
**न हि स्मरणतो यत प्राक् तत् प्रत्यक्षमितीदृशम् ॥ २३४ ॥**

**वचनं राजकीयं वा वैदिकं वापि विद्यते ।**
**न चापि स्मरणात् पश्चादिन्द्रियस्य प्रवर्तनम् ॥ २३५ ॥**

**वार्यते केनचि[1]न्नातस्तत्तदानीं प्रदुष्यति ।**
**तेनेन्द्रियार्थसम्बन्धात् प्रागूर्ध्वं वापि यत्स्मृतेः ॥ २३६ ॥**

**ननु** सत्यपि तत्वावभासेऽनुवृत्तेरप्रतिभासनात् कथं क्षणभङ्गसाधकस्यानुमानस्य प्रत्यभिज्ञाबाधः ? उच्यते—अनिमेषदृष्टेर्यदुत्पत्तिविनाशरहितानुवृत्ततत्त्वावसायः, स बाधकः; नावसितस्य कालान्तरे तत्त्वावसायः । क्षणप्रध्वंसितया च यः प्रतिक्षण-मन्यत्वं वदति, तस्यायं बाधः । प्रत्यभिज्ञामात्रेणानन्यत्वे[2] विनष्टस्यापि, तत्त्वावगम-प्रत्यभिज्ञायामिव तस्यैवोत्पत्तेः किमन्तरा व्यवहारकाल[3]शून्ययानुवृत्त्येत्यलमति-प्रसङ्गेन ॥

ननु विस्फारिते चक्षुषि पुरोऽवस्थितेऽप्यर्थे पूर्वगृहीतार्थस्मरणोत्तरकालं 'स एवायं देवदत्तः' इति सविकल्पकविज्ञानमुत्पद्यमानं शब्दस्मरणेनार्थस्मरणेन च [4]व्यवहितत्वात् कथमक्षजं स्यात् ? यदेव विस्फारिते चक्षुषि समनन्तरमुत्पद्यते, तस्यैवाक्षजत्वेन प्रत्यक्षत्वं युक्तम् । तदुक्तम्—

"अर्थोपयोगोऽपि पुनः स्मार्तं शब्दानुयोजनम् ।
अक्षधीर्यद्यपेक्षेत सोऽर्थोऽव्यवसितो भवेत् ॥" (इति ।)

इत्याशङ्क्य श्लोकत्रयेण परिहारमाह—**न हि स्मरणत इति ।** इन्द्रियार्थसन्नि-कर्षनिमित्तं प्रत्यक्षत्वम्; तस्मिन् सति शब्दस्मरणात् पूर्वमुत्तरकालं वा भवतु, न कश्चिद्दोष इत्यर्थः ॥

न ह्यक्षस्य शब्द[5]स्मरणसापेक्षतायां सविकल्पकस्याक्षजत्वमपैति; नापीन्द्रिय-व्यापारसमनन्तरमुत्पद्यमानस्य पुनः शब्दस्मरणसापेक्षत्वात् सविकल्पकस्योत्पत्ति-रनक्षजा भवति; न हि देवदत्तस्य पाके काष्ठापेक्षायां कर्तृत्वमपैति; यदि स्यान्नि-

1. नापि. मा.
2. न्यत्वेऽपि नष्टस्यापि तत्त्वावगमात्प्र. मा.
3. शून्ययानुवृ. मा
4. व्यवस्थित. मा.
5. स्मरणसापेक्ष. मा.

विज्ञानं जायते सर्वं प्रत्यक्षमिति गम्यताम् ।
विमनस्का यदा केचित् [1]सम्बद्धमपि चेन्द्रियैः ॥ २३७ ॥

न बुध्यन्ते तथा [2]चान्ये सादृश्यातिविमोहिताः ।
तत्र योऽर्थं विवेकेन कौशलात् सदृशेष्वपि ॥ २३८ ॥

सूक्ष्मं वापि प्रपद्येत तस्य भ्रान्तिर्न तावता ।
यथा षड्जादिभेदेन गाने लौकिकवैदिके ॥ २३९ ॥

विवेकेनावगच्छन्ति येषां तत्संस्कृता मतिः ।
गानमात्रं विजानन्ति [3]तत्रानधिकृतास्तु ये ॥ २४० ॥

तदज्ञानान्न मिथ्यात्वं वक्तुं शक्यं विवेकिनाम् ।
ते हि षड्जादिशब्देभ्यो विनाप्येषां विविक्तताम् ॥ २४१ ॥

यथावदधिगच्छन्ति तद्वद् गोत्वादिवस्त्वपि ।
सङ्कीर्णमर्थमात्रं तु बुध्यन्तेऽभ्यासवर्जिताः ॥ २४२ ॥

विकल्पकस्याप्यनक्षजत्वं प्राप्नोति, विस्फारिते चक्षुषि परोऽवस्थितेऽप्यर्थे आलोकमनस्सापेक्षत्वात्; तदाह—**विमनस्का यदा केचिदिति** श्लोकद्वयेन ॥

अत्रैवोदाहरणमाह—**यथेति** श्लोकद्वयेन । यद्यप्यसंस्कृता गानमात्रं प्रतिपद्यन्ते, तथापि ***विशाखिलसंस्कारसंस्कृतानां** विवेकप्रतिपत्तिर्न मिथ्येत्यर्थः ॥

न च 'षड्जोऽयम्', 'निषादोऽयम्'[4] इति वा शब्दमात्रभेदावगतिः, अगृहीतसम्बन्धस्य विवेकप्रतिपत्तेरित्याह—**ते हीति** त्रिपाद्या । तस्माद्यथा सत्यामप्यालोकमनस्सापेक्षतायां निर्विकल्पकस्याक्षजत्वं नापैति, तथा सविकल्पस्य स्मरणसापेक्षतायां नाक्षजत्वमपैति । नापि मिथ्यात्वं भवतीत्याह—**तद्वद्गोत्वादिवस्त्वपीति** ॥

अतो यद्यपि निर्विकल्पकं विज्ञानं संज्ञितया न विविक्तमर्थं गृह्णाति, तथापि शब्दस्मरणोपायवशेन तत्र जातिगुणक्रियादौ संज्ञितया विवेकप्रतिपत्तेः न मिथ्यात्वमित्याह—**सङ्कीर्णमिति** ॥

1. सम्बन्ध. मा.
2. किञ्चित्. मा.
3. तत्रनाधि. मा.
4. omitted निषादोऽयम्. मा.

* विश्वावसुरिति न्यायरत्नाकरपाठः

विवेकं प्रतिपद्यन्ते ये शब्दस्मृतिसंस्कृताः ।
यथा रूपादिमत्यर्थे यस्यैवास्ति यदिन्द्रियम् ॥ २४३ ॥

स तन्मात्रं गृहीत्वान्यन्न गृह्णा[1]त्यनुपायतः ।
[2]तथा विवेकहेतूनां यदा यं प्रतिपद्यते ॥ २४४ ॥

तदुपेये तदा ज्ञानं वर्तते तदनुग्रहात् ।
तेन यावत् प्रमातृणां विवेकोपायदर्शनम् ॥ २४५ ॥

न स्यात् तावद्भवेत् तेषां विज्ञानं निर्विकल्पकम् ।
तस्माद्यत्र [3]प्रकल्प्येत वस्तु वस्त्वन्तरात्मना ॥ २४६ ॥

ननु निर्विकल्पकेऽपि जातिगुणक्रियादयो विवेकेनैवावभासन्ते यथा रूपस्पर्शगन्धादयः; सङ्कीर्णार्थावगमे तु शब्दविशेषस्मरणं न स्यात्; अतः किमिदमुच्यते "सङ्कीर्णमर्थमात्रं तु" इति? सत्यमेवमेतत्; संज्ञित्वाभानेन तु सङ्कीर्णतां मन्यते; शब्दस्मरणोत्तरकालं तु संज्ञितया प्रतिभासनाद्विवेकमाह ॥

अत्रैवोदाहरणमाह—**यथा रूपादिमतीति** । यथा रूपस्पर्शादि[4]सङ्कीर्णेऽपि पुरोवस्थितेऽर्थे चक्षुराद्यनुरोधेन तत्र तत्र रूपादौ प्रतिपत्तिः, एवमत्रापि शब्द[5]स्मरणोपायवशेन तत्र तत्र जातिगुणक्रियादौ संज्ञितया विवेकेन प्रतिपत्तिः ॥ एतदेवोपसंहरन्नाह—**तथा विवेकहेतूनामिति** ॥

न हीन्द्रियस्य शब्दग्रहणापेक्ष[6]तायां कारकत्वमपैति; तदाह—**तेन यावदिति** ॥

प्रकरणार्थमुपसंहरति—**तस्माद्यत्रेति** । यदेव हि सविकल्पकं विज्ञानमर्थमर्थान्तरारोपेणावभासयति, तदेव हि प्रत्यक्षाभासं यथोषरे सलिलज्ञानम्; न तु जात्यादिभिर्धर्मभूतैर्यद् भासयति 'गौरयम्, शुक्लोऽयम्' इति चेत्यर्थः । तदुक्तम्—

"ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया" इति ॥

1. नुमानतः. चौ. मु.
2. तदा. मा.
3 विकल्प्यत. अमन्त. मु.
4. सङ्कीर्णोऽपि. मा.
5 स्मरणापाय. मा.
6. याः कारकमेवेति. मा.

प्रमाणाभासता तत्र न स्वधर्मेवि[1]कल्पने ।
प्रत्यक्षत्वमतः सिद्धं सामान्यस्य तथैव च ॥ २४७ ॥

[2]सम्बन्धस्येति तत्पूर्वमनुमानादि जायते ।
सर्वं चाप्यनुमानादि प्रत्यक्षे निर्विकल्पके ॥ २४८ ॥

न प्रवर्तत इत्येतदनुमानेऽभिधास्यते ।
नन्वेवं सति याप्यग्नेर्दूराद्[3]ष्ण्यौष्ण्यकल्पना ॥ २४९ ॥

सापि प्रत्यक्षमेव [4]स्याद्यथा गोत्वादिबुद्धयः ।
प्रत्यासन्नतरं[5] गोत्वे प्रत्यक्षत्वेन संमतम् ॥ २५० ॥

एवं सति सिद्धोऽयं हेतुः—प्रत्यक्षद्वारत्वादितीत्याह—**प्रत्यक्षत्वमत इति**। एवं सति सविकल्पकस्य प्रत्यक्षत्वसिद्धेर्लिङ्गलिङ्गिनोः सम्बन्धस्य प्रत्यक्षत्वात् भवति प्रत्यक्षपूर्वकत्वमनुमानस्येत्यर्थः ॥

यथा चानुमानमेवं शब्दादयोऽपि सम्बन्धग्रहणसदृशग्रहणान्यथानुपपद्यमानग्रहणसापेक्षत्वात्[6] सविकल्पकविज्ञानेन प्रवर्तन्त इत्येतदनुमाने वक्ष्यामः । तदाह—**सर्वं चापीति** ॥

यदीन्द्रियसम्बन्धानुसारेणोत्पद्यमानत्वात् शब्दस्मरणव्यवहितमपि सविकल्पकविज्ञानमक्षजत्वान्नापैति, हन्त तर्हि यद्विस्फारिते चक्षुषि दूरस्थितेऽप्यग्नौ 'उष्णोऽयम्' इति ज्ञानम्, तस्यापि प्रत्यक्षत्वं प्राप्नोतीति चोदयति—**नन्वेवं सतीति** ।

प्रत्यक्षगृहीतैकार्थसमवायिनो रूपादिदं स्पर्शज्ञानं लैङ्गिकम्, अगृहीतसम्बन्धस्यानुत्पत्तेः ; न त्वेकार्थसमवायि प्रत्यक्षगृहीतं किञ्चिद्गोत्व इति तस्यैव प्रत्यक्षत्वं युक्तमित्याह—**प्रत्यासन्नतरमिति** ॥

1. कल्पनात्. मा.
2. सम्बन्धस्यैवे. मा.
3. राद्दष्टौ. मा.
4. स्याद्गोत्वादिमतयो. यथा. मा.
5. तरे गोत्वे. मा.
6. सविकल्पकं विज्ञानं न प्रवर्तते मा.

विज्ञानं नान्यदस्तीति प्रत्यक्षमिदमेव नः ।
तत्राप्यक्षैरसम्बन्धं मन्वानस्योपजायते ॥ २५१ ॥

यदा बुद्धिस्तदा नव प्रत्यक्षत्वेन कल्प्यते ।
स्पर्शनेन तु सम्बन्धे प्रत्यक्षत्वेन जायते ॥ २५२ ॥

मतिरौष्ण्ये परो[1]क्षेयं चक्षुषायौ प्रकाशिते ।
तस्माद्यदिन्द्रियं यस्य ग्राहकत्वेन कल्पितम् ॥ २५३ ॥

तेनैव सति सम्बन्धे प्रत्यक्षं नान्यथा भवेत् ।
एवं समानेऽपि विकल्पमार्गे यत्राक्षसम्बन्धफलानुसारः ।
प्रत्यक्षता तस्य तथा च लोके विनाप्यदो लक्षणतः प्रसिद्धम् ॥

तत्रापि यदैकार्थसमवायिनं गृहीत्वा निमीलिताक्षस्य 'गौरयम्' इति विज्ञानमुत्पद्यते, तदा नैव प्रत्यक्षमित्याह—तत्रापीति ॥

यदेव त्वगिन्द्रियजमुष्णस्पर्शज्ञानं तस्यैवाक्षजत्वेन प्रत्यक्षत्वं युक्तम्, न त्वेकार्थसमवायिनो रूपादुत्पन्नस्येत्याह—स्पर्शनेन त्विति ॥

तस्माद्यदिन्द्रियस्यैवान्वयव्यतिरेकाभ्यां यो विषयः प्रतिपन्नः, तज्जन्यमेव तत्र ज्ञानं प्रत्यक्षमित्याह—तस्माद्यदिन्द्रियमिति ॥

अनन्तरमुपसंहरति—एवं समानेऽपीति । समानेऽपि रूपस्पर्शज्ञानयोः सविकल्पकत्वे यदेवाक्षजं तदेव [2]प्रत्यक्षम्, न त्वेकार्थसमवायिनो [3]रूपादिति ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
प्रत्यक्षसूत्रं समाप्तम्

—: * :—

1. क्षोऽयम. मा.
2. प्रत्यक्षत्वम्. मा.
3. रूपादीति. मा.

अथौत्पत्तिकसूत्रम् ॥

**औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ १-१-५ ॥**

**प्रत्यक्षादौ निषिद्धेऽपि ननु लोकप्रसिद्धितः ।**
**धर्माधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत् ॥ १ ॥**

**धार्मिकाधार्मिकत्वाभ्यां पीडानुग्रहकारिणौ ।**
**प्रसिद्धौ हि तथा चाह पाराशर्योऽत्र वस्तुनि ॥ २ ॥**

इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये ।
आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥ ३ ॥

**निर्मूलासम्भवादत्र प्रमाणैः सैव मृग्यते ।**
**कुतः पुनः प्रवृत्तेति प्रत्यक्षादि तु वारितम् ॥ ४ ॥**

एवं तावत् प्रत्यक्षाद्यर्थापत्तिपर्यन्तेषु निषिद्धेष्विदानीं तदुपलम्भकप्रमाणाभावेन धर्मस्याभावमाशङ्क्य तदुपलम्भकं शब्दं प्रमाणमुपदर्शयितुमाह—" अभावोऽपि नास्ति, यतः " " औ—त्वात् " । तदधुना चोदना च प्रमाणमेवेति च यत् प्रतिज्ञातं साधयति, तत्राह—" अभावोऽपि नास्ति, यतः " इति भाष्यम्, अवशिष्टं सूत्रमिति ॥

ननु निषिद्धेष्वपि प्रत्यक्षादिषु लोकप्रसिद्धित एव धर्माधर्मौ प्रमास्येते ; ततस्तदभाव[1]स्यानवसर इति चोदयति—**प्रत्यक्षादौ निषिद्धेऽपीति** ॥

तामाह—**धार्मिके**त्यादिना **प्रसिद्धौ** हीत्यन्तेन ।

तामेव लोकप्रसिद्धिं व्यासवचनेन दर्शयति—**तथा चेति** सशेषेण श्लोकेन

सत्यमेवमेतत् ; प्रसिद्धेरेव तु मूलान्तरनिषेधेन निर्मूलत्वमाशङ्क्य शब्दमूलतां दर्शयतीत्याह—**निर्मूलासम्भवादत्रेति** । तदुक्तम्—

" धर्मे सामान्यतः सिद्धे प्रमाणं चोदनेष्यते ॥ " इति ॥

1 स्यावसर. मा. अत्र प्रसिद्ध्यभावस्य निरूपणावसरः इत्यर्थः ।

**न चैतानि परित्यज्य पृथग् लोके प्रमाणता ।**
**संसारमोचकादेश्च [1]हिंसा पुण्यत्वसंमता ॥ ५ ॥**

**न पश्चात् पुण्यमिच्छन्ति केचिदेवं [2]विगानतः ।**
**म्लेच्छार्याणां प्रसिद्धत्वं न धर्मस्योपपद्यते ॥ ६ ॥**

**न चार्याणां विशेषोऽस्ति यावच्छास्त्रमनाश्रितम् ।**
**तन्मूलार्यप्रसिद्धिस्तु तत्प्रामाण्ये स्थिते भवेत् ॥ ७ ॥**

**तस्मादभाव[3]वक्त्रस्थौ धर्माधर्मौ न शक्नुयात् ।**
**चोदना चेत् समुद्धर्तुं ग्रस्तौ तेनैव पश्यताम् ॥ ८ ॥**

**उपदेशो हि भवति ज्ञानं तस्येति योज्यते ।**
**ज्ञायते येन तज्ज्ञानमेवाधिकरणत्वतः ॥ ९ ॥**

ननु प्रसिद्धिरपि प्रमाणम्, येन प्रत्यक्षादिभिः सह विकल्प्येत? स्मरणं हि प्रसिद्धिशब्देनोच्यते; तच्च प्रत्यक्षादिमूलमेवेत्याह—**न चैतानीत्यर्धेन** ।

किञ्च न तावत् प्रसिद्धिमात्रस्य शब्दनिरपेक्षस्य धर्माधर्मौ प्रति प्रामाण्यं विगानादित्याह—**संसारमोचकादेरिति** सार्धेन ॥

नाप्यार्यप्रसिद्धे[4]:, शास्त्रस्य धर्मं प्रति प्रामाण्यानङ्गीकरणेऽनार्यविवेकाभावेन "शास्त्रस्था वा" [5]इति तन्निमित्तस्याभावादित्याह—**न चार्याणामित्यर्धेन** ।

शब्दमूलत्वेनार्यप्रसिद्धिरनार्यप्रसिद्धेर्विशिष्यते; [6]सा कथमिव शब्दप्रामाण्यानङ्गीकरणेन धर्मं प्रति [7]प्रमाणं स्यादित्याह—तन्मूलेत्यर्धेन ॥

एवं तावत् प्रत्यक्षादिष्वार्थापत्तिपर्यन्तेषु निषिद्धेषु धर्माधर्मयोरभावमुखप्रवेशं चोदनैव शक्ता वारयितुमित्यस्यासद्भावादित्याह—**तस्मादिति** ॥

एवं तावद्भाष्यं व्याख्यायाधुना सूत्रं व्याचष्टे । तत्र "तस्य ज्ञानमुपदेशः" इति ज्ञानोपदेशशब्दौ समानाधिकरण्येन प्रवृत्तौ युक्तौ । तयोश्च विज्ञानशब्दवाचकत्वेन भिन्नार्थत्वात् तदभावमाशङ्क्य सामानाधिकरण्यं दर्शयितुमाह—**उपदेशो हीति** ॥

1. हिंसाधर्मत्व. मा.
2. विजानतः. गा.
3. वक्तृस्थौ. चो. मु.
4. द्धेर्न धर्मम्. मा.
5. Omitted. इति. मा.
6. स कथम्. मा.
7. प्रामाण्यम्. मा.

**औत्पत्तिकगिरा दोषः कारणस्य निवार्यते ।**
**अबाधोऽव्यतिरेकेण स्वतस्तेन प्रमाणता ॥ १० ॥**

**सर्वस्यानुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ।**
**चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ॥ ११ ॥**

उपदेशशब्देन विधायकं वाक्यमुच्यते । ज्ञानशब्देन ज्ञायतेऽनेनेति व्युत्पत्त्या प्रमाणमाह । तत्रायं वाक्यार्थः —धर्मे उपदेशो ज्ञानम्, धर्मे सविधिकं वाक्यं प्रमाणमित्यर्थः । " औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः " इत्यनेनापि कारणदोषाभावमाह । शब्दार्थयोर्नित्यः [1]सम्बन्धो न समय इत्याह—**औत्पत्तिकगिरे-**त्यर्धेन । अव्यतिरेकशब्देनापि बाधकमन्यथाभावमाह—[2]**अबाधोऽव्यतिरेकेणेति** । ननु ज्ञानशब्देनैव प्रामाण्यमुपदेशस्योक्तम्, अतः किमनेन " तत्प्रमाणम् " इत्याशङ्क्यार्थान्तरमस्य दर्शयन्नाह—**स्वतस्तेन प्रमाणतेति** । विज्ञानशब्देनोपदेशस्य प्रामाण्यमुक्तम्; " तत्प्रमाणम् " इत्यनेन त्वनपेक्षत्वेन यत् प्रामाण्यं प्रतिज्ञातम्, तत् स्वत इति ॥

इदानीं " अर्थेऽनुपलब्धे " इति व्याचष्टे—**सर्वस्येत्यर्धेन** ।

तदनेन कार्येऽर्थे शब्दप्रामाण्यं दर्शितम् । अप्रवृत्तप्रेरकोपदेशश्चात्र प्रमाणम्; विषयविशेषणं चैतदनुपलब्धग्रहणम्; प्रत्यक्षादयस्तूपलब्धेऽपि प्रवर्तन्ते । सर्वग्रहणं चोत्पत्तिविनियोगविध्यभिप्रायम् । " स्मृतिरन्यथा " इत्यनुवादकत्वमाह । तदुक्तम्—" तेनेतरप्रमाणैः " इति । ननु चोदनायाः कार्येऽर्थे प्रामाण्यं प्रतिज्ञातम्—" चोदनालक्षणोऽर्थो धर्मः " इति; [3]उपदेशस्य साधितम्—" तस्य ज्ञानमुपदेशः " इति; तदेतदसम्बद्धमित्याशङ्क्याह—**चोदनेत्यर्धेन** ॥

किमर्थं पुनर्जैमिनिना विधिराश्रितः [4]तस्याप्यङ्गीकरणं स्वर्गयागयोः साध्यसाधनभावावगमाय प्रवृत्तिसिद्धये वा ? न तावत् साध्यसाधनभावावगमाय; यतोऽन्तरेणापि विधिना आख्यातेष्वेव साध्यसाधनभावोऽवगम्यते; तानि हि करोत्यर्थं

1. नित्यसम्बन्धः मा.
2. अभावो व्यति. मा.
3. शस्य साधि. मा.
4. तस्य व्यङ्गी. मा.

**वाक्यान्तरे समर्थेऽपि किमर्थं विधिराश्रितः ।**
**साध्यसाधनसम्बन्धः सर्वाख्यातेषु विद्यते ॥ १२ ॥**

**सर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्तनात् ।**
**प्रवृत्तिसिद्धिरिच्छातः [1]प्रतिबन्धान्निवर्तनम् ॥ १३ ॥**

भावनामवगमयन्ति; सा च साध्यं [2]साधनं चान्तरेण नोपपद्यते । तत्रैतत् स्यात् साध्यमात्रमन्तरेण भावना नोपपद्यते साधनमात्रं च । यत्तु स्वर्गस्यैव साध्यत्वं यागस्यैव साधनत्वम्, तत्र विधेरुपयोग इति; तदसत्; "स्वर्गकामो यजेत' इति, स्वर्गयागौ इति वा, स्वर्गयागाभ्याम् इति वा, भावनावगम्यते; सा च साध्यसाधनापेक्षिणी; न च द्वयोरपि साध्यसाधनत्वे युक्ते; अन्यतरस्य तु कल्प्यमाने स्वर्गस्यैव प्रयोजनत्वेनावगमात् साध्यत्वं युक्तम्; इष्यमाणार्थ[3]तयैव निष्पादनेन च साधनत्वावगमाद् यागस्यैव साधनत्वमवगम्यत इति नास्ति प्रमाणयोजनं विधेरुपयोग इति चोदयति—**वाक्यान्तर** इति सार्धेन ॥

तत्रैतत् स्यात्—प्रवृत्तिसिध्यर्थं तदाश्रयणम्; तदयुक्तम्; विशिष्टप्रयोजनाङ्गिभावनामवगम्य तत्प्रयोजनार्थिन इच्छयैव प्रवर्तन्ते; यस्तु तत् प्रयोजनं नेच्छति, तस्य विधिरपि किं कुर्यात्? अथ कश्चिद् ब्रूयात्—करणार्थे भवतु प्रवृत्तिः, तस्येष्टसाधनत्वात्; इतिकर्तव्यतानुबन्धे तु विधि[4]मन्तरेण नेयं प्रवृत्तिर्भवति; न हि तत्फलसाधनमिति । तन्न, तस्यापि फलभावनां प्रति [5]साधनत्वात् । तदेव तु फलसाधनत्वं करणोपकारद्वारेण, न तु करणत्वेन; उत्पत्तिशिष्टकरणा[6]न्तरावरोधादवान्तरद्वारसमर्पकत्वाच्च फलभावनार्थस्यैव सतः श्रुत्यादयः । यद्यपि करणार्थैवेतिकर्तव्यता भवतु, तथापि न तत्र विधिः पुरुषं प्रवर्तयति; स्वर्गकामस्या[7]तत्साधने प्रेरयितुमशक्यत्वात् । करणोपकारकामस्य तु तत्साधनेऽपीच्छोरेव प्रवृत्तिरिति; तदेतदाह—**प्रवृत्तिसिद्धिरिच्छातः** इति । निषेधाधिकारेऽपि रागतो हनने प्रवर्त[8]मानो

1. प्रतिषेधात्तु वर्जनम्. चौ. अनन्त. मु.
2. साधनमन्त. मा.
3. तया वा निष्प्रमादेन. मा.
4. विधिन्तरेण. मा.
5. सन्धानत्वात्. मा.
6. न्तरविरोधा. मा.
7. मस्यार्थत. मा.
8. मानेन च निर्तत. मा.

**विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते ।**
**श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् ॥ १४ ॥**

नञा निवर्त्येत इति किं विधिना ? विधिरप्यत्र श्रूयमाणो रागादिलक्षणमेव प्रवृत्ति-मनुवदेत्--यद्धननं कुर्यात् इति ; न त्वसौ विधायकः । तथा हि—न तावद्धननं विदधाति, तत्र रागत एव प्रवृत्तत्वात् । नापि नञर्थम्, अभावरूपत्वात् । नापि नञर्थावच्छिन्नां भावनां विदधाति, तदवच्छिन्नायास्तस्याश्चाभावरूपत्वात् । नापि नञर्थावच्छिन्नस्य [1]हननस्य, तस्याप्य[2]भावरूपत्वात् । नापि रागतो हननावच्छिन्नायां प्रवर्तमानस्तत्पर्युदस्तायां नियुज्यते, अनवच्छिन्नायास्तस्या विधिविषयत्वायोगात् । [3]नापि अहननावच्छिन्ना विधीयते' अभावस्याव्यापाररूपत्वेनानवच्छेदकत्वात् । अथापि नञुपहिता हन्तिरब्राह्मणादिन्यायेन हननपर्युदस्तधात्वर्थान्तरवाचित्वात् तदवच्छिन्नां भावनां [4]प्रतिपादयति, सा च विधेर्विषय इत्याशयः, तदसत् ; हनन-व्यतिरिक्तधात्वर्थावच्छिन्नायां पुरुषस्य स्वत एव प्रवृत्तत्वात् ; अवश्यं जीवन् पुमान् किञ्चित् करोति गच्छति [5]क्वचिदास्त इति । अपि चैवं सति पुनरपि भावार्थविधि-रेवायातः । तत्रोत्तरमुक्तम् । न च रागतः प्रवृत्तिं विधिः प्रतिबध्नाति ; ततस्त-[6]स्याप्रवर्तकत्वापातात् । न च नञुपहितस्य प्रतिबन्धकत्वम्, तस्याप्यभावरूपा-पत्तेः । अथ नञा प्रतिबन्धः क्रियते, [7]तत्तद्भावभावित्वेन नञ एव तत् सामर्थ्यम्, न विधेरिति कृतमतिवाचालतया । तदेतदाह—**प्रतिबन्धान्निवर्तनमिति** । एव-माक्षिप्ते सति विधेरुपयोगं दर्शयितुमाह—**विधावनाश्रित इति** । विध्यभावे हि "स्वर्गकामो यजेत" इत्यत्र सन्निहितधात्वर्थकर्मिकायां भावनायां पदान्तरोपात्त-स्वर्गकामः [8]कर्ता इत्येतावदवगम्यते—स्वर्गकामो यागं करोतीति । ननु विध्या-श्रयणेऽपि प्रेर्यविशेषणस्य साध्यत्वं यागादेश्च साधनत्वं कथमवगम्यते, न हि विधिः फलं विना विधातुमसमर्थः, तस्य प्रेर्यविषयमात्रापेक्षणात् ; प्रेर्यविषयश्रवणा-न्नैराकाङ्क्ष्ये सति प्रेर्यविशेषणस्य धात्वर्थसाध्यत्वकल्पना पुरुषबुद्धिप्रभवैव स्यात् ;

1. omittde हननस्य. मा.
2. प्यतीत. मा. मा.
3. नापि हनना. मा.
4. प्रतिसंपाद. मा.
5. बहुस्त. मा.
6. तस्याः प्रव. मा.
7. त्तद्भाव. मा.
8. कर्तव्योताव. मा.

**विधौ तु तमतिक्रम्य स्वर्गादेः साध्यतेष्यते ।**
**तत्साधनस्य धर्मत्वमेवं सति [1]च लभ्यते ॥ १५ ॥**

यतः प्रेर्यविशेषणं भावना[2]भाव्यतामप्रतिपद्यमानमपि जीवनवत् प्रेर्यं विशेषयितुं शक्नोत्येव । नापि भावनायां भाव्याकाङ्क्षायां सन्निहितत्वात् प्रेर्यविशेष[3]णस्य साध्यत्वम्, जीवनस्यापि साध्यत्वप्रसङ्गात् । अथ सिद्धमेवेष्यमा[4]णत्वेनोपात्तं लोके दृष्टम्—हरितकीं भक्षयेद् विरेककामः इत्यादौ, जीवनं च सिद्धम्; तदनुपपन्नम्; सर्वत्र प्रेर्यविशेषणस्यासिद्धत्वात् । अत एवं वाक्यार्थः—यः पुरुषः स्वर्गादि कामयते, स यागादिविशिष्टां भावनां कुर्यात् इति । किमर्थमसौ निष्फलानुष्ठाने प्रवर्तेत इति चेत्, विधिस्तावदवगम्यते; यदि च तथा न प्रवर्तते, किमत्र कुर्मः?

अपि च, विधिः साध्यसाधनभावमनापाद्य किं न विदधात्येव, उत विदधदपि न पर्यवस्यति? यदि तावदाद्यः पक्षस्तत इतरेतराश्रयत्वम्; वैधं हीदं फलमुच्यते, न च फलाद्विना विधिर्विदधाति । अथापर्यवसानम्, तन्न जानीमः—किमेतदपर्यवसानं नामेति । विधिना सफले निष्फले वा व्यापारे पुरुषः प्रवर्तेत इत्येतावान् लिङर्थः । न हि [6]प्रवर्तकत्वं मुक्त्वान्यो व्यापार इत्युक्तम् । प्रतिषेधाधिकारेषु "ब्राह्मणो न हन्तव्यः" इत्येवमादिषु कामिपदोपादानमपि दूरोत्सारितमेव । तत्र नरकपातः [7]फलं हननस्य वा कल्प्येत, नञर्थस्य वा? न तावद्धननस्य, तत्र पुरुषस्याप्रवर्त्यमानत्वात्; न ह्यविधीय[8]मानानां फलसम्बन्धः क्वचिदभिमतः नापि नञर्थस्य, तत्र पुरुषस्य प्रवर्त्यमानत्वात्; न हि नरकफले व्यापारे कश्चित् प्रवर्तते । अथ मतम्—प्रतिषेधविधिना रागतः पुरुषो हनने प्रवर्तमानस्ततो निवर्तते, स यदि हननस्यानिष्टतां नावगच्छति, [9]ततः किमिति निवर्तेत इति विधेः [10]प्रामाण्यम्; परिहृतमेवेत्याशङ्क्याह—**विधौ तु तमिति ।**

1. तु. मा.
2. नाभावताम्. मा.
3. णस्य जीवन. मा.
4. णत्वं नोपा. मा.
5. णस्य सिद्ध. मा.
6. प्रवर्तकं मु. मा.
7. फलं बुद्धिहनन. मा.
8. मानांफल. मा.
9. तत. मा.
10. धेरप्रामाण्यमपरिहार्यं. मा.

अयमभिप्रायः—विधिस्तावत् सर्वत्र भावनायां पुरुषं प्रेरयतीति वक्ष्यामः। भाव्यनिष्ठश्च भावकव्यापारो भावना; [1]तस्याश्च भवनक्रियाकर्तुर्भाव्यत्वमिति वक्ष्यति। विधिरपि न स्वर्गकाममात्मनेष्यमाणोपायापेक्षमनवगततदुपायं भावनायां यागहोमदानाद्यवच्छिन्नायामप्रवृत्तं प्रेरयति; अवगततदुपायेषु तथैव प्रवृत्तत्वात् न प्रेरयति; तदाह। भाष्यकारोऽप्याह—"जानात्येवासौ ममैतत् कर्त[2]व्यमिति, उपायं तु न वेद" इति। स च विधेः पुरुष एवंविधायां भावनायां प्रेरणां प्रतिपद्यमान एव स्वविशेषणस्य भवदिष्यमाणत्वेनोपात्तस्य धात्वर्थातिक्रमेण विधेयभावना[3]भाव्यत्वं प्रतिपद्यते। न चात्र बाधकप्रत्ययोऽस्ति; नापि करणदोषज्ञानम्; अतः प्रमाणमिय[4]मवगतिः। धात्वर्थस्तु साध्यांशात् प्रच्युत उपपदार्थमात्रे बाधेन करणांशे निविश[5]मानः स्वर्गभावकव्यापारसाधकत्वेन धर्मतां प्रतिपद्यते। तदुक्तम्—"न च तेनानियुज्यमानः फलकल्पनानिमित्तं लभते" इति। निषेधाधिकारेऽपि रागतो हननावच्छिन्नायां भावनायां प्रवर्तमानो नञर्थविशिष्टहननधात्वार्थावच्छिन्नायां प्रेरणं प्रतिपद्यमान एव हननस्य नरकसाधनत्वं प्रतिपद्यते। ननु "ब्राह्मणो न हन्तव्यः" इत्यत्र नियोज्यविषयश्रवणान्नैराकाङ्क्ष्ये सति कल्प्यमानो नरकपातः पुरुषबुद्धिप्रभव एव स्यात्। एवं तर्हि "यजेत स्वर्गकामः" इत्यत्रापि नियोगनियोज्यविशेषणस्य साध्यत्वं कल्प्यमानं पुरुषबुद्धिप्रभवमेव स्यात्; यतो नियोज्यविशेषणं भावार्थसाध्यतामप्रतिपद्यमानमेव जीवनवन्नियोज्यं विशेषयितुं शक्नोत्येव। नापि भाव्याकाङ्क्षायां सन्निहितत्वान्नियोज्यविशेषणस्य साध्यत्वम्, जीवनस्यापि साध्यत्वप्रसङ्गात्। अथासिद्धस्येष्यमाणत्वेनोपात्तस्य तल्लोके दृष्टम्, जीवनं तु सिद्धम्। तदनुपपन्नम्, सर्वत्र नियोज्यविशेष[6]णस्यासिद्धत्वादित्युक्तम्। जीवनाधिकारे च सन्निहितस्यायोग्यत्वात् साध्यान्तरं कल्पयतु भवान्। अथ तत्र भावार्थस्य भावकत्वं नियोगार्थं प्रत्येवोक्तम्, तत्कामाधिकारेऽप्यविशिष्टं तस्य; सति धर्मादेरन्वयाभाव इत्युक्तम्। अथ भावार्थविषयो विधिर्नियोज्यविशेषणस्य साध्यतामनापाद्य न पर्यवस्यति, एवं तर्हि "ब्राह्मणो न हन्तव्यः" इत्यत्रापि नञर्थविषयो विधिर्हननस्यानिष्टफल-

1. तस्याश्च. मा.
2. omitted इति. मा
3. नाभावत्वम्. मा.
4. गमयति. मा.
5. मानम्. मा.
6. थस्य सिद्ध. मा.

तामनापाद्य न पर्यवस्यति । यः स्वर्गस्य साध्यतां कल्पयति, स न नरकपातस्य इत्येतदतिदुर्भणम् ॥

अपरं मतम्—प्रेरकस्य लिङर्थस्य प्रेर्याकाङ्क्षायां विष[1]याक्षिप्तः कर्ता प्रेर्यत्वेन संबध्यते ; विषयस्य च भाव्याकाङ्क्षायां सन्निहितधात्वर्थातिक्रमेण [2]प्रेरणायां प्रेर्यस्य प्राप्तत्वात् स्वर्गकामादिपदस्य लोहितोष्णीषवदुपसर्ज[3]नपरत्वेन स्वर्गं कामयत इति [4]वा व्युत्पत्तौ स्वर्गपदस्य भाव्यसमर्पकत्वम्, प्रकृत्यंशस्य यज्यादेः साधनापेक्षायां साधनसमर्पकत्वेन यागादेः धर्मत्वमिति । तदनुपपन्नम्, विषयाक्षिप्तस्य प्रवृत्तक्रियत्वेनाप्रवृत्तक्रियत्वेनाप्रवृत्तप्रेरकेण विधिना सह सम्बन्धाभावात् । कर्तृमात्रं च विषयेणाक्षिप्तम् ; न च तस्य स्वर्गभावनायां प्रेरणं संभवति । अथ विषयाक्षिप्तस्य स्वर्गकामादिपदात् तद्विशेषः, तर्हि तस्यैव समर्पकत्वम् ; किमन्तरा विषयाक्षेपेण ? नापि भावनैव स्वर्गविशिष्टा कर्तृविशेषं गमयति ; अवगते हि विधिभावनयोः विषयविषयिभावे धात्वर्थातिक्रमेण विषयस्य स्वर्गभावकत्वम् ; प्रेर्यपूर्वकश्च तयोः विषयविषयिभावः ; तदितरेतराश्रयप्रसङ्गः ।

अपि च विधिकृतो विषयं प्रति स्वर्गयागयोः कर्मकरणभावः ; प्रेर्यपूर्विका च विधेर्भावनाविषयता ; यदुत्तरकालं च भावनायां स्वर्गयागयोः कर्मकरणभावस्तत्र प्रेरणाप्रतिपत्तिवेलायां स्वर्गकामादिपदोपात्तविषयाक्षिप्तयोः कस्य प्रेर्यत्वमिति चिन्तायां विषयाक्षिप्तस्य सन्निधाने प्रवृत्तक्रियत्वेनान्वयायोग्यत्वात् तदतिक्रमेण स्वर्गकामपदोपात्तस्यैव प्रेर्यत्वम् । वक्ष्यति च—

पुरुषः स्वर्गे [न] प्रवर्तते, स विधिरङ्गप्रधानवत्यां भावनायां पुरुषं नियोजयति । "स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते" इति । करणेतिकर्तव्यतयोः स्वप्रवृत्तपुरुषनियोगात् प्रधानस्य प्रमाणवाचिनो धातोः परेण प्रत्ययेन फलकर्तृत्वं चोद्यत इत्यनवगतस्वर्गोपायापेक्षेण । अवगतोपायेन भावार्थाश्रयणे स्वर्गकामः कर्तृत्वेन यागः साध्यत्वेन—स्वर्गकामो यागं कुर्यादिति । तदा सत्वयोस्तु साध्यातिक्रमेण तदपेक्षितोपायत्वेनेति । तदनुपपन्नम्' स्वर्गकामादेर्यागाद्यवच्छिन्नायां नियोगावगमात् ।

1. याक्षिप्तकर्ता. मा.
2. प्रर्यमाणायाम्. मा.
3. जनत्वेन पर. मा.
4. वाप्युत्पत्तौ. मा

**स्वप्रत्ययान्तरापेक्षा स्यादनाप्तनरोक्तिषु ।**
**आप्तोक्तिषु नरापेक्षा नोभयं चोदनासु नः ॥ १६ ॥**

वक्ष्यति च—" स्वव्यापारे हि पुरुषः कर्तृत्वेन नियुज्यते ।" इति । विधिपुरुषयोर्हि प्रेर्यप्रेरकलक्षणः सम्बन्धः ; तत्र यागादयो विषयत्वेन संबध्यन्ते, न पुनरिष्यमाणोपायतया । अथापेक्षणमन्यथा च प्रेरकत्वविघातात् ; प्रेर्यप्रेरकविषयप्रतिपत्त्युत्तरकालं न विषयस्येष्यमाणं प्रत्युपायत्वम् , कल्पनात् । तदुक्तम् "[1]न च तेनानियुज्यमानः फलकल्पनानिमित्तं लभते " इति ॥

अपि च जीवनवद्यजेतेत्यत्र किं जीवनोपायापेक्षा उपात्तदुरितक्षयादिकल्पना विषयकर्तव्यतावगतिपूर्विकैव, निषेधाधिकारेऽपि नञर्थनियोगावगतिपूर्विकैव, हननादेरनिष्टकल्पनात् ; तदभ्युपायं तु भवेत्....तस्यायमभ्युपायसाधनापेक्षिणस्तस्य "श्रेयस्साधनता ह्येषां नित्यं वेदात् प्रतीयते" इत्येवमादयः भाष्यकारवार्तिककारसंबन्धिनो विध्याक्षिप्तप्रमाणमेवं व्याख्येयाः ॥

इदानीं अनपेक्षत्वादिति व्याचष्टे—**स्वप्रत्ययान्तरापेक्षेति** । अनाप्तप्रणीते हि वाक्ये प्रतिपत्तृप्रमाणसंवादेन प्रामाण्यम् आप्तप्रणीतेषु तु [2]न तत्प्रामाण्यापेक्षा ; चोदनाया अपौरुषेयत्वेनोभयापेक्षापि नास्तीत्यनपेक्षत्वादित्युक्तम् ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
औत्पत्तिकसूत्रं समाप्तम्

---

1. न च नियुज्यमानंफल. मा.    2. omitted. न. मा.

## ॥ वृत्तिकारग्रन्थः ॥

आदिशब्दो मकारान्तो लुकि क्लेशेन सङ्गतिः ।
नञध्याह्रियते सूत्रे सङ्करात् परिचोदना ॥ १ ॥

प्रमाणलक्षणज्ञानाद् व्यभिचारात् परीक्षणम् ।
[1]नैतत् प्रत्यक्षमित्येवमपरीक्षोपसंहृता ॥ २ ॥

तत्रान्यस्यायथार्थत्वं प्रत्यक्षे तु यथार्थता ।
यदाभासं हि विज्ञानं तत्संयोगे तदिष्यते ॥ ३ ॥

संपूर्णं लक्षणं ह्येतत् तत्सतोर्व्यत्ययः कृतः ।
शोभनार्थस्तु सच्छब्दो यद्वाध्याहारकल्पना ॥ ४ ॥

इदानीं वृत्तिकारमतेन भाष्यकारः सूत्रत्रयमन्यथा व्याख्यास्यन्नाह— "वृत्तिकारस्त्वन्यथेमं ग्रन्थं वर्णयाञ्चकार तस्य निमित्तपरीष्टिरित्येवमादिम्" इति । अत्रादिशब्दं केचिल्लुप्तमकारं पठन्ति; तथात्वे नपुंसकलिङ्गस्यादिशब्दस्य ग्रन्थ-शब्देन पुंलिङ्गेन सह सामानाधिकरण्यं न प्राप्नोतीत्याह—**आदिशब्द** इत्यर्धेन । नपुंसकलिङ्गत्वे "स्वमोर्नपुंसकात्" इति लुक् स्मर्यते । तदन्यथाभावं दर्शयति—**नञध्याह्रियते सूत्रे** इति । "ननु व्यभिचारात्" इति "**सङ्करात् परिचोदना । प्रमाणलक्षणज्ञानाद्व्यभिचारात् परीक्षणम्**" इति । "उच्यते— यद्व्यभिचरति न तत्प्रत्यक्षम्" इत्यादि सिद्धान्तभाष्यम्, तस्याभिप्रायमाह— **नैतत्प्रत्यक्षमिति** सार्धेन ॥

सत्तच्छब्दयोरेवोत्कर्षापकर्षाभ्यामिदं लक्षणसूत्रं व्याख्येयं तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म प्रत्यक्षमिति यत् यत् प्रतिभासते, तत् सत्संप्रयोग इत्यर्थः । न चेदृशं व्यभिचरतीत्याह—**सम्पूर्णमित्यर्धेन** । उत्कृष्टस्य सच्छब्दस्यार्थं व्याचष्टे— **शोभनार्थश्च सच्छब्दः इति** । अन्यस्यैव वा तच्छब्दस्याध्याहार इत्याह— **यद्वाद्ध्याहारकल्पनेति** ॥

1. "न तत्प्रत्यक्षम्" इति युक्तः पाठः.

अर्थापत्त्येतरेषां च प्रत्यक्षाभासलक्षणम् ।
बाधकज्ञानलाभो हि पूर्वाबाधे न संभवेत् ॥ ५ ॥

स चास्तीत्यवबोधत्वे सति नान्योन्यसंश्रयम् ।
न चानागत[1]बाधेन पूर्वेणात्मा हि लभ्यते ॥ ६ ॥

निमित्त[2]दोषबोधेन पश्चाद् यत्राप्यबाधनम् ।
भवत्येव हि तत्रापि नरान्तरविपर्ययः ॥ ७ ॥

सर्वेषां सर्वदा यत्र धीः स्यात् [3]तत्राप्यबाधनम् ।

अतत्संप्रयोगे तु प्रत्यक्षाभासत्वमर्थादुक्तं भवतीत्याह—**अर्थापत्त्येत्यर्धेन** ।

"बाधकं हि यत्र ज्ञानमुत्पद्यते, तदन्यसंप्रयोगे" इति सिद्धान्तभाष्यम्; तत्रेदमाशङ्कते—**बाधकेति** अस्तीत्यन्तेन । द्वयोः परस्परविपरीतार्थप्रापकत्वे सति कथमुपरितनस्यैव बाधकत्वम्, न तु पूर्वस्यैवेत्याशङ्क्याह—**अवबोधत्व** इति शेषेण । अपवादरहितबोधत्वादेवोपरितनस्य प्रामाण्यम्, न पूर्वविज्ञानाप्रामाण्यकृतमित्यर्थः । न च पूर्वविज्ञानमुपरितनस्यापवादकम्; यस्मान्न पूर्वविज्ञानमुपरितनज्ञानगृहीतार्थप्रतिषेधप्रतिभासमित्याह—**न चेत्यर्धेन** । यत्र तर्हि द्विचन्द्रादिज्ञानादावनन्तरं तिमिरोपहतचक्षुषो बाधकविज्ञानं नोत्पद्यते तत्र कथमन्यसंप्रयोगजत्वमित्याशङ्क्याह—**निमित्तदोषबोधेनेत्यर्धेन** । तत्रापि कारणदोषज्ञानादन्यसंप्रयोगावगतिरित्यर्थः । [4]बाधाप्रत्ययात् विज्ञानकारणदुष्टता कथमवगम्यत इत्याशङ्क्याह—**भवत्येव हीत्यर्धेन** ॥

यदि तर्हि बाधकप्रत्ययात् कारणदोषज्ञानेन वान्यसंप्रयोगावगतिः, हन्त तर्हि 'गौरयम्' इत्यपि सविकल्पकं विज्ञानमन्यसंप्रयोगजम्; सामान्यादिप्रतिभासं हि तदुत्पद्यते, व्यतिरेकाव्यतिरेकवृत्तिविकल्पेन तेषामभावात् । प्रमेयोत्थमनुमानमेव बाधकम्; दोषसहकारि चेन्द्रियमविद्यमानसामान्यप्रतिभासमेव विज्ञानं जनयति शुक्तिकायामिव रजतज्ञानमित्याशङ्क्याह—**सर्वेषामित्यर्धेन** ।

1. बाधे च. चौ. मु.
2. दोषभेदेन. चौ. मु.
3. तत्र न बाध. चौ. अनन्त. मु
4. बाधप्रत्ययविज्ञान. मा.

**न हि कारणदुष्टत्वबुद्धिस्तत्र बलीयसी ॥ ८ ॥**

**जात्यादिषु यदा जाता बुद्धिः पश्चादसम्भवात् ।**
**नाश्यते युक्तिभिस्तत्र व्यक्तमन्योन्यसंश्रयम् ॥ ९ ॥**

**स्वतः प्रामाण्यतश्चात्र निर्णयोऽस्तित्वबोधनात् ।**
**तद्रूपप्रत्ययोत्पत्तेस्तदसद्वादिनामपि ॥ १० ॥**

युक्तं यद्रजतज्ञानस्य 'नेदं रजतम्' इत्यभावज्ञानं बाध[1]कमुपगतम्, उपरत एव प्रत्यक्षे तस्योत्पद्यमानत्वात्; सामान्यज्ञानं तु सर्वदा सर्वेषां चोत्पद्यत इति प्रमेयत्वानुमानानुमेयमपि कारणदोषज्ञानं प्रत्यक्षविरोधाद् दुर्बलं तदाह—**न हीत्यर्धेन** ॥

न च तस्य प्रत्यक्षाभासत्वेन विरोधः, इतरेतराश्रयप्रसङ्गादित्याह—**जात्यादिष्विति** । सिद्धे हि प्रमेयविज्ञानस्य प्रामाण्ये प्रत्यक्षाभासत्वम्, प्रत्यक्षाभासत्वाच्च अनुमानं प्रमाणमिति ॥

ननु च त्वत्पक्षेऽपि सिद्धेऽनु[2]मानाप्रामाण्ये प्रत्यक्ष[3]स्य प्रामाण्यम्, सिद्धे च प्रत्यक्षस्य प्रामाण्येऽनुमा[5]नस्याप्रामाण्यमितीतरेतराश्रयमेवेत्याशङ्क्याह—**स्वतःप्रामाण्यतश्चात्रेति** । [6]त्वत्पक्षे परतः प्रामाण्यात् तथा; अस्मत्पक्षे तु स्वत एव बोधकत्वेन सामान्यावयवविज्ञानं प्रमाणम्, न [7]प्रमेयविकल्पोत्थानुमानगताप्रामाण्यात् । न तु प्रमेयविकल्पोत्थानुमानं मुक्त्वा तदसतत्त्वमितिवत् तदभावज्ञानमात्रं बाधकम्, तदानीमपि सर्वेषां सर्वदा सामा[8]न्यावयवविज्ञानस्योत्पद्यमानत्वादिति ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
वृत्तिकारग्रन्थः समाप्तः ॥

1. कमुपरतमुपः मा.
2. मानप्रामा. मा.
3. स्याप्रामा. मा.
4. स्याप्रामा. मा.
5. नस्य प्रामा. मा
6. omitted त्वत्पक्षेपरतः प्रामाण्यात्. मा.
7. प्रामेयं च सविक. मा.
8. मान्यस्यावयवि. मा.

# निरालम्बनवादः

प्रमाणत्वाप्रमाणत्वे पुण्यपापादि तत्फलम् ।
विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना ॥ १ ॥

सर्वेषु लक्षणेष्वेवं स्वप्रमाणगणैः स्थितिः ।
वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता ॥ २ ॥

कर्मभ्यः फलसम्बन्धः पारलौक्यैह[1]लौकिकः ।
सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु ॥ ३ ॥

तस्माद् धर्मार्थिभिः पूर्वं प्रमाणैर्लोकसंमतैः ।

"ननु सर्व एव निरालम्बनः [2]स्वप्नवत् प्रत्ययः" इत्यादिना शून्यवादपर्यन्तेन बाह्यार्थाभावमाशङ्क्य तत्सद्भावं प्रतिपादयति भाष्यकारः । तत्र बाह्यार्थप्रतिपादनस्य स्वतन्त्रोपयोगितां दर्शयितुमाह वार्तिककारः—**प्रमाणत्वेति** त्रयेण । श्लोकत्रयेऽत्रायमभिप्रायः—बाह्यार्थाभावे प्रमाणतदाभासव्यवस्था न स्यात्, स्वांशालम्बनस्यैव सर्वत्र विद्यमानत्वादिति । नाप्यर्थक्रियासंवादसद्भावेन प्रमाणतदाभासव्यवस्था, स्वप्नावस्थायामुदकज्ञाने मणिबुद्धावर्थक्रियासंवाददर्शनात् । नाप्यविच्छिन्नवासनाजनितत्वेन प्रामाण्यं विच्छिन्नवासनाजनितत्वेन चाप्रामाण्यमिति व्यवस्था, विज्ञानवादिनस्तद्व्यतिरिक्तवासनाभावात् । [3]न च परिभाष्या; लोके हि संवादविसंवादाधीने प्रामाण्याप्रामाण्ये । तयोश्च बाह्यार्थसदसद्भावाधीनत्वम् । तथा धर्माधर्मयोः स्वर्गनरकयोश्च तत्फलयोर्बाह्यार्थाभावे सद्भावो न स्यात् । विध्यर्थवादमन्त्रनामधेयकल्पना शब्दान्तरादिषट्केन च यद्भेदप्रतिपादनम् श्रुत्यादिभिश्च तादर्थ्यप्रतिपादनम् स्वर्गादिभावनायां च धात्वर्थस्य करणत्वमुपपदार्थस्य च तादर्थ्यं [4]यच्च नियोज्यविशेषणस्य स्वर्गवृष्ट्यादेरैहिकामुष्मिकफलत्वम्, तत् सर्वमेवमादि बाह्यार्थाभावे न स्यात्—इति श्लोकत्रयार्थः ॥

इदानीं बाह्यार्थप्रतिपादनस्य स्वतन्त्रोपयोगितामुक्तामुपसंहरति—**तस्मादिति** । लोकसंमतैः प्रमाणैरर्थसद्भावः पूर्वमनुष्ठानार्थिभिः प्रतिपादनीयः । क्रियाशब्दश्चात्रानुष्ठानवाची ॥

1. लौकिके. चौ. मु.
2. Omitted स्वप्नवत्. मा.
3. Omitted न च. मा.
4. यश्च. मा.

अर्थस्य सदसद्भावे यत्नः कार्यः क्रियां प्रति ॥ ४ ॥

यदा संवृतिसत्येन सर्वमेतत् प्रकल्प्यते ।
ज्ञानमात्रेऽपि कस्माद्वो वृथाग्राहोऽर्थकल्पने ॥ ५ ॥

संवृतेर्न तु सत्यत्वं सत्यभेदः कुतो न्वयम् ।
सत्यं चेत् संवृतिः केयं मृषा चेत् सत्यता कथम् ॥ ६ ॥

सत्यत्वं [1]न तु सामान्यं मृषार्थपरमार्थयोः ।
विरोधान्न हि वृक्षत्वं सामान्यं वृक्षसिंहयोः ॥ ७ ॥

तुल्यार्थत्वेऽपि तेनैषां मिथ्यासंवृतिशब्दयोः ।
वञ्चनार्थ उपन्यासो लालावक्त्रासवादिवत् ॥ ८ ॥

नास्तिक्यपरिहारार्थं संवृतिः कल्पनेति च ।

ननु बाह्यार्थाभावेऽपि सांवृतमर्थमङ्गीकृत्य प्रामाण्याप्रामाण्यव्यवहारो धर्माधर्मोपदेशश्च घटत एवेति चोदयति—यदेति । तदुक्तम्—

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना ।
लोके संवृति[2]सत्यं च सत्यं च परमार्थतः" ॥ इति ।

तच्चैतदात्माद्वैतवादिभिरपीष्टमेव बाह्यार्थप्रपञ्चमिथ्यात्वं वदद्भिः ॥

तदेतत् सत्यद्वयाभावेन निराकर्तुमाह—संवृतेरिति श्लोकद्वयेन । न हि संवृतिपरमार्थव्यक्त्योः [3]सत्यत्वं नाम सामान्यम्, एकत्र विरोधादन्यत्र च पौनरुक्त्यप्रसङ्गादित्यर्थः ॥

तुल्यार्थत्वेऽपि मिथ्यासंवृतिशब्दयोः [4]प्रतारणार्थोऽयं सद्धर्मे संवृतिसत्यत्वोपन्यासः लाला वक्त्रासवः पीयते इतिवदित्याह—तुल्यार्थत्वेऽपीति ॥

नास्तिक्यपरिहारार्थं च सांवृतकाल्पनिकोपन्यासः; परमार्थतस्तु निर्वस्तुके विज्ञानादभिन्ने [5]जगति नैव किञ्चित् भवति; किं हि तदा केन कल्प्यते इत्याह—नास्तिक्येति ॥

1. नच. चौ. मु.
2. लोकसंवृतिसत्यत्वम्. मा.
3. सत्यं नाम. मा.
4. प्रकारणार्थः. मा.
5. सत्वे जगतो नैव भवति. मा.
6. कल्पते. मा.

कल्पनापि त्वभिन्नस्य नैव निर्वस्तुके भवेत् ॥ ९ ॥

तस्माद् यन्नास्ति नास्त्येव यत्त्वस्ति परमार्थतः ।
तत् सत्यमन्य[1]न्मिथ्यैव न सत्यद्वयकल्पना ॥ १० ॥

[2]स्वप्नोपभोगवच्चापि योपभो[3]गस्य कल्पना ।
तन्निवृत्त्यर्थमेवेह परमार्थे प्रयत्यते ॥ ११ ॥

न हि स्वप्नसुखाद्यर्थं धर्मे कश्चित् प्रवर्तते ।
यादृच्छिकत्वात् स्वप्नस्य तूष्णीमास्येत पण्डितैः ॥ १२ ॥

परमार्थ[4]फलप्राप्तिमिच्छद्भिस्तेन यत्नतः ।
प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्य[5]वस्तुनि ॥ १३ ॥

तत्रार्थशून्यं विज्ञानं योगाचाराः समाश्रिताः ।
तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ॥ १४ ॥

इदानीं विरोधपौनरुक्त्योक्तमेव सत्यद्वयाभावमुपसंहरति—**तस्मादिति** ॥

ज्योतिष्टोमादिफलानां च स्वप्नोपभोगतुल्यत्वनिरासार्थं परमार्थसत्यतायां प्रयत्यते[6]; सांवृते तु फलोपभोगे न कथञ्चन बुद्धिपूर्वकारी तत्साधने प्रवर्तेत, तस्य यदृच्छयैव कदाचिदुत्पत्तेरिति श्लोकद्वयेनाह—**स्वप्नोपभोगेति** ॥

अनन्तरोक्तमुपसंहरति—**परमार्थेति** ॥

अत्र भाष्यकारेण योगाचारदर्शनमेव पूर्वपक्षीकृतम्, अर्थसदसद्भावविचारात् । यदि माध्यमिकदर्शनं पूर्वपक्षीकृतमभिप्रेतं स्यात्, तदा विज्ञानसदसद्भावविचार एव क्रियेत; नार्थसदसद्भावविचारः । तत्प्रदर्शनार्थं दर्शनद्वयमुपन्यस्यति वार्तिककारः—**तत्रार्थशून्यमिति** ॥

1. अन्यन्मिथ्येति. चौ. मु.
2. स्वप्नादिभोग. चौ. मु.
3. गत्वकल्पना. चौ. मु.
4. फलावाप्ति. चौ. मु.
5. वस्तुषु. चौ. मु.
6. प्रत्यत्यते. मा.

**तत्र बाह्यार्थशून्यत्वं तुल्यं तावद् द्वयोरपि ।**
**[1]निवर्त्यार्थं ततो ज्ञाने तद्वत्संवृति[2]कल्पनात् ॥ १५ ॥**

**तस्मात् साधारणत्वेन तन्मूलत्वेन चाप्ययम् ।**
**बाह्यार्थसदसद्भावे यत्नो भाष्यकृता कृतः ॥ १६ ॥**

**बाह्यार्थापह्नवे द्वैतमेकोऽर्थस्य परीक्षणात् ।**
**प्रमाणमाश्रितश्चैकस्तत्रास्तां यः प्रमेयतः ॥ १७ ॥**

**[3]प्रमाणतस्तु मूलत्वादिहेदानीं [4]विचार्यते ।**

ननु माध्यमिकवादिनोऽपि नैव ग्राह्यग्राहकविकल्पशून्यतां [5]स्वशब्देनाहुः । अतः कथमुच्यते "तस्याप्यभावमिच्छन्ति" इति ? अत्रायमभिप्रायः—निराकृते ह्यनुभाव्य आकारेऽनुभाव्या[6]भावेनानिष्टमप्यनुभवस्यासत्त्वं बलादापद्यत इति ॥

तत्र निराकार्यत्वे समानेऽपि योगाचारमाध्यमिकदर्शनयोर्यद्योगाचारदर्शनमेव पूर्वपक्षितम्, तत्र प्रयोजनमाह—**तत्र बाह्यार्थेति** श्लोकद्वयेन । बाह्यार्थाभावो ह्युभयदर्शनसाधारणः । अतस्तस्मिन्निराकृते योगाचारदर्शनवन्माध्यमिकदर्शनमपि निराकृतमेव भवति, तन्मूलत्वात्; अनुभाव्याभाव एवानुभवाभावे मूलम् । तस्मादर्थसदसद्भाव एव विचारितः, न ज्ञानसदसद्भावः । स च यद्यपि बौद्धैर्बाह्यार्थाभावः प्रमेयपरीक्षया प्रमाणवृत्त्यशक्त्या प्रतिपादितः; तथापि प्रमेय[7]परीक्षां परित्यज्य प्रमाणविचार एवाङ्गीकृतः, तन्मूलत्वात् प्रमेयस्य । यदि बाह्यार्थग्राहकत्वेन प्रवर्तन्ते प्रत्यक्षादयः, ततः प्रमेयविकल्पानां तद्विरुद्धत्वादप्रामाण्यम्; अथ न प्रवर्तन्ते, ततः प्रमेयाभावादेव कुतस्तद्विकल्प इत्याह—**बाह्यार्थापह्नव इति** सार्धेन ॥

1. निवृत्त्यास्य. चौ. अनन्त. मु.
2. कल्पना. चौ. अनन्त. मु.
3. प्रमाणस्थस्तु.चौ. अनन्त. मु.
4. परीक्ष्यते. चौ. अनन्त. मु.
5. न्यां स्वच्छशब्देनाह. मा. (स्वच्छं शब्देन ?)
6. भावेन नष्टम. मा.
7. परीक्षायाम्. मा.

**प्रस्तुतः स द्विधा चात्र प्रथमं त्वनुमानतः ॥ १८ ॥**

**प्रत्यक्षबाधने चोक्ते पश्चात् तच्छ्[1]क्त्यपेक्षणात् ।**
**तत्रानुमानमाहेदं नन्वित्यस्य च सङ्गतिः ॥ १९ ॥**

**तत्संप्रयोगजं [2]नान्यत् प्रत्यक्षमिति भाषितम् ।**
**तत्रेन्द्रियार्थसम्बन्धभेदो न परमार्थतः ॥ २० ॥**

**कल्पितः संप्रयोगस्तु स्वप्नादावपि विद्यते ।**

ननु बाह्यार्थाभाववद् विज्ञानाभावोऽप्यत्र शङ्कित एव "शून्यस्तु" इत्यादिना; तत् कथं योगाचारदर्शनमेवात्र पूर्वपक्षीकृतम्, न माध्यमिकदर्शनमित्याशङ्कयाह—**प्रस्तुत इति** द्व्यर्धेन । "शून्यस्तु" नानेन माध्यमिकदर्शनं पूर्वपक्षितम्; न खलु ज्ञानाभावः प्रतिपादयितुमभिप्रेतः । किं तर्हि ? अर्थाभाव एव, "अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्यामः" इति पूर्वपक्षोपसंहारात् । स एव तु बाह्यार्थाभावः प्रथममनुमानेन प्रतिपादितः—"ननु सर्व एव निरालम्बनः प्रत्ययः" इत्यादिना । पुनस्तस्य प्रत्यक्षविरोधरूपं दूषणमुक्तम्—"ननु जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्येष्यति" इत्यादिना । ततः प्रत्यक्षस्य बाह्येऽर्थे प्रवृत्तिशक्तिर्नास्तीति प्रत्यक्षविरोधपरिहारेण पुनरुपक्रान्तं पूर्वपक्षवादिना "शून्यस्तु । कथम्? अर्थज्ञानयोराकारभेदं नोपलभामहे" इत्यादिना । पुनः प्रत्यक्षविरोध एव समर्थितः सिद्धान्तवादिना "स्यादेतदेवम्, यद्यर्थाकारा बुद्धिः" इत्यादिना । तदनेनैतद् दर्शयति—एकमेवेदं वादस्थानकम् इति । "प्रथमं त्वनुमानतः" इत्युक्तम् । किं पुनस्तदनुमानमित्याशङ्कयाह—**तत्रानुमानमाहेदं नन्विति ।** "ननु सर्व एव" इत्यादिभाष्यमनुमानप्रतिपादकमित्यर्थः । कः पुनरस्य भाष्यस्य पूर्वेण सह सम्बन्ध इत्याशङ्कयाह—**अस्य च सङ्गतिरिति** सशेषेण श्लोकद्वयेन । तत्संप्रयोगजं रजते रजतज्ञानं प्रत्यक्षम्, अतत्संप्रयोगजम् तु शुक्तिकायां रजतज्ञानमिति यदुक्तम्, तस्य चायमाक्षेपः "ननु सर्व एव" इति । बाह्यार्थाभावादिन्द्रियार्थसम्बन्धः पारमार्थिको न क्वचिदस्ति, सांवृतस्तु सर्वत्रास्तीत्यभिप्रायः ।

1. अवेक्षणात्. चौ. अनन्त. मु. 2. नाम पत्यक्ष. चौ. अनन्त. मु.

तदतद्योग[1]जत्वस्य विभागस्तेन दुर्लभः ॥ २१ ॥

मिथ्यात्वं यद् द्विधैवोक्तं नान्यथेत्यत्र चोच्यते ।
सर्व[2]स्यैव हि मिथ्यात्वे किं [3]विशेषोऽभिधीयते ॥ २२ ॥

स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात् तथा हि यः ।
प्रत्ययः स मृषा दृष्टः स्वप्नादिप्रत्ययो यथा ॥ २३ ॥

सिद्ध[4]साधनता चांशे दृष्टान्ताभाव एव च ।
मा भूतामेवशब्दश्च व्यर्थोऽशेषप्रसाधने ॥ २४ ॥

सर्व एवेति तेनात्र जाग्रद्बुद्धिपरिग्रहः ।
स्वांशाभ्युपगमाच्चापि बाह्यग्राह्यनिवारणम् ॥ २५ ॥

"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः" इति तदुक्तम्, तस्य चायमाक्षेपः "ननु सर्व एव" इतीत्याह—**मिथ्यात्वमिति** ॥

इदानीं भाष्यकारप्रतिपादितस्यानुमानस्य पक्षहेतुदृष्टान्तं दर्शयितुमाह—**स्तम्भादिप्रत्यय इति** ॥

अत्र भाष्यकारेण पक्षधर्मप्रतिपादनवेलायाम् "जाग्रतोऽपि स्तम्भः" इत्यादि धर्मविशेषणमुपात्तम्; तस्य फलं वार्तिककारः प्रदर्शयितुमाह—**सिद्धसाधनतेति** सार्धेन । प्रत्ययमात्रस्य पक्षत्वे स्वप्नादिप्रत्ययानां निरालम्बनत्वाभ्युपगमादंशे सिद्धसाध्यता, सर्वेषां च पक्षत्वे सपक्षाभावात् दृष्टान्ताभावः, एवशब्दश्च "ननु सर्व एव" इत्यत्र भाष्ये प्रत्ययमात्रस्य निरालम्बनत्वे साध्ये व्यवच्छेद्याभावादनर्थकः स्यात्; यदि हि स्वप्नादिप्रत्ययानां निरालम्बनत्वमुभयवादिसिद्धं स्यात्, तदैवमुच्यते । किमिदमुच्यते स्वप्नादिप्रत्ययानामेव निरालम्बनत्वम्? सर्व एव तु निरालम्बनाः—इति । तज्जाग्रत्प्रत्ययानामेव निरालम्बनत्वं साध्यत इति सिद्धसाध्यतापरिहारार्थम् । साध्यधर्मं निरालम्बनत्वं विशिनष्टि—**स्वांशाभ्युपगमाच्चापीत्यर्धेन** ॥

1. जन्यस्य, चौ. अनन्त. मु.
2. स्यैव च. अनन्त. मु.
3. विशिष्याभि. चौ. अनन्त. मु.
4. साधनभावांशे. चौ. अनन्त, मु.

प्रत्ययस्येति साध्यांशव्याप्तहेतुनिदर्शनम् ।
हेतुश्चोपनयेनात्र जाग्रतोऽपीति दर्शितः ॥ २६ ॥

विपक्षाभावतश्चात्र व्यतिरेको न कथ्यते ।
सामान्यस्य च हे[1]तुत्वं न स्यात् पक्षैकदेशता ॥ २७ ॥

जाग्रज्ज्ञाने विशेषोऽयं यतः सुपरिनिश्चयः ।
बाह्यालम्बनसम्बन्धो न प्रसिद्धः परं प्रति ॥ २८ ॥

तस्माद्यद् भाष्यकारेण दत्तमुत्तरमत्र तु ।

कतमेन पुनरत्र भाष्येण दृष्टान्तः प्रतिपादितः, केन वा हेतुरित्याह—**प्रत्ययस्येति** । "प्रत्ययस्य हि निरालम्बनता स्वभाव उपलक्षितः स्वप्ने" इत्यनेन प्रत्ययत्वस्य हेतोर्निरालम्बनत्वेन साध्येन व्याप्तिं स्वप्नादावुपसंहृतां दर्शयति । "जाग्रतोऽपि स्तम्भ इति" इत्यनेनापि प्रत्ययत्वस्य पक्षधर्मतामाह ॥

ननु सालम्बने प्रत्ययत्वं नास्ति— इत्यपि वक्तव्यम्; न चोक्तमित्याशङ्क्याह—**विपक्षाभावत** इत्यर्धेन । ननु प्रत्ययानां निरालम्बनत्वे साध्ये प्रत्ययत्वात्—इत्ययं हेतुः पक्षैकदेशत्वादसिद्धः पक्षधर्मत्वेनेत्याशङ्क्याह—**सामान्यस्येत्यर्धेन** । प्रत्ययस्वलक्षणानां पक्षत्वम्, प्रत्ययस्य च सामान्यस्य हे[2]तुत्वेनोपादानमित्यर्थः ॥

"ननु जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यति?" इत्यादि सिद्धान्तभाष्यं केचिदेवं व्याचक्षते—पूर्वपक्षवाद्युक्तस्यानुमानस्यानुमानबाधं प्रतिज्ञायाः किल दर्शयति भाष्यकारः—बाह्यार्थालम्बना जाग्रत्प्रत्ययाः, सुपरिनिश्चितत्वात्—इति । तदेतद् दूषयितुमाह वार्तिककारः—**जाग्रदिति** । वैलक्षण्यमात्रं त्विदमुक्तं स्वप्नप्रत्ययेन जाग्रत्प्रत्ययानाम्, न तु सुपरिनिश्चितत्वं बाह्यालम्बनव्याप्तं परस्य सिद्धमित्यर्थः ॥

तस्मान्नेदमुत्तरमुत्तराभासं त्विदमित्याह—**तस्मादिति** । यदि स्वप्नप्रत्ययसाधर्म्यात् प्रत्य[3]यत्वात् निरालम्बनत्वं स्तम्भादिप्रत्ययानाम्, तदा स्वप्नप्रत्ययवैधर्म्यात् सुपरिनिश्चितत्वात् सालम्बनत्वं किमिति न भवतीत्यर्थः ॥

1. तुत्वात्कस्मात्पक्षै. चौ. मु. / त्वान्न स्यात्पक्षै. अनन्त. मु.
2. तुत्वेनोपपादन. मा.
3. यत्वं निरा. मा.

विकल्पसमता वा स्याद् वैधर्म्यसमतापि वा ॥ २९ ॥

दुष्टत्वात् पूर्वपक्षस्य जात्युक्तिः कैश्चिदाश्रिता ।
प्रतिज्ञादोषमेवाहुः केचित् प्रत्यक्षबाधनम् ॥ ३० ॥

शक्ष्यामो यदि विस्पष्टं स्वांशग्राह्यनिवारणम् ।
तदा ते शुद्ध एव स्यात् पक्षो ग्राह्यनिवारणः ॥ ३१ ॥

प्रत्यक्षादेश्च विषयो बाह्य एवा[1]वतिष्ठते ।
तन्निषेधकृ[2]तस्तस्मात् तैर्भवेत् पक्षसाधनम् ॥ ३२ ॥

सुनिश्चयेन चैतेषां बाधकप्रत्ययादृते ।
प्रमाणाभासता नास्तीत्येतस्मात् कथ्यते [3]बलम् ॥ ३३ ॥

[4]अप्रमाणगृहीतेऽर्थे प्रतिषेधो हि युज्यते ।
गृहीतमात्रबाधे तु स्वपक्षोऽपि न सिध्यति ॥ ३४ ॥

अत्र केचिदाहुः—दुष्टत्वेन पूर्वपक्षस्य [5]जातिप्रयोग एवायमुत्तरत्वेन भाष्यकारस्याभिप्रेत इत्याह—**दुष्टत्वादित्यर्धेन** । अन्ये त्वाहुः—पक्षबाध एवायमनेन प्रत्यक्षेणोक्तः, न पुनरनुमानेनेत्याह—**प्रतिज्ञेति** सार्धद्वयेन । प्रत्यक्षादिविषयनिषेधकस्यानुमानस्य तैरेव प्रत्यक्षादिभिर्निराकरिष्यमाणस्वांशालम्बनैर्बाध इत्यर्थः ॥

सुपरिनिश्चितग्रहणं च बाधकप्रत्ययनिवृत्त्यर्थम्, न तु प्रत्यक्षादीनां बाह्यालम्बनत्वसिद्धौ लिङ्गम् : स्वत एव तेषां बाह्यमा[6]लम्बनमनात्मतया नीलस्य प्रतिभासनादित्याह—**सुनिश्चयेनेति** । अप्रमाणगृहीते चार्थे [7]बाधो युक्तः, गृहीतमात्रबाधे तु भवत्प्रयुक्तस्याप्यनुमानस्य बाधात् स्वपक्षसिद्धिरपि न प्राप्नोतीत्याह—**अप्रमाणगृहीतेऽर्थ इति** ।

1. वशिष्यते. अनन्त. मु.
2. तस्य तै. चौ. अनन्त. मु.
3. तेऽनुमा. मा.
4. दुष्टज्ञानगृहीतार्थप्र. चौ. अनन्त. मु.
5. जातिप्रत्ययोग. मा.
6. लम्बनमनामतया. मा.
7. बोधः. मा.

**अग्राह्यत्वाच्च भेदेन विशेषणविशेष्ययोः ।**
**अप्रसिद्धोभयत्वं वा वाच्यमन्यतरस्य वा ॥ ३५ ॥**

वक्तृश्रोत्रोश्च यज्ज्ञानं विशेषणविशेष्ययोः ।
तन्निरालम्बनत्वेन स्ववाग्बाधो द्वयोरपि ॥ ३६ ॥

सम्भवो [1]न हि भेदस्य विशेषणविशेष्ययोः ।
तस्मान्निरूपणं नास्ति प्रतिज्ञार्थस्य शोभनम् ॥ ३७ ॥

**निरालम्बनता नाम [2]किञ्चिद् वस्तु न गम्यते ।**
**[3]तेनैतद् व्यतिरेकादौ प्रश्नो नैवोपपद्यते ॥ ३८ ॥**

एवं तावत् भाष्यकारोक्तमभिधायेदानी[4]मात्मीयं प्रतिज्ञादोषमाह—**अग्राह्यत्वाच्च भेदेनेति** । विशेषणविशेष्ययोर्यज्ज्ञानं तस्यापि प्रत्ययत्वेन निरालम्बनत्वात् तयोर[5]प्रसिद्धिः । ततश्चाप्रसिद्धविशेषणत्वमप्रसिद्धविशेष्यत्वमप्रसिद्धोभयत्वं वा यथेष्टं वक्तव्यम् । श्लोके च विशेषणविशेष्यशब्दौ धर्मधर्मिप्रतिपादकत्वेन द्रष्टव्यौ ॥

स्ववचनविरोधश्चेत्याह—**वक्तृश्रोत्रोरिति** । द्वयोरपि धर्मधर्मिणोर्यज्ज्ञानं [6]तस्यापि प्रत्ययत्वेन निरालम्बनत्वात् न प्रत्ययो नापि निरालम्बनत्वमित्यर्थः ॥

न च भव[7]त्पक्षे विज्ञानव्यतिरिक्तं निरालम्बनत्वम्, विज्ञानव्यतिरिक्तस्य वस्त्वन्तरस्याभावात्; अव्यतिरेकपक्षेऽप्येकत्वात् प्रतिज्ञा[8]भावः; यतो धर्मिधर्मविशिष्टः प्रतिज्ञार्थः; "प्रसिद्धो धर्मी प्रसिद्धविशेषणविशिष्टतया" इति वचनादित्याह—**सम्भव इति** ॥

नन्ववस्तुत्वान्निरालम्बनत्वस्य कुतो व्यतिरेकाव्यतिरेकविकल्पाविति चोदयति—**निरालम्बनतेति** ।

1. न च. चौ. अनन्त. मु.
2. न किञ्चिद्वस्तु गम्यते. चौ. अनन्त. मु.
3. तेन तद्यति. चौ. अनन्त. मु.
4. मात्मीयप्रति. मा.
5. प्रसिद्धेः. मा.
6. तस्याप्यप्रत्ययत्वमेव. मा.
7. पक्षेऽपि ज्ञान. मा.
8. भावस्ततः. मा.

**यद्यवस्तु कथं त्वस्मांस्त्वं बोधयितुमिच्छसि ।**
**बुध्यसे वा स्वबुद्ध्या त्वं कल्पिता त्वथ साध्यते ॥ ३९ ॥**

**असतः कल्पना कीदृक् कल्प्तौ वस्तु प्रसज्यते ।**
**कथमिष्टमभावे चेद् वस्तु सोऽपीति वक्ष्यते ॥ ४० ॥**

**तथा प्रत्यय इत्येष कर्म भावादि वा [1]वदेत् ।**
**भावादिषु विरोधः स्यात् कर्म चेत् सिद्धसाधनम् ॥ ४१ ॥**

**प्रत्याय्यस्य हि रूपादेर्निरालम्बनतेष्यते ।**
**अविज्ञानात्मकत्वेन किञ्चिन्नालम्बते ह्यसौ ॥ ४२ ॥**

**कर्तृत्वे करणत्वे वा पक्षत्वं शब्दयोरपि ।**

तत् परिहरति—**यदीति** सपादार्धेन । कथमवस्तुनो बोधोत्पादकत्वमित्यर्थः । 'कल्पिता त्वथ साध्यते' इति चेत् तत्राह—**असत** इत्यर्धेन । सदेवान्याकारेण कल्प्यत इत्यर्थः । कथमभावस्यावस्तुनस्त्वत्पक्षेऽपि बोधोत्पादकत्वमिति चोदयति—**कथमिष्टमभावे चेदिति** । तत्र परिहारमाह—"**वस्तु सोऽपीति वक्ष्यते**" **इति** । अभावस्याप्यभावग्रन्थे वस्तुत्वं प्रतिपादयिष्यामः ॥

एवं तावत् साध्यधर्मं निरालम्बनत्वं विकल्प्याधुना धर्मिणं विकल्पयितुमाह—**तथेति** । धर्मिनिर्देशको हि प्रत्ययशब्दः कर्मसाधनो वा स्यात् प्रतीयत इति, भावसाधनो वा प्रतीतिरिति, कर्तृसाधनो वा प्रत्येतीति, करणसाधनो वा प्रतीयतेऽनेनेति? तत्र भावकर्तृकरणसाधनपक्षे स्ववचनविरोधः । कर्मसाधनपक्षे च सिद्धसाध्यतेत्यर्थः ॥

तत्र कर्मसाधनपक्षे सिद्धसाधनत्वं यत् प्रतिज्ञातं तत् प्रदर्शयितुमाह—**प्रत्याय्यस्येति** । कर्मसाधनोऽयं प्रत्ययशब्दो रूपादीन्यपि प्रतिपादयति । तेषां चाविज्ञानात्मकत्वान्निरालम्बनत्वमिष्टमेवेति सिद्धसाध्यता ॥

अपि च, कर्तृकरणसाधनोऽयं प्रत्ययशब्दो धर्मधर्मिनिर्देशकमपि शब्दं प्रतिपादयेत्; शब्दस्य च निरालम्बनत्वमर्थाप्रतिपादकत्वम्; ततश्च साधनावसरे पक्षानुक्तिर्नाम दोष इत्याह—**कर्तृत्व इति** ॥

1. भवेत्. चौ. अनन्त. मु.

**तन्निरालम्बनत्वेन पक्षाभावः प्रसज्यते ॥ ४३ ॥**

**प्रत्याय्येन च भिन्नेन विना कर्त्राद्यसम्भवः ।**
**प्रत्यये तन्निमित्ते वा बाधः स्ववचनेन ते ॥ ४४**

अथापि रूढिरूपेण प्रत्ययः स्यात् तथापि तु ।
ग्राहकं वस्तु सिद्धं नः प्रत्ययोऽन्यस्य वस्तुनः । ४५ ॥

**तमभ्युपेत्य पक्षश्चेदभ्युपेतं विरुध्यते ।**
**विशेष्यस्याप्रसिद्धिश्च तवास्माकमतादृशे ॥ ४६ ॥**

**आत्मधर्मस्वतन्त्रत्वकल्पनेऽपि तथा भवेत् ।**
**न च प्रत्ययमात्रत्वं किञ्चिदस्त्यनिरूपणात् ॥ ४७ ॥**

इदानीं "भावादिषु विरोधः स्यात्" इति यदुक्तं तद् दर्शयितुमाह—**प्रत्याय्येनेति**। व्यतिरिक्तवस्तुग्राहकं प्रत्ययशब्देन धर्मिण निर्दिश्य तस्य निरालम्बनत्वमप्रत्यायकत्वं साध्यत इति स्ववचनविरोधः ॥

अथ रूढ्यायं प्रत्ययशब्दोऽमुमर्थं प्रतिपादयति, तस्य धर्मित्वम्, तत्राभ्युपगमंविरोधिनी प्रतिज्ञेत्याह—**अथापि रूढिरूपेणेति** सार्धेन । व्यतिरिक्तवस्तुग्राहके प्रत्ययशब्दो लोके रूढ इत्यर्थः ।

अपि च व्यतिरिक्तालम्बनस्य च प्रत्ययस्य धर्मित्वम्, स्वांशालम्बनस्य वा ? तत्र पूर्वस्मिन् पक्षे तवाप्रसिद्धविशेषणः पक्षः; उत्तरपक्षेऽपि ममेत्याह—**विशेष्यस्येत्यर्धेन** ॥

तथात्मधर्मस्य वा प्रत्ययस्य धर्मित्वं स्यात् स्वतन्त्रस्य वा ? तत्रात्मधर्मत्वे तवाप्रसिद्धविशेष्यः पक्षः; स्वतन्त्रपक्षेऽपि मीमांसकस्येत्याह—**आत्मधर्मेत्यर्धेन** । न चोभयधर्मरहितस्य प्रत्ययमात्रस्य धर्मित्वम्, तस्यानिरूपणादित्याह—**नेत्यर्धेन** ॥

ननु धर्मिणि विकल्प्यमानेऽनुमानोच्छेदः; गोशब्दस्यापि हि नित्यत्वं साध्यमानं बुद्धिरूपस्य वा साध्येत, वर्णात्मकस्य वा ? तत्र बुद्धिरूपत्वे मीमांसकस्याप्रसिद्धविशेष्यत्वम्, बुद्धिव्यतिरिक्तवर्णात्मकपक्षे च बौद्धस्य । तस्मादेवं भवताप्यव-

शब्दार्थमात्ररूपेण यथान्येषां निरूपणम् ।
[1]तथापि भवतो न स्याद् वाच्यभेदमनिच्छतः ॥ ४८ ॥

निरालम्बनता [2]चेह सर्वथा यदि साध्यते ।
विशेषणाप्रसिद्धिः [3]स्याद् दृष्टान्तश्च न विद्यते ॥ ४९ ॥

केनचिच्चेत् प्रकारेण निरालम्बनतोच्यते ।
रसज्ञानस्य रूपादिशून्यत्वात् सिद्धसाधनम् ॥ ५० ॥

अथ बुद्धिर्यदाकारा तदालम्बनवारणम् ।
स्वाकारस्याभ्युपेतत्वात् तदभावो विरुध्यते ॥ ५१ ॥

बाह्यानालम्बनत्वेऽपि बाह्य [4]इत्यग्रहो यदि ।

गन्तव्यम्—दर्शनभेदेनाभ्युपगतान् धर्मान् परित्यज्य शब्दशब्दवाच्येन रूपेण [5]धर्मित्वम्; तथेहापि भविष्यति इत्याशङ्क्याह—**शब्दार्थमात्ररूपेणेति** । ममैतद्युक्तं व्यतिरिक्तस्य बाह्यस्याभ्युपगमात्, तव तु नेत्यर्थः ॥

एवं साध्यधर्मिणं विकल्प्य पुनरपि साध्यधर्मं निरालम्बनत्वं विकल्पयितुमाह—**निरालम्बनता चेति** । यदि रसज्ञानस्य सर्वात्मना निरालम्बनत्वं साध्यते, तदा साध्यविकलत्वं दृष्टान्तस्य; अप्रसिद्धविशेषणश्च पक्षः; यतः सर्वात्मना निरालम्बनत्वं बौद्धस्याप्रसिद्धम्, स्वांशालम्बनत्वाभ्युपगमात् ॥

अथ कथञ्चिन्निरालम्बनत्वं साध्यते, तदा सिद्धसाध्यतेत्याह—**केनचिदिति** ॥

अथ यत्प्रतिभासं विज्ञानमुत्पद्यते, तन्नालम्बत इत्युच्यते, तत्राप्याह—**अथेति** । स्तम्भप्रतिभासं विज्ञानमुत्पद्यते तस्य विज्ञानात्मतयेष्टत्वात्, तदभावेऽभ्युपगमविरोधः ॥

अथ बाह्यविशिष्टनिरालम्बनत्वसाधनान्नाभ्युपगमविरोधः, तत्राप्याह—**बाह्येति** । यदि तावत् स्तम्भज्ञानं स्तम्भम् 'बाह्यः' इत्येवं नावलम्बत इत्युच्यते, ततः सिद्धसाध्यत्वम्; न हि स्तम्भज्ञाने बाह्यावभासोऽस्ति ॥

1. तथा च भवतो. चौ. अनन्त. मु. भवतो नान्यत्. मा.
2. चापि. चौ अनन्त.मु.
3. अप्रसिद्धश्चदृ. चौ. अनन्त. मु.
4. इत्याग्रहः. अनन्त. मु.
5. धर्मत्वम्. मा.

**स्तम्भादौ नैव तद्बुद्धिरित्येवं सिद्धसाधनम् ॥ ५२ ॥**

**[1]अथ स्तम्भादिरूपेण निरालम्बनतोच्यते ।**
**संवेदनस्य दृष्टत्वात् तद्विरोधः प्रसज्यते ॥ ५३ ॥**

**द्विचन्द्रादिषु तुल्यश्चेन्नेन्द्रियाप्राप्तितो हि नः ।**
**[2]तत्रानालम्बनोक्तिः स्यान्नार्थसंविन्यभावतः ॥ ५४ ॥**

**सर्वत्रार्थेन्द्रियाणां नः संयोगसदसत्तया ।**
**संवित्तौ विद्यमानायां [3]सदसद्ग्राहिता स्थितिः ॥ ५५ ॥**

**भवतस्त्विन्द्रियादीनामभावाद् ग्रहणादृते ।**
**[4]नालम्बनस्य हेतुः स्यान्निषेधोऽतो न युज्यते ॥ ५६ ॥**

'अथापि स्तम्भः' इत्येवं न गृह्णातीति साध्यते, तत्राप्याह—**अथ स्तम्भादीति** । स्तम्भसंवेदनात्मके हि विज्ञाने तदसंवेदनात्मकं निरालम्बनत्वं साध्यमानं तत्संवेदनविरुद्धमेव स्यादित्यर्थः ॥

ननु द्विचन्द्रज्ञानं निरालम्बनत्वेनेष्टं मीमांसकैः; तत्र कथं संवेदनविरोधो न स्यादिति चोदयति—**द्विचन्द्रादिषु तुल्यश्चेदिति** । तत्र परिहारमाह—**नेन्द्रियाप्राप्तितो हि न** इति त्रिपाद्या । भ्रान्ताभ्रान्तयोरर्थसंवेदने सत्येव प्रतिभास्येनेन्द्रियसम्बन्धाभावात् निरालम्बनत्ववाचोयुक्तिः; न प्रतिभासशून्यत्वेनेत्यर्थः ॥

एतदेव विवृणोति—**सर्वत्रेति** ॥

बौद्धस्याप्येवमेव भविष्यतीति चेदित्याशङ्क्याह—**भवत इति** । भवतस्तु विज्ञानव्यतिरिक्तेन्द्रियार्थसम्बन्धानामभावात् प्रतिभासशून्यानात्मकत्वमेव सालम्बनत्वम्, प्रतिभासशून्यात्मकत्वं च निरालम्बनत्वम्; ईदृशि च निरालम्बनत्वे साध्ये संवेदनविरोधः स्यादित्यर्थः ॥

1. तथा. अनन्त. मु.
2. तत्र नालम्बनोक्ति. मा.
3. सदसद्ग्राह्यता. अनन्त. मु.
4. नालम्बनत्वहे. चौ. अनन्त. मु.

बहिर्भावाप्रसिद्धत्वात् तेनानालम्बना मतिः ।
[1]कथं च साध्यते नैष पक्षो हि ज्ञायते तदा ॥ ५७ ॥

यथान्यबोधनाशक्तेर्नाप्रसिद्धे विशेषणे ।
पक्षसिद्धिस्तथैव स्याद् विशेषणविशेषणे ॥ ५८ ॥

नाप्रसिद्धे पदार्थे हि वाक्यार्थः संप्रतीयते ।
तत्पूर्वकत्वात् पक्षश्च वाक्यार्थः स्थापयिष्यते ॥ ५९ ॥

पर्युदासे निषेधे वा व्यतिरिक्तस्य वस्तुनः ।
प्रमेयत्वाद्यभेदेन जगतः सिद्धसाधनम् ॥ ६० ॥

यदि चात्यन्त[2]भिन्नेन निरालम्बनतोच्यते ।

बाह्यत्वे च निरालम्बनविशेषणत्वेनोपदीयमाने बौद्धं प्रति तस्याप्रसिद्धत्वेनाप्रसिद्धविशेषणविशेषणः पक्ष इत्याह—**बहिर्भावाप्रसिद्धत्वादिति** ॥

नन्वप्रसिद्धविशेषणविशेषणः पक्ष इति शास्त्रे प्रतिज्ञादोषत्वेन न[3] पठितमित्याशङ्क्याह—**यथान्यबोधनाशक्तेरिति** । पक्षस्य हि वाक्यार्थत्वात्, पदार्थपूर्वकत्वाच्च वाक्यार्थस्य तत्प्रतीतिः पदार्थप्रतिपत्तिपूर्विका ; अप्रसिद्धे च विशेषणपदार्थे संसर्गावगतिर्नास्तीत्यप्रसिद्धविशेषणत्वं पक्षस्य दोषः । स च विशेषणस्य विशेषणेऽप्यप्रसिद्धे समान इत्यर्थः ॥

अमुमेवार्थं स्पष्टयति—**नाप्रसिद्ध इति** ॥

अथ व्यतिरिक्तानालम्बनाः प्रत्ययाः—इति साध्यते, तत्रापि प्रसज्यप्रतिषेधाभ्युपगमे व्यतिरिक्तं नालम्बत इति, पर्युदासाभ्युपगमेऽपि अतिरिक्तादन्यदालम्बते इत्युभयत्रापि सिद्धसाध्यता, प्रमेयत्वेन नीलतद्बुध्योरव्यतिरेकादित्याह—**पर्युदास इति** ॥

अथात्यन्तभिन्नं नालम्बने—इति साध्यते, तत्रापि प्रमेयत्वेन नीलतद्बुध्योरव्यतिरेकात् स एव दोष इत्याह—**यदि चेत्यर्धेन** । अथ कथञ्चिद्भिन्नं नालम्बते—

1. कथञ्चित्. चौ. अनन्त. मु.
2. भेदेन. चौ. अनन्त. मु.
3. Omitted न. मा.

**कथञ्चिच्चेद् विरुध्येत प्राक्पक्षः कल्पितेन ते ॥ ६१ ॥**

**वस्त्वाद्याकारतश्चापि धीर्निरालम्बनेष्यते ।**
**ग्राहकाच्चेदभिन्नत्वं शक्तिभेदो विरुध्यते ॥ ६२ ॥**

**निरालम्बनबुद्धेश्च यद्युत्पत्तिः प्रसाध्यते ।**
**दृष्टत्वात् सेष्यतेऽस्माभिर्बाह्यग्राह्यविवर्जिता ॥ ६३ ॥**

**[1]सत्यत्वं पुनरेतस्यास्त्वं नेच्छसि [2]कथं पुनः ।**
**आत्मांशेऽवसिता ह्येषा मृगतृष्णादिबुद्धिवत् ॥ ६४ ॥**

इति साध्यते, तत्रापि नीलतद्बुध्योः सांवृतेन रूपेण भेदाभ्युपगमविरोधिनी प्रतिज्ञेत्याह —**कथञ्चि**दित्यर्धेन ॥

सर्वेषु पक्षेषु सिद्धसाध्यता ; यतो नील[3]बुद्धिर्नीलवस्त्वाकारतया नालम्बत इत्याह—**वस्त्वाद्याकारतश्चे**त्यर्धेन । अथात्मालम्बनाः प्रत्ययाः —इति साध्यते, यथोक्तम्—

"सहोपलम्भनियमादभेदो नीलतद्धियोः" । इति,

तत्राप्याह—**ग्राहकाच्चे**दित्यर्धेन ॥

नन्वेकस्य ग्राह्यग्राहकशक्तिद्वययोगे को विरोधः? उच्यते—पूर्वस्य विशेषणे वस्तुनि पश्चादुत्पन्नस्य ग्राहकत्वं तदेकस्य पौर्वापर्येणावस्थितशक्तिद्वययुक्तस्योत्पत्तिस्थितिर्विरुद्धा ; एवं च न प्रतिज्ञार्थः शोभनो लभ्यते । यदि परमेतत् साध्यते—निरालम्बनाः प्रत्ययाः —इत्येषा बुद्धिरुत्पद्यत इति, तत्रापि सिद्धसाध्यत्वम् ; यतो धर्मधर्मिप्रतिपादकशब्दोच्चारणे सत्येषा बुद्धिरुत्पद्यत एव । बाधकप्रत्ययसद्भावे तु मिथ्यैषा बुद्धिः "एष वन्ध्यासुतो याति"–इतिवदित्याह–**निरालम्बनबुद्धेश्चेति** ॥

तवाप्यत्र मिथ्यात्वमेवेत्याह—**सत्यत्वं पुनरिति** ॥

1. सम्यक्त्वम्. चौ. अनन्त. मु.
2. कथञ्चन. चौ. अनन्त. मु.
3. बुद्धिर्नीलं वस्त्वा. मा.

चैत्रादिप्रत्ययानां च निरालम्बनता यदि ।
धर्मभूता न गृह्येत [1]साधनोज्झितया धिया ॥ ६५ ॥

ततो विषय[2]नानात्वं प्रतियोग्यनिराकृता ।
रूपात् सालम्बनप्राप्तिः सती केन निवार्यते ॥ ६६ ॥

यदि प्रत्ययशब्दोऽपि प्रत्ययत्वेन गृह्यते ।
संवित्त्यालम्ब[3]नत्वं च वार्यते सिद्धसाधनम् ॥ ६७ ॥

बुद्ध्युत्पादनशक्तिश्चेद् वार्या साध्यं न सिध्यति ।
साधनस्य प्रयो[4]गो हि बोधकत्वाद् विना न ते ॥ ६८ ॥

न चाभि[5]धास्त्यसम्बन्धाद्दते भेदाच्च नास्त्यसौ ।
न चासौ तद्गतं भेदं बोधयन्त्या [6]धिया विना ॥ ६९ ॥

यदि च त्रिरूपात् प्रत्ययत्वलक्षणात् लिङ्गादुत्पन्नं विज्ञानं स्वांशालम्बनम्, ततश्चैत्रादिप्रत्ययगतं निरालम्बनत्वं न गृह्णीयात् । ततो विषयभेदेन बाध्यबाधकत्वाभावात् किमिति तेषां निरालम्बनत्वम्? अनात्मालम्बनत्वं तु स्वाभाविकमेव, अनात्मतया नीलादीनां प्रतिभासनादित्याह—**चैत्रादीति** श्लोकद्वयेन ॥

यदि चायं करणसाधनत्वेन धर्मिनिर्देशकः प्रत्ययशब्द आत्मानमपि धर्मित्वेन प्रतिपादयेत्, अर्थसंवेदनरूपालम्बनत्वं च वार्यते; तदापि सिद्धसाध्यतेत्याह—**यदीति** । अचेतनत्वेन प्रत्ययशब्दस्यार्थसंवेदनं नास्त्येवेत्यर्थः ॥

अथ बुद्ध्युत्पादनसामर्थ्यरूपालम्बनत्वं वार्यते, तत्रापि निरालम्बनत्वात् प्रत्ययानां साध्यत्वेन प्राश्निकान् प्रति प्रतिपादयितुमभिप्रेतं न सिध्यतीत्यभिप्रायेणाह—**बुद्ध्युत्पादनशक्तिरित्यर्धेन** । कस्मादित्याह—**साधनस्येत्यर्धेन** ॥

इतश्च भवत्पक्षे शब्दस्यार्थप्रतिपादकत्वं नास्तीत्याह—**न चेति** । सम्बन्धबलेनार्थप्रत्यायकत्वं शब्दस्य, भेदनिबन्धनश्च सम्बन्धः; न चासौ भेदोऽस्ति, शब्दार्थग्राहकस्य प्रत्ययस्य निरालम्बनत्वादित्यर्थः ॥

1. धनोत्थितया. चौ. अनन्त. मु.
2. त्वात् प्रति. चौ. अनन्त. मु.
3. नत्वेन. चौ. अनन्त. मु.
4. गोऽत्र बोधक. चो. अनन्त. मु.
5. धार्थसम्ब. अनन्त. मु.
6. तया विना. मा.

**प्राश्निकैनागृहीते च [1]वाक्ये सावयवे पृथक् ।**
**पक्षे हेतौ च दृष्टान्ते वादिनि प्रतिवादिनि ॥ ७० ॥**

**साधनस्याप्रयोगः स्यादभ्युपेत्योच्यते यदि ।**
**पूर्वाभ्युपगमेनैव प्रतिज्ञा [2]बाध्यते ततः ॥ ७१ ॥**

**धर्माधर्मादिभेदे च नासिद्धे परमार्थतः ।**
**शिष्यात्मनोश्च धर्मादेरुपदेशोऽवकल्पते ॥ ७२ ॥**

**तदनुष्ठानतो [3]बुद्धेरिष्टो भेदः स्फुटं च तैः ।**
**सूत्रान्तरेऽभ्युपेतत्वात् भवेदागमबाधनम् ॥ ७३ ॥**

**सर्वलोकप्रसिद्ध्या च पक्षबाधोऽत्र नो ध्रुवम् ।**

भवत्पक्षे च साधनस्य प्रयोगो नास्तीत्याह—**प्राश्निकैरिति** सपादश्लोकेन । प्राश्निकान् प्रति साधनं प्रयुज्यते 'प्राश्निकानामप्रतीतोऽर्थः प्रतिपाद्यते' इति वचनात्; न च ते साधनं प्रति[4]पद्यन्ते, पक्षहेतुदृष्टान्तवचनग्राहकाणां प्रत्ययानां निरालम्बनत्वादित्यर्थः ।

अथ तेषां सालम्बनत्वमिष्यते, ततोऽभ्युपगमविरोधः स्यादित्याह—**अभ्युपेत्येति** पादत्रयेण ॥

भवत्पक्षे च धर्माधर्मशिष्याचार्यग्राहकाणां प्रत्ययानां निरालम्बनत्वात् धर्माधर्मोपदेशश्च शिष्यान् प्रत्याचार्यस्य न प्राप्नोतीत्याह—**धर्माधर्मादिभेदे चेति भेद** इत्यन्तेन । तदनेन धर्माधर्मोपदेशान्यथानुपपत्तिलक्षणयार्थापत्त्या प्रति[5]ज्ञाबाधं दर्शयति ॥

धर्माधर्मोपदेशसूत्रव्यतिरेकेण सूत्रान्तरमपि विज्ञानव्यतिरिक्तार्थप्रतिपादनपरमस्तीत्यागमविरोधः प्रतिज्ञाया इत्याह—**स्फुटं च तैरिति** सशेषेणार्धेन ॥

सर्वलोकविरोधिनी चेयं प्रतिज्ञेत्याह—**सर्वलोकेत्यर्धेन** । अपि च, रूपत्रयग्राहकाणां विज्ञानानां निरालम्बनत्वं वा स्यात् सालम्बनत्वं वा ? निरालम्बनत्वपक्षे

1. वाक्यस्यावयवे. चौ. मु.
2. साध्यते. चौ. अनन्त. मु.
3. बुद्धेरि. मा.
4. पाद्यते. मा.
5. ज्ञां दर्शयति. मा.

**कृत्स्नसाधनबुद्धिश्च यदि मिथ्येष्यते ततः ॥ ७४ ॥**

**सर्वाभावो यथेष्टं वा न्यूनता[1]द्यभिधीयताम् ।**
**तेषां सालम्बनत्वे वा तैरनैकान्तिको भवेत् ॥ ७५ ॥**

**तदन्यस्य प्रतिज्ञा चेत् तदन्यप्रत्ययो मृषा ।**
**तन्मिथ्यात्वप्रसङ्गे च पूर्वपूर्वं[2] न सिध्यति ॥ ७६ ॥**

**स्तम्भसाधनविज्ञानभेदो न हि [3]तदा भवेत् ।**
**यावद्यावत्प्रतिज्ञेयं तदन्यस्य[4] प्रणीयते ॥ ७७ ॥**

रूपत्रयस्याप्यभावः; एकस्य वा रूपस्य यथेष्टमभावो वक्तव्य इत्याह—**कृत्स्नसाधनबुद्धिश्चेति** । अथ तेषां सालम्बनत्वमभिधीयते, ततस्तत्रापि हेतोर्वृत्तेः अनैकान्तिकत्वमित्याह—**तेषां सालम्बनत्व** इत्यर्धेन ॥

तद्दूषणपरिहारकाम आह—**तदन्यस्य प्रतिज्ञा चेदिति** । साधनबुद्ध्यन्यत्वविशिष्टं प्रत्ययत्वं हेतुत्वेन प्रतिज्ञायत इति नानैकान्तिकत्वम्; अत एष वाक्यार्थः—स्तम्भादयः प्रत्यया निरालम्बनाः, साधनग्राहकबुद्ध्यन्यत्वे सति प्रत्ययत्वादित्यर्थः । तदेतद् दूषयितुमाह—**तदन्येत्यादिसपादश्लोकेन** । स्तम्भादिबुद्धीनां साधनबुद्ध्यन्यत्वग्राहिका या बुद्धिः तस्या मृषात्वे तदन्यस्याभावाद् यः पूर्वमुपात्तः तदन्यत्वविशिष्टः प्रत्ययस्वलक्षणो हेतुः "तदन्यस्य प्रतिज्ञा चेत्" इति तस्यासिद्धत्वम्; तदसिद्धौ च ततोऽपि यत् पूर्वतरमुपात्तम् 'निरालम्बनाः प्रत्ययाः' इति तस्याप्यसिद्धिः । तदिदमुक्तम्—पूर्वपूर्वं न सिध्यति इति ।

अथ साधनबुद्ध्यन्यत्वग्राहिकाया बुद्धेः सालम्बनत्वमिष्यते, ततस्तत्र वृत्तेरनैकान्तिकत्वम् । अथ साधनबुद्ध्यन्यत्वग्राहकबुद्ध्यन्यत्वं विशेषणमुपादीयते, तत्रापि स एव दोष इत्याह—**यावद्यावदिति** । यावद्यावद्विशेषणवदन्यत्वमुपादीयते तावत्तावत्तदन्यत्वग्राहकाणां प्रत्ययानां मिथ्यात्वात् सविशेषणो हेतुरसिद्धः । तदसिद्धत्वे चाद्यस्य प्रतिज्ञार्थस्यासिद्धिरित्यर्थः ।

1. वाभिधीयते. चौ. अनन्त. मु.
2. सर्वं पूर्वम्. चौ. अनन्त. मु.
3. यथा. चौ. अनन्त. मु.
4. प्रतीयते. चौ. अनन्त. मु.

तावत्तावत् परेषां स्यान्मिथ्या[1]त्वादाद्यबाधनम् ।
विरुद्धाव्यभिचारित्वं बाधो वाप्यनुमानतः ॥ ७८ ॥

इत्थं सर्वेषु पक्षेषु वक्तव्यं प्रतिसाधनम् ।
बाह्यार्थालम्बना बुद्धिरिति [2]सम्यक् च धीरियम् ॥ ७९ ॥

बाधकापेतबुद्धित्वाद् यथा स्वप्नादिबाह्यधीः ।
सापि मिथ्येति चेद् ब्रूयात् स्वप्नादीनामबाधनात् ॥ ८० ॥

न[3] स्यात् साधर्म्यदृष्टान्तो भवतः साधनेऽधुना ।
विज्ञानास्तित्वभिन्नत्वक्षणिकत्वादिधी[4]स्तदा ॥ ८१ ॥

सम्यक् चेदभ्युपेयेत [5]तयानैकान्तिको भवेत् ।

सर्वेषु च पक्षेषु सप्रतिसाधनत्वं प्रत्ययत्वलक्षणस्य हेतोर्वक्तव्यमनुमानविरोधो वा प्रतिज्ञाया इत्याह—**विरुद्धेति** ।

इत्थं वक्तव्यमिति यदुक्तं तद्दर्शयति—**बाह्यार्थालम्बनेति** । अयं प्रयोगार्थः— ‘स्तम्भादयः प्रत्यया बाह्यार्थमालम्बन्ते’ इत्यस्माद् वाक्यात् या बुद्धिरुत्पद्यते सा धर्मिणी, सम्यक्त्वं तस्या इति साध्यो धर्मः, बाधकप्रत्ययरहितत्वे सति बुद्धित्वादित्ययं हेतुः, स्वप्नादिप्रत्ययानां [6]या बाधिका बुद्धिस्तद्वदिति दृष्टान्तः । अथ स्वप्नप्रत्ययबाधिकाया अपि बुद्धेः मिथ्यात्वाद् व्याप्तिशून्योऽयं हेतुरुच्यते, तत्राप्याह— **सापि मिथ्येति** । बाधकप्रत्ययमिथ्यात्वे सति स्वप्नादीनां सत्यत्वात् तवापि तर्हि व्याप्तिशून्यः प्रत्ययत्वलक्षणो हेतुरिति पूर्वपक्षवाद्यभिप्रेत[7]स्यापि निरालम्बनत्वस्यासिद्धिः ।

अपि च विज्ञानास्तित्वभिन्नत्वादिग्राहकाणां प्रत्ययानां सालम्बनत्वे तत्रापि हेतोर्वृत्तेरनैकान्तिकत्वमित्याह—**विज्ञानास्तित्वेति** ।

1. त्वादन्य. चौ. अनन्त. मु.
2. सम्यक्त्व. मा.
3. तस्मात्, चौ. अननत. मु.
4. तथा. चौ. अनन्त मु
5. तथा. अनन्त मु. / तदा. चौ. मु.
6. omitted या. भा.
7. स्यापि नीलाल.

**तन्मिथ्याभ्युपपत्तौ वा[1] पक्षाभावः प्रसज्यते ॥ ८२ ॥**

**तथा च [2]बन्धमुक्त्यादिव्यवस्था न[3] च कल्पते ।**
**ततश्च मोक्षयत्नस्य वैकल्यं वः प्रसज्यते ॥ ८३ ॥**

**विकल्पोत्पद्यमाना च ज्ञानास्तित्वादिधीर्यदि ।**
**मृषेष्टा न च दृष्टात्र प्रमाणान्तरतो [4]मतिः ॥ ८४ ॥**

**प्रमाणाभावतस्तेन ज्ञानास्तित्वादि दुर्लभम् ।**
**सर्वं चाप्यस्मदादीनां मिथ्याज्ञानं विकल्पनात् ॥ ८५ ॥**

**सान्निध्यविप्रकृष्टत्वे सत्त्वासत्त्वे च दुर्लभे ।**
**मिथ्याज्ञानाविशेषेऽपि सांख्यादिपरिवर्जनात् ॥ ८६ ॥**

निरालम्बनत्वे तु तेषां धर्मधर्मिणोरभावात् "प्रसिद्धो धर्मी प्रसिद्धविशेषण-विशिष्टः" इत्येवंलक्षणस्य पक्षस्याभावः प्राप्नोतीत्याह—**तन्मिथ्याभ्युपपत्तौ वेति** सार्धेन ।

ननु ज्ञानास्तित्वादिग्राहकं सविकल्पकं विज्ञानं भवतु मिथ्या, तथापि निर्वि-कल्पकज्ञानादस्तित्वादीनां ग्रहणात् किमिति पक्षाभाव इत्याशङ्क्याह—**विकल्पो-त्पद्यमाना चेति** सार्धेन । प्रमाणान्तरशब्देन निर्विकल्पकं विज्ञानमाह । न च क्षणिकत्वादीनां ज्ञानसम्बन्धिता निर्विकल्पकेनावसीयते, सम्बन्धस्य भवत्पक्षेऽ वस्तुत्वादित्यर्थः ।

अपि च भवत्पक्षे सर्वमेव संसारिणो विज्ञानमप्रमाणम्, ग्राह्यग्राहककलु-षितत्वेन सविकल्पकत्वात्; न च बाह्यार्थशून्यवादिनः सदसदर्थविषयत्वेन प्रमाणा-प्रमाणादिविभाग इत्याह—**सर्वं चेति** ।

भवत्पक्षे च—

"नासतो विद्यते भावो नाभावो विद्यते सतः ।"

"क्षणिकाः सर्वसंस्काराः"

इत्येवमादीनां मिथ्यात्वाविशेषात् सांख्यदर्शनपर्युदासेन बौद्धदर्शनपक्षपातो मुधैवेत्याह— **मिथ्याज्ञानेति** ।

1. च पक्षबाधः चौ. अनन्त. मु.
2. बद्धमुक्तादि. चौ. मु.
3. न प्रकल्पते. अनन्त. मु.
4. गतिः चौ. अनन्त. मु.

बौद्धदर्शन एकस्मिन् पक्षपाती न युज्यते ।
मिथ्यात्वं[1] यदि बुद्धेः स्याद् बाधः किं नोपलभ्यते ॥ ८७ ॥

बाधाद् विना[2] मृषात्वस्य व्यवस्था न च कल्पते ।
प्रतियोगिनि दृष्टे च जाग्रज्ज्ञाने मृषा भवेत् ॥ ८८ ॥

स्वप्नादिबुद्धिरस्माकं तत्र भेदोऽपि किंकृतः ।
न चान्यत् प्रतियोग्यस्ति जाग्रज्ज्ञानस्य शोभनम् ॥ ७९ ॥

यद्दर्शनेन मिथ्यात्वं स्तम्भादिप्रत्ययो व्रजेत् ।
स्वप्नादिप्रतियोगित्वं सर्वलोकप्रसिद्धितः ॥ ९० ॥

[3]तदिदं धर्मवैधर्म्याद् बाधकप्रत्यये यथा ।
योगिनां जायते बुद्धिर्बाधिका प्रतियोगिनी ॥ ९१ ॥

यदि च जाग्रत्प्रत्ययानां मिथ्यात्वम्, किमिति देशादौ बाधकप्रत्ययो नोत्पद्यते ? अथ दैवबाधेन मिथ्यात्वम्, व्यवस्था न प्राप्नोति—योगिज्ञानं प्रमाणम्, स्तम्भादयस्तु प्रत्यया न प्रमाणमित्याह—**मिथ्यात्वं यदीति** ॥

अस्मत्पक्षे तु बाधकप्रत्ययसदसद्भावकृतेयं प्रमाणाप्रमाणव्यवस्थेत्याह—**प्रतियोगिनीत्यस्माकमन्तेन** । भवत्पक्षे च स्तम्भज्ञानयोगिज्ञानयोर्बाधकप्रत्ययाभावेन किंकृतेयं व्यवस्था—योगिज्ञानं प्रमाणम्, स्तम्भादिज्ञानमप्रमाणमित्याह—**तत्र भेदोऽपि किंकृत इति** ।

ननु चास्ति स्तम्भादिप्रत्ययानां बाधकमनुमानम् । तदुक्तम्—स्तम्भादिप्रत्ययो मिथ्या प्रत्ययत्वात् इति । अतः किमिदमुच्यते—"बाधः किं नोपलभ्यते" इत्याशङ्क्याह—**न चान्यदिति** । अस्तीदमनुमानम्; प्रत्यक्षविरुद्धत्वादशोभनमित्यभिप्रायः । प्रत्यक्षस्य प्रत्यक्षान्तरमेव बाधकम्; तच्च नास्तीत्यर्थः ।

यदि परं स्वप्नादयः प्रत्यया जाग्रत्प्रत्ययस्य बाधकाः, तत्र चैतद् धर्मवैधर्म्यात् प्रामाण्यं सिध्यतीत्याह—**स्वप्नादीति** । ननु योगिज्ञानं शून्यत्वग्राहकं भविष्यतीति चोदयति—**योगिनामिति** ।

1. मृषात्वम्. चौ. अनन्त. मु.
2. विनापि तच्चेत्स्याद् व्यवस्था न प्रकल्पते. चौ. अनन्त. मु.
3. तदीय. चौ अनन्त. मु.

जाग्रत्स्तम्भादिबुद्धीनां ततः स्वप्नादितुल्यता ।
प्राप्तानां तामवस्थां च सर्वप्राणभृतामपि ॥ ९२ ॥

बाधोऽयं भविता तेन सिद्धा सा[1] प्रतियोगिता ।
इह जन्मनि केषांचिन्न तावदुपलभ्यते ॥ ९३ ॥

योग्यवस्थागतानां तु न विद्मः किं भविष्यति ।
योगिनां चास्मदादीनां त्वदुक्तप्रतियोगिनी ॥ ९४ ॥

त्वदुक्तविपरीता वा बाधबुद्धिर्भविष्यति ।
ईदृक्त्वे योगिबुद्धीनां दृष्टान्तो न तवास्ति च ॥ ९५ ॥

दृष्टान्तस्त्व[2]स्मदीयानां यो गृहीतः स विद्यते ।
अथ स्तम्भादिबुद्धीनां वदेत् सप्रतियोगिताम् ॥ ९६ ॥

संसारिणोऽपि तदवस्थां गतस्यायं बाधो भविष्यतीत्याह—**प्राप्तानामिति** ॥

तत्र परिहारमाह—**इह जन्मनीति** । संसारिणां तावन्नोत्पद्यते ; अस्मद्विलक्षणास्तु योगिनः सन्ति, तेषामपि स्तम्भादिबुद्धीनां बाधकप्रत्ययोऽस्तीत्यत्र न किञ्चित् प्रमाणमस्तीत्यभिप्रायः ।

अथ निष्प्रमाणकमेवेदमुच्यते, तस्मादस्मदादीनामपि त्वदुक्तप्रतियोगिनी त्वदुक्तविपरीता वा बाधबुद्धिर्भविष्यतीत्याह—**योगिनां चेति** ॥

अपि च, अस्मद्विलक्षणा योगिनः सन्ति, तेषां च स्तम्भादिप्रत्ययबाधकं ज्ञानमस्तीत्यत्र न किंचित्प्रमाणमस्तीत्याह—**ईदृक्त्व इति** । न तावत् प्रत्यक्षम् ; नाप्यनुमानम् , दृष्टान्ताभावादित्यर्थः ॥

सन्ति तु [3]त्वदीययोगिविपरीतबुद्ध्योऽस्मद्योगिनो रथ्यापुरुषदृष्टान्तेनेत्याह—**दृष्टान्तस्त्विति** ।

ननु अस्त्येवानुमानं योगिबुद्धौ प्रमाणम्—स्तम्भादयः प्रत्यया बाध्याः सप्रतियोगिन्यो वा, बुद्धित्वात् मृगतृष्णादि[4]बुद्धिवदिति दर्शयति—**अथ स्तम्भादिबुद्धीनामिति** ॥

1. सप्रति. चौ. अनन्त. मु.
2. अस्मदादीनाम्. चौ. अनन्त. मु.
3. त्वगिन्द्रिय. मा.
4. omitted बुद्धि. मा.

**बाध्यत्वं [1]वापि बुद्धित्वान्मृगतृष्णादिबुद्धिवत् ।**
**इष्टं सप्रतियोगित्वं मृगतृष्णादिबुद्धिभिः ॥ ९७ ॥**

**तदात्मना च बाध्यत्वं ग्राह्यान्तरतयापि च ।**
**बाधकैश्चाप्यनैकान्तस्तदन्यत्वे च पूर्ववत् ॥ ९८ ॥**

**मिथ्याधीप्रतियोगित्वं स्वप्नादाविव ते भवेत् ।**
**रागादिक्षययोगित्वनिमित्ताधिगतिस्तथा ॥ ९९ ॥**

**यावान् विशेष [2]इष्टस्ते [3]सर्वबाधाद् विरुद्धता ।**
**महाजनस्य वाबाधादिदानीं बाधबुद्धिवत् ॥ १०० ॥**

तत्र सिद्धसाध्यतया तावत् प्रतिज्ञां दूषयितुमाह—**इष्टमिति** । प्रत्यक्षादीनामि[4]ष्यन्त एव मृगतृष्णादिबुद्धयः प्रतियोगित्वेन, कथंचिच्च तदैक्येन ; तस्य च बाध्यमानत्वेन तेषामपि बाध्यत्वम् ; विषयान्तरापेक्षया रसज्ञानस्य मिथ्यात्वमिष्यत एवेत्यर्थः ॥

अबाध्येऽपि बाधके योगिज्ञाने बुद्धित्वदर्शनादनैकान्तिकोऽयं हेतुरित्याह—**बाधकैश्चाप्यनैकान्त इति** । बाधकबुद्ध्यन्यत्वं च हेतोर्विशेषणं साधनबुद्ध्यन्यत्ववन्निराकर्तव्यमित्याह—**तदन्यत्वे च पूर्ववदिति** ॥

धर्मविशेषविपरीतसाधनत्वाच्च विरुद्धोऽयं हेतुरित्याह—**मिथ्याधीप्रतियोगित्वमिति** सार्धेन । साध्यस्य हि योगिज्ञानस्य सम्यक्त्वरागादिक्षययोगित्वनिमित्तादयो विशेषा इष्यन्ते ; न च तथाविधेन बाध्यत्वं[5] स्वप्नप्रत्यये व्याप्तमवगतम् ; लौकिकानामेव तु ज्ञानं स्वप्नप्रत्ययस्य बाधकमित्यर्थः ॥

सप्रतिसाधनश्चायं हेतुरित्याह—**महाजनस्येति** । अबाध्याः स्तम्भादिबुद्धयो महाजनस्य, इदानीमबाधात् योगिज्ञानवदिति ।

1. चापि. चौ. अनन्त. मु.
2. इष्टश्चेत्. चौ. अनन्त. मु.
3. सर्वाभावाद्वि. चौ. मु.
4. ष्यत एव. मा.
5. बुद्धित्वम्. मा.

वाच्योऽनुमानबाधो वा यदि वा प्रतिसाधनम् ।
पूर्वसाधनदोषाश्च सन्धेयास्तस्य चाधुना ॥ १०१ ॥

साध्यभेदादवाच्यत्वाद्धेतोर्नोभयसिद्धता ।
प्रत्ययत्वं च सामान्यं भिन्नाभिन्नं न विद्यते ॥ १०२ ॥

भवतोऽत्यन्तभिन्नं च मत्पक्षेऽपि [1]न किंचन ।
[2]सादृश्यान्यनिवृत्ती च नेत्येतत् साधयिष्यते ॥ १०३ ॥

तस्माद्धेतुर्न सामान्यमस्ति सिद्धं द्वयोरपि ।
विशेषयोश्च हेतुत्वं पक्षतत्तुल्यसंस्थयोः ॥ १०४ ॥

न स्यादन्वयहीनत्वादतद्धर्मतयापि च ।
न चार्थहीना तद्बुद्धिर्हेतुत्वेन भविष्यति ॥ १०५ ॥

भाष्यकारप्रयुक्तसाधनदोषाश्चात्रापि साधने यथासम्भवं विनियोज्या एवेत्याह—**पूर्वसाधनदोषाश्च सन्धेया इति** । इदानीं तस्यैव साधनस्य प्रतिज्ञादोषं प्रतिपाद्य अवसरप्राप्तं हेतुमसिद्धत्वेन दूषयितुमाह—**तस्येत्यादिसिद्धतान्तेन** । प्रत्ययस्वलक्षणानां साध्यधर्मित्वेन प्रत्ययत्वात् इति सामान्येन साधनधर्मेण भवितव्यम्; तच्च यदि स्वलक्षणादभिन्नमिष्यते, तदा प्रतिज्ञार्थैकदेशत्वादसिद्धो हेतुरित्यर्थः ।

भिन्नाभिन्नमपि बौद्धस्यासिद्धमित्याह—**प्रत्ययत्वमित्यादिना** भवत इत्यन्तेन । अत्यन्तभिन्नमपि मीमांसकस्यासिद्धमित्याह—**अत्यन्तेति** शेषेण । सादृश्यापोहरूपयोरपि सामान्ययोर्निराकरिष्यमाणत्वादसिद्धमित्याह—**सादृश्येति** ।

नापि विशेषस्य हेतुत्वम्, पक्षस्थस्यान्वयाभावात्; सपक्षस्थस्याप्यपक्षधर्मत्वादित्याह—**विशेषयोश्चेति** ।

नापि प्रत्ययत्वात् इति प्रत्ययशब्दात् पञ्चम्यन्ताद् यद् विज्ञानमुत्पद्यते [3]अनालम्बनम् तस्य हेतुत्वम्, अन्वयपक्षधर्मतयोरभावादित्याह—**न चार्थहीनेत्यर्धेन** ॥

1. कथञ्चन. चौ. अनन्त मु.
2. सारूप्यान्य. चौ. अनन्त. मु.
3. स्वालम्बनम्. मा.

**आश्रयासिद्धता चोक्ता विशेष्यस्याप्रसिद्धितः ।**
**तथा हेतोर्विरुद्धत्वं दृष्टान्ते साध्यहीनता ॥ १०६ ॥**

**विशेषणा[1]प्रसिद्ध्यर्थविकल्पेनैव बोधिते ।**
**स्वप्नादिप्रत्यये बाह्यं सर्वथा न हि नेष्यते ॥ १०७ ॥**

**सर्वत्रालम्बनं बाह्यं देशकालान्यथात्मकम् ।**

आश्रयासिद्धतापि अप्रसिद्धविशेष्यः पक्ष:—इत्यनेनैवोक्त इत्याह—**आश्रयासिद्धे**त्यर्धेन ।

साध्यविकलत्वं दृष्टान्तस्य विरुद्धत्वं च हेतोः अप्रसिद्धविशेषणः पक्षः—इत्यनेनैवोक्तमित्याह—**तथा हेतो**रिति ॥

एवं तावद्धेतुदोषानभिधायेदानीं साध्यविकलत्वेन दृष्टान्तं दूषयितुमाह—**स्वप्नादीति** पादत्रयेण । स्वप्नादिप्रत्ययानां निरालम्बनत्वमुच्यमानं बाह्यार्थालम्बनाभावाद्वा, प्रतिभासशून्यत्वेन वा, कारणाभावाद्वा ? न तावद् बाह्यार्थालम्बनाभावेन स्वप्नादिप्रत्ययानां निरालम्बनत्वम्, सर्वत्र बाह्यालम्बनत्वस्य विद्यमानत्वात् । जाग्रज्ज्ञानवदत्रापि नीलादेरनात्मतया प्रतिभासनात्; स्वानुभवादन्यत्वं हि नीलादेर्बाह्यत्वम्; तच्च तस्मिन्नेवानुभवे नीलाकारतावदवभासत एव । 'नीलमिदम्' इति हि प्रतिभासः, न पुनः 'नीलमहम्' इति । न हि शुक्तिकायां रजते च रजतज्ञानस्य सामग्रीवैलक्षण्यं मुक्त्वा प्रतिभासे कश्चिद् विशेष:—इत्युक्तम् । समानेऽपि बाह्यालम्बनत्वे बाधकप्रत्ययात् स्वप्नादिप्रत्ययानामप्रामाण्यमित्याह—**देशकालान्यथात्मकमिति** । शुक्तिकायामपि रजतज्ञानस्य अपरोक्षतया अनात्मत्वेन च प्रतिभासितस्यैव 'नेदं रजतम्' इति बाधकप्रत्ययेनान्यथात्वग्रहणादप्रामाण्यम्; यदनेनालम्बितं तदभावे नेदं प्रमाणम् । प्रतिभासमानतया च रजतादेरालम्बनत्वम्, न सद्भावेन; रजतेऽपि रजतज्ञानस्य रजतमालम्बनं रजतप्रतिभासात्, न तत्सद्भावात्; इतरथा तु रजताकारतावत् द्रव्याकारताप्यालम्बनं स्यात् । रजतज्ञानस्य प्रातिभासिकस्यैव तु सदसद्भावेन प्रामाण्यमप्रामाण्यं च । तेन स्वप्नादिविज्ञानं सालम्बनमपि सदप्रमाणम् । अथापि प्रतिभास-

1. अप्रसिद्धत्व. चौ. मु.

**जन्मन्येकत्र भिन्ने वा तथा कालान्तरेऽपि वा ॥ १०८ ॥**

**तद्देशो वान्यदेशो वा स्वप्नज्ञानस्य गोचरः ।**
**अलातचक्रेऽलातं स्याच्छीघ्रभ्रमणसंस्कृतम् ॥ १०९ ॥**

**गन्धर्वनगरेऽभ्राणि [1]पूर्वदृष्टं गृहादि च ।**
**पूर्वानुभूततोयं च रश्मितप्तोषरं तथा ॥ ११० ॥**

**मृगतोयस्य विज्ञाने कारणत्वेन कल्प्यते ।**
**द्रव्यान्तरे विषाणं च शशस्यात्मा च कारणम् ॥ १११ ॥**

निरिन्धनं रजतादेरस्तित्वम्, तच्च सर्वत्राविशिष्टम्; 'नेदं रजतम्'—इत्यपि बाधकप्रत्ययेन तत्रैव विषयान्तरावगमः; तथापि यस्मिन् विज्ञाने उत्पन्ने सति 'नैतदेवम्' इति विज्ञानान्तरमुत्पद्यते, तदप्रमाणशब्दप्रयोगादप्रमाणम्। नापि प्रतिभासशून्यत्वेन, प्रतिभास्यशून्यस्य प्रतिभासस्याभावात्; स तु प्रतिभास्योऽर्थो जन्मन्येकत्र भिन्ने वा भवतु, मा वा भवतु; न किञ्चिदनेन ग्रहेणेत्याह—**जन्मन्येकत्रेति ।**

नापि कारणाभावेन निरालम्बनत्वम्, सर्वत्र कार्यदर्शनेन कारणस्य विद्यमानत्वात्; तद्भावभावित्वेन च कारणविशेषदर्शनादित्येतत् "अलातचक्रेऽलातम्" इत्यादिना "पृथिव्यादीनि कारणम्" इत्यन्तेन प्रतिपादयितुमाह— **अलातचक्रेऽलातमित्यादिना** श्लोकपञ्चकेन ।

अन्ये त्वालम्बनकथनपरत्वेन श्लोकपञ्चकं व्याचक्षते। तदयुक्तम्; यतः यद्यत्र प्रतिभासते तत्तत्रालम्बनम्; किमनेन पृष्टेन कथितेन वा? भ्रान्तस्याप्यभ्रान्तवद् रजतमेवापरोक्षमनात्मभूतं चालम्बनम्; नात्मख्यातिरसत्ख्यातिः प्रमोषो वा, तथा अप्रतिभासनात्। सदसत्त्वे तु विशेषः। सालम्बनमपि नैव सम्यक् कथितम्; न हि चक्रज्ञानस्यालातमालम्बनम्; [2]भ्रमणसंस्कृतस्य तु कारणत्वमालम्बनव्यतिरेकेण चक्षुरादिवत्। नापि नगरज्ञानस्य द्वयमालम्बनमभ्राणि पूर्वदृष्टगृहादि च अभ्रस्याप्रतिभासनात्; गृहादेस्त्वगृहीततया प्रतिभासनात्। एवमूषरे सलिलज्ञानादिषु। तस्मादालम्बनव्यतिरिक्तकारणकथनपराण्येतानि। तदुक्तम्—

1. पूर्वज्ञातम्. अनन्त. मु. 2. omitted भ्रमणसंस्कृ. मा.

**शशशृङ्गधियो मौण्ड्यं निषेधे शिरसोऽस्य च ।**
**वस्त्वन्तरैरसंसृष्टः पदार्थः शून्यताधियः ॥ ११२ ॥**

**कारणत्वं पदार्थानामसद्वाक्यार्थकल्पने ।**
**अत्यन्ताननुभूतोऽपि बुद्ध्या योऽर्थः प्रकल्प्यते ॥ ११३ ॥**

**तस्योत्पत्तौ कथञ्चित् स्युः पृथिव्यादीनि कारणम् ।**
**एष प्रत्यक्षधर्मश्च वर्तमानार्थतैव या ॥ ११४ ॥**

**सन्निकृष्टार्थवृत्तिश्च न तु ज्ञानान्तरेष्वियम् ।**
**कथमुत्पादयेज्ज्ञानं तत्रासंश्चेत् कुतो न्वियम् ॥ ११५ ॥**

**अर्थस्याविद्यमानस्य विज्ञानोत्पत्त्यशक्तता ।**
**बाह्यालम्बनतायां नौ विवादोऽर्थस्य संनिधिः ॥ ११६ ॥**

"मृगतोयस्य विज्ञाने कारणत्वेन कल्प्यते" इति ॥

स्वप्नादिप्रत्ययानामालम्बनं देशकालान्यथात्मकमित्युक्तम्; तदनुपपन्नम्, अवर्तमानस्यासन्निकृष्टस्य चालम्बनत्वायोगात् कथमपरोक्षतया प्रतिभासते? यत्रार्थः, तत्रापरोक्षस्यालम्बनत्वमित्याशङ्क्याह—**एष इति** । प्रत्यक्षस्य हि वर्तमानं संनिकृष्टं चालम्बनम्, न ज्ञानान्तरेष्वित्यर्थः ।

नन्वालम्बनं हि कारणम्; असतस्तु कथं विज्ञानोत्पादकत्वमिति चोदयति—**कथमुत्पादयेज्ज्ञानं तत्रासंश्चेदिति** ।

तत्र परिहारमाह—**कुतो न्वियमिति** सशेषेणार्धेन ।

आलम्बनत्वेनायं ज्ञानमुत्पादयति, प्रतिभास[1]मानतया चालम्बनत्वम् । सा चेदविद्यमानस्याप्यस्ति, किमिति नोत्पादयति? अपि च जाग्रत्प्रत्ययवदनात्मतया प्रतिभासेन सर्वत्र स्वप्नादौ बाह्यालम्बनत्वम्; तत्र चावयोर्विवादः । अर्थासन्निधाने च परोक्षस्यापरोक्षतया प्रतिभासेन भ्रान्तता भवतु, नात्मालम्बनत्वम्; न हि नीलाकारे प्रतिभासे तस्यापारमार्थिकत्वेन पीताकारता[2] भवतीत्याह—**बाह्यालम्बनतायामिति** ।

1. मानतया वा. मा.   2. पीताकारतया. मा.

यदि नास्ति [1]ततः किं स्यादस्मात् पक्षान्निवर्तनम् ।
तस्माद् यदन्यथा सन्तमन्यथा प्रतिपद्यते ॥ ११७ ॥

तन्निरालम्बनं ज्ञानमभावालम्बनं च तत् ।
भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात् ॥ ११८ ॥

[2]भवता द्वयमप्येतद् दुर्निरूपं सहेतुकम् ।
प्रतिज्ञादोषवच्चापि योज्या हेतोर्विरुद्धता ॥ ११९ ॥

समस्तव्यस्तधर्मादिस्वरूपादिविपर्ययात् ।
दृष्टान्तदोषाः सर्वे च योज्या न ह्येकवस्तुनि ॥ १२० ॥

तत्र साध्यांशहेत्वंशव्याप्तधर्मादिसम्भवः ।

कथं तर्हि समानेऽपि बाह्यालम्बनत्वे स्वप्नादिप्रत्ययानां निरालम्बनत्वमसदालम्बनत्वं चोच्यत इत्याशङ्क्याह—**तस्मादिति** ।

भवताप्येतदेवाभावालम्बनविज्ञानमभ्युपगन्तव्यम्, यत्रान्यथा प्रतिभासते; न पुनः 'इह प्रदेशे घटो नास्ति' इति ज्ञानम्' एतस्य सन्निहितघटविविक्तभूप्रदेशालम्बनत्वेन भावालम्बनत्वाभ्युपगमादित्याह—**भावान्तरमित्यर्धेन** ॥

बौद्धपक्ष एव तु सर्वेषां स्वांशालम्बनत्वेन तुल्यत्वात् स्वप्नादौ निरालम्बनासदालम्बनशब्दयोः सप्रमाणकः प्रयोगो न प्राप्नोतीत्याह—**भवतेत्यर्धेन** ।

धर्मिनिर्देशकप्रत्ययशब्दवत् हेतुप्रतिपादकं प्रत्ययशब्दं भावादिसाधकत्वेन विकल्प्य धर्मधर्म्युभयेषां धर्मिविशेषधर्मविशेषोभयविशेषाणां च विपर्ययसाधनात् विरुद्धत्वमुपपादनीयमित्याह—**प्रतिज्ञादोषवदिति** ।

विज्ञानमात्राभ्युपगमे च स्वप्नप्रत्ययस्वलक्षणव्यतिरिक्तयोः साध्यसाधनधर्मयोरभावात् सर्वे साधनविकलत्वादयो दृष्टान्तदोषा वक्तव्या इत्याह—**दृष्टान्तदोष इति** ।

1. किमेवं स्यादसत्पक्षनि. चौ. अनन्त. मु. 2. भवताम्. अनन्त. मु.

केचिद् वैधर्म्यदृष्टान्तो नास्तीत्यप्यनुयुञ्जते ॥ १२१ ॥

तदभावादवृत्तेश्च नास्त्यत्रावसरस्तव ।
विधिरूपप्रतिज्ञायामेतद् वक्तुं हि शक्यते ॥ १२२ ॥

तत्रावस्तुविपक्षेऽपि प्रयोगस्य हि सम्भवः ।
यस्मिन्ननित्यता नास्ति कार्यतापि न विद्यते ॥ १२३ ॥

तस्मिन् यथा खपुष्पादा ति शक्यं हि भाषितुम् ।
अत्र त्ववस्तु[1]साध्यत्वे वस्तुनश्च विपक्षता ॥ १२४ ॥

तेन स्याद् व्यतिरेकोऽस्य वाच्यो यश्चापि दर्शयेत् ।
प्रतिषेधद्वयात् तेन विधिरेव प्रदर्शितः ॥ १२५ ॥

न च शक्यो विधिर्वक्तुं वस्तुन्यसति केनचित् ।
एवं स्थिते तु[2] सर्वज्ञनिषेधादावियं गतिः ॥ १२६ ॥

अपि च भवत्पक्षे नित्यविपक्षानुमानस्येदं लक्षणम् "त्रिरूपाल्लिङ्गतोऽर्थदृक्" इति। न च निरालम्बनप्रतिज्ञायां सालम्बनविपक्षाभावेन वैधर्म्यप्रयोगासम्भवात् त्रैरूप्यं दर्शयितुं शक्यमित्याह—**केचिदि**त्यर्धेन ॥

ननु 'अनित्यः शब्दः' इत्यस्मिन् प्रतिज्ञार्थे नित्यविपक्षाभावेऽपि खपुष्पं विपक्षमाश्रित्य यथा कृतकत्वस्य त्रैरूप्यं दर्शितम्, उक्तं च "तदभावात्तत्रावृत्तेनायं दोषः" इति, तथेहापि भविष्यतीत्याशङ्क्य वैलक्षण्यं दर्शयितुमाह— सार्धेन श्लोकचतुष्टयेन **तदभावादवृत्तेश्चे**त्यादिना। यत्र वस्तु साध्यत्वेन प्रतिज्ञायते, तत्रावस्तुनो विपक्षत्वादनित्यत्वाभावेन कृतकत्वाभावः शक्यो दर्शयितुम्—**यथा खपुष्पादौ**; अवस्तुभूतनिरालम्बनत्वे तु साध्ये खपुष्पादेरपि सपक्षत्वाद् वस्तुनि विपक्षे निरालम्बनत्वाभावेन प्रत्ययत्वाभावो दर्शयितव्यः। न च भवत्पक्षे सालम्बनं किञ्चिदस्तीत्यभिप्रायः।

ननु सर्वज्ञाभावप्रतिज्ञायां वक्तृत्वात् इत्यस्य विपक्षाभावेन त्वयापि त्रैरूप्यमशक्यं दर्शयितुमित्याशङ्क्याह—**एवं स्थिते त्विति**।

1 साध्यत्वम्. चौ. अनन्त. मु. 2. च. चौ. अनन्त. मु.

प्रत्यक्षादेरसा[1]मर्थ्यात् तदीयस्यास्मदादिवत् ।
वैधर्म्यासम्भवेऽप्येतदन्ये त्वाहुरदूषणम् ॥ १२७ ॥

विनैव तत्प्रयोगेण हेतुरैकान्तिको यतः ।
सर्वथा सदुपायानां वादमार्गः प्रवर्तते ॥ १२८ ॥

अधिकारोऽनुपायत्वान्न वादे शून्यवादिनः ।
ननु सर्वं भवत्सिद्धं मयेदं साधनं कृतम् ॥ १२९ ॥

किमर्थं [2]मदसिद्ध्या त्वं विकल्प्यात्तात्थ दूषणम् ।
विप्रलिप्सुरिवाहैवं किमर्थं न्यायविद् भवान् ॥ १३० ॥

सर्वज्ञताभावप्रतिपादनविवक्षायां वा एवं प्रयोगः कर्तव्यः—बुद्धादेः प्रत्यक्षं धर्मि धर्मग्राहकं न भवति, प्रत्यक्षत्वात् अस्मदादिप्रत्यक्षवत् इति । अथवा कर्तृत्वेन सर्वज्ञाभावेऽपि साध्ये विपक्षाभावेन सुतरामैकान्तिकत्वात् गमकत्वं विनापि त्रैरूप्यदर्शनेन ; यतो नास्माकमिदंलक्षणमनुमानम् "त्रिरूपाल्लिङ्गतोऽर्थदृक्" इत्याह—**वैधर्म्यासम्भवेऽपीति** ।

अपि च ज्ञानाद्वैतवादिनस्तद्व्यतिरिक्तहेत्वभावेन साधनप्रयोग एव न प्राप्नोतीत्याह— **सर्वथा सदुपायानामिति** ।

तत्राद्वैतवादी प्रत्यवतिष्ठते—**ननु सर्वमिति** । अद्वैत[3]वादी द्वैतवादिनं प्रति प्रयुङ्क्ते । तस्य प्रत्ययत्वं निरालम्बनत्वेन व्याप्तं स्वप्नादौ, जाग्रत्प्रत्ययधर्मत्वेनासिद्धम् । तत्प्रतिपत्तिफलं चेदमनुमानम् ; उक्तं च "परार्थ[4]मनुमानं तदद्दृष्टार्थप्रकाशकम्" इत्यर्थः ।

तदत्र द्वैतवाद्याह—**विप्रलिप्सुरिवेति** । उभयवादिसिद्धस्य साधनत्वम्, नान्यतरसिद्धस्येति दिङ्नागेनोक्तम्—"तत्र यो वादिप्रतिवादिनिश्चितः स साधनम्" इति ।

अपि च परासिद्धोऽपि तावत् प्रयुज्यते—साधयिष्यामि इत्यनया लक्षणया शब्दानित्यत्वसिद्धौ कृतकत्वमिव याज्ञिकान् प्रति । अद्वैतवादिनस्तु तद्व्यतिरिक्तो

1. सामर्थ्यम्. चौ. अनन्त. मु.
2. तदसिद्ध्या. चौ. अनन्त. मु.
3. वादी प्रयुक्ते. मा.
4. अनुमानतस्त्वदृष्टा. मा.

नाश्रौषीः साधनत्वं किं प्रसिद्धस्य द्वयोरपि ।
योऽपि तावत् परासिद्धः स्वयंसिद्धोऽभिधीयते ॥ १३१ ॥

भवेत् तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया ।
तं साधयन् विरुन्ध्याद्धि पूर्वाभ्यु[1]पगमं नरः ॥ १३२ ॥

असाधिते तु [2]साध्योऽर्थो न तेन प्रति[3]पाद्यते ।
परासिद्धो न पर्याप्तः परेषां प्रतिपत्तये ॥ १३३ ॥

तेनासाधनता युक्ता स्वतोऽसिद्धे तु किंकृता ।
द्वयोः सिद्धस्य हेतुत्वं नादृष्टायोपदिश्यते ॥ १३४ ॥

प्रत्येष्यन्ति स्वसिद्धेन साधनेन स्वयं यतः ।
वदेत् कथमसिद्धं चेदित्यनेनापि किं तव ॥ १३५ ॥

गृहीतमगृहीतं वा साध्यं वा [4]साधनादि वा ।
मयोच्यते चेत् त्वत्सिद्धं किं त्वं न प्रति[5]पत्स्यसे ॥ १३६ ॥

हेतुः स्वत एवासिद्धः । तत्र साध्यमाने तस्मिन् अद्वैतहानिः, असिद्धौ तु साध्यं न सिध्यतीत्याह—**योऽपि तावदिति** श्लोकद्वयेन ।

एवं स्थिते पुनरद्वैतवादी प्रत्यवतिष्ठते—**परासिद्ध इति** । परप्रतिपत्तये हि हेतुः प्रयुज्यमानः परसिद्धिमेवापेक्षते ; तत्र वाद्यसिद्धोऽपि प्रतिवादिनः सिद्धो भवति साधनमित्यभिप्रायः ।

" तत्र यो वादिप्रतिवादिनिश्चितः "—इत्येतदपि प्रतिवादिनिश्चितपरमेव व्याख्येयम् , न्यायमूलत्वाद् वचनानामित्याह—**द्वयोरिति** ।

स्वयमप्रतिपन्नो हेतुः कथमन्यस्मै प्रतिपाद्यत इति द्वैतवादी चोदयति—**वदेत् कथमसिद्धं चेदितीति** । तत्राद्वैतवादी परिहारमाह—[6]**अनेनेत्यादिना**

1. गतं नरः. चौ. अनन्त. मु.
2. साध्यार्थः. चौ. अनन्त मु.
3. प्रतिपद्यते चौ. अनन्त. मु.
4. साधनादि वा. चौ. अनन्त मु.
5. पद्यसे. चौ. अनन्त. मु.
6. एतेन. मा.

यत्र स्यात् पुरुषाधीना बुद्धि[1]स्तत्रैतदुच्यते ।
कुतोऽस्य पूर्वविज्ञानमित्यत्रैतन्न युज्यते ॥ १३७ ॥
यदि चैवं भवेदत्र प्रतिज्ञामात्र एव हि ।
[2]मद्दोषज्ञानमात्रेण प्रतिपत्तिर्भवेत् तव ॥ १३८ ॥
ततस्तु साधनापेक्षा तेनास्यैव प्रमाणता ।
तत्स्मृत्युत्पत्तिमात्रे तु वाक्यव्यापार इष्यते ॥ १३९ ॥
तस्माद् [3]यथैव साध्यांशव्याप्तहेतुनिदर्शनात् ।
साध्यं गृह्णन्न वक्तारमपेक्षेत तथा भवान् ॥ १४० ॥
यच्चापि भवतो ज्ञानं [4]प्रत्यक्षेण किमत्र ते ।
मत्प्रसिद्धास्ति युक्तिर्वा साध्यं वात्र [5]यथेप्ससि ॥ १४१ ॥
तस्मान्न विदुषामेतदुत्तरं युज्यते यतः ।
तव हेतुरसिद्धोऽयं मम तेन न साधनम् ॥ १४२ ॥

सशेषेण श्लोकेन । स्वयमप्रतिपन्नमपि 'परस्येदं सिद्धम्' इति [6]बुद्ध्या हि प्रतिपादयति, किमिति न प्रतिपद्यसे इत्यर्थः ॥

यत्र वादिप्रत्ययेनार्थः प्रतीयते, तत्रेदं युज्यते वक्तुम्—कुतः पुनर्भवता प्रतिपन्नम्? इति; हेतुना त्वर्थं प्रतिपद्यमानो वैवादिकसिद्धमपेक्षते इत्याह—**यत्र स्यादिति** ॥

यदि च वादिप्रत्ययेनार्थं प्रतिपद्यसे तदा नित्यः शब्दः—इत्युक्ते प्रतिज्ञामात्रेणैव प्रतिपन्नः किमिति हेतुमपेक्षसे? हेत्वपेक्षायां तु तस्यैव साधनत्वम्; प्रतिवादिप्रतिपन्नमेव तु रूपत्रयं वादी स्ववचनेन स्मारयतीत्याह—**यदीति** श्लोकद्वयेन ॥

यथा च स्वार्थानुमानेनार्थं प्रतिपद्यमानः प्रत्यक्षेण वा नैव वादिप्रतिपन्नतामपेक्षते, तथात्रापीत्याह—**तस्माद्यथैवेति** श्लोकद्वयेन ॥

सोत्प्रासमुपसंहरति—**तस्मान्नेति** ॥

1. तत्रेदमुच्यते. चौ. अनन्त. मु.
2. मद्दोषाज्ञान. चौ. अनन्त. मु.
3. यथैक. मा.
4. प्रत्यक्षादिः. चौ. अनन्त. मु.
5. यथेच्छसि. चौ. अनन्त. मु.
6. बुद्ध्यादिप्रति. मा.

सत्यं यदि ममैवात्र प्रतिपत्तिः फलं भवेत् ।
तदा त्वदप्रसिद्धेऽपि हेतौ मां प्रति हेतुता ।। १४३ ।।

यदा तु ज्ञानमात्रत्वप्रतिपत्तौ भवान्मया ।
पृष्टः को हेतुरत्रेति तदैवं नोपपद्यते ।। १४४ ।।

स्वयं न ह्यगृहीतेन मत्प्रसिद्धेन वा भवान् ।
हेतुना साध्यमेतत् तु प्रतिपन्नः कथञ्चन ।। १४५ ।।

न च व्याप्रियतेऽन्यत्र वचनं प्राश्निकान् प्रति ।
स्वनिश्चयाय यो हेतुस्तस्यैव प्रतिपादनात् ।। १४६ ।।

मत्प्रसिद्धत्वमेतस्य कुतश्चावगतं त्वया ।
कथं चेत्थं विवक्षा ते स्वयमर्थमजानतः ।। १४७ ।।

मयि जिज्ञासमानेऽपि बुद्धिपूर्वाभिधायिनः ।
इति ज्ञात्वा च वो वृद्धैर्भाषितोभयसिद्धता ।। १४८ ।।

एवं प्राप्ते सति द्वैतवाद्याह—**सत्यमित्यादि**चतुःश्लोक्या ।।

ननु च प्रतिवादिप्रतिपत्त्यर्थमेव परार्थमनुमानम् ; अतः किमुच्यते—"**सत्यं** यदि ममैवात्र प्रतिपत्तिः फलं भवेत्"—इति ? अयमभिप्रायः—स्वनिश्चयवदन्येषां निश्चयोत्पादनाय हेतुः प्रयुज्यते । तत्र यदि प्रतिवादी प्राश्निकाश्च वादिनं पृच्छन्ति—अद्वैतसिद्धौ भवतः किं प्रमाणम् ? इति, तदैतदपहास्यम्—यद्यपि मम प्रमाणं नास्ति, तथापि त्वं प्रतिपद्यस्व इति ।।

स्वांशालम्बनत्वेन च विज्ञानानां मत्प्रसिद्धता च हेतोः कथमवगम्येतेत्याह—**मत्प्रसिद्धत्वमेतस्येत्यर्धेन** ।

स्वयं च हेत्वर्थमजानतः कथमीदृशी विवक्षापि—यद्यपि ममायं हेतुरसिद्धः, तथापि भवतः सिद्ध इत्याह—**कथं चेति** ।

अमुमेवार्थं पर्यालोच्य दिङ्नागेनोक्तम्—"तत्र यो वादिप्रतिवादिसिद्धः स[1] साधनम्" इत्याह—**इति ज्ञात्वेत्यर्धेन** ।।

1. Omitted स. मा.

तेन यद्वन्ममैतेन त्वमाधित्ससि हेतुना ।
साध्यज्ञानं तथैवाहमज्ञानं तव दूषणैः ॥ १४९ ॥

यथैव च भवानीदृक् साध्यमुक्त्वास्य साधनम् ।
साध्यानुरूपमज्ञात्वा विहितः प्रतिपादनात् ॥ १५० ॥

तथैव प्रतिपाद्योऽपि तादृक्साध्यबुभुत्सया ।
मन्वानः साधनं दुष्टं ततः साध्यं न बुध्यते ॥ १५१ ॥

[1]सम्यग्वा साधनं मुक्त्वा तत्सद्भावे दृढे सति ।
साध्यस्यासम्भवादेव त्वदुक्तं नावबुध्यते ॥ १५२ ॥

तेनाशेयं न कर्तव्या मोहादपि मयेरिते ।
साधने साधनं ज्ञात्वा पर एवावभोत्स्यते ॥ १५३ ॥

विस्पष्टश्चाक्षपादोक्तो विरोधो हेतुसाध्ययोः ।
यमदृष्ट्वा परैरुक्तमदूषणमिदं किल ॥ १५४ ॥

तेन यथैव त्वमसिद्धेनैव साधनेन साध्यं साधयितुमिच्छसि, तथवाहमसिद्धेनैव दूषणमापादयामीत्याह—**तेन यद्वदिति** ॥

विज्ञानमात्रप्रतिज्ञार्थं च तद्व्यतिरिक्तो हेतुर्यथा वादिनोऽप्रसिद्ध इति कृत्वा प्रतिवादिना विहतः, तथैव प्रतिपाद्योऽपि तादृक्साध्यबुभुत्सायां साध्यानुरूपं साधनमज्ञात्वा विहित इत्याह—**यथैव चेति** श्लोकद्वयेन ॥

विज्ञानव्यतिरिक्तं चेत् साधनमवबुध्यते, तदा द्वैतसद्भावादद्वैतहानिरित्याह—**सम्यग्वा साधनं मुक्त्वेति** ॥

अमुमेवार्थमुपसंहरति—**तेनाशेयमिति** । यथोक्तमक्षपादेन—"प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः" इति ॥

तस्येदमुदाहरणम्—स्वव्यतिरिक्तशून्याः प्रत्ययाः प्रत्ययत्वात् इत्याह—**विस्पष्टश्चेति** ॥

एतस्य प्रतिज्ञादोषस्येदमुदाहरणम्, यददृष्ट्वैवोदाहरणान्तरमक्षपादोक्तं दूषितं दिङ्नागेनेत्याह—**यमदृष्ट्वेति** ॥

1. संवित्त्या साधनं मत्वा. चौ. अनन्त. मु.

**ननु लोकप्रसिद्धेन पूर्वमेतेन हेतुना ।**
**साध्यसिद्धिर्ममाप्यासीत् परमार्थोऽस्य नास्तिता ॥ १५५ ॥**

**योऽधुना परमार्थेन नास्तीत्येवं [1]प्रकाशते ।**
**कथं पूर्वमसावासीदसंश्चेत् साधनं कथम् ॥ १५६ ॥**

**साधनं चेदवश्यं च परमार्थास्तिता भवेत् ।**
**सिद्धिर्नापरमार्थेन परमार्थस्य युज्यते ॥ १५७ ॥**

इदमुदाहरणं दत्तं प्रतिज्ञाहेत्वोर्विरोधे—"नित्यः शब्दः सर्वस्यानित्यत्वात्" इति । अस्येदं दूषणमुक्तम्—"नित्यत्वप्रतिज्ञायामसर्वत्वं=निरवयवसंज्ञकं हेतुत्वेन विवक्षितं सांख्यैः—"सर्वस्यानित्यत्वात्" इति । तत्र वैधर्म्यप्रयोगः । तत्रापि साध्याभावो हेत्वभावेन व्याप्तः कथयितव्यः—अनित्यत्वस्य सर्वत्वात् इति । "सर्वस्यानित्यत्वात्"—इति तु विपरीतव्याप्तिकथनात् तदाभासः । तदुक्तम्—

"स हि दृष्टान्त एवोक्तो वैधर्म्येणासुशिक्षितैः ।" इति

ननु सांवृतेन रूपेण प्रमाणप्रमेयव्यवहारोऽस्त्येव; अतः सांवृतादेव प्रमाणाद् अद्वैतरूपं सत्यं प्रतीमः; परमार्थतायां तु न किञ्चित् प्रमाणं नापि प्रमेयम्; अपि तु अपरसाधनमेकं तत्त्वम् । इष्टं चैतदेव वेदान्तवादिभिरपि—"आत्मैवेदं सर्वम्" इत्येवं वदद्भिः; अयं तु सर्वोऽविद्याविजृम्भितो भेदपरामर्शः, आत्मैवेति तु सत्यमिति चोदयति—**ननु लोकप्रसिद्धेनेति** ॥

तत्र परिहारमाह सार्धेन—**योऽधुनेत्यादिना** । यस्य हि परमार्थेन नास्तित्वम्, तस्य कथमस्तित्वम्? कथं साधनत्वमित्यर्थः ।

ननु असतः साधनत्वं मा भूत्; संवृतिसत्येन भवत्वित्याशङ्क्याह—**सिद्धिर्नेति** सार्धेन श्लोकेन । असत्यता हि पदार्थस्य न स्वतः परत एव वा; तत्र शशविषाणादयो न क्वचिदुपायभावं प्रतिपद्यन्ते; बाष्पादयस्तु धूमरूपतयोपायभावं प्रतिपद्यन्ते, मिथ्यातस्तेभ्योऽपि यावदवगतिरित्यर्थः ॥

1. प्रकाश्यते. मा.

न दृष्टा शशशृङ्गादेः सम्यग्ज्ञानादिहेतुता
बाष्पादिना [1]ह्यधूमेन मिथ्या वह्न्यादिबोधनम् ॥ १५८ ॥

तस्मादसत्यहेतोर्या परमार्थे मतिस्तव ।
साप्यसत्या न सत्यं हि सत्याभासेन गम्यते ॥ १५८ ॥

येऽपि रेखादयो दृष्टा [2]वर्णादेः प्रतिपादकाः ।
[3]न ते स्वेनैव रूपेण परमार्थत्ववर्जिताः ॥ १६० ॥

वर्णात्मना न[4] सत्याश्चेत् सर्वभावेष्वयं विधिः ।
पदार्थान्तररूपेण न सत्यं किञ्चिदिष्यते ॥ १६१ ॥

स्वरूपे विद्यमाने तु यद्प्येवं प्रकाशते ।
स्वरूपाभावकलृप्तौ तु न सत्यं नाप्यसत्यता ॥ १६२ ॥

हेत्वादीनां तु भवतः स्वरूपेणाप्यसत्यता ।
तेन बाष्पादिवत् तेषामुपायत्वं न लेख्यवत् ॥ १६३ ॥

एवमद्वैतावगतावपि अविद्यावस्थायामुपायोपेयभावः पारमार्थिको भवत्येव ; अद्वैतमेवावगम्यमानमुपायस्य भ्रान्ततामवगमयति ; विद्यावस्थायान्तु प्रमाणप्रमेयप्रमातृप्रत्यस्तमयान्न विद्मः—किमेकमुतानेकम् इति । तदाह—**तस्मादिति** ॥

ननु असत्यादपि लिप्यक्षराद् वर्णावगतिः सत्या दृष्टेत्याशङ्क्याह — **येऽपि रेखादय इति** । रेखारूपतया हि लिप्यक्षराणां वर्णावगतौ सम्बन्धग्रहणम् ; तेन रूपेण सत्यत्वमेवेत्यर्थः ॥

यदा तु वर्णसामानाधिकरण्येन लिप्यक्षरावगतिः 'गकारोऽयम्' इति, तदा तेषामसत्यता ; तदा च तत्रैव प्रतीतेः पर्यवसानादुपायोपेयभाव एव नास्तीत्याह—**वर्णात्मनेति** ॥

विद्यमानस्य च पदार्थस्य स्वरूपपररूपाभ्यां सत्यासत्यत्वम् विज्ञानमात्रप्रतिज्ञायां हेत्वादीनां स्वत एवाविद्यमानत्वान्न बाष्पवदुपायत्वं नापि लेख्यवदित्याह श्लोकद्वयेन—**स्वरूप इत्यादिना** ॥

1. प्यधूमेन. चौ. अनन्त. मु.
2. वर्णानाम्. चौ. अनन्त. मु.
3. स्वेनापि. चौ. अनन्त. मु.

**उपायानां स्वरूपं हि संवृत्यात्मकमेव नः ।**
**तथा च सत्यतेष्टैव स्वरूपासत्यता कथम् ॥ १६४ ॥**

**संवृत्या यत्स्वरूपं हि तद्वाङ्मात्रनिबन्धनम् ।**
**हेतुत्वं परमार्थस्य प्रतिपत्तुं न शक्नुयात् ॥ १६५ ॥**

**परमार्थाच्च लोकस्य न भेदे हेतुरस्ति ते ।**
**लौकिकोपायगम्यस्य केन स्यात् परमार्थता ॥ १६६ ॥**

**नन्वसत्यपि बाह्येऽर्थे बुद्ध्यारूढेन सिध्यति ।**
**वासनाशब्दभेदोत्थविकल्पप्रविभागतः ॥ १६७ ॥**

**न्यायविद्भिरिदं चोक्तं धर्मादौ बुद्धिमाश्रिते ।**
**व्यवहारोऽनुमानादेः कल्प्यते न बहिःस्थिते ॥ १६८ ॥**

ननूपायानां संवृतमेव रूपम्, तेन च रूपेण सत्यत्वमस्त्येवेति परिचोदयति—**उपायानामिति** ॥

तत्र परिहारमाह—**संवृत्येति** ॥

संवृतिसत्यस्य निराकृतत्वादित्यर्थः । तदेव स्मारयति **परमार्थाच्चे**त्यर्धेन ।

लोकशब्दे संवृतिसत्यमाह ; न च संवृतोपायगम्यस्य परमार्थतेत्याह—**लौकिके**त्यर्धेन ॥

ननु विज्ञानमात्रप्रतिज्ञायामसत्यपि बाह्ये हेतौ वासनाभेदेन भिन्नशब्दजनितविकल्पप्रतिभासारूढानां धर्माणां गम्यगमकभाव इति परिचोदयति—**नन्वसत्यपीति** ॥

बाह्यार्थवादिनोऽपि न प्रतीतिसत्तां विहाय बहिस्सत्तारूपेणार्थानां गम्यगमकभावः । तथा हि—न पर्वतस्थस्य धूमस्वलक्षणस्य अभावात् नापि सरस्तीरस्थस्य अपक्षधर्मत्वात्, नापि धूमजातेः तत्वान्यत्वाभ्यामनिर्वचनीयत्वात्, नापि अधूमव्यावृत्तेः अवस्तुत्वात् । उक्तं च दिङ्नागेन—"सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन, न बहिःसदसत्त्वमपेक्षते" इत्याह—**न्यायविद्भिरिति** ॥

अस्तीदं वचनं तेषामिदं तत्र परीक्ष्यताम् ।
भेदोऽसतः कथं हि स्याद् बुद्धिशब्दप्रकल्पनात् ॥ १६९ ॥

निर्वस्तुके कथञ्चित् स्यात् प्रसवो बुद्धिशब्दयोः ।
शब्दभेदोऽपि भवतस्तदभावान्न सिध्यति ॥ १७० ॥

यदि वाविद्यमानोऽपि भेदो बुद्धिप्रकल्पितः ।
साध्यसाधनधर्मादेर्व्यवहाराय कल्प्यते ॥ १७१ ॥

ततो भवत्प्रयुक्तेऽस्मिन् साधने यावदुच्यते ।
सर्व[1]त्रोत्पद्यते बुद्धिरिति दूषणता भवेत् ॥ १७२॥

यश्च मन्त्रस्त्वयोक्तोऽयं धर्म्यादौ बुद्धिमाश्रिते ।
न बाह्यापेक्षया स स्यादसिद्ध्यादौ मयेरिते ॥ १७३ ॥

बुद्धिप्रकॢप्तिसिद्धिश्च भवतां व्यवहारिणाम् ।
मदुक्तं दूषणं सिद्धं त्वदुक्तं तु न साधनम् ॥ १७४ ॥

तत्र परिहारमाह—**अस्तीदमिति** सार्धेन। वचनशब्देन न्यायशून्यतां दर्शयति। इदं त्वत्र परीक्ष्यतामिति धर्मधर्मिणोरभावेन शब्दप्रयोगाभावात् कुतस्तदुत्थो विकल्पप्रविभाग इत्यर्थः। वक्ष्यमाणेन च वासनाभावेन भवतः शब्दभेदो नास्तीत्याह—**शब्दभेदोऽपीत्यर्धेन** ॥

यथा चानादृत्यैव बाह्यमर्थं बुद्ध्यारूढतया साधनत्वम्, तथा भवत्साधनदूषणमपि भविष्यतीत्याह—श्लोकद्वयेन—**यदि चेत्यादिना** ॥

यच्च साधनसम्बन्धितयोक्तम् "सर्व एवायम्" इति, तच्छक्यं दूषणेऽप्यूहितुमित्याह—**यश्चेति**। "मन्त्रः" इत्यूहविषयतां दर्शयत्युपहासाय ॥

प्रतीतिमात्रव्यवहारित्वाच्च बाह्यार्थाभावेऽपि भवतां मदुक्तदूषणं दूषणं सिद्धम्; बाह्यार्थवादिनां तु तदभावेन त्वदुक्तं न सिद्ध्यतीति न साधनमित्याह श्लोकद्वयेन—**बुद्धीत्यादिना** ॥

1. त्रोद्भिद्यते. मा.

बाह्यार्थव्यव[1]हारित्वाज्ज्ञानोत्पादे स्थितेऽपि नः ।
कथञ्चिन्न हि कल्प्येत व्यवहारोऽर्थवर्जितः ॥ १७५ ॥

ननु यद्वन्मया हेतुर्नेष्यते दूषणं तथा ।
तेन मे दूषणाभावाददुष्टं साधनं भवेत् ॥ १७६ ॥

नेदानीं दूषणैः कार्यं साधनाभावतो यदि ।
त्वयैवास्मदभिप्रेता स्वपक्षासिद्धिराश्रिता ॥ १७७ ॥

न चास्ति वासनाभेदो निमित्तासम्भवात् तव ।
ज्ञानभेदो निमित्तं चेत् तस्य भेदः कथं पुनः ॥ १७८ ॥

वासनाभेदतश्चेत् स्यात् प्राप्तमन्योन्यसंश्रयम् ।
स्वच्छस्य ज्ञानरूपस्य न हि भेदः स्वतोऽस्ति ते ॥ १७९ ॥

प्रमाणं वासनास्तित्वे भेदे वापि न विद्यते ।
कुर्याद् ग्राहकभेदं सा [2]ग्राह्यभेदस्तु किंकृतः ॥ १८० ॥

ननु साधनवद् दूषणमपि त्वदुक्तमस्माभिर्नेष्टमित्याह—**ननु यद्वदिति** ॥

तत्रोत्तरम्—**नेदानीमिति** । साधनैस्तु विनैव बाह्यार्थाभावस्यासिद्धेर्जितं बाह्यार्थवादिभिरित्यर्थः ॥

वासनाभेदमभ्युपगम्य दूषणमुक्तम्; इदानीं निमित्ता[3]भावेन वासनाभेदोऽपि नास्तीत्याह सार्धश्लोकेन **न चास्तीति** । ज्ञानभेदोऽपि वासनाभेदनिमित्तः, तस्माच्च तद्भेद इतीतरेतराश्रयम् । न चात्र बीजाङ्कुरवत् परिहार इत्याह—**स्वच्छस्येत्यर्धेन** । बोधरूपता हि विज्ञानानां पारमार्थिकी; तया चैक्यम्; विषयाकारतया तु विज्ञानानि भिद्यन्ते; सा च [4]वासनया; सा नैव पारमार्थिकी; अपारमार्थिकस्तु विज्ञानभेदो न वासनाभेदनिमित्तायालमिति न बीजाङ्कुरन्यायः संभवति ॥

इदानीं भेदवदस्तित्वेऽपि प्रमाणं नास्तीत्याह—**प्रमाणमित्यर्धेन** ।

ननु विज्ञानजन्यः संस्कारो वासना; तत्र चाविप्रतिपत्तिरेव । तदुक्तम्—"वस्तुधर्मो दोषवदनुभवः यदीयात् स्मृतिबीजमावृत्तम्" इत्याशङ्क्याह—**कुर्यादि-**

1. हारित्वज्ञानो. अनन्त. मु.
2. कार्थभेद. मा.
3. भावेऽपि न वास. मा.
4. वासना वासनैव पार. मा.

**संवित्त्या जायमाना हि स्मृतिमात्रं करोत्यसौ ।**
**क्षणिकेषु च चित्तेषु विनाशे च निरन्वये ॥ १८१ ॥**

**वास्यवासकयोश्चैवमसाहित्यान्न वासना ।**
**पूर्वक्षणैरनुत्पन्नो वास्यते नोत्तरः क्षणः ॥ १८२ ॥**

**उत्तरेण विनष्टत्वान्न च पूर्वस्य वासना ।**
**साहित्ये [1]च तयोर्नैव सम्बन्धोऽस्तीत्यवासना ॥ १८३ ॥**

**क्षणिकत्वाद् द्वयस्यापि व्यापारो न परस्परम् ।**
**विनश्यच्च कथं वस्तु वास्यतेऽन्येन नश्यता ॥ १८४ ॥**

त्यर्धेन । यदि विज्ञानजन्यः संस्कारो वासना ; तया च सर्वाणि ज्ञानानि जन्यन्ते ; तथा सत्यपि ग्रहणस्मरणयोर्भेदे विषयभेदो न प्राप्नोतीत्यभिप्रायः ॥

एतदेव स्पष्टयति—**संवित्त्येत्यर्धेन** । सवित्तेरुत्पद्यमाना संस्कारात्मिका वासना तद्विषयमेव स्मरणमात्रं करोतीत्यर्थः ।

अपरेषां दर्शनम्—विज्ञानयोरेव वास्यवासकभावः ; पूर्वविज्ञानवासितमुपरितनं स्वकार्यं करोतीति । तदेतद् विकल्प्य निराकरोति ; न तावत् क्रमोत्पन्नयोः वास्यवासकभाव इत्याह—**क्षणिकेष्विति** ।

यथैवोपरितनं विनष्टत्वेन न पूर्वस्य वासकमिष्यते, तथैव पूर्वमनुत्पन्नत्वादुपरितनस्य चेत्याह—**पूर्वक्षणैरिति** ।

नापि युगपदुत्पन्नयोः, तादात्म्यतदुत्पत्तिलक्षणसम्बन्धाभावादित्याह—**साहित्ये चेत्यर्धेन** ।

उत्पत्त्यनन्तरं च क्षणिकत्वेन विनाशान्न परस्परं व्यापारोऽस्तीत्याह—**क्षणिकत्वादित्यर्धेन** ।

नापि विनश्यदवस्थयोरसत्त्वेन वास्यवासकभावः, तदाह—**विनश्यदित्यर्धेन** ॥

1. अपि. अनन्त. मु.

**अवस्थिता हि वास्यन्ते भावा भावैरवस्थितैः ।**
**अवस्थितो हि पूर्वस्माद् भिद्यते नोत्तरो यदि ॥ १८५ ॥**

**पूर्ववद् वासना तत्र न स्यादेवाविशेषतः ।**
**भङ्गुरे पूर्वसादृश्याद् भिन्नत्वाच्चास्ति वासना ॥ १८६ ॥**

**नैतदस्त्यनुरूपं तु क्षणिकत्वे धियां तव ।**
**पूर्वज्ञानं त्वनुत्पन्नं कार्यं नारभते क्वचित् ॥ १८७ ॥**

[1]**न नष्टं न च तस्यास्ति निष्पन्नस्य क्षणं स्थितिः ।**
[2]**तेनोत्पद्यविनष्टत्वान्नास्त्यारम्भक्षणोऽपि हि ॥ १८८ ॥**

मीमांसकपक्षे त्ववस्थितस्यात्मनो अवस्थितैरेव विज्ञानैर्वास्यवासकभावो घटत इत्याह—**अवस्थिता** हीत्यर्धेन । स्थायिन एव ज्ञानस्याशुतरविनाशित्वाभिप्रायेण "क्षणिका हि सा" इति व्यवहारः । एवमवस्थिते मीमांसकपक्षं निराकृत्य वास्यवासकदर्शनान्तरमुपन्यस्यति । तत्र निरा[3]करणम्—किं भिन्नस्योत्पत्तिरुताभिन्नस्य? भिन्नोत्पत्तौ तादवस्थ्यं तस्य; अभिन्नोत्पत्तौ तु आत्मैवोत्पन्नः स्यात्; तदाह—**अवस्थितो हीति** । यदा समन्तरप्रत्यय एवात्मसदृशं विज्ञानं जनयद् वासनोच्यते, तदा क्षणिकत्वेऽपि न कश्चिद्दोष इत्याह—**भङ्गुर** इत्यर्धेन ॥

तदिदमनुपपन्नम्, क्षणिकत्वेन निरन्वयविनाशित्वेन च कार्यकारणभावसादृश्ययोरभावादित्याह—**नैतदि**त्यर्धेन । तत्र तावत् कार्यकारणभावं निराकारोति—**पूर्वज्ञानमिति** सार्धेन । न तावदनुत्पद्य[4]मानस्योत्पादकमानम्; नाप्यनुत्पन्नस्य, क्षणान्तरेऽभावात्; विनश्यदवस्थोऽप्यसत्त्वादकारणम्; अथ क्षणद्वयावस्थायी प्राप्तः नाविनष्टम्, असत्वात् ।

ननु चैवमनन्तर[5]मुत्पत्तिमत्त्वमेव कार्यत्वमनन्तरपूर्वभावित्वमेव कारणत्वम्; एवं तर्हि सन्तानान्तरवर्तिनोऽपि कार्यत्वप्रसङ्गः । निरन्वयविनाशित्वेन च सादृश्य-

1. न विनष्टं न तस्य. चौ अनन्त. मु.
2. तेनोत्पन्नवि. चौ. अनन्त. मु.
3. करणं किं हि तदास्य अभि मा.
4. मानत्वोत्पादक. मा.
5. मुत्पत्ति...मेव. मा.

निरन्वय[1]विनाशित्वादानुरूप्यं कुतः पुनः ।
न तदीयोऽस्ति कश्चिच्च धर्म उत्तरबुद्धिषु ॥ १८९ ॥

समानधर्मतां मुक्त्वा नानुरूप्यं च विद्यते ।
यदि स्यादानुरूप्याच्च वासना गोधियो यदा ॥ १९० ॥

हस्तिबुद्धिर्भवेत् तत्र वैलक्षण्यान्न वासना ।
ततः परं च गोज्ञानं निर्मूलत्वान्न संभवेत् ॥ १९१ ॥

सर्वं विलक्षणं ज्ञानं न स्यादेव विलक्षणात् ।
बाह्यार्थानुग्रहाभावात् पारार्थ्येनावशीकृताः ॥ १९२ ॥

मपि नास्तीत्याह—**निरन्वयेति** सार्धश्लोकत्रयेण । सर्वात्मना विनष्टत्वान्न पूर्वापरयोरनुगतं किञ्चिदस्तीत्यभिप्रायः । सदृशोत्पादकत्वेन च वासनात्वे विलक्ष-[2]णयोरुत्पाद्योत्पादकभावो न प्राप्नोतीत्यभिप्रायं—**यदि स्यादिति** श्लोकद्वयं निगदव्याख्यातम् ।

अपरं दर्शनम्—प्रवृत्तिज्ञानानि नीलपीतादिविषयाकाराणि स्वच्छालयविज्ञाने संस्कारमाधाय वासनारूपं विनश्यन्ति ; सा च वासना यज्जातीयाद् विज्ञानादुत्पद्यते तज्जातीयमेव विज्ञानं जनयति' एतदपि विज्ञानं [3]स्वानुरक्तवासनामिति । तद्विकल्प्य दूषयति । तद्ध्यालयविज्ञानं प्रतिक्षणध्वंसि स्थायि वा ? यदि प्रतिक्षणध्वंसि तन्नाशे च यदि तदाधारा वासना विनश्यन्ति, ततश्चात्र कार्यजननस्वभावा एव कल्पिता इति कार्यं जनयेयुः ; न च बाह्यापेक्षिता तासाम्, तस्याभावात् । ततश्च क्रमेण कार्योत्पादो न प्राप्नोति ; तदाह—**बाह्यार्थानुग्रहाभावादिति ।** पारार्थ्येनावशीकृता इति कार्यजननस्वभावा एवेत्यर्थः ।

कारणविनाशानन्तरं च सर्वं कार्यमुदेतीति बौद्धदर्शनम्, अन्यथा क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् ; आलयविज्ञानविनाशे च तदाधारा वासना विनश्यन्ति ; ततश्च ताः स्वानुरूपाणि विज्ञानानि विचित्राणि जनयन्ति ; एकस्मिन् काले

1. विनष्टत्वा. चौ. अनन्त. मु.
2. णयोरुत्पादक. मा.
3. स्वानुक्त. मा.

निरन्वयविनाशिन्यः कुर्युः कार्यं कथं क्रमात् ।
विनाशे कारणस्येष्टः कार्यारम्भश्च नान्यथा ॥ १९३ ॥

तत्रैव ज्ञाननाशेन विनष्टाः सर्ववासनाः ।
तेन सर्वाभ्य एताभ्यः सर्वाकारं यदुत्थितम् ॥ १९४ ॥

ज्ञानमेकक्षणेनैव विनाशं गन्तुमर्हति ।
यद्याश्रयविनाशेऽपि शक्तचनाशोऽभ्युपेयते ॥ १९५ ॥

क्षणिकत्वं च हीयेत न चारम्भोऽन्यथा भवेत् ।
वासनानां प्रवाहोऽपि यदि ज्ञानप्रवाहवत् ॥ १९६ ॥

वासनातस्ततो ज्ञानं न स्यात् तस्माच्च वासना ।
कुर्यातां तुल्यमेवैते नान्योन्यं तु कदाचन ॥ १९७ ॥

नान्यो विलक्षणो हेतुर्येनान्यादृक् फलं भवेत् ।
तस्मात् संवृतिसत्यैषा कल्पिता नास्ति तत्त्वतः ॥ १९८ ॥

उत्पद्यमानानि भिन्नान्यपीति न शक्यते वक्तुम्; एकमेव तद्विचित्रं प्राप्नोति चित्रबुद्धिवत्; तदाह—**विनाश** इति द्वयेन ॥

अथालयविज्ञानविनाशेऽपि वासना न विनश्यन्ति, एवं क्षणिकत्वाभ्युपगमविरोधः; स्थायिनश्च क्रमयौगपद्याभ्यामर्थक्रियाविरोधः; तदाह—**यद्याश्रयविनाशेऽपीति** ॥

अथ विनश्यन्त्य एव वासनाः आलयविज्ञानविनाशे कार्यं जनयन्ति, तत्तु वासनान्तरमेव आलयविज्ञानक्षणान्तरस्थम् । यद्येवं वासनाजननस्वभावत्वापातात् ताभ्यो न प्रवृत्तिविज्ञानोत्पादः प्राप्नोति; वासनाजन्यत्वाच्च वासनानां न प्रवृत्तिविज्ञानजन्यत्वं स्यात्, न चान्यत् सहकारि विद्यते, यत्समवधाने प्रवृत्तिविज्ञानं जनयति; तदाह—**वासनानामिति** श्लोकद्वयेन ।

उपसंहरति—**तस्मादिति** ॥

न चेदृशेन भावेन कार्यमुत्पद्यते क्वचित् ।
यस्य त्ववस्थितो ज्ञाता ज्ञानाभ्यासेन युज्यते ॥ १९९ ॥

स तस्य वासनाधारो वासनापि स एव वा ।
कुसुमे बीजपूरादेर्यल्लाक्षाद्युपसिच्यते ।
तद्रूपस्यैव संक्रान्तिः फले तस्येत्यवासना ॥ २०० ॥

युक्त्यानुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम् ।
आस्थानिवृत्त्यर्थमवादि बौद्धैः ग्राहं गतास्तत्र कथंचिदन्ये ॥ २०१ ॥

यत्पुनर्मीमांसकपक्षे वास्यवासकभावो न प्राप्नोतीत्युक्तम् " अवस्थितो हि " इति, तत्राप्याह—**यस्येति** ॥

नित्यत्वादात्मनो ज्ञानाभ्यासेन युज्यते संस्काराधानम्, स्थायित्वादाधारस्य; आत्मैव वा स्मरणसमर्थो जायत इति वासनापि स एवेत्याह । तदुक्तम्—" विज्ञान रूपस्य न नित्यत्वं विरोत्स्यते" इति । यत्तु दिङ्नागेन दृष्टान्तत्वेनोक्तं वासनासिद्धौ " लाक्षावासितकुसुमं लोहितफलं जनयति " इति, तदसि[1]द्धम्, फले लाक्षादिरूपस्यैव सङ्क्रान्तत्वात् सङ्क्रान्तस्य प्रत्यभिज्ञायमानत्वादित्याह—**कुसुम इति** ।

बौद्धमपि दर्शनं तात्पर्येण नावगतमित्याह—**युक्त्यानुपेतामिति** । स हि बुद्धस्तत्त्वदर्शी [3]नाम कथमपि युक्त्यानुपेतां तत एवासतीं वासनां प्रकल्प्य लोकयात्रासिद्ध्य[4]ङ्गतयायतत तस्माद् यथा[5]कथञ्चिद् रागपरो लोकः संग्राह्य[6] इति । बुद्धेनोक्ते [7]तत्रान्यथैवातत्त्वदर्शिनो [8]माभिनिविष्टा भूतेति ॥

इति श्रीभट्टोम्बेकविरचितायां तात्पर्यटीकायां
निरालम्बनवादः समाप्तः ॥

---

1. तदसिद्धमित्याह-कुसुम इति । बौद्ध. मा.
2. तात्पर्येणावगत. मा.
3. दर्शनात्मकयमिव मा.
4. तयातत. मा.
5. कथ्यविद्रगपरम्. मा.
6. सङ्ग्राह्यवर्तत इत्येतत्. मा.
7. तत्रन्यथैव मा.
8. दर्शनोमाविष्टा इति. मा.

# शून्यवादः प्रारभ्यते ॥

एवमुक्तेऽनुमानस्य ज्ञानमाश्रित्य दूषणे ।
ज्ञानप्रवृत्त्यशक्त्या तु परः प्रत्यवतिष्ठते ॥ १ ॥

यत्तावन्मन्यमानेन प्रत्यक्षं भवतोच्यते ।
दूषणं तद्विरोधादि तदिदानीं परीक्ष्यताम् ॥ २ ॥

॥ अथ शून्यवादस्थानकम् ॥

"ननु सर्व एव निरालम्बनः"—इत्यादिना बाह्यार्थाभावमाशङ्क्य तत्सद्भाव-प्रदर्शनेन योगाचारदर्शने निरस्ते संप्रति तु विज्ञानस्याप्यभावमाशङ्क्य तत्सद्भाव-प्रतिपादनेन माध्यमिकदर्शनं निराकर्तुमाह—"शून्यस्तु" इत्यादिना । तदनुपपन्नम्, प्रतिपादिते हि बाह्यार्थसद्भावे "जाग्रतो बुद्धिः"—इत्यादिना प्रत्यक्षप्रतीतिबलेन तदभावाशङ्कायां कारणाभावात्; संवेद्यमान एव हि विज्ञानाभावोऽपि भवति इति तदभ्युपगमेऽपि "सर्व एव निरालम्बनः"—इत्यनेनैव गतत्वात् पुनरुक्तमिदम्—"शून्यस्तु" इत्यादीत्याशङ्क्य परिहर्तुमाह—**एवमिति** । ननु "सर्व एव निरालम्बनः" इत्यादिना बाह्यार्थाभावेऽनुमानं पूर्वमुपन्यस्तवान् पूर्वपक्षवादी । ततस्तस्य प्रत्यक्षविरोधरूपं दूषणमभिहितम्—"जाग्रतो बुद्धिः" इत्यादिना । सांप्रतं तु पूर्वपक्षवाद्येव नीलतद्बुध्योरेकत्वेन प्रत्यक्षस्य बाह्येऽर्थे प्रवर्तितुं शक्तिर्नास्तीति प्रत्यक्षविरोधपरिहारेण प्रत्यवस्थितवान् "शून्यस्तु"—इत्यादिना । तदुक्तम्—"प्रस्तुतः स द्विधा चात्र" इति । अत इदमिह विचारणीयम्—'नीलमिदम्', 'पीतमिदम्', 'रजतमिदम्' इत्येवमादेरनुभवस्योत्पद्यमानस्य किमात्मैवानुभाव्यः यथोक्तम्—"सहोपलम्भनियमादभेदो नीलतद्धियोः" इति; उतान्योऽनुभाव्यः ? इति । यदि तावदात्मैवानुभाव्यः, ततोऽर्थनिराकरणपरस्यानुमानस्य स्वांशग्राहकेण प्रत्यक्षेण विषयभेदे सति पूर्वोक्तप्रत्यक्षविरोधासम्भवात् जितं शून्यवादिना । अनुभवातिरिक्तानुभाव्यकल्पनायां तु एकार्थविषयत्वात् प्रत्यक्षानुमानयोरर्थसद्भाव-ग्राहकेण प्रत्यक्षेण बाधाज्जितं मीमांसकेनेत्याह—**यत्तावदित्यादिना** श्लोकत्रयेण । 'नीलमिदम्' 'पीतमिदम्' 'रजतमिदम्' इति यत् प्रत्यक्षं मन्यमानेन तावत्

प्रवर्तितुं हि किं शक्तं स्तम्भाद्यर्थे बहिःस्थिते ।
अथवात्मांश एवैतद्ग्राह्ये क्षीणं न वस्तुनि ॥ ३ ॥

तद्यद्येतेन बाह्योऽर्थो गृह्यते दूषणं ततः ।
त्वदुक्तं सवमात्मांशे ग्राह्ये तन्नोपपद्यते ॥ ४ ॥

प्रत्यक्षविरोधदूषणमुक्तमनुमानस्य, तत् परीक्षणीयम्—किं तस्यैवात्मैवानुभाव्यः, उतान्य इति श्लोकत्रयार्थः ॥

ननु सन्देह एवात्र नास्ति, सर्वत्र ग्रहणे परस्परविलक्षणत्रितयप्रतिभासात् 'नीलमिदमहं गृह्णामि' इत्यादिष्वनात्मतया नीलादयः कस्यचित् प्रतिभासन्ते, न पुनर्नील एव [1]केवलः स्वप्रकाशः, तथा प्रतिभासाभावात्; अनुभूयमानाननुभूयमानयोश्च परोक्षापरोक्षतया विशेषो न स्यात्। एकस्मिन्नपि नीले संनिकृष्टासंनिकृष्टयोर्विशेषो न स्यात्। स्वप्रकाशे च नीले 'ममायं प्रकाशते, नान्यस्य' इति प्रतिभासो न स्यात्। तस्मात् सर्वत्रानुभवितानुभवोऽनुभाव्यश्च प्रकाशते। 'नीलमहं जानामि' इति चात्रापि पीतविलक्षणोऽनुभावानुभवितृविलक्षणश्चानुभाव्योऽनुभूयते, स्वनिष्ठस्य नीलत्वेनानात्मतया प्रतिभासनात्; न ह्ययं नीलपीतादिः स्वव्यापारस्तदीयबोधवत् प्रकाशते। प्रतिभासनिमित्ता च भेदाभेदव्यवस्था। इतरथा 'नीलमिदम्, पीतमिदम्' इत्यनुभाव्यभेदोऽपि परस्परतो न स्यात्। विपर्ययावगमोऽपि त्रितयप्रतिभास एव; 'नेदं रजतम्' इत्यनुभवान्तरादनुभूतस्यैव वानुभूयमानस्य वा असत्त्वमवगम्यते; न त्वनुभवानुभाव्ययोरैक्यम्। यत्र तु परस्परविलक्षणत्रितयप्रतिभासोऽस्ति, निषेधानुभवान्तरं च नास्ति; तत्र कथमविभक्तोऽपि बुद्ध्यात्मा, कथं[2] नेदंशब्दप्रयुक्तता अभेदस्येति न विद्मः। ननु चात्रानुभाव्यातिरिक्तानुभवाभावोऽस्त्येव, आनुमानिकविषयाभ्युपगमात्। तदुक्तम्—"सहोपलम्भनियमादभेदो नीलतद्धियोः" इति। तदनुपपन्नम्; परस्परविलक्षणत्रितयप्रतिभासेनानुमानाभासत्वे सति बाधकाभावात्, सहोपलम्भस्याभेदाधिष्ठानविरोधाद् विरुद्धो हेतुः। अथैकोपलम्भादिति हेत्वर्थः, अत्राप्यसिद्धत्वम्; सर्वत्र ग्रहणे

1. केवलस्वप्र. मा.    2. कथं चैव शब्द. मा.

**तत्र तावदिदं सिद्धं सर्वप्राणभृतामपि ।**
**ग्राह्यत्वं नीलपीतादिदीर्घाद्याकारवस्तुनः ॥ ५ ॥**

**न चाप्याकारभेदेन ज्ञानज्ञेयावधारणा ।**
**न चान्यतरधर्मत्वं विस्पष्टं तत्र गृह्यते ॥ ६ ॥**

**गृह्यमाणस्य चास्तित्वं नाग्राह्यस्याप्रमाणकम् ।**
**तस्मादाकारवद् वस्तु ग्राह्यत्वाद् विद्यते ध्रुवम् ॥ ७ ॥**

**अतः परीक्षमाणानां ज्ञानमाकारवद्यदि ।**

परस्परविलक्षणप्रतिभासात् । एवं सन्देहाभावेनाधिकरणमनारभ्यमाशङ्क्य सन्देहकारणं दर्शयितुमाह—**तत्र तावदिदं सिद्धमित्यादिना** श्लोकपञ्चकेन ।

ननु सिद्धे ग्राह्यस्य सद्भावे तस्यार्थान्तरत्वं ज्ञानाकारत्वं वा परीक्षितुं शक्यम् ; तत्सिद्धिरेव कुतः ? अत आह—**तत्र तावदिति** । सर्वप्राणभृतामविवादसिद्धम्—यन्नीलाद्याकारं किञ्चिद् वस्तु प्रकाशत इति । तथापि ज्ञानज्ञेययोरुभयोरपि प्रकाशनादुभयमङ्गीक्रियताम् । किमन्यत् परीक्ष्यते ? अत आह—**न चापीत्यर्धेन** । एकमेव नीलाकारं वस्तु प्रकाशते 'नीलम्' इति ; तथापि यस्यैव प्रकाशते सर्वज्ञानस्य चायमाकारस्तस्यैवास्तु ; कः परीक्षावसरः, अत आह—**न चान्यतरधर्मत्वमित्यर्धेन** । नायमाकारोऽर्थज्ञानयो[1]रन्यतरधर्मतया निर्द्धारितोऽवभासते, यतः परीक्षावसरो न स्यात् इति । नन्वेकस्मिन्नपि प्रकाशमानेऽन्यदप्रकाशमेव सिध्यति, तथापि [2]सिध्यत्येव द्वैतम् ; अत आह—**गृह्यमाणस्येत्यर्धेन** । तस्मादेकस्यैव ध्रुवमस्तित्वम् ; द्वितीयं तु 'अस्ति', 'नास्ति' इति परीक्षणीयमित्याह—**तस्मादित्यर्धेन** ।

तेन यदि परीक्षमाणा ज्ञानमेवाकारवदध्यवस्यामः, ततस्तन्मात्र एव प्रत्यक्ष[3]प्रमाणमित्यर्थकल्पनां विजहीमः ; ज्ञानस्य हि स्वयंप्रकाशस्य नार्थमन्तरेणानुपपत्तिरिति सिध्यत्यद्वैतम् । अथ तु बाह्यस्यैवाकारवत्तया प्रकाशः, ततस्तावत् प्रकाशमानत्वादस्ति ; तस्य हि जडत्वेन पराधीनप्रकाशत्वात् प्रकाशोपपत्तये ज्ञानमपि कल्प्यत इति सिध्यति द्वैतम् ; अत आह—**अत इति द्वयेन** ॥

1. अन्यतरे धर्मे. मा.
2. सिध्यतवद्वैतम्. मा.
3. प्रमाकीणेति अर्थे. मा.

तन्मात्रे च प्रमा क्षीणा ततो नास्त्यर्थकल्पना ॥ ८ ॥

यदि त्वाकारवत्ता स्याद् बाह्यस्यैवेह वस्तुनः ।
तदस्ति गृह्यमाणत्वात् [1]तत्सिध्यैवास्तिधीरपि ॥ ९ ॥

किं तावदत्र युक्तं स्यात् ज्ञानमाकारवत् कुतः ।
एकमाकारवद् वस्तु ग्राह्यमित्यध्यगीष्महि ॥ १० ॥

तद्यद्याकारवानर्थो बाह्यः कल्प्येत तस्य च ।
ग्राह्यत्वमन्यथा न स्यादिति ग्राहककल्पना ॥ ११ ॥

तेनाकारवतः क्लृप्ताद् ग्राह्यादाकारवर्जितम् ।
वस्त्वन्तरं [2]पृथक् कल्प्यं ग्राहकं निष्प्रमाणकम् ॥ १२ ॥

तस्याकल्पनमिच्छंश्चेदर्थे ग्राहकतां [3]वद ।
संज्ञामात्रे विसंवादः सिद्धा त्वेकार्थकल्पना ॥ १३ ॥

पूर्वपक्षं परिगृह्णाति—**किं तावदत्र युक्तं स्यात् ज्ञानमाकारवदिति** । ननु बहिरवभासमानस्य ज्ञानाकारत्वं कथमिति पृच्छति—**कुत इति** । उत्तरमाह—**एकमाकारवदित्यर्धेन** । एकमेव हि नीलाकारं वस्तु प्रकाशते, न द्वयम्—इत्येतत् तावदधिगतवन्तो वयम्; अतस्तन्मात्रमेवाश्रयितव्यम् ॥

तथापि कथं ज्ञानाकारतेत्याह—**तद्यद्याकारवानिति** । अर्थस्य ग्राह्याकारत्वे तस्य जडस्य ग्राह्यत्वसिद्धये ग्राहकज्ञानमङ्गीकर्तव्यमिति ॥

ततः को दोषः? आह—**तेनाकारवत इति** । क्लृप्तेनैवोपपत्तौ नाक्लृप्तकल्पनं युक्तमिति ॥

शङ्कते—**तस्येत्यर्धेन** । विज्ञानवदर्थ एव स्वयं प्रकाशोऽस्त्विति । दूषयति—**संज्ञामात्र** इत्यर्धेन । एकमेव स्वयंप्रकाशं वस्त्विति नो मतम्; तस्य 'अर्थः' इति संज्ञामात्रं भवतोच्यते, नार्थविशेषः कश्चिदिति ॥

1. सिद्धैवास्ति. चौ. मु.
2. प्रकल्प्यं स्यात्. चौ. अनन्त. मु.
3. वदेः. अनन्त. चौ. मु.

**ग्राह्यग्राहकयोरैक्यं सर्वथा प्रतिपाद्यते ।**
**बाह्याभ्यन्तररूपश्च परिकल्पो मृषेष्यते ॥ १४ ॥**

**मत्पक्षे यद्यपि स्वच्छो ज्ञानात्मा परमार्थतः ।**
**तथाप्यनादौ संसारे पूर्वज्ञानप्रसूतिभिः ॥ १५ ॥**

**चित्राभिश्चित्रहेतुत्वाद् वासनाभिरुपप्लवात् ।**
**स्वानुरूप्येण नीलादिग्राह्यग्राहक[1]दूषितम् ॥ १६ ॥**

**प्रतिभक्तमिवोत्पन्नं नान्यमर्थमपेक्षते ।**

एतदेव विवृणोति—**ग्राह्यग्राहकयोरैक्य**मित्यर्धेन । [2]ज्ञानं तावद् भवत्वर्थो वा, सर्वथा सिद्धं ग्राह्यग्राहकयोरेकत्वम्; तावदेवास्नाभिः प्रतिपाद्यते, नान्यदिति । नन्वर्थो बाह्यः स्थायी, [3]ज्ञानन्त्वान्तरं क्षणिकम्; तत् कथं वस्त्वविशेषः? अत आह— **बाह्याभ्यन्तररूपश्चे**त्यर्धेन । एकमपेक्ष्यैवेतरं बाह्यम्, तमपेक्ष्य चान्यदान्तरम्; अद्वितीये वस्तुनि मृषैवायं विभागः । स्वप्रकाशत्वे चास्यापि [4]क्षणिकत्वमेव, स्थायिनः सुषुप्त्यादावप्रकाशमानस्य स्वप्रकाशत्वानुपपत्तेः । अतो वस्तुविशेषाभावात् संज्ञा[5]मात्रे नो विवाद इति ॥

ननु यदि ज्ञानमात्रमेव तत्त्वम्, तस्य स्वच्छसंविन्मात्ररूपत्वान्नीलादेर्ग्राह्याकारस्य कथमवभासः 'नीलमिदम्' [6]इति? कुतोऽस्मदर्थग्राहकस्य न 'अहम्' इति? अत आह—**मत्पक्ष इति** सार्धश्लोकद्वयेन । अनादौ संसारे विचित्रनीलग्राह्यग्राहकाकारबुद्धिजन्याभिर्विचित्राभिर्वासनाभिर्जन्यमानस्य ज्ञानस्य स्वहेत्वानुरूप्येण विचित्रनीलादिग्राह्यग्राहकाकारशबलस्याविभक्तस्य विचित्रस्योत्पत्तिसिद्धेर्न वैचित्र्यसिद्धयेऽर्थापेक्षा संभवति । यथाहुः—

"अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥" इति ।

उपप्लवात्—ग्राह्याकारसमारोपादित्यर्थः ।

1. कलुषितम्. अनन्त. मु.
2. ज्ञानं तावद्भवत्वाथोवा सर्वथा. मा.
3. ज्ञानन्त्वाकारणम्. मा.
4. क्षणिकमेव मा.
5. मात्रेण विवा. मा.
6. इति...अनादौ. मा.

अन्योन्यहेतुता चैव ज्ञानशक्त्योरनादिका ॥ १७ ॥

अनेककल्पनायाश्च ज्यायसी ह्येककल्पना ।
शक्तिमात्रस्य भेदश्च वस्तुभेदाद् विशिष्यते ॥ १८ ॥

तस्मादुभयसिद्धत्वाज्ज्ञानस्याकारकल्पना ।
ज्यायसी भवतस्त्वर्थं कल्पयित्वा भवेदियम् ॥ १९ ॥

तदसिद्धावशक्तत्वात् तेनैवं विप्रकृष्टता ।

ननु ज्ञानवैचित्र्याद् वासनावैचित्र्यम्, ततश्च तद्वैचित्र्यमितीतरेतराश्रयमित्युक्तं निरालम्बनवादे । अत उक्तमनादौ संसार इति । तद्विवृणोति—**अन्योन्यहेतुतेत्यर्धेन** । शक्तिरिति वासनोच्यत इत्येकया वासनयैकं ज्ञानं जन्यते, तेनाप्यन्या वासना, तयाप्यन्यज्ज्ञानमिति नेतरेतराश्रयम् । न च सर्वाद्यस्य कथं सिद्धिरिति वक्तव्यम्, अनादित्वात् संसारस्येति ॥

कल्पनालाघवादपि ज्ञानाकारत्वं नीलादेर्युक्तमित्याह—**अनेकेत्यर्धेन** । ननु भवतापि ज्ञानवासनयोः कल्पनादस्त्यनेककल्पना; अत आह—**शक्तिमात्रस्येत्यर्धेन** । ज्ञानस्य शक्तिमात्रं वासना; तन्मात्रकल्पना च वस्तुभेदकल्पनाल्लघीयसी, तेन शक्तिरूपस्य संस्कारस्यार्थवादिनाप्यभ्युपगमात् । सर्वं चेदं ज्ञानातिरिक्तवासनाभ्युपगमेनोक्तम् । परमार्थतस्तु न ज्ञानातिरिक्तं किंचिदस्ति बौद्धानाम्; ज्ञानान्येव समनन्तरप्रत्ययवशेन विचित्रनीलपीतादिरूपाणि जायमानानि कार्यकारणरूपाणि सन्तानरूपेण वहन्ति नार्थरूपमपेक्षन्त इति ॥

उभयवादिसिद्धत्वाच्च ज्ञानस्य तदाकारकल्पनैवार्थाकारकल्पनातो ज्यायसीत्याह—**तस्मादिति ज्यायस्यन्तेन** । तस्मादर्थाकारकल्पनादित्यर्थः । भवतस्त्वर्थं कल्पयित्वा पुनरियं ज्ञानाकारकल्पनावश्यमङ्गीकर्तव्येत्याह—**भवतस्त्विति शेषेण** ॥

तत्र कारणमाह—**तदसिद्धावशक्तत्वादिति** । नीलाद्याकारासिद्धौ हि संविन्मात्ररूपं ज्ञानं नीलादिकमर्थविशेषमुपस्थापयितुं न शक्नुयात्; न ह्यसति संविद्भेदे संवेद्यभेदः संभवति । नीलाद्याकाराभावे च संविदां न भेदः स्यात्, संविद्रूपस्य सर्वसमानत्वात् । नीलादिरूपेणार्थस्वरूपं ज्ञानं स्वरूपार्थविषयं भवतीति युक्तम् ।

**प्रत्यासन्नं च सम्बद्धं ग्राह्यं मम भविष्यति ॥ २० ॥**

यदाह—"न हि संविश्चित्तसत्तयैव तद्वेदना युक्ता, तस्याः सर्वत्राविशेषादविशेषप्रसङ्गात्; तासु तु [1]सारूप्यमाविशत् सरूपयितुं घटयेत्"—इति । तथा—

"तत्रानुभवमात्रेण ज्ञानस्य [2]सदृशात्मनः ।
भाव्यं तेनात्मना येन प्रतिकर्म विभज्यते" ॥ इति ।

ततोऽवश्यमर्थविषयत्वसिद्धये ज्ञानानामपि नीलाद्याकारवत्त्वमङ्गीकर्तव्यम् । यद्यपि स्वभावत एव संविदो व्यतिभिद्येरन्, तथाप्यसौ भेदो न नीलाद्युपरागमन्तरेण शक्यते निरूपयितुम्; न चानिरूपितभेदाः संवेद्यभेदमलमुपस्थापयितुम्; न हि संविदस्तीत्येतावता नीलावधारणं संभवति, तद्रूपस्य पीतादिसाधारणत्वात् । तस्माज्ज्ञानाकारो नीलादिः, नार्थाकार इति ।

किंचैवमर्थाकारत्वे नीलस्य तेन ज्ञानेन विप्रकृष्टता भिन्नता स्यात्, ततस्तेन तस्य प्रकाशो न स्यादित्याह—**तेनैवं विप्रकृष्टेनेति** । मत्पक्षे तु संभवति ग्राहकत्वमित्याह—[3]**प्रत्यासन्नमिति** । प्रत्यासत्तिस्तादात्म्यम् । ग्राह्यं भविष्यतीति वक्ष्यमाणेन सम्बन्धः । तदेष प्रयोगः—नीलरूपं नीलवेदनादभिन्नम्, तदुत्पत्तौ संवेद्यमानत्वात् तत्स्वरूपवत्; भिन्नत्वे वा संवेद्यता न स्यात् पीतवदिति । तदनेन "संवेदनात्" इति बौद्धोक्तो हेतुर्दर्शित इति ।

अपरमपि "ग्राह्यलक्षणयोगात्" इति तदुक्तमेव हेतुं दर्शयति—**सम्बद्धं ग्राह्यं मम भविष्यतीति** । मम हि ज्ञानसम्बद्धमेव नीलम्, तदात्मत्वात् तत्स्वरूपात् । ततश्च युक्तं तस्य ग्राह्यत्वम् । इदमेव हि ग्राह्यलक्षणं यत् तादात्म्यम् । तव त्वर्थान्तरत्वान्न तावत् तादात्म्यम् । न चान्योऽपि कश्चिज्ज्ञानार्थयोः सम्बन्धोऽस्ति इति, यद्वशादर्थो ग्राह्यलक्षणमनुपतेत् । तत्रासति सम्बन्धे ग्राह्यत्वाभ्युपगमे सर्वविषयता स्यात् । तत्र सर्वः सर्ववित् स्यात् । हेतुत्वं ग्राह्यलक्षणमिति चेत् न, प्रमाणाभावात्; न हि नीलोऽर्थो ज्ञाने नीलाकारमर्पयतीति किंचन प्रमाणमस्ति; ज्ञानवै-

1. माहशरं सरूप. मा.
2. सदृशात्मना. मा.
3. प्रत्यासत्तिस्तमिति प्रत्यासन्निस्तदात्यन्तं ग्राह्यम्. मा.

**इतश्चाकारवज्ज्ञानं यस्मात् [1]तद्वः प्रकाशकम् ।**
**स्वयंप्रकाशहीनस्य बाह्यस्योपायसम्मतम् ॥ २१ ॥**

**न चागृहीते [2]ज्ञानाख्यप्रकाशेऽर्थोऽवधार्यते ।**
**तदधीनप्रकाशत्वाद् दीपाभासे यथा घटः ॥ २२ ॥**

चित्र्यस्य समनन्तरप्रत्ययादेवोपपत्तेरिति वक्ष्यामः । सारूप्यं ग्राह्यत्वमिति चेत्, असंनिहितोऽपि नीलार्थो नीलज्ञानग्राह्यः स्यात् । किंच कथंचित् सारूप्यं सर्वज्ञानानां सर्वार्थैरविशिष्टम्, सर्वेषां क्षणिकत्वात्; ततश्च सैव सर्वज्ञतापत्तिः । सर्वात्मना तु सारूप्येऽर्थवज्ज्ञानस्यापि जडत्वं स्यात् । यथाहुः—

"एकदेशेन सारूप्ये सर्वः स्यात् सर्ववेदकः ।
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेत् ॥" इति ।

सारूप्यतदुत्पत्तिभ्यां ग्राह्यत्वमिति चेत्, धारावाहिकेषु पूर्वमुत्तरस्य ग्राह्यं स्यात् । तस्मात् सर्वा बुद्धयः स्वात्मानमेवानुभवन्ति, नान्यत्; स्वयमेव [3]चानुभूयन्ते, न बुद्ध्यन्तरेण ; तस्यापि बुद्ध्यन्तरस्य स्वात्मपर्यवसायित्वात् । यथाहुः—

"नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते" ॥ इति ॥

इतश्च ज्ञानाकारो नीलादिरित्याह—**इतश्चाकारवज्ज्ञानमिति** । इदमेव साधयितुमुत्पत्त्यवस्थायामेव ज्ञानं गृह्यत [4]इत्येतत् तावद् दर्शयति—**यस्माद्वद्वः प्रकाशकमिति** । भवतामपि ज्ञानं प्रकाशकमिति । कस्य प्रकाशकम्, तद्दर्शयति—**स्वयंप्रकाशहीनस्येति** ॥

ततः किमित्याह—**न चागृहीते ज्ञानाख्य इति** । न ह्यगृहीतं प्रकाशकं प्रकाश्यं प्रकाशयति, दीपप्रभावदिति । यथाहुः—

"अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यति" । इति ।

1. तद्वत्प्राशकम्. चौ. अनन्त. मु.
2. ज्ञानाख्ये प्रकाश्योऽर्थ. चौ. अनन्त. मु.
3. चानुबुध्यन्ते. मा.
4. इत्येतावद्द. मा.

उत्पन्नेष्वपि चार्थेषु प्रकाशाभावतः क्वचित् ।
प्रतिबन्धकयोगाद्वा संवित्तिर्नोपजायते ॥ २३ ॥

ज्ञानस्योत्पद्यमानस्य प्रतिबन्धो न कश्चन ।
न चाप्रकाशरूपत्वं येनास्याग्रहणं भवेत् ॥ २४ ॥

प्राक् चार्थग्रहणादिष्टा तस्योत्पत्तिः [1]सदैव च ।
संवेदनं [2]भवेत् तस्य न चेत् कालान्तरेऽपि न ॥ २५ ॥

किं हि तस्य भवेदूर्ध्वं प्राक् च नासीन्न येन तत् ।
पूर्वं गृहीतं पश्चाच्च गृहीतमिति भाष्यते ॥ २६ ॥

ज्ञानान्तरस्य चोत्पत्तिं प्रकाशो न प्रतीक्षते ।
तस्य तस्यापि चान्येन संवित्तावस्थितिर्भवेत् ॥ २७ ॥

इतश्चोत्पत्तावेव गृह्यत इत्याह—उत्पन्नेष्वित्यादिना भवेत्तस्येत्यन्तेन । प्रागेव तावदर्थग्रहणाज्ज्ञानोत्पत्तिर्भवतामपीष्टा, अनुत्पन्नस्य ग्राहकत्वायोगात् । उत्पन्नाश्च भावा द्विधैव न गृह्यन्ते, प्रकाशाभावात् प्रतिबन्धकसद्भावाद्वा यथा सन्तमसे कुड्यव्यवाये च घटः । न च ज्ञानस्य प्रतिबन्धकमस्ति; न च प्रकाशाभावः, स्वयंप्रकाशत्वात् । अतोऽवश्यमुत्पत्तावेव ग्रहीतव्यमिति । यदि चैवं न गृह्येत, कालान्तरेऽपि न गृह्येत, अविशेषादित्याह—न चेति शेषेण ॥

अविशेषमेव दर्शयति—किं हि तस्येति ॥

ज्ञानान्तरमिति चेत्, तत्राह—ज्ञानान्तरस्येत्यर्धेन । घटादीनामप्रकाशात्मनां स्वप्रकाशाय प्रकाशापेक्षा युक्ता; न तु प्रकाशात्मनो ज्ञानस्येति । सजातीयापेक्षायां चानवस्थेत्याह— तस्येति । मा नाम संवेदि ज्ञानमिति चेत्, न; उत्तरकाले स्मृतिदर्शनात् । एवं चैकविषयज्ञानप्रवाहे एवायुःपर्यवसानाद् विषयान्तरसञ्चारो न स्यात् । यथाहुः—

"ज्ञानान्तरेणानुभवेऽनिष्ठा तत्रापि च स्मृतिः ।
विषयान्तरसञ्चारस्तथा न स्यात् स चेष्यते ॥" इति ॥

1. तदैव च. चौ. अनन्त मु.    2. भवेदस्य. चौ. अनन्त. मु.

**ज्ञानपृष्ठेन योऽप्यूर्ध्वमर्थाभावेऽपि दृश्यते ।**
**परामर्शोऽर्थरूपस्य स कथं [1]चोपपद्यते ॥ २८ ॥**

**तद्रूपमर्थमालिख्य यदि धीर्नोपजायते ।**
**भूतकाले च यद्यर्थस्तत्पूर्वं नोपलक्षितः ॥ २९ ॥**

**वक्तारश्चापि दृश्यन्ते वर्तमानार्थबुद्धिषु ।**
**नीलोऽर्थोऽयं यतो मेऽत्र तद्रूपा जायते मतिः ॥ ३० ॥**

**तस्मात् पूर्वगृहीतासु बुद्धिष्वर्थोपलम्भनम् ।**
**न चोपलब्धिरस्तीह निराकारासु बुद्धिषु ॥ ३१ ॥**

**विवेकबुद्ध्यभावाच्च साकारस्य च दर्शनात् ।**

इतश्च ज्ञानपुरःसर एवार्थानुभवः, ज्ञानाकारश्च नीलादिरित्याह—**ज्ञानपृष्ठेनेति** द्वयेन । ज्ञातमर्थमुत्तरकालं परस्मै कथयन् ज्ञानपुरःसरमेव स्मृत्या परामृश्य कथयति 'ज्ञातो मया घटः' इति, यथानुभवं च कथनम्; तथातीतेऽनागते चार्थेऽर्थाकारस्य नीलादेः परामर्शोऽसति ज्ञानाकारत्वे नोपपद्यते; न ह्यसता धीरनुरज्यते । अतो ज्ञानपुरःसरमेवार्थग्रहणम्; ज्ञानाकारश्च नीलादिः; ज्ञानपृष्ठेन योऽप्यूर्ध्वं परामर्शोऽर्थरूपस्य, स कथमुपपद्यते? भूतकाले च यद्यर्थस्तत्पूर्वं नोपलक्षितः इति नान्वयः तथार्थाभावे यः परामर्शोऽरूपस्य स कथमुपपद्यते? तद्रूपमर्थमालिख्य यदि धीर्नोपजायत इति ॥

न केवलमनुभूतार्थकथनम्, अनुभूयमानकथनमप्येवमेवेत्याह—**वक्तारश्चापीति** ॥

उपसंहरति—**तस्मादित्यर्धेन** । भवतु ज्ञानपुरःसरमर्थग्रहणम्, तथापि कथं नीलादेर्ज्ञानाकारत्वमित्याह—**न चेत्यर्धेन** । 'नीलमिदम्' इति नीलाकारं वस्तु प्रथते, न निराकारमिति ॥

एवमर्थोऽपि साक्षात्कारः स्यात्, यद्याकारद्वयं दृश्यते; नतु तदस्तीत्याह—**विवेकबुद्ध्यभावाच्चेति** । यदि न किञ्चिदपि साकारं वस्तु दृश्येत, ततोऽर्थवज्ज्ञानं साकारं न स्यात्; दृश्यते किञ्चित् साकारं वस्त्वित्याह—**साकारस्य च दर्शनादिति** । तस्माद्धेतुद्वयाज्ज्ञानं साकारम्, नार्थ इत्याह—**साकारेत्यर्धेन** ।

1. बोपपद्यते. चौ. अनन्त. मु.

[1]आकारवत्तया बोधो ज्ञानस्यैव प्रसज्यते ॥ ३२ ॥

न ह्येवं कल्पना शक्या निराकारादितो मतिः ।
गृह्यतेऽर्थस्ततः पश्चात् साकारः संप्रतीयते ॥ ३३ ॥

आकारवत्त्वभेदो[2] हि ज्ञात्वा शक्येत भाषितुम् ।
प्राग् बुद्धिग्रहणादर्थे संवित्तिर्नेति साधितम् ॥ ३४ ॥

न चार्थाकार एवायं ज्ञानारूढः प्रतीयते ।
न हि सोऽन्तःप्रवेशाय पर्याप्तो नार्थहानये ॥ ३५ ॥

इत्थंभावे प्रमाणं च तस्य वक्तुं न शक्यते ।
तदीयप्रतिबिम्बत्वमेतस्मादेव नेष्यते ॥ ३६ ॥

निश्चन्द्रबिम्बरूपं हि दृष्टं येन दिवा जलम् ।
स रात्रौ खे च तं दृष्ट्वा जानाति प्रतिबिम्बताम् ॥ ३७ ॥

प्रथमहेतुं विवृणोति—**न ह्येवमिति** ॥

द्वितीयं विवृणोति—**आकारवत्त्वेत्यर्धेन** । यदि त्वगृहीतैव बुद्धिरर्थं गृह्णीयात् ततस्तस्या निराकारत्वमर्थस्य चाकारवत्त्वं सिद्ध्येत्, न तु तदस्तीत्युक्तमित्याह—**प्रागित्यर्धेन** ॥

केचित्त्वाहुः—सत्यं नीलाकारतया ज्ञानं गृह्यते, न त्वसावाकारः तस्यैव ; किन्त्वर्थाकार एवासौ ज्ञाने समारूढो दृश्यत इति ; तान् निराकरोति—**न चेत्यर्धेन** । कारणमाह—**न हीत्यर्धेन** । कथं खल्वर्थधर्मः स्वाश्रयं हित्वान्तरं ज्ञानं प्रविशेदिति ॥

ज्ञानाकारतया गृह्यमाणस्य निष्प्रमाणकमर्थधर्मत्वमित्याह—**इत्थमित्यर्धेन** । मा नामार्थं विहासीत् ; अर्थस्थस्यैव प्रतिबिम्बमिदं नीलरूपं स्वच्छादर्शसङ्काशे ज्ञाने प्रकाशते, तत्राह—**तदीयेत्यर्धेन** । एतस्मादिति प्रमाणाभावादित्यर्थः ॥

एवं हि प्रतिबिम्बता प्रमाणवतीत्याह—**निश्चन्द्रेति** ॥

1. साकार. अनन्त. मु. मा.    2. वत्त्वभेदोऽत्र. अनन्त. मु.

विज्ञाने न कदाचित् तु प्राङ्निराकारदर्शनम् ।
बाह्ये चाकारवत्ताधीर्येनैवं कल्पना भवेत् ॥ ३८ ॥

शब्दगन्ध[1]रसादीनां कीदृशी प्रतिबिम्बता ।
[2]ज्ञाने च गृह्यमाणस्य कथं स्यादर्थधर्मता ॥ ३९ ॥

बाह्याभ्यन्तरदेशत्वान्न चार्थज्ञानयोर्मिथः ।
संपर्कोऽस्ति यतो मोहादविवेकमतिर्भवेत् ॥ ४० ॥

असंमूढस्य [3]चादृष्टेर्न संमोहप्रकल्पना ।
कल्प्यमानेऽथ वाप्येवं न द्वयोरवतिष्ठते ॥ ४१ ॥

संसर्गधर्म आकारस्तस्मादेव न युज्यते ।

न त्वेवमत्रास्तीत्याह **विज्ञान इति** ॥

चाक्षुषाणामेव प्रतिबिम्बं दृष्टम्, अतः कथं शब्दादीनां ज्ञाने दर्शनमित्याह—**शब्दगन्धरसादीनामि**त्यर्धेन । न केवलं प्रतिबिम्बत्वमप्रमाणकम्, अर्थधर्मत्वमप्यप्रमाणकमित्याह—**ज्ञाने चे**त्यर्धेन ॥

मा भूत् प्रतिबिम्बम्, ज्ञानार्थौ तु संसृष्टौ संमोहाद[1]विविञ्चन्नर्थधर्मं नीलं ज्ञानेऽध्यवस्यति, अत्राह—**बाह्याभ्यन्तरदेशत्वादिति** ॥

किञ्च सर्वस्य जगतः संमोहकल्पनमतिसाहसम्; न हि कश्चिदप्यसंमूढो दृश्यते इत्याह—**असंमूढस्ये**त्यर्धेन । तदेवं सत्यपि संमोहकल्पना न द्वयोरेवावतिष्ठते; अर्थसहस्रस्याकारः संसर्गसंमूढमेकवदवभासत इति किं न कल्प्यत इत्याह—**कल्प्यमान** इत्यर्धेन ॥

केचित्त्वाहुः—न ज्ञानधर्मो नीलादिः, न चार्थस्य निराकारयोरेव तयोः संसृष्टयोरयं निष्पद्यते चूर्णहरिद्रयोरिवारुणिमेति; तान्निराकरोति—**संसर्गधर्म** इत्यर्धेन ।

1. रसानां च. चौ. अनन्त. मु.
2. ज्ञाने न PRC।
3. चादृष्टे न स. चौ. अनन्त. मु.
4. दपिकिञ्चनार्थ. मा.

देशभेदादसंसर्गो मूर्तामूर्ततया तथा ॥ ४२ ॥

त्रैलोक्येन प्रसङ्गाच्च संसर्गो नैककालता ।
न चाप्यार्जवतः स्थानं ज्ञानेनार्थस्य विद्यते ॥ ४३ ॥

सर्वथा कल्पनायां च चक्षुषापि रसादयः ।
गृह्येरन् सर्वभावानामण्वाकाराश्च तद्गताः ॥ ४४ ॥

न चापि विषयत्वेन स्थाने संसर्गकल्पना ।
विषयत्वं हि कीदृक् स्यात् प्रागाकारोपलम्भनात् ॥ ४५ ॥

न ह्यसंवेदितो भावो विषयत्वेन कल्प्यते ।
विषयत्वात् तदाकार आकाराद् विषयश्च[1] ते ॥ ४६ ॥

तस्मादित्येतद् विवृणोति—**देशभेदादसंसर्ग इति**। किञ्च मूर्तयोरेव संसर्गादाकारो निष्पद्यते, न मूर्तामूर्तयोः; नाप्यमूर्तद्वयस्य; [2]तदिह ज्ञानं तावदमूर्तम्, अर्थस्तु यदि मूर्तो यदि वामूर्तो द्वेधापि नानयोः संसृष्टयोराकारो निष्पद्यत इत्याह—**मूर्तामूर्ततया तथेति** ॥

ननु तस्यापि देशभेदे कालैक्यात् संसर्गो भविष्यत्यत्राह—**त्रैलोक्येनेत्यर्धेन**। ज्ञानसमयवर्तिनां सर्वेषामीदृशसंसर्गसम्भवात् सर्वेषामाकाराः ज्ञान एकस्मिन्नुपलभ्येरन्निति। यदि ज्ञानार्जवेन आभिमुख्येनार्थस्यावस्थानं संसर्गः, तत्राह—**न चापीत्यर्धेन**। ज्ञानस्याभिमुख्याभावादिति ॥

किञ्च, येनैवार्थेन ज्ञानं संसृज्यते, तेनैव सर्वात्मना प्राप्नोति; न हि संसर्गे कश्चिदंशः परिहर्तुं शक्यते; ततश्चैकस्मिन् घटादौ भावे चक्षुषानुभूयमाने तद्गता रसादयः परमाणवश्चानुभूयेरन्नित्याह—**सर्वथेति** ॥

विषयतयावस्थानमर्थस्य संसर्गः, न चातिप्रसङ्ग इति चेत् तत्राह—**न चेत्यर्धेन**। कारणमाह—**विषयत्वमित्यर्धेन** ॥

किमिति विषयत्वं न भवत्यत्राह—**न हीत्यर्धेन**। एवं चेतरेतराश्रयं स्यादित्याह—**विषयत्वादित्यर्धेन**। विषयत्वरूपादेव हि संसर्गादाकारनिष्पत्तिः; आका-

1. च सः. चौ. अनन्त. मु. 2. तदहमज्ञानम्. मा

द्वयोराकारनिर्मुक्तं सत्त्वं संसृष्टतां तथा ।
स्वरूपतः परिच्छिद्य वक्तुमित्यादि युज्यते ॥ ४७ ॥

न चाप्यस्येह सद्भावः प्राग्गृहीतो न चोपरि ।
न ह्याकारविनिर्मुक्तं ग्राह्यमस्तीति भाषितम् ॥ ४८ ॥

तस्मादर्थेन संसर्गो निष्प्रमाणक एव ते ।
ज्ञानवैचित्र्यसिध्यर्थं न चास्त्यर्थस्य कल्पना ॥ ४९ ॥

तदधीनं हि वैचित्र्यं क्व दृष्टं येन कल्प्यते ।

रनिष्पत्तौ चोपलभ्यमानत्वलक्षणं विषयत्वम्, निराकारोपलम्भाभावात्; ततोऽन्योन्याश्रयमिति ॥

किञ्चैवंविधे विषये संसर्गधर्मत्वमाकारस्य युक्तमित्याह—**द्वयोरिति** ॥

[1]न चैवमस्तीत्याह—**न चे**त्यर्धेन । कथमित्याह—**ने**त्यर्धेन ॥

उपसंहरति—**तस्मादि**त्यर्धेन । नन्वसत्यप्यर्थसंसर्गे यदिदं नीलपीतादिरूपेण ज्ञानानां वैचित्र्यम्, तन्नोपपद्यते; न च समनन्तरप्रत्ययमात्रादस्योत्पत्तिः संभवति, तस्य सर्वत्राविशिष्टत्वादविलक्षणेन च विलक्षणकार्यनिष्पत्त्ययोगात् । एवमालोकेन्द्रियमनस्काराणामपि साधारण्यादेव वैचित्र्यानिमित्तत्वम् । तदिदं नीलरूपमन्येषु सत्स्वपि कदाचिदनुत्पद्यमानं कारणभूतमर्थसंसर्गं कल्पयतीत्यत्राह—**ज्ञानवैचित्र्यसिद्ध्यर्थमिति** । न ह्यर्थसंसर्गकृतं वैचित्र्यम्, यतस्तद्दर्शनादर्थसंसर्गः कल्प्यत इति । किञ्च, संसर्गधर्माकारवादिनां प्राक् संसर्गान्निराकारोऽर्थः ज्ञानं च; तत्कथं संसर्गादाकारो निष्पद्यते कथंतरां च तद्वैचित्र्यमित्याह–**निराकारेणे**त्यर्धेन ।

"तत्र तावदिदं सिद्धम्" इति श्लोकमारभ्य "निराकारेण" इति श्लोकपर्यन्तं [2]विज्ञानाकारवादः प्रतिक्षिप्तः । ये तु ज्ञानवैचित्र्यसिद्ध्यर्थमर्थमपि नीलपीतादिविचित्राकारं कल्पयन्ति, तेषां सौत्रान्तिकाणामपि तुल्यमिदं निराकरणम्—**तदधीनं हि वैचित्र्यं क्व दृष्टं येन कल्प्यते** । इति । अयमभिप्रायः—स हि

1. नन्वेवम्. मा.     2. omitted. विज्ञान...करणम्. मा.

**निराकारेण चोत्पत्तिर्वैचित्र्याकारयोः कथम् ॥ ५० ॥**

**निराकाराच्च विषयाद् बुद्ध्याकारोऽतिविस्मयः ।**
**स्मृतिस्वप्नादिबोधेन स्यादनाकारता तत्र ॥ ५१ ॥**

**न हि तत्रार्थसंसर्गः केवला वासनैव तु ।**
**हेतुत्वेनोपपन्नेति सैव जाग्रद्धियामपि ॥ ५२ ॥**

नीललक्षणोऽर्थः प्रत्यक्षो वा स्यादनुमेयो वा ? न तावत् प्रत्यक्षः, अपरोक्षधियोप लम्भाभावात्; नानुमेयः, नीलज्ञानलक्षणलिङ्गकसमधिगम्ये तस्मिन्नीलज्ञानस्य तदुत्पत्तिलक्षणसम्बन्धग्रहणाभावात्; नित्यानुमेये तस्मिन्नीलज्ञानस्य तदधीनता तत्कार्यता न क्वचिद् दृष्टेत्यर्थः ।

ननु कादाचित्कत्वमङ्कुरादौ हेतुमत्त्वेन व्याप्तम् ; नीलज्ञानेऽपि तदुपलभ्यमानं कारणमवगमयति; इन्द्रियविषयान्तरसद्भावेऽपि क्वचिदनुत्पादादुभयवैलक्षण्येन तदनुमीयमानं नीलमेव स्यात् । नैतदेवम् ; नीलाभावेऽपि नीलज्ञानदर्शनेन वासनाधीनत्वान्नैकान्ततो नीलज्ञानं नीलमेवावगमयति । ननु च यथा साकारोऽर्थो निराकारं विज्ञानमनुमापयति, एवं नीलाकारमपि विज्ञानं अनीलमर्थमनुमापयतीत्याशङ्क्याह—**निराकारेण चोत्पत्तिर्वैचित्र्याकारयोः कथम्** ॥ इति ॥

ननु चक्षुरिन्द्रियमनीलमपि नीलज्ञानं जनयति; तत्कथमुच्यते—निराकारेण चोत्पत्तिरित्याशङ्क्याह—**निराकाराच्चे**त्यर्धेन । आलम्बनत्वेन ह्यर्थस्य कारणत्वम् ; न च नीलाकारस्य ज्ञानस्यानीलमालम्बनं युक्तमित्यर्थः । तदुक्तम्—

"स्वरूपविपरीतस्य कथं ग्राह्यं भविष्यति" इति ।

संसर्गधर्माकारवादिनस्त्वयमपरो दोषः—अर्थाभावेऽपि स्मार्तं विज्ञानमुत्पद्यते स्वप्नावस्थायां च ; तत्राकारोपलम्भो न स्यात्, अर्थाभावेन संसर्गाभावादित्याह—**स्मृती**ति त्रिपाद्या ।

अतो यथा स्वप्नावस्थायामनपेक्षितबाह्यार्थं वासनामात्रजन्यं नीलपीताद्याकारं विज्ञानम्, एवं जाग्रदवस्थायामपि भविष्यतीति न साकारविज्ञानपक्षे परिकल्पनायां किञ्चित् प्रमाणमित्याह—**केवले**ति त्रिपाद्या ॥

अन्वयव्यतिरेकाभ्यामेवं ज्ञानस्य गम्यते ।
आकारो न हि बाह्यस्य ज्ञानापेतो निदर्श्यते ॥ ५३ ॥

[1]बाह्यापेतो मया यद्वत् तस्मात् संसर्गवागियम् ।
निराकारेऽपि विज्ञाने वासनास्वेव युज्यते ॥ ५४ ॥

द्वयोरप्येक आकार इत्ये[2]तच्चाप्रमाणकम् ।
देशभेदा[3]दसंसर्गाद् द्वयोश्चानवधारणात् ॥ ५५ ॥

एवमेवार्थबुद्ध्योः स्यात् सादृश्यान्नाविभक्तता ।
भेदे ज्ञाते हि सादृश्यं नाज्ञाते स्यात् खपुष्पवत् ॥ ५६ ॥

तथा द्विचन्द्रमायादावन्यथार्थे व्यवस्थिते ।
या स्यादाकारसंवित्तिर्नासावर्थनिबन्धना ॥ ५७ ॥

अन्वयव्यतिरेकाभ्यां चैतदवगम्यते, यदुत विज्ञानस्यैवायमाकारो नार्थस्य तत्संसर्गस्य वा; अर्थाभावेऽपि स्वप्नावस्थायामाकारदर्शनाद् विज्ञानभावे चादर्शनादित्याह—**अन्वयेति** सपादश्लोकेन ।

तस्मात् संसर्गवादिनामपि वासनाविज्ञानयोर्य· संसर्गः, तद्धर्मोऽयमाकार इत्यभ्युपगन्तव्यम्; नार्थज्ञानयोः, अर्थाभावेऽपि स्वप्नावस्थायामाकारदर्शनादित्याह—**तस्मादिति** त्रिपाद्या ॥

न चाप्यर्थज्ञानयोरेकेनाकारेणाकारवत्ता, संसर्गाभावेन द्वयानवधारणे तत्र प्रमाणाभावादित्याह—**द्वयोरिति** ॥

अथ सत्यपि द्वित्वे द्वयानवधारणं सादृश्यात्, तन्न; भेदावगतिपूर्वकत्वात् सादृश्यस्य; अनवगते तु भेदे शशविषाणखपुष्पयोरपि सादृश्याभावादित्याह—**एवमिति** । एवमेवाप्रमाणकमित्यतिदेशः ॥

अर्थाकारपक्षे च द्विचन्द्रमायादावाकारोपलम्भो न स्यात्, अर्थाभावादित्याह—**तथेति** ॥

1. बाह्योपेतः. अनन्त. मु.
2. तस्याप्रमाणता. चौ. अनन्त. मु.
3. असंसर्ग चौ. मु.

नक्षत्रं तारका तिष्यो दारा इत्येवमादिषु ।
नैकत्रार्थे विरुद्धत्वाल्लिङ्गानेकत्वसम्भवः ॥ ५८ ॥

परिव्राट्कामुकशुनां कुणपादिमतिस्तथा ।
दीर्घह्रस्वत्वबुद्धिश्च ह्येकस्मिन्नप्यपेक्षया ॥ ५९ ॥

घटत्व[1]पार्थिवद्रव्यसञ्ज्ञेयादिमतिस्तथा ।
युगपद्ग्राहकाणां च न स्यादैकात्म्यवत्तया ॥ ६० ॥

नार्थे ह्येकत्र युगपद् विरुद्धाकारसम्भवः ।
प्रत्ययानां [2]तु भिन्नत्वाद् भवेच्छक्त्यनुसारतः ॥ ६१ ॥

निरपेक्षं स्वरूपेण तस्माज्ज्ञानं यदाकृति ।
तथार्थो न यथार्थं तु ज्ञानमुत्पद्यते क्वचित् ॥ ६२ ॥

यद्प्येकस्मिन्नर्थे विरुद्धधर्मद्वयप्रतिभासं विज्ञानत्रयमुत्पद्यते—नक्षत्रम्, तारा, तिष्यः; दाराः इति बहुत्वप्रतिभासश्चार्थाकारपक्षे न स्यात्; एकस्य विरुद्धानेकधर्मत्वं च विप्रतिषिद्धमित्याह—**नक्षत्रमिति** ॥

अत्रैवोदाहरणान्तरमाह—**परिव्राडि**त्यादिना सार्धेन श्लोकेन ।

'तत्रैतत् स्यात्—एकस्याप्यर्थस्य विरुद्धानेकाकारता कालभेदेन नैव विरुद्ध्यते यथैकत्र द्रव्ये रक्तारक्तत्वे इत्याशङ्क्याह—**युगपदि**त्यर्धेन । परिव्राट्कामुकशुनामेकस्मिन् प्रमदारूपेऽर्थे युगपदनेकाकारतावसीयत इत्यर्थः ॥

तस्मादेकत्वादर्थस्य युगपदनेकाकारता नोपपद्यते, विज्ञानानां तु भिन्नत्वादुपपद्यत इत्याह—**नार्थ इति** सपादेन । शक्तिशब्देन वासनामाह; वासनाकारेणेति यावत् । एतदुक्तं भवति—नीलज्ञानजनिता वासना अनपेक्षितबाह्यार्था स्वप्नावस्थायामिव जाग्रदवस्थायामपि नीलज्ञानं जनयतीति । तस्मादर्थस्यापि नीलाकारतामिच्छता विज्ञानस्यापि साभ्युपगन्तव्या, तदधीनत्वादर्थसद्भावस्य; न तु ज्ञानस्य नीलाकारतार्थाधीना, तदभावेऽपि दर्शनादित्याह—**तस्मादिति** त्रिपाद्या ॥

1. त्वपार्थिवद्रव्यसंज्ञे. चौ. अनन्त. मु.  2. च. अनन्त. मु.

इत्थं विज्ञानतन्त्रत्वे को न्वर्थं कल्पयिष्यति ।
धीरनारोपिताकारा स्वात्मन्येवोपयोक्ष्यते ॥ ६३ ॥

नैतदस्ति [1]त्वयैवैकं ग्राह्यं ग्राहकमिष्यते ।
न चैकस्यैवमात्मत्वे दृष्टान्तः कश्चिदस्ति ते ॥ ६४ ॥

अग्न्याद्यो घटादीनां प्रसिद्धा ये प्रकाशकाः ।
न ते प्रकाश्यरूपा हि प्रकाशस्यानपेक्षणात् ॥ ६५ ॥

ग्राह्यत्वं तु यदा तेषां तदाक्षं ग्राहकं मतम् ।
अक्षग्रहण[2]वेलायां ग्राहिका धीर्भविष्यति ॥ ६६ ॥

ततः किमिति चेदित्याह—**इत्थमिति** । अर्थनीलता चेद् विज्ञाननीलताधीना, तर्हि नीलद्वयोपलम्भाभावे वृथा अर्थकल्पनमिति ॥

एवं प्राप्त उच्यते—**नैतदस्तीत्यर्धेन** । अयमभिप्रायः—सर्वस्यास्य भावितस्यायमर्थः 'नीलमिदं' इति विज्ञानमुत्पद्यमानमात्मानमेव प्रकाशयदुत्पद्यत इति ; न हि नीलपीतादयः परप्रकाश्याः ; नापि 'नीलम्' इत्यनुभवः परप्रकाशकः ; नीलादय एव तु प्रकाश्यप्रकाशकोभयाकारयुक्ताः । तदुक्तम्—

"नान्योऽनुभाव्यो बुद्ध्यास्ति न तस्यानुभवोऽपरः ।
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥" इति ।

तदनुपपन्नम्, एवंविधत्वकल्पनायां प्रमाणाभावात् । तत्र दृष्टान्ताभावेनानुमानं निराकर्तुमाह— **न चैकस्येत्यर्धेन** ॥

नन्वग्न्यादयः स्वपरप्रकाशका इष्यन्त एव ; किमुच्यते "न चैकस्यैवमात्मत्वे" इत्याशङ्क्याह—**अग्न्यादय इति** । न हि चक्षुरिन्द्रियमालोके प्रवर्तमानमालोकं सहकारिणमपेक्षते ; यदि ह्यनालोक इवालोकेऽपि आलोकं सहकारिणमपेक्षते, ततः प्रकाशान्तराभावादात्मन एवात्मनि प्रकाशकत्वं स्यात् ; न तु तदस्तीत्यर्थः ॥

यदि ह्यग्न्यादयः स्वप्रकाशा न भवन्ति, तत्सद्भावे तर्हि किं प्रमाणमित्याशङ्क्याह—**ग्राह्यत्वमित्यर्धेन** । अक्षस्यैव तर्हि ग्राह्यग्राहकभावेन दृष्टान्तत्वं भवतीत्याशङ्क्याह—**अक्षग्रहणवेलायामित्यर्धेन** । विषयप्रतिपत्त्यन्यथानुपपत्तिजन्या हि बुद्धिरक्षं गृह्णातीत्यर्थः ॥

1. त्वयैकं हि ग्राह्यम्. चौ. मु.  2. णकाले. चौ. अनन्त. मु.

**तस्यां तु गृह्यमाणायामन्या धीर्ग्राहिकेष्यते ।**
**नन्वात्मा ग्राहको ग्राह्यो भवताभ्युपगम्यते ॥ ६७ ॥**

**कथंचिद्धर्मरूपेण भिन्नत्वात् प्रत्ययस्य [1]तत् ।**
**ग्राहकत्वं भवेत् तत्र ग्राह्यं द्रव्यादि चात्मनः ॥ ६८ ॥**

**यस्तु नात्यन्तभेदोऽत्र क्व वासाविष्यते मया ।**
**प्रत्यासत्तिनिमित्ता तु प्रत्यगात्म[2]प्रवर्तिता ॥ ६९ ॥**

**अस्मत्प्रयोगसंभिन्ना ज्ञानस्यैव तु कर्तरि ।**
**भवन्ती तत्र संवित्तिर्युज्येताप्यात्मकर्तृका ॥ ७० ॥**

न चाक्षग्राहिकैव बुद्धिः स्वप्रकाशिकेत्याह—**तस्यां त्वित्यर्धेन** । अप्रतिपत्त्यन्यथाप्रतिपत्तिजन्या हि बुद्धिरक्षग्राहिकां बुद्धिं गृह्णीयादित्यर्थः ।

आत्मनस्तर्हि ग्राह्यग्राहकभावेन दृष्टान्तत्वं भविष्यतीति चोदयति—**नन्वित्यर्धेन** ॥

तत्रापि धर्मभेदेन ग्राह्यग्राहकयोर्वैशेषिकाभिमतेन भेदोऽस्तीत्याह—**कथञ्चिदिति** । बोधरूपतया तस्य ग्राहकत्वं द्रव्यरूपतया तस्य [3]ग्राह्यत्वमित्यर्थः । 'प्रत्ययस्य तत्' इति बोधरूपतामाह ॥

अत्यन्तभेदस्तु घटतज्ज्ञानयोरस्माभिर्नैवेष्ट इत्याह—**यस्त्वित्यर्धेन** । प्रत्यासत्तिलक्षणेन सम्बन्धेनात्मसम्बन्धिनो बोधरूपस्य आत्मसम्बन्धिन्यामेव द्रव्यरूपतायां प्रवर्तितेत्याह—**प्रत्यासत्तीत्यर्धेन** । कदाचिदात्मसम्बन्धिनी बोधरूपतास्य विषयः, तत्र घटादयो बोध्याः; कदाचित् प्रत्यासत्तिलक्षणेन सम्बन्धेनात्मगतद्रव्यरूपता विषयः, तदात्मैवात्मनो बोध्य इत्युच्यते; [4]तत्रापि न ग्राह्यग्राहकयोरैक्यमित्यर्थः ॥

इदानीं स्वमतेन परिहारमाह—**अस्मत्प्रयोगसंभिन्नेति** । अपिशब्दस्यायमर्थः—भवत्यात्मसम्बन्धिनी ज्ञातृतैव ग्राह्या ज्ञातृतैव ग्राहिका, तथापि ग्राह्यग्राह-

1. यत्. अनन्त. मु.
2. प्रवृत्तिता. अनन्त मु.
3. ग्राहकत्व. मा.
4. तत्रापि ग्राह्य. मा.

[1]न चात्र करणज्ञानग्राहकाकारवेदनम् ।
ग्राह्यत्वं येन बुद्धेः स्यादभिन्नत्वेऽपि पूर्ववत् ॥ ७१ ॥

[2]अन्याकारापि संवित्तिर्यद्यन्यविषयेष्यते ।
ज्ञानाकारापि संवित्तिः कस्मान्नार्थस्य कल्प्यते ॥ ७२ ॥

कयोर्भेदः; यस्माद् विषयभेदेन सैव भिद्यते; न हि पटगतज्ञा[3]तृतायामघटं जानाति; तत्र यदा घटादिविषया ज्ञातृता ग्राह्या भवति, तत्रात्मविषया ग्राहिका 'घटमहं जानामि' इति । एतदुक्तं भवति—घटं जानन्तमात्मानं जानामीति । अथापि किं तर्हि तेन युक्तं [4]यद्यात्मकर्तृका संवित्तिर्विज्ञानस्य कर्तरि समुपजायते ? एतदुक्तं भवति—युक्तं तद्यदात्मकर्तृकायां संवित्तौ संवेदनकर्तुरेवात्मनः कर्मत्वम्; स्वयं-प्रकाशत्वे वा कर्मत्वाभावेऽस्मत्प्रयोगसंभिन्नत्वात् संवित्तेः 'घटमहं जानामि' इत्यस्मदर्थप्रतिभासनादित्यर्थः ॥

इदानीमात्मज्ञानेन सह विषयज्ञानस्य वैलक्षण्यमाह—[5]**न चात्रेति** । न खलु नीलानुभवे 'नीलमहम्' इत्यात्मतया भासन्ते नीलादयः; 'नीलम्' इत्यनात्मतया प्रतिभासनात् । यदि विज्ञानसम्बन्ध्याकारत्रयं करणरूपता बोधरूपता ग्राहकरूपता च नीलादिगतत्वेन चेत्यन्ते, ततः स्वयं सा बुद्धिर्नीलादिभावेन प्रकाशेताभिन्नत्वेनात्मना, [6]नात्र नीलादौ करणज्ञानग्राहकाकारवेदनमस्ति, येन बुद्धिरेव नीलादिभावेन प्रकाशेत । आकारवेदनमिति च करणादिषु प्रत्येकं संबध्यते । यदि नीलादयो ग्राहकत्वेनावभासन्ते, ग्राहको वा नीलादिग्राह्यतयावभासेत, तदा प्रतिभासबलेनाभिन्नस्यैव प्रकाश्यप्रकाशकभावो भवेत् । पूर्ववदिति अत्रात्मनो दृष्टान्तत्वेनोपपादनम् ॥

अथ सत्यप्यनात्मतयावभासे विपर्ययज्ञान इव ग्राहकस्यात्मभूता एव नीलपीतादयः, यथोक्तम्—"यदन्तर्ज्ञे[7]यम्, तद्बहिरिवावभासते" इत्याशङ्क्याह—**अन्याकारापीति** । यदि विनैव बाधकप्रत्ययेनावभासितस्यान्यथात्वम्, तदात्मा-

1. न त्वत्र. अनन्त मु.
2. अन्यरूपापि. चौ. मु.
   कारा हि. मा.
3. तयामाघटज्ञानाति. मा.
4. तद्यदात्म. मा.
5. न खलु. मा.
6. चित्तनीला. मा.
7. यत्वे तद्बहिरवभा. मा.

**अभिन्नत्वं यदा चेष्टं ग्राह्यग्राहकवस्तुनोः ।**
**तदान्यतरसंवित्तौ द्व्याकारग्रहणं भवेत् ॥ ७३ ॥**

**यदा तु ग्राह्यमाकारं नीलादि प्रतिपद्यते ।**
**न तदा ग्राहकाकारा संवित्तिर्दृश्यते क्वचित् ॥ ७४ ॥**

**तस्मादभिन्नता चेत् स्यात् तस्याप्यनुभवो भवेत् ।**
**ग्राह्यो वा नानुभूयेत ग्राहकाननुभूतिवत् ॥ ७५ ॥**

**ग्राहकग्रहणेऽप्येवं ग्राह्यसंवेदनं भवेत् ।**
**शुद्धमेव निराकारं ग्राहकं संविदस्ति हि ॥ ७६ ॥**

वभासेऽपि अनात्मैवात्मवत् स्यात्; विपर्ययज्ञाने तु युक्तमवभासितस्यान्यथात्वं बाधकप्रत्ययसद्भावे । अपि च विपर्ययज्ञानेऽप्यनात्मान एव नीलपीतादयः, तथावभासनात् । बाधकप्रत्ययसमवधानेन त्वेतावद् भवतु, यदुताविद्यमाना नीलपीतादयोऽवभासन्त इति; न तु ग्राहकानन्यत्वे किञ्चन प्रमाणमस्ति । तदुक्तम्— "बाह्यालम्बनतायां नौ विवादः ।" इति ॥

एवं प्रतिभासबलेन भेदमुक्त्वा अधुनैतदेव तर्केण दर्शयितुमाह—**अभिन्नत्वमिति** ॥

यदि ग्राह्यनीलादेरभिन्नमेव ग्राहकं भवेत्, ग्राहकाद्यनुभवाभिन्नं नीलपीतादि यथोक्तम्—"सहोपलम्भनियमात्" इति, तदा ग्राह्यग्राहकाभेदेन नीलादयोऽवभासेरन्; ग्राहकश्चानुभवोऽवभासेत, न तु नीलादयो ग्राहकतयावभासन्ते, अन्यनिष्ठस्य नीलादेरप्रतिभासनादित्याह—**यदा त्विति** ॥

नीलतद्बुद्ध्योरभिन्नत्वे तु ग्राह्यस्य ग्राहकतयाप्यवभासो भवेत, ग्राहकतया प्रतिभासाभावे वा ग्राह्यतयापि प्रतिभासो न स्यादित्याह—**तस्मादिति** ॥

एवमेव ग्राहकस्य ग्राह्यतयाप्यवभासो भवेदित्याह—**ग्राहकेत्यर्धेन** । अस्ति तु नीलपीतादिग्राह्यपरामर्शशून्यस्य ग्राहकस्य संवेदनमित्याह—**शुद्धमित्यर्धेन** ॥

ग्राह्यादभिन्नतायां च सा संवित्तिर्न युज्यते ।
ग्राहको वा न गृह्येत तद्ग्राह्याननुभूतिवत् ॥ ७७ ॥

तथा[1] च ग्राह्यसंवित्तौ ग्राहकग्रहणेऽपि वा ।
ग्राह्यग्राहकसंवित्तिर्नास्त्येव स्याद् द्वयोरपि ॥ ७८ ॥

स बहिर्देशसम्बद्ध इत्यनेन निरूप्यते ।
ग्राह्याकारस्य संवित्तिर्ग्राहकानुभवादृते ॥ ७९ ॥

परं प्रति न साध्यत्वादर्थस्याकारसिद्धये ।
बहिर्देशेन सम्बन्धो न हेतुत्वाय कल्पते ॥ ८० ॥

तस्माद् बहिरितीहेदं निष्कृष्टं ग्राहकांशतः ।
संवेद्यं नीलपीतादि प्रत्यक्षादेरुदाहृतम् ॥ ८१ ॥

नीलतद्बुध्योरभिन्नत्वे ग्राहकस्य नीलादिपरामर्शशून्या संवित्तिर्युक्तेत्याह— **ग्राह्यादित्यर्धेन**। ग्राह्यनीलादिपरामर्शाभावेन च ग्राहकपरामर्शो न स्यादित्याह— **ग्राहको वेत्यर्धेन** ॥

तथा च नीललक्षणोऽर्थो ग्राह्यतया न संचेत्यते ; तद्ग्राहको वा नीलादिर्बोध्यतया एवमुभयग्रहणेऽप्युभयग्रहणं नास्तीत्याह—[2]**तथाचेति** ॥

यदेतत् संवेदनपरामर्शेन 'नीलमिदम्' इत्यनात्मतया प्रतिभासात् ग्राहकस्यायमनात्मा नीलादिर्गृह्यत इति प्रतिपादितम्, तत्र "स हि बहिर्देशसम्बद्धः प्रत्यक्षमुपलभ्यते" इति भाष्यं योजयितुमाह—**स बहिरिति**। "स बहिर्देशसम्बद्धः" इत्यनेन ग्राहकशून्यस्य नीलादेर्ग्रहणं दर्शयति। अपरे त्वेतद् भाष्यमेवं व्याचक्षते—नीलपीतादि धर्मी, अर्थस्यायमाकार इति साध्यो धर्मः, बहिर्देशसम्बन्धितया प्रतीयमानत्वादिति हेतुः। तन्निराकर्तुमाह— **परं प्रति त्रिति**। प्रतिवादिनो विज्ञानमात्रतया बहिर्देशस्यासिद्धत्वादसिद्धो [3]हेतुरित्यर्थः ॥

तस्मात् पूर्वैव व्याख्या शोभनेत्याह—**तस्मादिति** ॥

1. यथा च अनन्त. मु.
2. यथावदिति चौ. मु.
3. हेतुत्वादित्यर्थः मा.

**न पूर्वं ज्ञायते बुद्धिरित्यत्रैतद् वदिष्यते ।**
**ग्राहकस्यैव संवित्तिर्लक्ष्यते ग्रहणे क्वचित् ॥ ८२ ॥**

**न स्मरामि मया कोऽपि गृहीतोऽर्थस्तदेति हि ।**
**स्मरन्ति ग्राहकोत्पादं ग्राह्यरूपविवर्जितम् ॥ ८३ ॥**

**तस्मादभिन्नतायां च ग्राह्येऽपि स्मरणं भवेत् ।**
**ग्राहकस्मृतिनि[1]र्भासा तत्राप्येषैव दृश्यते ॥ ८४ ॥**

**तदत्यन्ताविनाभावान्नैकाकारं हि जायते ।**
**अन्वयव्यतिरेकाभ्यां सिद्धैवं भिन्नता तयोः ॥ ८५ ॥**

**ग्राह्यांशो ग्राहकांशेन गृह्यते ग्राहकः पुनः ।**
**गृह्येतेति न वक्तव्यं ग्राहकान्तरवर्जनात् ॥ ८६ ॥**

तर्केणापि यद् ग्राहकस्यायमनात्मा नीलादिरिति प्रतिपादितम् "अभिन्नत्वं यदा चेष्टम्" इत्यादिना, तत्रापि भाष्यं योजयितुमाह—**न पूर्वमिति** ॥

"सत्यं पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते" इत्यादि भाष्यं दर्शयति ग्राह्याद् भिन्नत्वं ग्राहकस्य, नीलादिग्राह्याभावेऽपि ग्राहकस्मरणसद्भावादित्याह—**न स्मरामीति** ।

ग्राह्यादभिन्नत्वे तु ग्राहकस्य ग्राहकस्मरणे ग्राह्यस्यापि स्मरणं स्यादित्याह—**तस्मादित्यर्धेन** । ग्राहकस्मरणरूपा तु संवित्तिरुत्पद्यते, नतु ग्राह्यस्मरणरूपेत्याह—**ग्राहकस्मृतिनिर्भासेत्यर्धेन** ।

तदत्यन्ताविनाभावेन तु नीलतद्बुद्ध्योः ग्राह्यस्मरणविविक्तं ग्राहकस्मरणं न स्यादित्याह—**तदत्यन्तेत्यर्धेन** । तस्मान्नीलादिग्राह्यस्मरणाभावेऽपि ग्राहकस्मरणाद् ग्राहकपरामर्शशून्यस्य नीलादेः ग्रहणादन्वयव्यतिरेकाभ्यां सिद्धा नीलतद्बुद्ध्योः भिन्नतेत्याह—**अन्वयव्यतिरेकाभ्यामित्यर्धेन** ॥

ननु ग्राह्यादभिन्नत्वेऽपि ग्राहकस्य ग्राह्यग्रहणे यद्ग्रहणं तद् ग्राहकान्तराभावेनान्यथासिद्धं न भेदं साधयति ; ग्राहकस्य तु ग्राहकसमवधाने सति युक्तं ग्रहणमिति चोदयति—**ग्राह्यांश इति** ॥

1. भासात्. चौ. मु.

ग्राह्यांशेनाप्यशक्तत्वान्न तस्य ग्रहणं भवेत् ।
ग्राहकत्वेन चैतस्य हीयेतैव द्विरूपता ॥ ८७ ॥

ग्राहके गृह्यमाणे च ग्राह्यमात्रप्रसञ्जनम् ।
न स्यादाकार एकश्चेदितरस्यापि नास्तिता ॥ ८८ ॥

उद्भवाभिभवाभ्यां च ग्राह्याग्राह्यत्वदर्शनम् ।
यथा दीपप्रभादीनां रूपमात्रोपलम्भनम् ॥ ८९ ॥

दिवा चाग्नेः समीपस्थैः स्पर्श एवोपलभ्यते ।
गन्धवद् द्रव्यवृत्तौ च गन्धस्यैवोपलम्भनम् ॥ ९० ॥

न गुणान्तरसंवित्तिर्यथात्राभिभवात् तथा ।
नाकारान्तरसंवित्तिः ग्राह्यग्राहकबुद्धिषु ॥ ९१ ॥

न च ग्राह्यांश एव तस्य ग्राहकः, ग्राह्यत्वेन तस्याशक्तत्वादित्याह— **ग्राह्यांशेने**त्यर्धेन । ग्राहकत्वे ग्राह्यांशस्यापि ग्राहकत्वेन ग्राहकमात्ररूपतया विज्ञानस्य प्रकाश्यप्रकाशकता न स्यादित्याह—**ग्राहकत्वेने**त्यर्धेन ॥

ग्राहके च गृह्यमाणे ग्राह्यमात्रतया पुनरपि प्रकाश्यप्रकाशकता न स्यादित्याह—**ग्राहक** इत्यर्धेन । ग्राह्याकारमात्रे च ग्राह्यस्याप्याकारस्य ग्राहकापेक्षत्वेनाभावे सिद्धे विज्ञानस्याप्यभावः स्यादि[1]त्याह—**न स्यादि**त्यर्धेन ।

इतरस्यापि, भिन्नत्वेन नीलतद्बुद्ध्योर्ग्राह्यग्रहणे ग्राहकस्याग्रहणं ग्राहकग्रहणे च ग्राह्यस्याग्रहणमुद्भवाभिभवेनेत्याह—**उद्भवाभिभवाभ्यामि**त्यर्धेन ॥

अत्रैवोदाहरणमाह—**यथेति** श्लोकद्वयेन **तथा**वर्जम् । यथा प्रदीपकार्यस्य प्रभा[2]स्वरूपस्य स्पर्शगुणयुक्तस्यापि रूपमात्रावगती रात्रौ दिवा चाग्नेः समीपवर्तिनः प्रभाद्रव्यस्य स्पर्शावगतिः; [3]यथा च गन्धानुमेयगन्धद्रव्यस्य गन्धमात्रोपलब्धिरभिभवात्तु रूपस्पर्शादयो नोपलभ्यन्ते, तथा सत्यप्यभिन्नत्वे [4]ग्राह्यग्राहकयोर्ग्राह्यग्रहणे ग्राहकस्याग्रहणं तदभिभूतत्वादित्याह—**तथे**तिसशेषेण **नाकारान्तरे**त्यर्धेन ॥

1. त्याशङ्क्याह. मा.
2. स्वरूपस्पर्श. मा.
3. तथाच मा.
4. ग्राहकतग्राह्य. मा.

**ग्राह्यादनन्यभूतोऽपि कश्चिन्नैवोपलभ्यते ।**
**नित्यानित्यादयो धर्माः शब्दादिग्रहणे यथा ॥ ९२ ॥**

**अभेदं वाभ्युपेत्यायं प्रसङ्गो यदि गीयते ।**
**एकस्मिन् गृह्यमाणेंऽशे न गृह्येतापरः कथम् ॥ ९३ ॥**

**तस्माद्यत् स्याद्यदा योग्यं तस्यैव ग्रहणं तदा ।**
**द्वयं च त्वदुपन्यस्तं शक्त्यभावान्न गृह्यते ॥ ९४ ॥**

**कुतोऽयमेकवस्तुत्वे योग्यायोग्यत्वसम्भवः ।**
**उद्भावाभिभवात्मत्वं कथं चैकस्य कल्पितम् ॥ ९५ ॥**

अनन्यत्वे तस्मिन् गृह्यमाणे परस्परस्याग्रहणं दृष्टमित्याह—**ग्राह्यादनन्यभूतोऽपीति** । श्रोत्रेन्द्रियेण हि शब्देऽवसीयमाने नित्यानित्यत्वपरामर्शशून्य एव अवसीयते । अयं च नित्यानित्यत्वादयः तदात्मभूता एवेत्यर्थः ॥

यदि चाभेदमभ्युपगम्य ग्राह्यग्रहणे ग्राहकस्यापि ग्रहणप्रसङ्ग इत्युच्यते, तदा गृह्यत एव ; केयं प्रसङ्गापत्तिरित्याह—**अभेदमिति** ॥

अयोग्यत्वेन चैकस्मिन् गृह्यमाणे परस्याग्रहणमित्याह—**तस्मादित्यर्धेन** ।

तस्माद् [1]यद्ग्राह्यग्रहणे तद्ग्राहकस्याग्रहणमुक्तम् “ यदा तु ग्राह्यमाकारं नाभादं प्रतिपद्यते ” इत्यत्र ग्राहकग्रहणे वा तद्ग्राह्यस्याग्रहणमुक्तम् “ न स्मरामि मया कोऽपि ” इत्यत्र तदयोग्यत्वेनेत्याह—**द्वयं च त्वदुपन्यस्तमिति** । तस्मादभिन्नत्वे च यदेकस्याग्रहणे सतीतरस्याग्रहणं तच्छक्त्यभावादित्याह—**शक्त्यभावान्न गृह्यते इति** । तस्मादभिन्नत्वेऽपि ग्राह्यग्राहकस्य यद् ग्राह्यग्रहणे सत्यग्रहणं ग्राहकस्य तद् ग्राहकान्तराभावेनाभिभूतत्वेन योग्यत्वाभावेन वेति परिचोदनार्थः ॥

तत्रानन्तरोक्तमेव योग्यायोग्यत्वपदं निराकर्तुमाह—**कुत** इत्यर्धेन । ग्राह्यग्राहकयोरैक्ये सति योग्यायोग्यत्वविभागो न स्यादित्यर्थः । उद्भवाभिभवावप्येकस्य नोपपद्येयातामित्याह—**उद्भवेत्यर्धेन** ॥

1. यद्ग्रहणे ग्राह० मा.

एकांशाभिभवे च स्यादितराभिभवोऽपि ते ।
तथा [1]तस्याभिभूतत्वात् ग्राह्यत्वं न च युज्यते ॥ ९६ ॥

अयोग्यतापि कल्प्यैवं दृष्टान्ता येऽत्र कीर्तिताः ।
रूपादिभेदात् तत्र स्यादुद्भवाभिभवाद्यपि ॥ ९७ ॥

यदाप्येकान्ततो भेदो रूपादेर्न परस्परम् ।
तदापि द्रव्यरूपस्य परिणामस्तथा तथा ॥ ९८ ॥

[2]अनन्यत्वेऽपि न ग्राह्यमिति यच्चाब्रवीद् भवान् ।
कृतकत्वादिधर्माणां धीभेदेऽनन्यथा कथम् ॥ ९९ ॥

न ह्यन्यत् प्रत्ययादस्ति भिन्नाद् ग्राह्यस्य भेदकम् ।
न चेयत्तैव भेदस्य देशतो मूर्तितोऽपि वा ॥ १०० ॥

ग्राहकाभिभवे [3]तदनन्यत्वे ग्राह्यस्याप्यभिभवः स्यात्; ततश्च ग्राहकग्रहणाभावे ग्राह्यस्यापि ग्रहणं न स्यादित्याह—**एकांशाभिभव इति** ॥

अयोग्यताप्येवमेव कल्पनीयेत्याह—**अयोग्यतापि कल्प्यैवमिति** । यत्तु रूपस्पर्शवतः प्रभाद्रव्यस्य रूपमात्रावगती रात्रौ गन्धानुमेयस्य च द्रव्यस्य गन्धमात्रोपलब्धिरित्युक्तम्; तत्राह—**दृष्टान्ता** इति त्रिपाद्या । रूपस्पर्शयोर्बुद्धिभेदेन भेदे सति युक्तमुद्भवाभिभवत्वेन ग्रहणाग्रहणकल्पनमित्यर्थः ॥

अथापि रूपस्पर्शयोरैक्यं तथापि रूपरूपतया परिणतत्वात् प्रभाद्रव्यस्य स्पर्शाभावेनैवाग्रहणं रात्रौ दिवा च स्पर्शरूपतया परिणतत्वेन रूपस्याग्रहणमित्याह—**यदापीति** ॥

यत्तु शब्दस्यात्मभूता अपि कृतकत्वानित्यत्वादयः शब्दग्रहणे न प्रतिभासन्त इत्युक्तम्, तदनुभाष्याह—**अनन्यत्वेऽपि न ग्राह्यमिति** । शब्दानित्यत्वकृतकत्वादीनां भिन्नप्रतिभाससंवेद्यत्वेनान्यत्वे सति नीलपीतयोरिव कथमनन्यत्वमित्यर्थः । बुद्धिभेद एव च ग्राह्यभेदे प्रमाणं नान्यदित्याह—**न हीत्यर्धेन** । तेन समानदेशव्यवस्थितयोरपि कृतकत्वानित्यत्वयो रूपस्पर्शयोरिव बुद्धिभेदेन भेदः; भिन्नदेशयोरपि बुद्धिभेद एव भेदे प्रमाणम्, न[4] भिन्नदेशव्यवस्थितत्वमित्याह—**न चेयत्तैवेत्यर्धेन** ॥

1. तत्राभिभूत॰ चौ. मु.
2. अभिन्नत्वेऽपि. चौ. मु.
3. तदन्यत्वे॰ मा.
4. Omitted न. मा.

**[1]कारकाणां हि सम्बन्धः [2]कार्यैः कृतकतोच्यते ।**
**विभागोऽवयवानां च भवेत् क्वचिदनित्यता ॥ १०१ ॥**

**बुद्ध्यादेरात्मरूपादिस्थानं नाशित्वमुच्यते ।**
**नित्यत्वं सर्वदा सत्ता वस्तुत्वं सैव कीर्त्यते ॥ १०२ ॥**

**प्रमाणज्ञानसम्बन्धः प्रमेयज्ञेयतोच्यते ।**
**सर्वत्र चात्र भिन्नत्वमस्ति केनचिदात्मना ॥ १०३ ॥**

**तस्माद्यथैव रूपादेर्देशभेदादिभिर्विना ।**
**बुद्धिभेदेन भेदोऽस्ति तथैवात्र प्रतीयताम् ॥ १०४ ॥**

किंरूपं पुनः शब्दानित्यत्वाभ्यां भिन्नं कृतकत्वमित्याह—**कारकाणामि**त्यर्धेन । क्रियाकारकसम्बन्धः कृदन्तादुत्पन्नेन भावप्रत्ययेनोच्यते, कृत्तद्धितसमासेषु सम्बन्धाभिधानस्मरणात् । अनित्यत्वमपि सावयवस्य घटादेरवयवविभाग इत्याह—**विभाग** इत्यर्धेन ॥

निरवयवस्य तु बुद्ध्यादेर्घटज्ञातृरूपतया परिणतस्यात्मनः पुनरात्मतयावस्थानमनित्यत्वमित्याह—**बुद्ध्यादे**रित्यर्धेन । नित्यत्वस्यापि रूपं दर्शयितुमाह—**नित्यत्वं सर्वदा सत्ते**ति । नित्यत्ववद् वस्तुत्वमपि सैव सत्तेत्याह—**वस्तुत्वं सैव कीर्त्यते इति** । ननु यदि सर्वदा सत्ता वस्तुत्वम् , अनित्यस्य घटादेः वस्तुत्वं न प्राप्नोति ; अथ सत्ता वस्तुत्वम् , तत्रापि अभावस्य वस्तुत्वं न स्यात् , असद्रूपत्वात् । उच्यते—सैव सत्ता तावद्वस्तुत्वम् , "सर्वदा" इत्येतदत्र नातिदिश्यते ; अभावोऽपि सद्रूप एव, 'सन् घटाभावः' इति सत्प्रत्ययस्याविशेषात् । वक्ष्यति—

"तामुत्पत्त्याद्यनुस्यूतां सत्तेति प्रतिजानते ।" इति ॥

प्रसङ्गात् प्रमेयत्वज्ञेयत्वयोरपि स्वरूपमुपदर्शयितुमाह—**प्रमाणे**त्यर्धेन । प्रमाणसम्बन्धः प्रमेयम् ; ज्ञानसम्बन्धो ज्ञेयमिति । सर्वत्र चात्र बुद्धिभेदेन भेदोऽस्तीत्युद्भवाभिभवाभ्यां ग्रहणाग्रहणं प्रकल्पयाम इत्याह—**सर्वत्रे**त्यर्धेन ॥

तस्माद्यथैव रूपादेरभिन्नदेशस्यापि बुद्धिभेदेन भेदः, तथानित्यत्वकृतकत्वादीनामपीत्याह—**तस्मादिति** ॥

1. कारणानां हि सम्बन्धः चौ. मु.    2. कार्यः. मा.

**अत्यन्तभिन्नतास्माभिर्नैव कस्यचिदिष्यते ।**
**सर्वं हि वस्तुरूपेण भिद्यते न परस्परम् ॥ १०५ ॥**

**सर्वं च कृतकत्वादि क्रियाहेत्वाद्यपेक्षया ।**
**गृह्यते तदसंवित्तावभेदेऽपि न गृह्यते ॥ १०६ ॥**

**ज्ञाने नैवंविधो भेदो नापेक्षान्यत्र विद्यते ।**
**परस्परेण चापेक्षा स्याच्चेत् सन्निहितश्च सः ॥ १०७ ॥**

**ननु ग्राहकमित्येवं ग्राह्यमित्यपि वा मतिः ।**
**नीलादिग्रहणे नास्तीत्यपेक्षा कथमुच्यते ॥ १०८ ॥**

**मा भूदेवं तथाप्यत्र द्व्याकारं ग्रहणं भवेत् ।**
**एवं चागृह्यमाणे वा ज्ञाने द्व्याकारता कथम् ॥ १०९ ॥**

अत्यन्तभेदस्तु रूपस्पर्शयोरपि नैवास्माभिरिष्टः सद्रूपतया रूपादेरप्येकत्वादित्याह—**अत्यन्तभिन्नतेति** ॥

अपि च शब्दानन्ययोरपि कृतकत्वानित्यत्वयोर्युक्तं यच्छब्दग्रहणे सत्यग्रहणम्, तद्ग्रहणसामग्रीभेदात्; क्रियाहेतुग्रहणसापेक्षं कृतकत्वग्रहणम्; शब्दग्रहणं तु श्रोत्रसापेक्षमित्याह—**सर्वं च कृतकत्वादीति** ॥

न विज्ञाने ग्राह्यग्राहकयोर्भेदो नापि ग्रहणसामग्री भिद्यत इत्याह—**ज्ञाने नैवमित्यर्धेन** । अथ ग्राह्यनीलादिग्रहणं ग्राहकसापेक्षम्, ग्राहकस्य च ग्राह्यापेक्षत्वमित्यस्त्येव सामग्रीभेद इति, तत्राप्याह—**परस्परेणेत्यर्धेन** । तथापि परस्परसन्निधानेनैकग्रहणेनोभयप्रसङ्ग इत्यर्थः ॥

ननु नीलादयो नैव ग्राह्यतयावभासन्ते, 'नीलम्' इति नीलमात्रतयावभासनात्; ग्राह्यता तु नीलादेर्ग्राहकसम्बन्धेन तदानीमेवोत्पद्यते; न तु नीलानुभवे नीलस्य तत्कर्मतावभासत इति कथं नीलग्रहणस्य ग्राहकापेक्षित्वमिति चोदयति—**ननु ग्राहकमिति** ॥

तत्र परिहारमाह—**मा भूदित्यर्धेन** । ग्राह्यग्राहकयोरभेदेन ग्राह्य[1]ग्राहकभावेन नीलादयोऽवभासेरन्निति वयं ब्रूमः । ग्राह्यग्राहकभावेन चाप्रकाशमानमपि नीलं स्वप्रकाशमिति चित्रमित्याह—**एवमित्यर्धेन** । ननु यद्यपि नीलादयो ग्राह्यग्राहक-

1. ग्राहकभेदेन. मा.

**उत्तरोत्तरविज्ञानविशेषाद्या प्रकल्प्यते ।**
**ग्राहकाकारसंवित्तिः स्मरणाच्चानुमानिकी ॥ ११० ॥**

**एकाकारं किल ज्ञानं प्रथमं यदि कल्प्यते ।**
**ततस्तद्विषयाप्यन्या तद्रूपैव मतिर्भवेत् ॥ १११ ॥**

**घटविज्ञानतज्ज्ञानविशेषोऽतो न सिध्यति ।**
**ग्राहकाकारसंवित्तौ त्वाकारप्रचयो भवेत् ॥ ११२ ॥**

**जायते पूर्वविज्ञानं द्व्याकारं [1]यत्र तत्पुनः ।**
**तस्यात्मीयश्च पूर्वौ च विषयस्यानुपप्लुतौ ॥ ११३ ॥**

**परेष्वाकारवृद्ध्यैवं पूर्वेभ्यो भिन्नता तथा ।**
**ग्राह्यवत्स्मरणात्पश्चात्संवित्तौ ग्राहकः पुरा ॥ ११४ ॥**

भावेन नावभासन्ते, तथापि विषयाकारवत् ग्राहकाकारतापि तत्रास्तीत्यनुमाना-द्वगम्यते, घटज्ञानतज्ज्ञानयोः विशेषात्; उत्तरकाले च विषयाकारवद् ग्राहका-कारतापि स्मरणादवगता । तदुक्तम्—

"घटविज्ञानतज्ज्ञानविशेषात् तद्द्विरूपता ।
स्मृतेरुत्तरकालं च न ह्यसावविभावितः ॥" इति ॥

तदेतद् दूषयितुमुपन्यस्यति—**उत्तरोत्तरेति** ॥

तत्रोत्तरोत्तरविज्ञानविशेषादित्येतत् तावद् व्याख्यातुमाह—**एकाकारमिति सार्धेन श्लोकेन** । यदि [2]घटज्ञानं विषयावभासमेव केवलमुत्पद्यते, तदा तद्विषय-स्यापि विज्ञानस्य विषयाकारत्वे घटाकार[3]त्वेनाविशेषः स्यात्; यदि तु घटाकारवत् स्वाकारमपि तत्, तदा आकारद्वयसङ्क्रान्तौ सत्यां त्र्याकारत्वेन विशेषो भवे-दित्याह—**ग्राहकाकारसंवित्ताविति** सार्धेन श्लोकेन ॥

परेष्वप्येवमेवाकारवृद्ध्या पूर्वस्मात् भिन्नता वक्तव्येत्याह—**परेष्वित्यर्धेन** । "स्मरणाच्चानुमानिकी" इति यदुक्तम्, तद्व्याख्यातुमाह—**ग्राह्यवदित्यर्धेन** । घट-विज्ञानोत्पत्त्युत्तरकालम् 'गृहीतो मया घटः' इति घटाकारतद्ग्राहकाकारतया स्मर-णाद् घटविज्ञानोत्पत्तिकाले विषयाका[4]रता संविन्निष्ठा गृहीतैवेत्यनुमीयत इत्यर्थः ॥

1. यत्र यत्परम्. अनन्त. मु.
2 घटज्ञानज्ञानम्. मा.
3. त्वेन घटाकारत्वात्. चाकारद्वय. मा.
4. रतावत्संविष्ठा. मा.

**न तावदेवमाकारान् पश्यामः प्रचयान्वितान् ।**
**विषयव्यपदेशाच्च नर्ते ज्ञाननिरूपणम् ॥ ११५ ॥**

**तस्माज्ज्ञानात्मनैकत्वे ग्राह्यभेदनिबन्धनः ।**
**संवित्तिभेदः सिद्धोऽत्र किमाकारान्तरेण नः ॥ ११६ ॥**

**निराकारत्वसाम्येऽपि यथाकारवतां ध्रुवम् ।**
**भेदः स्वाभाविकस्तद्वज्ज्ञानानां किं न सिद्ध्यति ॥ ११७ ॥**

**स्मृतेरुत्तरकालं चेत्येतन्मिथ्यैव गीयते ।**
**तदैव ह्यस्य संवित्तिरर्थापत्त्योपजायते ॥ ११८ ॥**

"उत्तरोत्तरविज्ञानविशेषात्" इति यदुक्तं तद् दूषयितुमाह—**न तावदि-त्यर्धेन** । न हि 'घटोऽयम्' इत्यत्र विज्ञाने आकारद्वयप्रतिभासोऽस्ति ; नाप्याकारत्रयप्रतिभासः तद्विषये विज्ञान इत्यर्थः । ननु निराकारत्वेन घटज्ञानतज्ज्ञानयोः विशेषो न स्यादित्याह—**विषयव्यपदेशाच्चेति** सार्धेन । यस्माद्विषयनिरूपणपूर्वकं विज्ञाननिरूपणम्—नीलज्ञानं पीतज्ञानमिति, तस्मात् ज्ञानात्मनैकत्वेऽपि घटज्ञान-तज्ज्ञानयोर्विषयभेदेन विशेषः सिद्धात्मैव, किमप्रतीयमानेनाकारप्रचयेन पूर्वस्य घट-विषयत्वादुत्तरस्य च तज्ज्ञानविषयत्वात् ?

यथा चाकारवत्त्वसाम्येऽपि भवत्पक्षे घटज्ञानतज्ज्ञानयोः स्वाभाविको भेदः तथा निराकारत्वेऽपि घटज्ञानतज्ज्ञानयोः भविष्यतीत्याह— **निराकारत्वसाम्येऽपीति** ॥

यदप्युत्तरकालं स्मरणात् घटज्ञानोत्पत्तिकाले विषयाकारवत् ग्राहकाकार-तानुभूतैवेति, तत्राप्याह—**स्मृतेरुत्तरकालञ्चेति** । अयमभिप्रायः—यदि तावत् घटज्ञानोत्पत्तिकाले विषयाकारवत् ग्राहकाकारतापि [1]संविन्निष्ठा नानुभूयते, किं तदा स्मरणोपन्यासेन ? अथानुभूयते, तत्रोत्तरकालं विषयग्रहणाद्यन्यथानुपपत्त्या ग्राहकविषयं प्रमाणमेवो[2]पजायत इति स्मरणभ्रमः ॥

1. सन्निविष्टानुभूयते. मा.   2. पक्षयिते. मा.

[1]गृहीतमेव यच्चोक्तं तदभेदान्न तद्यतः ।
नास्माभि[2]र्वाक्प्रवृत्तेस्त्वं निमित्तमनुयुज्यसे ॥ ११९ ॥

ग्राह्यग्राहकतैवास्य केनचिन्नोपलभ्यते ।
प्रत्यक्षज्ञानपक्षे च नैषा स्यादानुमानिकी ॥ १२० ॥

एकाकारे च विज्ञाने यद्यन्योऽप्यत्र कल्प्यते ।
सहस्राकारतैकस्य कस्मान्न परिकल्प्यते ॥ १२१ ॥

यत्तु ग्राह्ये गृह्यमाणे ग्राहकोऽपि [3]तदभेदात् गृह्यत एव, केयमनिष्टापत्तिरिति, तत्राह—**गृहीतमिति** ॥

[4]यदि वयमेवं ब्रूमः—कथं ग्राह्ये गृह्यमाणे ग्राहकोऽप्यवभासमानो गृह्यत इत्युच्यते, तदा युज्येतापि वक्तुं तदभेदादिति ; ग्राह्यग्राहकभावेन तु नीलादयो न प्रतिभासन्त इति वयं ब्रूम इत्याह—**ग्राह्यग्राहकतेत्यर्धेन**। [5]अस्मिन् पक्षे च स्वयंप्रकाशस्य ज्ञानस्य कथं ग्राहकाकारता स्मरणानुमेया स्यादित्याह—**प्रत्यक्षेत्यर्धेन** ॥

विषयमात्रावभासे च नीलपीतादिज्ञाने यदि ग्राहकाकारताप्यत्रैव भासमानास्तीति परिकल्प्यते, तदा नाकार[6]व्यवस्था द्व्याकारं विज्ञानमित्याह—**एकाकारे चेति**। तस्माद् ग्राह्यग्रहणे ग्राहकस्याप्रतिभासनात् ग्राहकग्रहणेऽपि ग्राह्यस्येति सिद्धा नीलतद्बुद्ध्योर्भिन्नता ॥

एवं तावदपरसाधनमेकं विज्ञानतत्त्वम्—

"अविभागो हि बुद्ध्यात्मा विपर्यासितदर्शनैः ।
ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते ॥"

इत्येवंवदद्भिर्यदुक्तम् [7]तन्निराकृतम् "नैतदस्ति त्वयैकं हि" इत्यादिना "एकाकारे च विज्ञाने" इत्येवमन्तेन। अपरेषां तु ग्राह्यवादिनामेतद् दर्शनम्—विज्ञानस्यैव कश्चिद्धर्मो ग्राहकः किञ्चिद् ग्राह्यम् ; तेन ग्राहकाद्धर्मान्तरं ग्राह्यमिति, तद् दूषणा-

1. गृहीतमिति अनन्त. मु.
2. वाक्यवृत्तेः. चौ. मु.
3. तदा भवेत् ग्र. मा.
4. Omitted. यदि. मा.
5. अस्मत्पक्षे. मा.
6. त्यवस्था द्व्याकारम्. मा.
7. Omitted. तन्निराकृतम्. मा.

ग्राह्यग्राहकयोर्भेदो नन्वस्त्येव परस्परम् ।
सिद्धो नः पक्ष एवं स्यान्न ज्ञानत्वादभेदतः ॥ १२२ ॥

भिन्नाभिन्नत्वमेकस्य कुतोऽत्र परिकल्पितम् ।
त्वया सांख्यमतेनैवं मुक्त्वा बुद्धस्य शासनम् ॥ १२३ ॥

एकं चेद् ग्राहकं ग्राह्यं कुतो भिन्नत्ववागियम् ।
भिन्नं चेत् कथमुच्येत तस्यैकत्वं पुनस्त्वया ॥ १२४ ॥

एकज्ञानादनन्यत्वात् ग्राह्यग्राहकयोर्मिथः ।
एकत्वेन [1]भवेज्ज्ञानं ग्राह्यं ग्राहकमेव वा ॥ १२५ ॥

तत्र चान्यतरापाये द्वितीयापायतः पुनः ।
ज्ञानस्यांशद्वयासत्त्वान्निःस्वाभाव्यादभावता ॥ १२६ ॥

भिन्नाभ्यां वाप्यभिन्नत्वाद् भेदो ज्ञानात्मनो भवेत् ।
तत्स्वात्मवत् ततश्चैवं सिद्धं वस्तुद्वयं हि नः ॥ १२७ ॥

योपन्यस्यति स—**ग्राह्यग्राहकयो**रित्यर्धेन । परस्त्वगृहीताभिप्राय आह—**सिद्धो नः पक्ष एवं स्या**दिति । ग्राह्यग्राहकयोर्भेदेनाभ्युपगमे सति सिद्धा द्वैतसिद्धिरित्यर्थः । इतरः स्वाभिप्रायमाह—**न ज्ञानत्वादभेदतः इति** । एकज्ञानानन्यत्वेन ग्राह्यग्राहकयोरभेदोऽस्तीत्यर्थः ॥

तदनुपपन्नमित्याह—**भिन्नाभिन्नत्वमिति** । साङ्ख्यमते तद् भवतु, भवतस्तु परस्परविपर्ययात्मकत्वेन भिन्नाभिन्नयोः विरोधे सति कथमेकत्र निवेश इत्यर्थः ॥

विरोधमेव दर्शयितुमाह—**एकञ्चेदिति** ॥

न[2] चैकज्ञानादन्यत्वेन ग्राह्यग्राहकभूतयोर्धर्मयोरेकत्वं स्यात् । तत्र परस्परापेक्षत्वे सत्यन्यतरस्याभावेनान्यतरस्यासत्त्वं स्यात् । तत्रान्यतराभावे सति ज्ञानस्याप्यभावप्रसङ्गादित्याह श्लोकद्वयेन—**एकज्ञानादिति** ॥

**ज्ञानात्मनो** वा **भिन्नाभ्यां** ग्राह्यग्राहकधर्माभ्यामभेदे सति तत्स्वात्मवत् भेदः स्यात् । ततश्चासिद्धाद्वैतसिद्धिरित्याह—**भिन्नाभ्यां वेति** ॥

तत्र च ग्राह्यनीलादेरनन्यनिष्ठत्वेनावभासनादर्थत्वम्, **ग्राहकस्य** च बोधात्मकत्वेन ज्ञानत्वम्; एवमेव स्थिते यदि रूढ्या द्वयोरपि ग्राह्यग्राहकयोः ज्ञान-

1. भवेद्ग्राह्यं ज्ञानम्. मा.   2. स चैक. मा.

**तयोश्च यदि संज्ञेयं ज्ञानमित्यस्त्वथापि वा ।**
**ज्ञानं ज्ञायत इत्यर्थो धीर्भावे करणेऽपि वा ॥ १२८ ॥**
**सर्वथा वस्तुभेदो नः सिद्धः शब्दो यथारुचि ।**
**प्रवर्ततां न नस्तत्र काचिद् विप्रतिपन्नता ॥ १२९ ॥**
**अथ सत्यपि भिन्नत्वे ग्राह्यं ज्ञानान्तरं [1]वदेत् ।**
**ज्ञानत्वे तस्य का युक्तिः पूर्वो[2]क्ता यदि सेष्यते ॥ १३० ॥**
**ज्ञानं ज्ञान[3]मितीत्थं तु न द्वयोरनुवर्तने ।**
**व्य[4]तिरिक्तं च सामान्यं त्वया नाभ्युपगम्यते ॥ १३१ ॥**

शब्दाभिधेयत्वमभ्युपगम्यते , कर्मसाधनेन वा ज्ञानशब्देन ग्राह्योऽभिधीयते; भावकरणसाधनेन वा ग्राहकस्याभिधानम् , न कश्चिद् वारयतीत्याह—**तयोश्च यदीति ॥**

सिद्धे वस्तुभेदे शब्दो यथारुचि प्रवर्तताम् , न नस्तत्र काचिद् विप्रतिपन्नतेत्याह—**सर्वथेति ॥**

अपरेषां शून्यवादिनां दर्शनम्—ग्राहकाद् भिन्नमेव ग्राह्यं नीलपीतादि; तत्र ज्ञानमेव ज्ञानयोरेव बहिर्ग्राह्यगतभावः सहोत्पन्नयोः तदुक्तम्—"प्रत्ययोव्यभिचारित्वात्सह" इति क्रमोत्पन्नयोर्वा नीलज्ञानं ह्यात्मसदृशं विज्ञानान्तरं जनयति । तत्र यज्जन्यं तद् ग्राह्यं यज्जनकं तद् ग्राहकमिति तदुक्तम्—

"[शक्त्यर्पणात् क्रमात्] भिन्नकालं कथं ग्राह्यमिति चेत् ग्राह्यतां विदुः ।
हेतुत्वमेव तत्त्व(युक्ति)ज्ञा ज्ञानाकारार्पणक्षमम् ॥" इति ।

तदेतद् दूषयितुमुपन्यस्यति स्म—**अथेत्यर्धेन** । तदेतन्निराकर्तुमाह—**ज्ञानत्व इत्यर्धेन ॥**

यदि तावद् विज्ञानशब्दाभिधेयत्वेन ग्राह्यं नीलपीताद्यनवबोधरूपमपि विज्ञानमुच्यते [5]तद्वदिति तदिष्यते । तदुक्तम्—"शब्दा यथारुचि प्रवर्तताम्" इति । अथ ज्ञानत्वसामान्यानुवृत्तौ ग्राहकवद् ग्राह्यं नीलपीतादि ज्ञानमुच्यते, तत्राप्याह—**ज्ञानमिति ॥**

न हि द्वयोरनुभवानुभाव्ययोः जन्मत्वे [6]सति ज्ञानात्मकसामान्ययोगो भवताभ्युपगम्यते । अभ्युपगमे वा व्यतिरेकपक्षे ग्राह्यस्य ज्ञानानात्मकत्वेन ग्राहकस्यापि विज्ञानरूपता न स्यादित्याह—**ग्राह्यग्राहकेत्यर्धेन ।**

1. भवेत्. चौ. मु.
2. क्ता तस्य सेष्यते. अनन्त. मु.
3. मितीदं तु. चौ. मु.
4. इदमर्धं न दृश्यते. मा.
5. तद्वति तदुक्तम्. मा.
6. सति ज्ञानात्मकत्वेन. मा.

[1]ग्राह्यग्राहकयोश्चेष्टा न ज्ञानात्मकता भवेत् ।
तद्रूपरहितत्वे च ज्ञानाभावः प्रसज्यते ॥ १३२ ॥

ताभ्यां च तस्य सम्बन्धे प्रत्येकं व्यतिषज्य वा[2] ।
भेदसावयवत्वादिदोषो वैशेषिकादिवत् ॥ १३३ ॥

यथा हि तेषां जात्यादौ दोषा ह्युक्ताः परैरमी ।
तथैवैषां प्रसज्यन्ते भिन्नाभिन्नार्थसङ्गतौ ॥ १३४ ॥

ताभ्यामव्यतिरेके वा भेदः पूर्वोक्त एव ते ।
सादृश्यापोहसामान्यकल्पना वारयिष्यते ॥ १३५ ॥

वस्त्वन्तरस्य चाभावात् त्वयापोहोऽपि दुष्करः ।
नाज्ञानं नाम किञ्चित् स्यादपोह्यं ज्ञानवादिनः ॥ १३६ ॥

ग्राह्यग्राहकरूपरहितत्वेन ज्ञानस्य सामान्यत्वे सामान्यस्याप्यभावप्रसङ्ग इत्याह—**तद्रूपेत्यर्धेन** ॥

अथ व्यतिरिक्तमपि ताभ्यां सम्बद्धमिष्यते, तदनुपपन्नम् ; वैशेषिकादिवत् प्रत्येकं कार्त्स्न्येन सम्बन्धे व्यासज्य वा सम्बन्धे भेदसावयवत्वादिदोषप्रसङ्ग इत्याह—**ताभ्याञ्चेति** ॥

[3]वैशेषिकादिवदिति यदुक्तं तद् विवृणोति—**यथाहीति** । यान्येव युष्माभिर्वैशेषिकादिप्रतिज्ञाते वृत्तिविकल्पेन दूषणान्युक्तानि, तान्येव ज्ञानस्वलक्षणस्य [4]सामान्यस्याभ्युपगमे भवतामपि प्राप्नुवन्तीत्यर्थः ॥

अव्यतिरेकपक्षे दूषणमाह—**ताभ्यामित्यर्धेन** । भिन्नाभ्यामनुभावानुभाव्याभ्यां ज्ञानत्वसामान्यस्याभेदेन तत्स्वात्मवद् भेदप्रसङ्ग इत्यर्थः । नापि ज्ञानत्वसामान्यं सादृश्यम्, अपोहरूपं वा, द्वयोरपि निराकरिष्यमाणत्वादित्याह—**सादृश्येत्यर्धेन** ।

न च ज्ञानवज्ज्ञानमात्रवादिनो ज्ञानत्वसामान्यमपोहरूपं संभवति, ज्ञानव्यतिरिक्तवस्त्वन्तराज्ञानरूपाभावेनापोह्याभावादित्याह—**वस्त्वन्तरस्येति** ॥

1. व्यतिरेके तयोर्ज्ञानान्न. चौ. मु.
2. च. चौ. मु.
3. Omitted. वैशेषिकादिवत्. मा.
4. सामान्याभ्युप. मा.

अपोहो न ह्यभावस्य कथंचिदुपपद्यते ।
वस्त्वन्तरमभावः स्यादपोह्यत्वाच्च वस्तुता ॥ १३७ ॥

तेनाज्ञाननिवृत्तौ हि ज्ञानेऽन्यार्थः प्रसज्यते ।
कल्पितं स्यादपोह्यं चेन्नात्यन्तासत्यकल्पना ॥ १३८ ॥

बुद्धिरज्ञाननिभासा तवाज्ञानं प्रकल्पितम् ।
ततश्च ज्ञानमेवैकमपोह्यत्वेन संमतम् ॥ १३९ ॥

न चात्मापोह एवास्ति क्वचित् सामान्यकल्पने ।
वृक्षस्य न ह्यपोह्यत्वं वृक्षेणैव कदाचन ॥ १४० ॥

अपोह्ये चैव विज्ञाने ज्ञानत्वं न भवेत् तव ।
वृक्षत्वं न ह्यपोह्येषु घटत्वादिषु युज्यते ॥ १४१ ॥

नापि भवत्पक्षे ज्ञानाभावरूपमज्ञानमपोह्यम्, अवस्तुत्वेन कर्मत्वाभावादित्याह—**अपोह** इत्यर्धेन । अपोह्यत्वे चाभावस्य वस्तुत्वं स्यात्; तत्र च ज्ञानव्यतिरिक्तवस्त्वन्तरप्रसिद्धिरित्याह—**वस्त्वन्तर**मित्यर्धेन ॥

एतदेवोपसंहरति—**तेने**त्यर्धेन । नापि कल्पितमज्ञानमपोह्यम्, ज्ञानव्यतिरिक्तवस्त्वन्तराभावेन कल्पनाया[1] अप्यशक्यत्वादित्याह—**कल्पित**मित्यर्धेन ॥

कल्प्यमानमपि तदज्ञानप्रतिभासं विज्ञानमेव कल्प्येत; न च ज्ञानत्वसामान्यस्य समानजातीयं विज्ञानमेवापोह्यमित्याह—**बुद्धि**रित्यादिसार्धेन ।

अत्रैवोदाहरणमाह—**वृक्षस्ये**त्यर्धेन ॥

यदि च ज्ञानत्वसामान्यमज्ञानप्रतिभासं विज्ञानमेवापोहेत, तदा तस्मिन् विज्ञाने ज्ञानत्वं न स्यात्; न हि घटादिषु वृक्षत्वमस्ति; ततश्च अज्ञानशब्दार्थरूपाभ्युपगमेन शून्यवादहानिप्रसङ्ग इत्याह—**अपोह्ये चेति** सार्धेन ।

1. नायामप्य. मा.

ततश्चाज्ञानमेवार्थ [1]इति भिन्नार्थता भवेत् ।
अज्ञानप्रत्ययश्चायं किमालम्बन इष्यते ॥ १४२ ॥

न तावज्ज्ञाननिर्मुक्तमज्ञानं ग्राह्यमस्ति ते ।
ननु[2] वस्तु निषिद्धं तदभावः किं न गृह्यते ॥ १४३ ॥

भावो न गृह्यते येन तस्याभावेषु का कथा ।
स्वांशपर्यवसानं च तुल्यमत्रापि कारणम् ॥ १४४ ॥

तेन ज्ञानान्तरं वा स्याद् ग्राह्यमात्मांश एव वा ।
स्वरूपविपरीतं च कथं ग्राह्यं प्रतीयते । १४५ ॥

यथोष्णेऽनुष्णधीर्नास्ति ज्ञानेऽप्यज्ञानधीस्तथा ।
तेन न ज्ञानमात्रत्वे स्यादपोह्यं कथञ्चन ॥ १४६ ॥

यच्चेदमज्ञानप्रतिभासं विज्ञानमेवापोह्यं कल्पितम्, तस्य भवत्पक्षे किमालम्बनमिति वक्तव्यम्; नाज्ञानं नाम घटादिज्ञानमात्रवादिनोऽस्तीत्याह—**अज्ञानप्रत्यय इति ।**

ज्ञानाभावोऽपि नालम्बनम्, अवस्तुत्वेन वस्तुज्ञानोत्पादकत्वाभावादिति चोद्यपूर्वकमाह—**ननु वस्त्विति ।**

स्वयंप्रकाशकत्वेन भावान्तरमेवाज्ञानप्रतिभासं विज्ञानं गृह्णीयादित्याह—**स्वांशपर्यवसान** इत्यर्धेन ॥

तेन ज्ञानानन्तरमेवाज्ञानप्रतिभासं विज्ञानं गृह्णीयात् आत्मानमेव वा, न ज्ञानाभावमित्याह—**तेनेत्यर्धेन** । एतदपि नोपपद्यत इत्याह—**स्वरूपेत्यर्धेन** । कथमज्ञानप्रतिभासं विज्ञानमात्मानं स्वज्ञाना[3]न्तरस्वरूपविपरीतमालम्बत इत्यर्थः ॥

अत्रैव दृष्टान्तमाह—**यथोष्णेऽनुष्णधीर्नास्तीति** । दार्ष्टान्तिके योजयति—**ज्ञानेऽप्यज्ञानधीस्तथेति** । तस्माज्ज्ञानमात्रवादिनो न ज्ञानत्वसामान्यमपोहरूपमित्युसंहरति—**तेनेत्यर्धेन** ॥

1. इत्यभिन्नार्थ. चौ. मु.
2. न च वस्तु. चौ. मु.
3. न्तरे स्वरूप. मा.

**ग्राह्यग्राहकयोश्चातो न ज्ञानात्मसमानता ।**
**तस्मादन्यतरत्रेदं ज्ञानत्वं संप्रती[1]यताम् ॥ १४७ ॥**

**तत्राप्युभयसिद्धत्वाद् ग्राहकस्येति गम्यते ।**
**वस्तुभेदे प्रसिद्धे च व्यपदेशो यथारुचि ॥ १४८ ॥**

**ज्ञानमस्तूभयं वार्थो ग्राहको वार्थ उच्यताम् ।**
**बुद्ध्योरयुगपद्भावान्न द्वयोर्मेयमानता ॥ १४९ ॥**

**क्षणिका हीत्यनेनोक्तमर्थो ह्येषा[2] प्रसज्यते ।**
**अन्योन्यनिरपेक्षत्वाद् युगपच्चापि जन्मनि ॥ १५० ॥**

तस्मान्न ज्ञानत्वसामान्यानुवृत्तौ ग्राह्यग्राहकयोर्ज्ञानरूपतेत्याह—**ग्राह्यग्राहके**त्यर्धेन । तस्मादन्यतरत्र ज्ञानत्वयोगात् ज्ञानरूपता; सा चोभयसिद्धत्वात् ग्राहकस्य युक्तेत्याह—**तस्मादिति** । तस्मात् सिद्धं ग्राहकाद् भिन्नं ग्राह्यमज्ञानरूपं च । व्यपदेशस्तु यथारुचि प्रवर्तताम्, न तत्र काचिद् विप्रतिपन्नता—इत्युक्तमित्याह—**वस्तुभेद इति** ॥

अपि च [3]न तावत् क्रमोत्पन्नयोः विज्ञानयोर्मेयमानत्वेन ग्राह्यग्राहकभावः, उपरितनज्ञानकाले पूर्वस्यातीतत्वात् । नाप्यतीतमेवोपरितनस्यालम्बनम्, 'नीलमिदम्' इत्यपरोक्षतया प्रतिभासात प्रत्यक्षस्य चापरोक्षार्थविषयत्वाभ्युपगमात् तदाह—**बुद्ध्योरि**त्यर्धेन ॥

तच्च "क्षणिका हि सा, न बुद्ध्यन्तरकालमवस्थास्यते" इत्यनेन भाष्येणोक्तमित्याह—**क्षणिका हीत्यनेनोक्तमिति** । अथ पूर्वबुद्धिरुपरितनबुद्धिकालं यावत् तिष्ठत्येव, अर्थ एव तर्हि सेत्याह—**अर्थो ह्येषा प्रसज्यत इति** । नापि युगपदुत्पन्नयोः, कार्यकारणभावाभावात्; कारणं च मेयं मानस्येष्यते; तदाह—**अन्योन्येति** ।

भवत्पक्षे च[4] तर्ह्यर्थज्ञानयोः कार्यकारणभावाभावेन कथमर्थस्यालम्बनत्वम्? सर्वस्य हि विज्ञानं प्रति कारणत्वमर्थस्याप्रतिपन्नस्य वा प्रतीयमानस्य वा प्रतिपन्नस्य

1. यते. चौ. मु.
2. श्लोकः. चौ. मु.
3. Omitted. न. मा.
4. न. मा.

**मानमेयत्वनास्तित्वं क्रियाकारकवर्जनात् ।**
**अर्थविज्ञानयोरत्र या मितिं प्रति सङ्गतिः ॥ १५१ ॥**

**कार्यकारणभावोऽयं नान्यत्रैवं च दृश्यते ।**
**नियमश्च न लभ्येत सव्यदक्षिणशृङ्गवत् ॥ १५२ ॥**

**इदं कार्यमयं हेतुर्द्वयं नान्योन्यसंश्रयात् ।**
**तद्भावभाविताम।त्रं [1]हैतुकैनैव वर्ण्यते ॥ १५३ ॥**

**पौर्वापर्यविनिर्मुक्तं कार्यकारणलक्षणम् ।**
**गवाश्वस्य यथा नास्ति पौर्वापर्येऽपि तत्तथा ॥ १५४ ॥**

वा? न तावदप्रतिपन्नस्य, चक्षुरादिवद्ग्राह्यत्वप्रसङ्गात्। नापि प्रतीयमानस्य इतरेतराश्रयत्वप्रसङ्गात्; प्रतीयमानतार्थस्य विज्ञानाधीना, तच्च तदधीनमित्यभ्युपगमः। नापि प्रतिपन्नस्य, विज्ञानं विना जडात्मकस्य प्रतिपन्नत्वाभावात्; तथा च सति विज्ञानाभाव इत्याशङ्क्याह—**अर्थविज्ञानयोरिति**। अस्मत्पक्षे त्वर्थातिशयमितिजनकत्वेन ज्ञानार्थयोः ग्राह्यग्राहकभाव उपपद्यते, अर्थातिशयमितिजनकत्वेन हि विज्ञानस्य ग्राहकत्वमर्थस्य च विज्ञानजन्यातिशयविषयतया ग्राह्यत्वम्, न तु क्रमोत्पन्नयोः ज्ञानयोर्युगपदुत्पन्नयोर्वा तदस्तीत्यर्थः।

युगपदुत्पन्नयोश्च कार्यकारणनियोगभावेन ग्राह्यग्राहकनियमो न स्यादित्याह—**नियमश्चेति** त्रिपाद्या। न च युगपदुत्पत्तौ द्वयोरपि परस्पराधीनता इतरेतराश्रयत्वेनेत्याह—**द्वयं नान्योन्यसंश्रयादिति**।

ननु क्रमोत्पन्नयोरपि बीजाङ्कुरयोः तद्भावभावित्वेन कार्यकारणभावः; तच्च युगपदुत्पन्नयोरपि ज्ञानयोः प्रदीपप्रभयोरिवास्त्येवेत्याशङ्क्याह—**तद्भावभाविता-मात्रमिति**। पौर्वापर्यव्यवस्थितिसहितं तद्भावभावित्वं कार्यकारणभावं गमयति; न तद्भावभावित्वमात्रम्॥

सत्यपि पौर्वापर्ये तद्भावभावित्वशून्ये कारणभावो नास्तीत्याह—**गवाश्वस्येत्यर्धेन**॥

1. हेतुः केनैव कल्प्यते. चौ. मु.

**युगपज्जायमानेऽपि सन्तत्यन्तरजे क्षणे ।**
**रूपादिषु घटे यद्वत् तस्माद् पूर्वमवस्थिते ॥ १५५ ॥**

**यो यस्माज्जायते पश्चात् स तत्कार्यमि[1]तीष्यताम् ।**
**हेतुहेतुमतां सिद्धं यौगपद्यनिदर्शनम् ॥ १५६ ॥**

**यत्प्रदीपप्रभाद्युक्तं सूक्ष्मः कालोऽस्ति तत्र नः ।**
**दुर्लक्षस्तु यथा वेधः पद्मपत्रशते तथा ॥ १५७ ॥**

**भागयो[2]र्यौगपद्येऽपि तथैव स्यान्निराक्रिया ।**
**न च शक्त्यर्पण[3]द्वारा क्रमेणालम्बनं भवेत् ॥ १५८ ॥**

तद्भावभावित्वमपि पौर्वापर्यशून्यं न कार्यकारणभावायालमित्याह—**युगपदिति** त्रिपाद्या ।

तस्मात् पूर्वमवस्थिते यस्मिन् यो जायते, स तत्कार्यमित्युपसंहरति—**तस्मादिति** त्रिपाद्या ।

यत् पुनर्युगपदुत्पन्नयोरपि प्रदीपप्रभयोः कार्यकारणभावोऽस्तीत्युक्तम्, तदनुभाष्य दूषयितुमाह—**हेतुहेतुमतामिति** सार्धेन । तत्रैतत् तावद् वक्तव्यम्—प्रदीपप्रभयोः कार्यकारणभाव एव नास्ति द्वयोरप्येकसामग्रीजन्यत्वेन ; तैलाग्निवर्तिसंयोगेन हि तेजोद्रव्यमुत्पद्यमानं घनं स्वच्छं च समुपजायते । तत्र यद्घनं तत्प्रदीपशब्देनोच्यते ; स्वच्छस्य प्रभाशब्देनाभिधानम् । एवमानमनोन्नमनयोरपि परस्पराधीनता निराकर्तव्या । अथापि प्रदीपप्रभयोः कार्यकारणभावस्तथाप्यविद्यमानस्याजनकत्वेन पौर्वापर्यविभागोऽस्त्येव ; शीघ्रत्वात्तूत्पलपत्रशतच्छेदवत् प्रत्यक्षेण नोपलभ्यत इत्यर्थः ॥

एवमेकविज्ञानसम्बन्धिनोरपि धर्मयोः कार्यकारणभावाभावेन ग्राह्यग्राहकभावो निराकर्तव्य इत्याह—**भागयो**रित्यर्धेन । ननु पूर्वविज्ञानं वासनाद्वारेणोपरितनं जनयति ; तदेवोपरितनस्यालम्बनं भविष्यति ; किमत्र युगपद्भावेनेत्याशङ्क्याह—**न च शक्त्यर्पणद्वारेति** त्रिपाद्या । प्रत्यक्षविज्ञानमपरोक्षतयार्थमवभासयति; तत् कथमतीतालम्बनं स्यादित्यर्थः । नापि तादूप्यजनकत्वेन । यथोक्तम्—

1. इतीष्यते. चौ. मु.
2. यौगपद्येन चौ. मु.
3. द्वारं क्रमेण. चौ. मु.

**ग्राह्यं तदा ह्यतीतं स्यात् ताद्रूप्यं चाप्रमाणकम् ।**
**अतीतत्वानुविद्धो हि स्मृत्या ग्राह्योऽनुभूयते ॥ १५९ ॥**

**तद्वदेव [1]भवेदत्र स्वप्ने न स्याद् विपर्ययात् ।**
**तत्र ह्यवर्तमानोऽपि गृह्यते वर्तमानवत् ॥ १६० ॥**

**बाधज्ञानादिदं [2]सिद्धं न त्वत्रैवं विपर्ययः ।**

" ......................... ...............ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम् ॥ " इति ।

क्षणिकत्वेन निरन्वयविनाशित्वेन च जनकत्वसारूप्ययोरभावादित्युक्तम्; तदाह—**ताद्रूप्यं चाप्रमाणकमिति ।**

यदि च प्रत्यक्षविज्ञानमतीतालम्बनं स्यात्, तदा स्मृतिवदतीततया चावभासेतेत्याह—**अतीतत्वानुविद्ध** इत्यादिना **अत्रे**त्यन्तेन ।

ननु च स्वप्नवस्थायामतीतालम्बनमपि विज्ञानं नातीततयार्थमवभास[3]यति । ननु नातीततयार्थमवभासयति, अतीतालम्बनं चेति विप्रतिषिद्धम् । अवर्तमानस्याशक्यत्वे कथमालम्बनत्वम्? उक्तमस्माभिः—यत् प्रतिभासते, तदालम्बनम्; न तु यदस्तीति; न हि शुक्तिकायां रजतज्ञानं रजताभावेन शुक्तिकालम्बनमिति शक्यं वक्तुम् । नन्वालम्बनं हि कारणम्, असतश्च कथं कारणत्वम्? आलम्बनतया च तत् कारणम्; प्रतिभासमानतया चालम्बनम् । तथा च तदस्त्येव; बाधकप्रत्ययो हि प्रतिभासितस्याभावमवभासयति; 'यत रजतमिति प्रतिभासितम्', तत् रजतं न भवति' इति; न तु 'यत् रजतरूपतया प्रतिभासितम्' इति । रजते रजतज्ञानेऽपि रजतस्य प्रतिभासमानतयैव कारणत्वम् न स्वरूपसद्भावेन; सा च प्रतिभासमानता स्वरूपसंनिधानाभावेऽपि शुक्तिकादौ रजतज्ञानादस्त्येव । तस्मात् प्रतिभासमानतया रजतसंनिधानं सर्वत्रास्तीति; स्वरूपसंनिधानं तु भ्रान्तवदभ्रान्तेऽप्यनुपयोगीति तत्स्वरूपभावे न भ्रान्तेऽप्यालम्बनत्वक्षतिः । तदिदमुक्तम्—" अर्थस्य संनिधिः । यदि नास्ति[4] किमेवं स्यात् " इति । तदेतदभ्युपगम्याह—**स्वप्ने न स्यादित्येवमादिना न त्वत्रैवं विपर्यय** इत्येवमन्तेन । युक्तं यत् स्वप्नावस्थायामवर्त-

1. भवेत्तत्र. चौ. मु.
2. भ्रान्तम्. चौ. मु.
3. यति. अतीतालम्बनं चेति विप्रतिषिद्धं ननु अवर्त. मा.
4. ततः कस्मात्. मा.

तस्मात् प्रत्यक्षबुद्धीनां नातीतो विषयो भवेत् ॥ १६१ ॥

अतीतत्वाद् यथैवासां वृत्तो जन्मान्तरेषु यः ।
तद्रूपत्वेन वाज्ञानं हेतुर्भाविवदुच्यते ॥ १६२ ॥

अतीतत्वेऽपि नार्थोऽयं धीरेषेत्यत्र का प्रमा ।
[1]अतीतं यच्च विज्ञानं ग्राह्यत्वेन प्रकल्पितम् ॥ १६३ ॥

तत्[2] स्याद् ग्राहकरूपं वा ग्राह्यं वोभयथापि वा ।
ग्राह्याकारत्वमात्रे स्यादर्थः शब्दान्तरेण ते ॥ १६४ ॥

स्वकाले [3]चाप्यसंवित्तेर्न स्याच्छक्त्यर्पणं ततः ।
यथैवानाग[4]तज्ञानात् सन्तत्यन्तरजादपि ॥ १६५ ॥

मानालम्बनं विज्ञानं वर्तमानतयार्थमवभासयति विपर्ययात् भ्रान्तित्वादित्यर्थः । भ्रान्तता च बाधकप्रत्ययावसेया; न तु 'नीलम्' इति विज्ञाने बाधकप्रत्ययोऽस्तीत्यर्थः ।

अत्रैव प्रमाणमाह—**तस्मादिति** । अनन्तरातीतविज्ञानं धर्मि, प्रत्यक्षस्यालम्बनं न भवतीति साध्यो धर्मः, अतीतत्वादिति हेतुः, जन्मान्तरातीतविज्ञानवदिति दृष्टान्तः ।

पूर्वस्मिन्नेव प्रतिज्ञार्थे हेतुदृष्टान्तान्तरमाह—**तद्रूपत्वेनेत्यर्धेन** । अतीततयाप्रतिभासमानत्वाद् भाविविज्ञानवत् ॥

भवतु वाप्यप्रतिभासमानत्वेनाप्यतीतस्यालम्बनत्वम्; विज्ञानमेव तु, नार्थः इत्यत्र न किञ्चित् प्रमाणमित्याह—**अतीतत्वेऽपीत्यर्धेन** । यच्चेदमतीतविज्ञानमुपरितनस्य ग्राह्यत्वेन भवद्भिरिष्टम्, तद् ग्राह्यकारं वा स्यात् ग्राहकाकारं वा स्यात् उभयाकारं वा—इति दूषणायोपन्यस्यन्नाह—**अतीतं यच्चेति** ।

तत्र केवलग्राह्यत्वाभ्युपगमेऽर्थ एव ज्ञानशब्देनोक्तः स्यादित्याह—**ग्राह्याकारत्वमात्रे स्यादित्यर्धेन** ॥

केवलग्राह्यत्वे चातीतस्य ग्राहकाकारताभावेनोत्पत्तावसंचेतितस्य वासनोत्पादकत्वमनागतसन्तत्यन्तरज्ञानवन्न स्यादित्याह—**स्वकाले चापीति** ॥

1. अतीते. चौ. मु.
2. तस्मात्. चौ. मु.
3. चाथ संवित्तः चौ. मु.
4. गताज्ज्ञानात्. चौ. मु.

**दृढत्वे[1]नाप्यविज्ञाताद् यथोत्पन्नाद् विनश्यतः ।**
**केवलग्राहकत्वे तु विषयत्वं न युज्यते ॥ १६६ ॥**

**किमपेक्ष्य च तस्येदं ग्राहकत्वं प्रकल्प्यते ।**
**द्व्याकारता निरस्तेव संवेद्येत तदेव च ॥ १६७ ॥**

**ततश्चोत्तरविज्ञानं न प्रतीक्षेत बोधकम् ।**
**द्व्याकारकल्पनायां च परस्यात्मांश एव ते ॥ १६८ ॥**

**प्रमापर्यवसानेन नातीतो विषयो भवेत् ।**
**पूर्वग्राह्यस[2]रूपत्वे ग्राहकत्वं प्रहीयते ॥ १६९ ॥**

**[3]ग्राह्यग्राहकरूपे स्याद् विषयो नासरूपतः ।**

ज्ञानमपि च यत् स्पष्टतया न ज्ञातम्, नैव वासनामुत्पादयति ; किं पुन-ग्राहकाभावेन यदज्ञातमेव यथोत्पन्नविनष्टमित्याह—**दृढत्वेनापीत्यर्धेन** । ग्राहका-कारमात्रे चोपरितनं प्रति ग्राह्यता न स्यादित्याह—**केवलग्राहकत्व इत्यर्धेन** ॥

सर्वेषां ग्राहकत्वे सति ग्राह्याभावेन ग्राहकतापि न स्यादित्याह—**किमपे-क्ष्येत्यर्धेन** । द्व्याकारतापि—" नैतदस्ति क्व तर्हि " इत्यादिना निरस्तैवेत्याह—**द्व्याकारता निरस्तैवेति ।**

स्वयंप्रकाशत्वे चातीतस्य स्वग्रहणायोत्तरज्ञानापेक्षा न स्यादित्याह—**संवेद्येतेति** पादत्रयेण ।

एवमेवोपरितनस्यापि द्व्याकारता निराकर्तव्या ; तदपि स्वयंप्रकाशत्वेन नातीतं ग्राह्यमपेक्षत इत्याह—**द्व्याकारकल्पनायामिति ।**

केवलग्राह्याकारत्वे तूपरितनस्य पूर्वं प्रति ग्राहकत्वं न स्यादित्याह—**पूर्वग्राह्येत्यर्धेन** ॥

केवलग्राहकाकारत्वेनोपरितनस्य अतीतस्य केवलग्राह्याकारत्वेन च सरूप-जनकत्वाभावेन भवत्पक्षे ग्राह्यग्राहकभावो न स्यादित्याह—**ग्राह्यग्राहकरूप** इत्यर्धेन ।

1. नाप्य विज्ञानात्तथो. चौ. मु.    2. स्वरूपत्वे. मा.
3. ग्राहकाकारमात्रे स्याद्विषयो वासरूपतः. चौ. मु.

**न च शक्त्यर्पणस्यात्र व्यापार उपलभ्यते ॥ १७० ॥**

**शक्त्यर्पणस्य चाभावो युष्मत्पक्षे प्रसाधितः ।**
**सन्तानान्तरवच्चैषां निषेध्या हेतुसाध्यता ॥ १७१ ॥**

**वास्यवासकभावश्च ज्ञानत्वादेकसन्ततौ ।**
**तस्माद् [1]यद्ग्राहकं रूपं तद्ग्राह्यात् तस्य भिन्नता ॥ १७२ ॥**

**तत्संवित्तावसंवित्ते रसादिग्राहकं यथा ।**
**ग्राह्यं[2] तद्ग्राहकात् भिन्नं तत्परामृशता यतः ॥ १७३ ॥**

**न परामृश्यतेऽवश्यं रसादिग्राहकं यथा ।**
**द्वयं परस्परेणैवं भिन्नं साध्यं रसादिवद् ॥ १७४ ॥**

अपि च, वासनाद्वारेण पूर्वविज्ञानमुपरितनं जनयति । न च क्षणिकत्वेन तज्ज्ञानस्य वासनोत्पत्तौ व्यापारोऽस्तीत्याह—**न च शक्त्यर्पणस्यात्रे**त्यर्धेन ॥

मीमांसकपक्षे तु स्थायित्वाद् विज्ञानस्य स्थाय्यात्मगतां संस्कारात्मिकां वासनामुत्पादयितुमलमित्युक्तम्—" अवस्थिता हि वास्यन्ते " इत्यादिना । ज्ञानस्य तु क्षणिकत्वेन वास्यवासकभावो नास्तीत्युक्तमित्याह—**शक्त्यर्पणस्ये**त्यर्धेन । अत्रैव त्रैलक्षण्यमाह—**सन्तानान्तरवदिति** । अत्र एकसन्तताविति धर्मिविशेषणम्, एषामिति धर्मिनिर्देशः, निषेध्या हेतुसाध्यता वास्यवासकभावश्चेति साध्यो धर्मः, ज्ञानत्वादिति हेतुः, सन्तानान्तरज्ञानवदिति दृष्टान्तः ।

एवं तावत् द्वयोर्ग्राह्यग्राहकभावो नास्तीत्यत्र त्रैलक्षण्यमभिधायेदानीम् "अभिन्नत्वं यदा चेष्टम्"—इत्यत्र त्रैलक्षण्यमाह—**तस्मादिति** श्लोकद्वयेन । रूपस्वलक्षणग्राहकं तत् स्वग्राह्याद् भिन्नम् ; रूपस्वलक्षणग्राह्यं तत् स्वग्राहकादभिन्नम् इति प्रतिज्ञा ; हेतुदृष्टान्तौ तावेव । प्रयोगान्तरमाह—**द्वयमि**त्यर्धेन । विमत्यधिकरणभावापन्नग्राह्यग्राहकद्वयं परस्परभिन्नमिति प्रतिज्ञा ; हेतुदृष्टान्तौ तावेव ॥

1. यद्ग्रासकम्. चौ. मु. 2. ग्राहकाच्चैव. चौ. मु.

ऐकरूप्येण[1]चाज्ञानात् सन्तानान्तरबुद्धिवत् ।
ज्ञानं स्वांशं न गृह्णाति ज्ञानोत्पत्तेः स्वशक्तिवत् ॥ १७५ ॥

[2]ग्राह्यवत् प्रतिषेधश्च द्वय[3]हीना हि वासना ।
चैत्रज्ञानं तदुद्भूतज्ञानांशग्राह्यबोधकम् ॥ १७६ ॥

ज्ञानत्वान्न भवेद् यद्वत् तस्य देहान्तरोद्भवम् ।
एतयैव दिशा वाच्या शक्तिद्वयनिराक्रिया ॥ १७७ ॥

प्रमाणान्तरसिद्धत्वा[4]देकत्रानेकशक्तता ।
न त्वत्र कारणं तादृक् शक्तिभेदकृदस्ति ते ॥ १७८ ॥

अत्रैव प्रयोगान्तरमाह—**ऐकरूप्येणे**त्यर्धेन । नीलबुध्योरिति धर्मित्वम्, परस्परेण भेद इति साध्यो धर्मः, नीलमिदम्—इति भेदोपलम्भनादिति हेतुः । अभेदसाधकस्य सहोपलम्भस्य, परोक्तस्य वा सहोपलम्भनियमादित्यस्यासिद्धतामनेनाह । इदानीमेकविज्ञानसंबन्धिनोर्द्धर्मयोर्ग्राह्यग्राहकभावो नास्तीति यदुक्तम्, तत्र प्रयोगमाह—**ज्ञानं स्वांशं न गृह्णातीति** । [5]ज्ञानं स्वांशं न गृह्णाति न वा स्वांशेन गृह्यते ज्ञानोत्पत्तेः वासनावत् । श्लोके स्वशक्तिशब्देन वासनामाह । द्वयहीना हीत्यनेन साध्यसद्भावेन सपक्षतां दर्शयति ।

प्रयोगान्तरमाह—**चैत्रज्ञानमिति** । चैत्रज्ञानं धर्मि, तदुद्भूतज्ञानांशग्राह्यबोधकं न भवतीति साध्यो धर्मः, ज्ञानत्वादिति हेतुः, देहान्तरोद्भवज्ञानवदिति दृष्टान्तः । अभेदोऽपि ग्राह्यग्राहकयोरेवमेव निराकर्तव्य इत्याह—**एतयैव दिशे**त्यर्धेन । ज्ञानमात्मानं न गृह्णाति, ज्ञानादुत्पद्यमानत्वात् वासनावत् ॥

अस्मदर्थप्रतिभासबलेन त्वात्मग्राह्यग्राहकभावः, न तु ज्ञाने तथाविधप्रतिभासोऽस्तीत्याह—**प्रमाणान्तरसिद्धत्वादिति** ॥

तस्मादुभयसिद्धत्वेन लाघवादिवशेन च विज्ञानस्यैवाकारो नीलपीतादि, नार्थस्येति यदुक्तम्, तदयुक्तम्, [6]गृहीतमिदम्—इति प्रतिभासविरोधादित्याह—

1. ण विज्ञानात्. चौ. मु.
2. ग्राह्यत्व प्रति. चौ. मु.
3. हीना द्वि. चौ. मु.
4. दन्यत्रानेक. चौ. मु.
5. ज्ञानं....स्वांशेन. मा.
6. तृतीयमिदम्. म.

तस्मादुभयसिद्ध[1]त्वलाघवाद्यपरिग्रहः ।
उपायत्वाच्च यत् तस्य [2]पूर्वं ग्रहणकल्पनम् ॥ १७९ ॥
चक्षुरादीन्द्रियैरस्य[3] तदनैकान्तिकं भवेत् ।
यदप्यप्रति[4]बन्धत्वादुत्पत्तौ गृह्यतामिति ॥ १८० ॥
तत्रात्मना न[5] शक्यं तन्नान्योत्पत्ति[6]स्तदस्ति वा ।
तेनैतत्कारणाभावात् तदानीं नानुभूयते ॥ १८१ ॥
नान्यथा ह्यर्थसद्भावो दृष्टः सन्नुपपद्यते ।
ज्ञानं चेन्नेत्यतः पश्चात् प्र[7]माणमुपजायते ॥ १८२ ॥
न [8]चापि प्रतिबन्धेन केवलेनाग्रहो भवेत् ।
विशिष्टकारणाभावेऽप्यर्थो नैवानुभूयते ॥ १८३ ॥

तस्मादित्यर्धेन । यदपि साकारत्वसिध्यर्थं प्रतिपत्तेः पूर्वं विज्ञानग्रहणमुक्तम्, तस्यानैकान्तिकत्वमित्याह—**उपायत्वाच्चेति** । रूपादिप्रतिपत्तावुपायभूतान्यपि चक्षुरादीनि रूपादिप्रतिपत्त्युत्तरकालं प्रतीयन्त इत्यर्थः ।

यदप्यप्रतिबन्धत्वादर्थग्रहणात् पूर्वमुत्पत्तिकाल एव ज्ञानस्य ग्रहणं प्राप्नोतीत्युक्तम्, तत्राप्याह—**यदप्यप्रतिबन्धत्वादिति** सार्धेन । विद्यमानमप्यर्थग्रहणात् पूर्वं विज्ञानं प्रमाणाभावान्न प्रतीयत इत्यर्थः ॥

किं पुनस्तत्प्रतिपत्तौ प्रमाणम् । यदर्थग्रहणात् पूर्वं नास्तीत्युच्यते इत्याशङ्क्य प्रमाणमुपदर्शयितुमाह—**नान्यथा हीति** । दृष्टघटसद्भावान्यथानुपपत्त्या हि तदवगम्यमानमर्थग्रहणात् पूर्वमप्युत्पन्नं पश्चादेवावगम्यत इत्यर्थः ॥

वेद्यतार्थातिशयलक्षणास्य दृष्टा, न संवेदनविशिष्टता ; सर्वस्यार्थेन्द्रियमनःसंनिकर्षे सत्यार्थस्यापि वेद्यतालक्ष[9]णपरोक्षरूपातिशयोऽस्ति यदुत्पन्नः ; अत्मनोऽप्यर्थातिशयान्यथानुपपत्तिगम्या यस्मिन् सति ज्ञातृता सञ्जायत इति प्रक्रिया ॥

न च सतः केवलेन प्रतिबन्धसद्भावेनाग्रहणम् ; ग्राहका[10]भावेऽप्यर्थो नैवानुभूयत इत्याह—**न चेति** ॥

1. त्वल्लाघ. चौ. मु.
2. पूवग्रहण. चौ. मु.
3. अत्र. चौ. मु.
4. वद्धत्वात्. चौ. मु.
5. न शक्तत्त्र न. मा.
6. तदैव च. मा.
7. माणादुप. मा.
8. न चान्यप्रति. मा
9. क्षणं परेक्ष. मा.
10. भावेह्यर्थः. मा.

[1]व्यापृतं चान्यसंवित्तौ ज्ञानं [2]नात्मानमृच्छति ।
तेन प्रकाशकत्वेऽपि बोधायान्यत् प्रतीक्षते ॥ १८४ ॥

ईदृशं वा प्रकाशत्वं तस्यार्थानुभवात्मकम् ।
न चात्मानुभवोऽस्त्यस्येत्यात्मनो न प्रकाशकम् ॥ १८५ ॥

सति प्रकाश[3]कत्वेऽपि व्यवस्था दृश्यते यथा ।
रूपादौ चक्षुरादीनां तथात्रापि भविष्यति ॥ १८६ ॥

प्रकाशकत्वं बाह्येऽर्थे शक्त्यभावात्तु नात्मनि ।
[4]अन्येन ननु संवित्तावनवस्था प्रसज्यते ॥ १८७ ॥

तत्र तत्र स्मृतिं दृष्ट्वा सर्वानुभव[5]कल्पनात् ।
एकेन ह्यनुभूतत्वे सर्वं तत्रैव संभवेत् ॥ १८८ ॥

तत्रापि स्मृतिरित्येतन्न लो[6]कानुगतं वचः ।

यच्च "ज्ञानान्तरस्य चोत्पत्तिं प्रकाशो न प्रतीक्षते" इत्युक्तम्, तत्राप्याह—**व्यापृतं चान्यसंवित्ताविति**। प्रकाशरूपमपि ज्ञानमन्यत्र व्यापृतत्वान्नात्मानं गृह्णातीत्यर्थः ॥

अनात्मविषयं चैतस्य प्रकाशकत्वम्, नात्मविषयम्, यतः 'नीलमिदम्' इति प्रतिभासः, न पुनः 'नीलमहम्' इतीत्याह—**ईदृशमिति** ॥

दृष्टं च व्यवहितविषयप्रकाशकत्वमित्याह—**सति प्रकाशत्व इति** सार्धेन।

यदि घटग्राहकमुत्पन्नं ग्राहकान्तरेण गृह्येत, तदा [7]ग्राहकेऽपि स्मरणदर्शनात् तदन्यथानुपपत्त्या घटग्राहकेऽपि ग्राहकान्तरकल्पनायामनवस्था स्यात्। तदुक्तम्—"ज्ञानान्तरेणानुभवेऽनिष्टा तत्रापि च स्मृतिः" इति। तदेतद् दूषणायोपन्यस्यति स्म—**अन्येन न्विति**। यदा तु नीलमेवैकमुभयात्मकमुत्पद्यते, तदास्मिन्नेव ज्ञाने ग्राह्यग्राहकाकारयोरुभयोरपि सम्भवे सति ग्राहकान्तराभावात् नानवस्थेत्याह—**एकेन हीत्यर्धेन** ॥

तदेतत् प्रमाणाभावेन दूषयितुमाह—**तत्रापीति** ॥

1. व्यावृत्तं चान्यसंवृत्तौ. मा.
2. चात्मानम्. च. चौ. मु.
3. कत्वे च. चौ. मु.
4. अन्येन वानुभावेऽस्त्यावनवस्था. चौ. मु.
5. कल्पना. चौ. मु.
6. कानुमतम्. चौ. मु
7. Omitted. ग्राहक. मा.

न हि विज्ञानसन्तानं कश्चित् स्मरति लौकिकः ॥ १८९ ॥

घटादौ[1] च गृहीतेऽर्थे यदि तावदनन्तरम् ।
अर्थापत्त्यावबुध्यन्ते विज्ञानानि पुनः पुनः ॥ १९० ॥

[2]यावच्छ्रमं ततः पश्चात् [3]तावन्त्येव स्मरिष्यति ।
[4]तदाप्यकल्पितेऽप्येवं स्मृतिर्वन्ध्यासुतादिवत् ॥ १९१ ॥

स्मृतिभ्रान्तिश्च याप्यत्र पश्चाज्ज्ञानेषु जायते ।
तदैवार्थस्मृते[5]रेषां तज्ज्ञानादिप्रमाणता ॥ १९२ ॥

[2]यावच्छ्रमं च तद्बुद्धिस्तत्प्र[6]बन्धे च सत्यपि ।
श्रमाद् रुच्यान्यसंपर्काद् विच्छेदो विषयेष्विव ॥ १९३ ॥

यदि तावद् घटग्रहणसमनन्तरं तदन्यथानुपपत्त्या ग्राहकग्रहणं यावच्छ्रमम्, तावत्येव तदोत्तरकालं स्मरणमिति कानवस्थेत्याह—**घटादाविति** सार्धेन ।

अथ घटग्रहणसमनन्तरं घटग्राहके चार्थापत्तिर्नैवोत्पन्ना, तदोत्तरकालमननुभूतस्य वन्ध्यासुतस्मरणतुल्यं स्मरणमित्याह—**तदाप्यकल्पितेऽपी**त्यर्धेन ॥

यत्तु—तत्रापि भवतु स्मरणाभिमानः 'गृहीतो मया घटः' इति घटवत् ग्राहकस्यापि परामर्शात् इति, तदनुपपन्नम्; घटस्यैव तत्र स्मरणमनुभूतत्वात्; ग्राहकस्य तु अनुभूतत्वेन घटस्मरणान्यथानुपपत्त्या ग्राहकग्रहणमेवेत्याह—**स्मृतिभ्रान्तिश्चेति** ॥

ननु घटप्रतिपत्त्यन्यथानुपपत्त्या ग्राहककल्पनायां तत्सन्तानप्रतिपत्तौ सत्यां विषयान्तरावगमो न स्यात् । तदुक्तम्—"विषयान्तरसञ्चारस्तदा न स्यात् स चेष्यते[7]" इतीत्याशङ्क्याह—**यावदिति** । सत्यामपि ग्राहकसंवित्तौ [8]श्रमात् रुच्या विषयान्तरसंपर्काद् वा विच्छेदो भविष्यति यथा नीलत्वज्ञानसन्ततावर्थस्य पीतज्ञानमित्यर्थः ॥

1. घटादावगृही. चौ. मु.
2. यावच्छ्रमम्. चौ. मु.
3. तावत्येव. चौ. मु.
4. तदात्वक. चौ. मु.
5. रेषा तज्ज्ञा. मा.
6. बन्धे महत्यपि. चौ. मु.
7. चेक्ष्यते. मा.
8. द्रूष्याद्विषया. मा.

**तत्रापि स्मृतिरित्येषा प्रथमे प्रत्यये यदि ।**
**तन्मात्रग्रहणादेव नानवस्था प्रसज्यते ॥ १९४ ॥**

**स्मरणं त्वथ सर्वेषु [1]तत्सिद्ध्यै ग्रहणं तथा ।**
**प्रमाणवत्त्वादायातः प्रवाहः केन वार्यते ॥ १९५ ॥**

**अथ तान्याद्यविज्ञानविषयाणीति कल्प्यते ।**
**नोत्तरोत्तरबुद्धीनां विशेष उपपद्यते ॥ १९६ ॥**

**विज्ञानविषयत्वं च यस्य सर्वासु बुद्धिषु ।**
**विषयज्ञानतज्ज्ञानविशेषस्तेन दुर्लभः ॥ १९७ ॥**

**स्मरन् यथैव विज्ञानं निराकारं स्मरत्ययम् ।**
**तथा स्मरन् [2]गृहीतार्थं निराकारतया स्मरेत् ॥ १९८ ॥**

अपि च, "तत्रापि च स्मृतिः" इति यदुच्यते, सा यदि घटग्राहक एव तदन्यथानुपपत्तिकल्पितग्राहके तदा नानवस्थेत्याह—**तत्रापीति** । घटग्राहकस्मरणान्यथानुपपत्त्या घटग्राहकग्राहककल्पनायां नानवस्थेत्यर्थः ॥

अथ ग्राहकग्राहकेऽपि सर्वत्र [3]स्मरणम् , तदा यावत्स्मरणं ग्रहणकल्पनायां नानवस्थेत्याह—**स्मरणं त्विति** ॥

अथ सर्वाणि स्मरणा[4]न्याद्यघटविषयग्राहकविषयाण्येव, न [5]ग्राहकग्राहकविषयाणि ; तदापि सर्वेषां घटग्राहकविषयैकत्वेन विशेषाभावः ; तदन्यथानुपपत्त्यैव ग्राहककल्पनायां नानवस्थेत्याद्यमेव पक्षमुपसंहरति—**अथ तानीति** ॥

इदानीं विज्ञानयोरेव ग्राह्यग्राहकभावे तदुक्तमेव एकाकारविज्ञानपक्षे घटविज्ञानतज्ज्ञानयोर्विशेषो न प्राप्नोतीति दूषणमाह—**विज्ञानविषयत्वं चेति** । यस्यापि सर्वमेवोपरितनं विज्ञानं [6]स्वकारणविज्ञानविषयमिष्यते, तस्यापि घटज्ञानतज्ज्ञानयोर्विशेषो न स्यात् घटज्ञानस्यापि कारणघटज्ञानग्राहकत्वेनेत्यर्थः ॥

ननु सत्यपि ग्राह्यग्राहकयोर्भेदे 'नीलमिदम्' इत्यत्र विवेकाभावात् साकारं वस्तुज्ञानम् , निराकारोऽर्थः कस्मान्न भवतीत्याशङ्क्याह—**स्मरन् यथैव विज्ञान-**

1. तत्सिद्ध्या. मा.
2. गृहीत्वार्थम्. मा.
3. ग्रहणम्. मा.
4. न्यघट. मा.
5. Omitted. ग्राहक. मा.
6. नमगतकारण. मा

**ज्ञानपृष्ठेन योऽप्यूर्ध्वं परामर्शो भवत्यसौ ।**
**तस्यार्थेष्वभ्युपायत्वान्न[1] तद्ग्राह्यत्वकारितः ॥ १९९ ॥**

**प्रत्यासन्नत्वसम्बन्धौ [2]ग्राह्यस्यासम्भवाच्च्युतौ ।**
**विषयत्वेन वाप्येतौ स्तः किं देशाविभागतः ॥ २०० ॥**

**अर्थाकारस्य योऽप्युक्तो मिथ्याज्ञानेष्वसम्भवः ।**
**देशकालान्यथामात्रसम्भवः केषुचित् कृतः ॥ २०१ ॥**

**प्रत्यक्षादन्यविज्ञानमतीतानागतैरपि ।**
**जन्यतेऽर्थे भवन्तीषु [3]वासनास्वसतीषु वा ॥ २०२ ॥**

**मिति** । यद्यपि 'नीलम्' इत्यत्र विवेको नास्ति, अथाप्युत्तरकालं ग्राहकवन्निराकारतया तस्य स्मरणाभावादर्थस्यैवायमाकारः, न ग्राहकस्येत्यर्थः ॥

यत् पुनरिदमुक्तम्—उत्तरकालम् 'गृहीतो मया घटः' इति विज्ञानपृष्ठेनैव स्मरणाज्ज्ञानपृष्ठेनैव पूर्वं ग्रहणं संजातम्; तत्र ज्ञानस्यैवायमाकार इति, तत्राप्याह—**ज्ञानपृष्ठेनेति** । तत्रेदमेव तावद् वक्तव्यम्—विज्ञानपृष्ठेन स्मरणं नास्त्येव, अर्थस्यैव तु तत्र स्मरणम्; ग्राहकस्य तु तदन्यथानुपपत्त्या तदेव ग्रहणम् । भवतु वोत्तरकालं ज्ञानपूर्वकमर्थस्य पर्यालोचनम्; तथापि तदर्थग्रहणात् पूर्वं विज्ञानग्रहणं न[4] साधयति, अन्यथोपपन्नत्वात् । यदर्थप्रतिपत्तावुपायत्वं तस्य, तत्कृतमित्यर्थः ॥

यत्तु—"प्रत्यासन्नं च सम्बन्धम्"—इत्युक्तम्, तत्राप्याह—**प्रत्यासन्नत्वसम्बन्धावित्यर्धेन** । नीलादेरनात्मतया प्रतिभासमानत्वेन तयोरसम्भवादित्यर्थः । विषयत्वेन वा नीलस्य ग्राहकादनात्मभूतस्यापि तौ भविष्यतः, किमविभक्तदेशत्वेन ? विषयत्वं च तत्र भासनादित्याह—**विषयत्वेनेत्यर्धेन** ॥

यत् पुनरिदमुक्तम्—अर्थाभावेऽपि 'रजतम्' इत्याकारदर्शनात् कथमर्थस्यायमाकारः इति तत्राप्याह—**अर्थाकारस्येति** । तत्राप्यनात्मैवाविद्यमानमालम्बनमित्युक्तम् "सर्वत्रालम्बनं बाह्यम्" इत्यत्रेत्यर्थः ॥

अतीतानागतयोरप्यर्थयोरालम्बनत्वमुक्तम्—"एष प्रत्यक्षधर्मश्च" इत्यत्रेत्याह—**प्रत्यक्षादिति** ॥

1. न तु ग्राह्यत्व. चौ. मु
2. ग्राह्यत्वासम्भ. चौ. मु.
3. वासनासु सतीषु वा. मा.
4. Omitted. न मा.

**निराकारेण चोत्पत्तिर्वैचित्र्याकारयोः कथम् ॥ ५० ॥**

**निराकाराच्च विषयाद् बुद्ध्याकारोऽतिविस्मयः ।**
**स्मृतिस्वप्नादिबोधेन स्यादनाकारता तव ॥ ५१ ॥**

**न हि तत्रार्थसंसर्गः केवला वासनैव तु ।**
**हेतुत्वेनोपपन्नेति सैव जाग्रद्धियामपि ॥ ५२ ॥**

नीललक्षणोऽर्थः प्रत्यक्षो वा स्यादनुमेयो वा ? न तावत् प्रत्यक्षः, अपरोक्षधियोपलम्भाभावात्; नानुमेयः, नीलज्ञानलक्षणलिङ्गैकसमधिगम्ये तस्मिन्नीलज्ञानस्य तदुत्पत्तिलक्षणसम्बन्धग्रहणाभावात्; नित्यानुमेये तस्मिन्नीलज्ञानस्य तदधीनता तत्कार्यता न क्वचिद् दृष्टेत्यर्थः ।

ननु कादाचित्कत्वमग्न्यादौ हेतुमत्त्वेन व्याप्तम्; नीलज्ञानेऽपि तदुपलभ्यमानं कारणमवगमयति; इन्द्रियविषयान्तरसद्भावेऽपि क्वचिदनुत्पादादुभयवैलक्षण्येन तदनुमीयमानं नीलमेव स्यात् । नैतदेवम्; नीलाभावेऽपि नीलज्ञानदर्शनेन वासनाधीनत्वान्नैकान्ततो नीलज्ञानं नीलमेवावगमयति । ननु च यथा साकारोऽर्थो निराकारं विज्ञानमनुमापयति, एवं नीलाकारमपि विज्ञानं अनीलमर्थमनुमापयतीत्याशङ्क्याह—**निराकारेण चोत्पत्तिर्वैचित्र्याकारयोः कथम्** ॥ इति ॥

ननु चक्षुरिन्द्रियमनीलमपि नीलज्ञानं जनयति; तत्कथमुच्यते—निराकारेण चोत्पत्तिरित्याशङ्क्याह—**निराकाराच्च**ेत्यर्धेन । आलम्बनत्वेन ह्यर्थस्य कारणत्वम्; न च नीलाकारस्य ज्ञानस्यानीलमालम्बनं युक्तमित्यर्थः । तदुक्तम्—

"स्वरूपविपरीतस्य कथं ग्राह्यं भविष्यति" इति ।

संसर्गधर्माकारवादिनस्त्वयमपरो दोषः—अर्थाभावेऽपि स्मार्तं विज्ञानमुत्पद्यते स्वप्नावस्थायां च; तत्राकारोपलम्भो न स्यात्, अर्थाभावेन संसर्गाभावादित्याह—**स्मृतीति** त्रिपाद्या ।

अतो यथा स्वप्नावस्थायामनपेक्षितबाह्यार्थं वासनामात्रजन्यं नीलपीताद्याकारं विज्ञानम्, एवं जाग्रदवस्थायामपि भविष्यतीति न साकारविज्ञानपक्षे परिकल्पनायां किञ्चित् प्रमाणमित्याह—**केवलेति** त्रिपाद्या ॥

तस्मात् प्रत्यक्षबुद्धीनां नातीतो विषयो भवेत् ॥ १६१ ॥

अतीतत्वाद् यथैवासां वृत्तो जन्मान्तरेषु यः ।
तद्रूपत्वेन वाज्ञानं हेतुर्भाविवदुच्यते ॥ १६२ ॥

अतीतत्वेऽपि नार्थोऽयं धीरेषेत्यत्र का प्रमा ।
[1]अतीतं यच्च विज्ञानं ग्राह्यत्वेन प्रकल्पितम् ॥ १६३ ॥

तत्[2] स्याद् ग्राहकरूपं वा ग्राह्यं वोभयथापि वा ।
ग्राह्याकारत्वमात्रे स्यादर्थः शब्दान्तरेण ते ॥ १६४ ॥

स्वकाले [3]चाप्यसंवित्तेर्न स्याच्छक्त्यर्पणं ततः ।
यथैवानाग[4]तज्ञानात् सन्तत्यन्तरजादपि ॥ १६५ ॥

मानालम्बनं विज्ञानं वर्तमानतयार्थमवभासयति विपर्ययात् भ्रान्तित्वादित्यर्थः । भ्रान्तता च बाधकप्रत्ययावसेया ; न तु 'नीलम्' इति विज्ञाने बाधकप्रत्ययोऽस्तीत्यर्थः ।

अत्रैव प्रमाणमाह—**तस्मादिति** । अनन्तरातीतविज्ञानं धर्मि, प्रत्यक्षस्यालम्बनं न भवतीति साध्यो धर्मः, अतीतत्वादिति हेतुः, जन्मान्तरातीतविज्ञानवदिति दृष्टान्तः ।

पूर्वस्मिन्नेव प्रतिज्ञार्थे हेतुदृष्टान्तान्तरमाह—**तद्रूपत्वेनेत्यर्धेन**। अतीततयाप्रतिभासमानत्वाद् भाविविज्ञानवत् ॥

भवतु वाप्यप्रतिभासमानत्वेनाप्यतीतस्यालम्बनत्वम् ; विज्ञानमेव तु, नार्थः इत्यत्र न किञ्चित् प्रमाणमित्याह—**अतीतत्वेऽपीत्यर्धेन** । यच्चेदमतीतविज्ञानमुपरितनस्य ग्राह्यत्वेन भवद्भिरिष्टम् , तद् ग्राह्यकारं वा स्यात् ग्राहकाकारं वा स्यात् उभयाकारं वा—इति दूषणायोपन्यस्यन्नाह—**अतीतं यच्चेति** ।

तत्र केवलग्राह्यत्वाभ्युपगमेऽर्थ एव ज्ञानशब्देनोक्तः स्यादित्याह—**ग्राह्याकारत्वमात्रे स्यादित्यर्धेन** ॥

केवलग्राह्यत्वे चातीतस्य ग्राहकाकारताभावेनोत्पत्तावसंचेतितस्य वासनोत्पादकत्वमनागतसन्तत्यन्तरज्ञानवन्न स्यादित्याह—**स्वकाले चापीति** ॥

1. अतीते. चौ. मु.
2. तस्मात्. चौ. मु.
3. चाथ संवित्तः चौ. मु.
4. गताज्ज्ञानात्. चौ. मु.

द्वि[1]चन्द्रादिष्वपि त्वेवं तारकादिमतौ तथा ।
स्त्रीत्वाद्यन्यत्र दृष्टं स्यात् कथंचिद् वेह संभवेत् ॥ २१२ ॥

शब्दमात्रप्रतीत्या वा [2]दृष्टैर्वा कैश्चिदिङ्गनात् ।
संस्त्यानप्रसवस्थानैर्यथा पातञ्जले मते ॥ २१३ ॥

तेन लिङ्गत्रयस्या[3]पि सम्भवः स्यात् प्रमाणवान् ।
अपेक्षाभेदतश्चात्र विरोधोऽपि न [4]युज्यते ॥ २१४ ॥

कुणपादिमतौ चैवं सार्वरूप्ये व्यवस्थिते ।
वासनाः सहकारिण्यो व्यवस्थाकारदर्शने ॥ २१५ ॥

स्वप्रत्ययानुकारो हि बह्वाकारेषु वस्तुषु ।
निर्द्धारणे भवेद्धेतुर्नापूर्वाकारकल्पने ॥ २१६ ॥

तस्माद् यथा शुक्तिकायां रजतज्ञानमनात्मालम्बनम्, एवं चन्द्रे द्वित्वप्रतिभासं विज्ञानम्, तारकादौ च लिङ्गप्रतिभासं विज्ञानत्रयमित्याह—**द्विचन्द्रादिष्वि-त्यर्धेन**। अथवान्यद[5]ष्टलिङ्गत्रयसमारोपेण तारकादौ लिङ्गत्रयप्रतिभासं विज्ञानमुत्पद्यत इत्याह—**स्त्रीत्वाद्यन्यत्र दृष्टं स्यादिति**। अन्येषां दर्शनम्—अस्त्येव तारकादौ लिङ्गत्रयसद्भावः परमार्थेनैव सत्यशब्दमनधिगम्यत्वेन दृष्टसंस्त्या[6]नादिलिङ्गत्रयगम्यत्वेन वा प्रत्यक्षेण न प्रतीयत इत्याह—**कथंचिदित्यादिना** पादन्यूनेन श्लोकद्वयेन। संस्त्यानप्रसवाद्यपेक्षया विरोधोऽपि नास्तीत्याह—**अपेक्षाभेदतश्चे-त्यर्धेन** ॥

एवमेव कुणपादावपि, सर्वात्मके तस्मिन् वासनासहकारिणी परिव्राट्कामुकशुनां व्यवस्थितार्थप्रतीतिरित्याह—**कुणपादिमतौ चेति** ॥

अनेकाकारवस्तुनि व्यवस्थिताकारोपलब्धिर्दृष्टा वासनावशेन, न त्वविद्यमानमेवार्थमवभासयति वासनेत्याह—**स्वप्रत्ययानुकार इति**। स्वप्रत्ययानुकारशब्देन वासनामाह ॥

1. दिमतिष्वेवम्. चौ. मु.
2 दृष्टेर्वा. मा.
3. स्यात्र सद्भावः. चौ. मु.
4. विद्यते. चौ. मु.
5. दृष्टि. मा.
6 स्त्यानगतिलिङ्ग. मा.

[1]तथा दीर्घघटत्वादौ भिन्नापेक्षानिबन्धना।
आकारभेद[2]संवित्तिरविरुद्धा भविष्यति ॥ २१७ ॥

नानेकाकारसंवित्तेर्निराकारत्वकल्पना।
युक्ता प्रतीतिभेदात् तु[3] बह्वाकारत्वसम्भवः ॥ २१८ ॥

संवित्ते[4]श्च विरुद्धानामेकस्मिन्नाप्यसम्भवः।
एकाकारं भवेदेकमिति नेश्वरभाषितम् ॥ २१९ ॥

ननु एकस्मिन् वस्तुनि 'रजतमिदम् नेदं रजतम्' इति भावाभावप्रतिभासं विज्ञानद्वयमुत्पद्यते; न चैकस्य परस्परविरुद्धानेकाकारता युक्ता। तस्माद् विज्ञानमेवैकं रजताकारमपर[5]मरजताकारमिति। तदनुपपन्नमित्याह—**नानेकाकारसंवित्तेरिति**। अयमभिप्रायः—किमेकस्य भावाभावारूपतयाव[6]गमोऽस्ति, उत नास्ति? यदि तावदस्ति, किमिति तर्हि एकस्य भावाभावरूपता नोपपद्यते? एका[7]कारताप्येकस्यावगमनिषेधेनैव, नैकत्वनिबन्धना। अथ नास्ति, अनवगमादेव तर्ह्येकस्मिन् भावाभावयोर्नास्तित्वम्, नैकत्वेनेत्यर्थः॥

ननु परस्परविपर्ययात्मकत्वे भावाभावयोर्विरोधात् कथमे[8]कत्र निवेश इत्याशङ्क्याह—**संवित्तेश्चे**त्यर्धेन। अवगमानवगमौ विरुद्ध[9]त्वाविरुद्धत्वे कारणम्; स चायमवगमोऽस्ति 'रजतमिदम्, नेदं रजतम्' [10]इतीति न तदाकारयोर्भावाभावयोर्विरुद्धता; भावयोरपि रूपरसयोरेकत्र प्रतीतेरविरोधो न भावत्वेन; छायातपयोरप्येकत्वाप्रतीतेर्विरोधो न छायातपत्वेनेत्यर्थः। अवगमैकनिबन्धनं च वस्तुत्वमित्यनुपासितगुरुं प्रबोधयितुमाह—**एकाकारं भवेदेकमिति**। अथाप्येकस्यानेकाकारता नोपपद्यते, अनेकाकारतावगमात् तर्ह्यनेकत्वमेवास्तु; न चैकत्वं धर्मिणः कथितम्। अथैकत्वावगमादेकत्वं धर्मिणः, अवगमनिबन्धनैव तर्ह्येकस्यानेकाकारता किमिति परित्यज्यते? यदि ह्येकम्—इदमेकाकारम्, इदमनेकाकारम् इति,

1. श्लोको न दृश्यते व्याख्य. च. मा.
2. संपत्तिः. चौ. मु.
3. बाह्याकारत्व. मा.
4. वित्तेश्चाविरुद्धानामेकस्मिन्नप्य. चौ. मु.
5. अपरं रजता. मा.
6. गमात्युत. मा.
7. काराप्येक. मा.
8. विशेषः. मा.
9. त्वाद्विरुद्ध. मा.
10. इति सतदा. मा.

तथैव तदुपेतव्यं यद् यथैवोपलभ्यते ।
न चाप्यैकान्तिकं तस्य स्यादेकत्वं च वस्तुनः ॥ २२० ॥

तस्माद् देशादिसद्भावनिमित्तैः प्रत्ययैः पृथक् ।
वस्त्वाकाराः प्रतीयेरन् उद्भवाभिभवात्मकाः ॥ २२१ ॥

युगपद् ग्राहकाणां च यो यदाकारवाचिनम् ।
शब्दं स्मरति [1]तस्यासावाकारः संप्रतीयते ॥ २२२ ॥

नित्यं सत्सु यथा लोके रूपादिषु घटे पृथक् ।
चक्षुरा[2]द्यनुरोधेन संवित्तिर्व्यवतिष्ठते ॥ २२३ ॥

एवमेव घटत्वादौ सर्वान् प्रति भवत्यपि ।
वाचकस्मृतिभेदेन संवित्तिर्व्यवतिष्ठते ॥ २२४ ॥

तदा कः प्रद्वेषः कुतार्किकाणाम्? यदा विज्ञानस्यापि साकारतावसेयैवेत्याह— **न चापित्यर्धेन** ॥

यदि तर्हि रजतं सदसदात्मकमपरोऽक्षं वस्तु ज्ञेयाद्यनेकाकारं च घटादि, रजतावगमकाले तदभावावगमोऽपि प्राप्नोति; सदंशावगमकाले च ज्ञेयत्वाद्यव-[3]गमोऽपि घटादावित्याशङ्क्याह—**तस्माद्देशादिसद्भावनिमित्तैरिति** ॥

तत्र तावद् दिङ्मोहादावस्त्येव भावग्रहणवेलायामेवाभावग्रहणम्। यत्रापि शुक्तिकादौ नास्ति, तदाप्युद्भवाभिभवदेशादिसहकारिनिमित्तम्; यत्रापि घटादौ युगपत् सज्ज्ञेयाद्यनेकाकारोद्भूतिरेकाकारोपलब्धिवेलायामेव प्रतिपत्यन्तरैराकारान्तरस्य प्रतीयमानत्वेन, तत्रापि शब्दस्मरणस्य सहकारिभेदेन व्यवस्थिताकारोपलब्धिरित्याह—**युगपद् ग्राहकाणां चेति** ॥
दृष्टान्त[4]रूपे गन्धरसात्मके वस्तुनि चक्षुराद्युपायभेदेन रूपाद्युपलब्धिव्यवस्थेत्याह— **नित्यं सत्सु यथा लोक इति** ॥

दार्ष्टान्तिके योजयितुमाह—**एवमेवेति** ॥

1. तेनासौ. चौ. मु.
2. द्यवरोधेन. मा.
3. गमेऽपि. मा.
4. रूपस्य. गन्ध. मा.

तस्माद् बहिःस्थि[1]तोऽर्थात्मा नराणां चक्षुरादिभिः ।
प्राप्य वाप्राप्य वा बुद्धेर्विषयत्वेन कल्प्यते ॥ २२५ ॥

वदन्ति लौकिका यच्च यादृग्ज्ञानं तथा बहिः ।
तेऽपि न[2] ज्ञानसंवित्त्या तथार्थं प्रतिजानते ॥ २२६ ॥

ग्राहकत्वेन विज्ञानं यथार्थं नः समर्पयेत् ।
तादृगर्थः स इत्येवं तेषां [3]वाक् तदुपायतः ॥ २२७ ॥

लैङ्गिकासत्त्वसम्प्राप्तैर्[4]तो बाह्यार्थत्वादिभिः ।
ज्ञानानुभवमुत्क्रम्य बाह्य एव [5]प्रयत्यते ॥ २२८ ॥

यथा लोकेन[6] तद्बुद्धि बाह्यत्वेनात् परीक्षकैः ।
न यादृगन्तराकारस्तादृग् बाह्यो वि[7]कल्प्यते ॥ २२९ ॥
उत्पद्यमाना गृह्णीत धीरर्थग्रहणे यदि ।

प्रकरणार्थमुपसंहरति—**तस्मादिति** ॥

यत् पुनरिदमुक्तम्—"नीलोऽर्थोऽयं प्रसन्नो मे तद्रूपा जायते मतिः" इत्येवं वदन्तो लौकिका विज्ञानमेव साकारं प्रत्यक्षमभ्युपगच्छन्ति—इति, तत्राप्याह—**वदन्ति लौकिका यच्चे**त्यादिना श्लोकद्वयेन ॥

यस्मान् नीलकर्मकोऽवगमो ज्ञानस्वरूपातिक्रमेण बाह्य एवार्थः प्रतीयत इत्याह—**लैङ्गिकासत्त्वमिति** ॥

प्रत्यक्षादिसमर्थितं च परीक्षकैरभ्युपगन्तव्यम् ; न पुनरनात्मावभासेऽप्यात्मैवालम्बनमित्याह—**यथा लोकेनेति** । लोकशब्देन प्रत्यक्षमाह । यथा प्रत्यक्षेण समर्थितम्, तथाभ्युपगमनीयमित्यर्थः ॥

एवं तावत् प्रमाणार्थम्—"स्यादेवम्" इत्यादिना "बुध्यन्तरकालमवस्थास्यते"—इत्येवमन्तं भाष्यं व्याख्यायाधुना—उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति च" इत्यादि पूर्वपक्षभाष्यमाक्षिपन्नाह—**उत्पद्यमानेति** त्रिपाद्या । यदि चोत्पद्य-

1. स्थितोऽप्यात्मा. चौ. मु.
2. ते पुनर्ज्ञान. चौ. मु.
3. वा तदुपाय, चौ. मु.
4. रेतैर्बाह्य. चौ. मु.
5. प्रतीयते. चौ. मु.
6. च तद्बुद्धिः चौ. मु.
7. ह्येऽवकल्पते. चौ. मु.

पूर्वपक्षस्य किं सिद्धं कथं चार्थान्तरं वदेत् ॥ २३० ॥

बाह्यार्थवादिनं ब्रूते भवान् किं नैवमिच्छति ।
प्रतिबन्धो न तस्यास्ति गृह्णात्यर्थान्तरं यदा ॥ २३१ ॥

उत्तरं ग्राहकाभावाल्लिङ्गाभावाच्च नास्ति नः ।
तदाग्रहणमित्येतदन्यतर्केषु चोद्य[1]ते ॥ २३२ ॥

तेषु [2]सर्वेषु विज्ञानमर्थकालेऽवगम्यते ।
तथा सत्यर्थनाशः स्यादित्येतदुपदिश्यते ॥ २३३ ॥

मानैव बुद्धिरर्थग्रहणसमकालमेव गृह्यते, तथापि नैवार्थस्याभावः सिध्यतीत्यर्थः । कथं च पूर्वपक्षवादी विज्ञानव्यतिरिक्तमर्थं ब्रूयादित्याह—**कथं चार्थान्तरं वदेदिति** ॥

एवमाक्षिप्तं पूर्वपक्षभाष्यं समर्थयितुमाह—**बाह्यार्थवादिनमिति** । न ह्यत्र पूर्वपक्षवादी स्वाभिप्रायेणैतद् ब्रवीति । किं तर्हि? सिद्धान्तवादिनमेवं पृच्छति—किमित्यर्थग्रहणकाल एव बुद्धेर्ग्रहणं नेच्छसि; अर्थसद्भावाद्धि प्रयोजनम् । न च [3]यदार्थमवगमयति तदेयं केनचित् प्रतिबद्धेत्यर्थः ॥

"तन्न; न ह्यज्ञातेऽर्थे कश्चिद् बुद्धिमुपलभते" इति सिद्धान्तभाष्यम् । तद् व्याचष्टे—**उत्तरं ग्राहकाभावादिति** पादत्रयेण । अर्थग्रहणं हि लिङ्गभूतमन्यथानुपपद्यमानं वा बुद्धेर्ग्राहकं प्रमाणमुपजनयति । तच्चोत्तरकालमर्थग्रहणादुत्पद्यते, न पूर्वम्, नाप्यर्थग्रहणसमकालमित्यर्थः । वृद्धनैयायिकाभिप्रायेण वा पूर्वपक्षवादी चोदयतीत्याह—**अन्यतर्केषु चोद्यत** इत्यादिपादत्रयेण । त एवमाहुः—उत्पद्यमानैव सार्थमवगमयति आत्ममनःसंयोगजेन प्र[4]त्यक्षेण स्वयं च सुखादिवदवगम्यते इति । किमित्यन्यबाह्यार्थवैलक्षण्येनार्थग्रहणोत्तरकालमेव बुद्धेर्ग्रहणमाश्रितमित्यर्थः । एवं त्वभ्युपगम्यमाने निराकारत्वावगमाभावेन विज्ञानस्यैव साकारतायामर्थस्य नाश एव प्राप्नोतीति तदर्थमन्यबाह्यार्थवैलक्षण्येनार्थग्रहणोत्तरकालं बुद्धेर्ग्रहणमुपदर्शयति "न ह्यज्ञाते" इत्यादिभाष्येणेत्याह—**तथा सतीत्यर्धेन** ॥

1. चोच्यते. चौ. मु.
2. तर्केषु. चौ. मु.
3. यथार्थम्. मा.
4. त्यक्षेण....दिव. मा.

**नन्वित्येतदसम्बद्धं परेष्टस्यैव चोदनात् ।**
**पौर्वापर्यवि[1]भागश्च प्रागुक्तेन विरुध्यते ॥ २३४ ॥**

**क्षणिकत्वेन [2]युक्तस्य ज्ञातत्वमथ चेत् तदा ।**
**भूतकालाश्र[3]याद् ब्रूयाद् वृथोक्तस्य पुनर्वचः ॥ २३५ ॥**

**अत्रापि न स्वसिद्धान्तमूचे [4]वाक्यात् परस्य तु ।**
**भ्रान्तत्वादन्यथा पक्षं गृहीत्वेति स पृच्छति ॥ २३६ ॥**

**सहोत्पत्यु[5]पलब्धी हि ज्ञानस्यै[6]कान्ततान्विते ।**

"ननूत्पन्नायामेव बुद्धौ 'ज्ञातोऽर्थः' इत्युच्यते, नानुत्पन्नायाम्"—इति पूर्वपक्षभाष्यम्; तदाक्षिपन्नाह—**नन्वित्येतदिति** । इष्टमेवैतत् सिद्धान्तवादिनो बुद्धावुत्पन्नायामर्थो गृह्यत इति । परेष्टस्यैव परिचोदनादसम्बद्धम् । विरुध्यते चायं पौर्वापर्यविभागः पूर्वपक्षवादिनः—पूर्वं बुद्धिरुत्पद्यते पश्चात् ज्ञातोऽर्थ इति, प्राक् पूर्वपक्षवाद्युक्तेनैव यौगपद्येन—"उत्पद्यमानैवासौ ज्ञायते, ज्ञापयति चार्थान्तरं प्रदीपवत्" इत्यनेनेत्यर्थः ॥

यदि कश्चिदविरोधं ब्रूयात्—अनेनापि यौगपद्यमेवोक्तम् इति; यतो "ज्ञातः" इति निष्ठया भूतकालतैव धात्वर्थस्योक्ता । एतदुक्तं भवति—ज्ञानोत्पत्तिकाल एव ज्ञातोऽर्थः, उपपद्यते पश्चात्[7] 'ज्ञातोऽर्थः इति' इति । उपपद्यते चैतत्; अन्यथा क्षणिकत्वे विज्ञानमुत्पत्त्युत्तरकालमसत्त्वात् कथं गृह्णातीति । तान् प्रत्याह—**क्षणिकत्वेनेति** । तेनैव तर्हि गतत्वात् । पूर्वपश्चाच्छब्दौ चात्रानुपपन्नावेवेत्यर्थः ॥

एवमाक्षिप्तं समर्थयितुमाह—**अत्रापि नेति** । अत्रापि पूर्वपक्षवादी सिद्धान्तेन पौर्वापर्यमाह, न [8]तत्रैव, वादिनोऽर्थस्याभावात् । "ज्ञाते त्वर्थेऽनुमानादवगच्छति" इति सिद्धान्तवचनादर्थग्रहणोत्तरकालमेतस्य ज्ञानमुत्पद्यत इति भ्रान्त्यान्यथार्थं गृहीत्वा सिद्धान्तवादिनमेवं पृच्छतीत्यर्थः ॥

किंनिमित्तमिति चेदित्याह—**सहोत्पत्त्युपलब्धी इति** ॥

1. भागोऽपि. चौ. मु.
2. युक्तं स्यात्. चौ. मु.
3. श्रयान्ब्रू. मा.
4. व्याजात्. चौ. मु.
5. पलब्धाहि. चौ, मु.
6. कान्ततः स्थितिः. चौ. मु.
7. श्चाचाज्ञातोऽर्थइतीत्युपपद्यते. मा.
8. तत्रैकवादिगः. मा.

प्रागूर्ध्वं वार्थसंवि[1]त्तेर्यु[2]गपद् वेति चिन्त्यते ॥ २३७ ॥

एष चार्थस्य [3]संवित्तेः पश्चाज्ज्ञानावबोधनम् ।
[4]ब्रवीति नूनमेतस्य पश्चादुत्पद्यतेऽपि तत् ॥ २३८ ॥

न चैतच्छक्यते तस्मादुत्पत्तेरपकर्षणम् ।
करोमि तावत् तत्काला संवित्तिरपि सेत्स्यति ॥ २३९ ॥

प्राक् च तद्ग्रहणे सिद्धे बाह्याभ्यन्तरयोर्ध्रुवम् ।
विवे[5]कादर्शनं तस्मादिदं पूर्वं च चोदितम् ॥ २४० ॥

युगपद् गृह्यमाणेऽपि नाकारोऽर्थस्य लक्ष्यते ।
तस्मादर्थस्य संवित्तिः पूर्वं यत्नेन साध्यते ॥ २४१ ॥

प्रकाशस्वभावत्वेन विज्ञानं यदैवोत्पद्यते तदैव गृह्यत इत्यत्र तावदव[6]सितो वाद एव; इहोत्पत्त्युपलब्धी विज्ञानगते अर्थग्रहणात् पूर्वमुत्तरकालं सहैव वेति विवादः ।

भवतु विज्ञानगतयोरुत्पत्त्युपलब्ध्योरेककालत्वम्; तत्र अर्थग्रहणोत्तरकालमेव सिद्धान्तवादिना ज्ञानोत्पत्तिरुक्तेति कुतोऽवगम्यत इत्याशङ्क्याह—**एष चेत्यादिना विवेकादर्शमित्यन्तेन** । प्रकाशस्वभावतया विज्ञानस्योत्पत्तिग्रहणयोरेककालत्वमवगतम् । सिद्धान्तवादी चार्थग्रहणोत्तरकालं ब्रवीतीति नूनमेतस्य पश्चादुत्पद्यते तदिति । न चैतत् प्रमाणवत्, अर्थग्रहणस्य विज्ञानाधीनत्वात्; तेनार्थग्रहणात् पूर्वं विज्ञानमुत्पद्यते इत्येतत् तावत् साधयामि । उत्पद्यते चेदर्थग्रहणात् पूर्वं प्रकाश[7]स्वभावत्वेन गृह्येत; निराकारस्तु तस्यावगमो नास्तीति विज्ञानस्यैवाकारो नीलपीतादिरनात्मतयावभासत इति पूर्वपक्षार्थः । तदुक्तम्—"प्रागूर्ध्वं ग्रहणादिषु" इति । उत्पद्यमानैवासौ"—इत्यत्राप्यनेनैवाभिप्रायेण पूर्वपक्षवादी सिद्धान्तवादिनं पृष्टवान् । युगपद् ग्रहणेऽपि विवेकाभावेन विज्ञानस्यैव साकारतायामर्थस्याभाव इत्याह—**तस्मादित्यादिना लक्ष्यत** इत्यन्तेन ।

यत एवमुभयपक्षेऽप्यर्थस्य नाशः, तस्मात् सिद्धान्तवादिना विज्ञानात् पूर्वमर्थग्रहणं साधनीयमित्याह—**तस्मादर्थस्य संवित्तिरित्यर्धेन** ॥

1. संपत्तेः. चौ. मु.
2. युगपच्चेति. मा.
3. संपत्तेः. चौ. मु.
4. ब्रवीतु. चौ. मु.
5. कादर्शनात्. मा.
6. सितं वाद एव होत्पत्त्यु. मा.
7. भावो न × × तत्त्वाव. मा.

**यस्त्वेतस्योत्तरो ग्रन्थः प्रागेवासौ निरूपितः ।**
[1]**न त्वेतत् साधनं साक्षात् पूर्वं बुद्धेरबोधने ॥ २४२ ॥**

**न परामृश्यतेऽर्थात्मा ज्ञातोऽप्यज्ञातवद्यतः ।**
**तस्मा[2]दग्रहणं पूर्वं बुद्धेः किं केन सङ्गतम् ॥ २४३ ॥**

**अतः पूर्वोपलब्ध्या यो बुद्ध्याकारोऽत्र वाञ्छितः ।**
**तन्निराकरणेनैव फलत्वाद् ग्रन्थवर्णना ॥ २४४ ॥**
**कामं बुद्धेरिति त्वेतदर्थाधीनत्वमुच्यते ।**

अत्र सिद्धान्तभाष्यम्—"सत्यं पूर्वं बुद्धिरुत्पद्यते, न तु पूर्वं ज्ञायते ; भवति हि कदाचिदेतत्" इत्यादि ; तदेतत् "न पूर्वं ज्ञायते बुद्धिः"—इत्यत्र व्याख्यातमेवेति न व्याख्यायत इत्याह—**यस्त्वेतस्योत्तरो ग्रन्थ** इत्यर्धेन । तदेतदाक्षिपन्नाह—**न त्वेतत्साधनमि**त्यादिना सार्धेन श्लोकेन । यस्मादुत्तरकालं नीलादिग्राह्यस्मरणाभावेऽपि ग्राहकं स्मर्यते, तस्मादर्थग्रहणात् पूर्वं न गृह्यत इति **किं केन सङ्गत**मिति ॥

तदेतत् पूर्वं समर्थयितुमाह—**अतः पूर्वोपलब्ध्या य इति** । पूर्वोप[3]लब्धिफलनिराकरणद्वारेण पूर्वोपलब्धिं निराकरोति । साकारता हि ज्ञानस्य निराकारत्वावसायाभावेन पूर्वोपलब्धः फलम् , इदं नीलपीताद्याकारतां निराकरोति ; विज्ञानस्य यदि स्यात् , नीलपीतादिपरामर्शाभावेन ग्राहकपरामर्शो न स्यात् , अस्ति च । तदुक्तम्—"न स्मरामि मया कोऽपि" इति ॥

एवमनुपपन्नं भाष्यमाशङ्क्य व्याचष्टे—**काममि**त्यर्धेन । "काममेकरूपत्वे" इत्यादि सिद्धान्तभाष्यम् । तस्यायमर्थः—एकाकारोपलम्भनाकल्पनायां[4] परोक्षत्वेन बुद्धेरेवाभावः, न त्वर्थस्य प्रत्यक्षस्य इति । तदनुपपन्नमिव दृश्यते ; यतोऽर्थप्रत्यक्षतैव बुद्धिसद्भावे प्रमाणम् । सा चेदभ्युपगता, कथं बुद्धेरभावः ? सत्यम्—अर्थसद्भावाभ्युपगमे **कथं बुद्धेरभावः** । तदन्यथानुपपत्तिगम्या हि बुद्धिः कथमर्थं

1. नन्वेतत्. चौ. मु.
2. तस्मान. ग्रहणम्. चौ. मु.
3. लब्धिनिराकरण. मा.
4. नायापरोक्षज्ञानेन बुद्धेरवभासः, मा.

**न चार्थरूपाद् भेदेन धियामस्ति निरूपणम् ॥ २४५ ॥**

**पररूपनिरूप्यं च न मेयं मृगतोयवत् ।**
**[1]असद्ग्राह्यानुसारेण ज्ञानसंवेद्यता तव ॥ २४६ ॥**

**स्वच्छत्वा[2]च्च स्वरूपस्य कल्पिता ग्राह्यता धियाम् ।**
**वासनोपप्लवात् तेन न मेयं पारमार्थिकम् ॥ २४७ ॥**

**निमित्तनियतत्वं तु समानमुभयोरपि ।**
**निजशक्त्यनुसारित्वाज्ज्ञानबाह्यर्थवादिनोः ॥ २४८ ॥**

**तन्त्वर्थैरपि कस्माद् वः क्रियते केवलः पटः ।**

विनाशयेदिति बलादद्वैतापत्तिरप्रमाणवती । अथाद्वैतेन वः कृत्यम्, तथापि तदधीनत्वेन परोक्षत्वेन [3]वरं बुद्धेरेवाभावः इति तात्पर्यम् ।

"न [4]चार्थव्यपदेशमन्तरेण बुद्धेरुपलम्भः"—इति सिद्धान्तभाष्यम् । तदिदं माध्यमिकदर्शनेऽपि ज्ञानस्य प्रत्यक्षतां निराकरोतीत्याह—**न चेति** सार्धेन श्लोकद्वयेन । स्वप्रकाशमपि विज्ञानं नीलपीताद्याकारतयैव प्रकाशते । न च भवत्पक्षे नीलपीताद्याकारता विज्ञानस्य पारमार्थिकीति । अनुभवैकमा[5]त्ररूपं तु ज्ञानमनीलमपि वासनाबलेन नीलतयावभासते । न च काल्पनिकेन रूपेणावभासमानस्य प्रत्यक्षता ऊषरस्येव सलिलरूपतेत्यर्थः ॥

"अपि च, नियतनिमित्तः"—इत्यादि भाष्यम् । तस्यायमर्थः—नियतस्तावत् कार्यकारणभावोऽवगम्यते ; स बुद्धिमात्रपक्षे न स्यात् । किमिति तन्तुबुद्धिः पटबुद्धिमेव जनयति, न घटबुद्धिमिति ? तदेतदाक्षिपन्नाह—**निमित्तनियतत्वमित्यादिना** श्लोकपञ्चकेन । तन्तवोऽपि तन्तुषु बुद्धिवत् कस्मात् [6]पटतयैव ज्ञानं जनयन्ति, न घटतया ? स्वाभाविकशक्तिवशेन तन्तवः पटमेव जनयन्ति, न घटम् । हन्त ! तर्हि स्वाभाविकशक्तिवशेन तन्तुबुद्धिरपि पटबुद्धिमेव जनयिष्यति, न घटबुद्धिम् । एवमुभयोः साम्ये सति नैकश्चोदयितव्य इत्यर्थः ॥

1. असद्ग्राह्य. मा.
2. स्वच्छत्वात्तु. चौ. मु.
3. परम्. मा.
4. च व्यभिचारम्. मा.
5. मात्रं रूपं तु. मा.
6. पट एव. मा.

नारभ्यते घटः किं तैर्मृत्पिण्डार्थेन वा पटः ॥ २४९ ॥

तन्तुमृत्पिण्डविज्ञाने ह्यनुयोज्ये मते यदि ।
अर्थपर्यनुयोगोऽपि तद्वदेव प्रसज्यते ॥ २५० ॥

अर्थारम्भव्यवस्था चेत् सामर्थ्यनियमाश्रयात्[1] ।
ज्ञानारम्भव्यवस्थायां सामर्थ्यं केन वार्यते ॥ २५१ ॥

तस्माद् यत्रोभयोर्दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥ २५२ ॥

देशकालनिमित्तानि व्यञ्जकान्यर्थवादिनः ।
शक्तीनां कारणस्थानां स्वकार्यनियमं प्रति ॥ २५३ ॥

शक्तयोऽपि च भावानां कार्या[2]र्थापत्तिकल्पिताः ।
प्रसिद्धाः पारमार्थिक्यः प्रतिकार्यं व्यवस्थिताः ॥ २५४ ॥

भवतस्तु न विज्ञानाद् भिन्नाभिन्ना निरूप्यते ।
शक्तिः संवृतिसद्भावमुत्सृज्य परमार्थतः ॥ २५५ ॥

एवमाक्षिप्ते समर्थयितुमाह — **देशकालनिमित्तानीति** । तन्तवोऽपि देशकालाभिव्यक्त[3]निजवयनशक्तिवशेन नियतं कार्यपटार्थमुत्पादयन्ति ॥

अस्ति च तेषां नियतकार्यदर्शनाव[4]सेया नियमशक्तिरित्याह—**शक्तयोऽपि चेति** ॥

विज्ञानवादिनस्तु विज्ञानव्यतिरेकेण शक्तिरन्या [5]नावगम्यते । अतस्तन्तुविज्ञानरूपतयैव तन्तुविज्ञानं पटविज्ञानमुपजनयति । तच्च रूपमविशिष्टं घटविज्ञानेऽपीत्यारम्भकत्वप्रसङ्गः । तस्माद् यद्रूपमवगम्यते [6]तदविशिष्टम् । अन्यत्तु नियामकं शक्त्यादिवदर्थ[7]त्वान्न त्वयाभ्युपगन्तव्यमित्याह—**भवतस्तु न विज्ञानादिति** ॥

1. माश्रया. चौ. मु.
2. र्थाभावकल्पिताः.
3. क्तानिजनयन्तिशक्ति. मा.
4. नि नियम. मा.
5. Omitted. न. मा.
6. तदविष्टम्. मा.
7. वदर्थत्वाच्च. मा.

**वासनैव च युष्माभिः शक्तिशब्देन गीयते ।**
**निमित्तनियतत्वं[1] च वासनाया यदुच्यते ॥ २५६ ॥**

**तस्याश्चासम्भवेनैतदपारार्थ्याच्च दुर्लभम् ।**
**देशकालनिमि[2]त्तानि न च तेऽस्ति नियामकम् ॥ २५७ ॥**

**मत्वैतदपि चेत्याह भाष्यकारः परं प्रति ।**
**तस्मादपरिहारोऽयं तन्तुभ्यस्ते यथा पटः ॥ २५८ ॥**

**तथा मे तन्तुबुद्धिभ्यः पटबुद्धिरितीदृशः ।**
**एवमाद्यप्रमाणाभ्यां न तावद् बाह्यशून्यता ॥ २५९ ॥**

**आगमस्य च[3] नैवेह व्यापारोऽतोऽन्यथापि वा ।**
**नोपमा सदृशाभावादर्थापत्तिवि[4]पर्ययात् ॥ २६० ॥**

अपि च भवत्पक्षे वासना शक्तिशब्देनोच्यते । निय[5]तत्वं च तस्या एवोच्यमानमुच्येत । तस्या अस्तित्वमारम्भकत्वं च निराकृतमित्याह—**वासनैव च युष्माभिरित्यादिना** सार्धेन श्लोकेन । न ज्ञानमात्रवादे देशकालाद्यभिव्यञ्जकमभ्युगम्यते [6]शक्तेः । एतत्सकलमवगम्य बाह्यार्थवादी शून्यवादिनं प्रति दूषणमाहेत्याह—**देशकालनिमित्तानीति** । [7]तस्मात् नात्रोभयोः समो दोषः परिहारोऽपि वा समः इत्याह—**तस्मादिति** ।

एवं सदुपलम्भकपञ्चप्रमाणाभावेनाभावाप्रमाण[8]गम्यत्वं न शून्यस्येत्याह—**एवमाद्यप्रमाणाभ्यामिति** श्लोकद्वयेन ॥

अन्ये तु प्रमेयविकल्पेन बाह्यार्थमवयविजातिपरमाणुरूपं विनाशयन्ति—न तावदवयविनो बाह्यस्य ग्राह्यत्वमवयवानन्यत्वेन ज्वालावत्; अन्यत्वेऽपि तदग्रहणेऽपि ग्रहणप्रसङ्गात् । अथ तेषु तस्य वृत्तेस्तदग्रहणे ग्रहणं नास्ति, न; तेषु तस्य वृत्तिः

1. त्वं तु वासनायावदुच्यते. मा.
2. निमित्तादि. चौ. मु.
3. तु. चौ. मु.
4. विपर्यये. मा.
5. नियतं सञ्जतस्या एव्य. मा.
6. तच्छक्त्यैतत्स. मा.
7. तस्माद्यत्रोभयो. मा.
8. गम्यत्वं शून्येत्याह मा.

**तस्माद्[1]भावागम्यत्वं शून्यतायां[2] स्थितं हि नः ।**
**एवं प्रमाणतोऽसिद्धा यैः प्रमेयाश्रयोच्यते ॥**
**बाह्यस्याणुसमूहादेर्ग्राह्यस्यासम्भवेक्षणात् ॥ २६१ ॥**

**तैरान्तरासम्भवतो यथोक्ताज्**
**ज्ञेयं त्व[3]मन्यस्य बलादुपेयम् ।**
**ग्राह्या न चेष्टाः परमाण[4]वोऽतः**
**सत्यः समूहः प्रतिपादनीयः ॥ २६२ ॥**

**इति बहिर्विषयप्रतिपादना-**
**[5]न्नतदभावकृता मतिसंवृतिः ।**

प्रत्येकं कार्त्स्न्येन वा ? कार्त्[6]न्येन चेदवयविनोऽनेकत्वप्रसङ्गात् । नाप्यवयवशः, अवयविनोऽवयवान्तराभावात् । सर्वावयवोपलब्धौ च तद्बुद्धिप्रसङ्गात् । न च सर्वावयवोपलब्धिरस्ति । एवं [7]जातिपरमाणुसमूहावपि निराकर्तव्यौ । पर[8]माणवस्तु नैव स्थूलप्रतिभासं विज्ञानमुत्पा[9]दयन्त्यनालम्बनत्वेनेत्याह—**एवं प्रमाणत इति ॥**

तान् प्रति प्रत्यक्षविरोधदूषणमाह—**तैरन्तरेति ॥**

देवदत्तः गौः अयम्—इत्यनात्मतयावयविजातिरूपमवभासते । न च बाधकप्रत्ययोऽस्ति । यत्तु प्रमेयविकल्पोत्थमनुमानम् , तत् प्रत्यक्षविरुद्धत्वादप्रमाण-मेवेत्युक्तम् । जात्यादिषु यदा जातेत्यर्थः ॥

यत एवं तस्मान्न बाह्यार्थस्यान्त इत्याह—**इति बहिरित्यर्थेन ।**

1. दभावगम्य. चौ.मु. मा.
2. तायाः स्थितम्.चौ. मु.
3. ज्ञेयंस्वमन्य. चौ. मु.
4. माणवो नः. मा.
5. Omitted. न. चौ. मु.
6. न चावय. मा.
7. जातीयपर. मा.
8. माणुवस्तुनश्चैव मा.
9. न्त्यालम्बन. मा.

**उभयतत्त्वविदां परमार्थतः**
**क्षममिदं धुरि धर्मविचारणे ॥ २६३ ॥**

इदानीं द्वैतप्रतिपादनस्य "प्रमाणत्वाप्रमाणत्वे" इत्यादिना स्वतन्त्रोपयोगमुक्तमुपसंहरति—**उभयतत्वविदामिति** ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
शून्यवादः समाप्तः ॥



# अनुमानम्.

**प्रत्यक्षाव्यभिचारित्वादेवंलक्षणकं च यत् ।**
**प्रसिद्धमनुमानादि न परीक्ष्यं तदप्यतः ॥ १ ॥**
**प्रमाता ज्ञातसम्बन्ध एकदेश्यथ वोच्यते ।**

## ॥ अथानुमानम् ॥

एवं प्रत्य[1]क्षमव्यभिचारित्वेऽपि शङ्कानिवृत्तये "सत्संप्रयोगे" इत्यादिना लक्षणतः प्रतिपाद्य इदानीं तुल्यप्रयोजनत्वात् अनुमानादिलक्षणप्रदर्शनार्थत्वाच्च प्रत्यक्षसूत्रस्य अनुमानलक्षणं तावदाह भाष्यकारः—"अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः" [2]इति । आदौ तस्य तात्पर्यं व्याचष्टे वार्तिककारः—**प्रत्यक्षेति** । अयमर्थः—मूलप्रमाणव्यभिचारेण वानुमानस्य व्यभिचारः स्यात्, स्वकीयलक्षणव्यभिचारेण वा ? न तावन्मूलप्रमाणव्यभिचारः, प्रत्यक्षस्याव्यभिचारित्वात् । नापि स्वकीयलक्षणव्यभिचारः, एवंलक्षणकत्वात् । अथ किं तल्लक्षणम् ? "अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः" इति । अनुमानमिति लक्ष्यपदम् ; अवशिष्टं तु लक्षणम् । लक्षणपरत्वे चास्य भाष्यस्य प्रत्यक्षलक्षणपरसूत्रवत् पूर्वप्रतिज्ञया सम्बन्धाभावमाशङ्क्य सकललक्ष्यलक्षणानुवादेन परीक्ष्यत्वं विकल्प्य प्रयोगवचनव्यक्तिमाह—**न परीक्ष्यं तदप्यत इति** । पूर्वोक्तकारणद्वयादित्यर्थः ॥

इदानीमवयवार्थं व्याचष्टे—**प्रमाता ज्ञातसम्बन्ध इति** । सम्बन्धो ज्ञातो येन प्रमातेत्यर्थः । व्याख्यानान्तरमाह—**एकदेश्यथ वोच्यत इति** । ज्ञातः सम्बन्धो यस्यैकदेशिन एकदेशाभ्यामित्यर्थः । ननु च सर्वनामार्थे बहुव्रीहिस्मरणम् ; सन्निहितश्च सर्वनाम्नोऽर्थः, न चैकदेशी प्रमाता वा केनचिदुपात्त इत्यसन्निधानात् कथं तयोः समासार्थत्वमित्यन्यथा व्याचक्षते—एकदेश्यथ वोच्यत इति । अस्यार्थः—ज्ञातः सम्बन्धो यस्यैकदेशस्य लिङ्गाख्यस्यैकदेशान्तरेण साध्येनेत्यर्थः । स[3] चात्रैकदेशपदोपादानात् सन्निहित एवेति उपपद्यते समासार्थत्वमिति । तद-

1. क्षस्याव्यभि. मा.
2. इत्यादितस्य. मा.
3. न.......चात्र. मा.

युक्तम्; एकदेशस्याप्यनुपात्तत्वेनासन्निधानात्; "एकदेशदर्शनात्" इति ह्यस्योत्तरपदार्थविशेषणत्वात्। न चान्यपरेणोपादाने सन्निहितः समासार्थो भवति, अतिप्रसङ्गात्। दर्शनशब्देन सहैकदेशपदस्य समासानुपपत्तिः, ज्ञातसम्बन्धपदसापेक्षत्वात्। न चायं प्रधानभूतः सापेक्षः, उत्तरपदार्थविशेषणत्वात्। अत्र केचिदाहुः—यद्यपि शब्दत एकदेशस्य गुणभावः; तथापि वस्तुतः प्राधान्यमेव, दर्शनस्य दृश्यप्रधानत्वात्। अपि च एकदेशस्येति कर्मणीयं षष्ठी; दर्शनादिति कृत्प्रयोगात्। [1]कर्म च क्रियया व्याप्यमानं भवतीति शब्दतोऽपि प्राधान्यमेवैकदेशस्यावगम्यत इति प्रधानमेव सापेक्षं भवतीति च 'प्रधानस्य सापेक्षस्य समासः। इत्यचोद्यमेतत् इति। अत्रोच्यते—इह हि व्याकरणे शब्दार्थोऽर्थः, न वस्त्वर्थः' उक्तं च तैः "शब्दप्रमाणका वयम्" इति। अन्यथा हि 'राजपुरुषः शोभनः' इत्यत्र समासार्थानुपपत्तिः, राजपुरुषस्य गुणभूतत्वात्; 'ऋद्धस्य राज्ञः पुरुषः' इत्यत्र समासः स्यात्, राज्ञः प्रधानत्वात्, शब्दार्थाग्रहणात्; विपर्ययादुभयमुपपन्नं भवति। ननु च यद्यन्यथा वस्त्वर्थोऽन्यथा शब्दार्थः, आयातं तर्ह्यर्थासंस्पर्शित्वं शब्दानाम्। मैवं वोचः; द्विविधो हि गुणप्रधानभावः—विशेषणविशेष्यभावरूपः, उपकार्योपकारकभावरूपश्च। द्विविधोऽपि चायं परमार्थतः सन्नेव। शब्दस्तु विशेषणविशेष्यरूपं गुणप्राधान्यमाह राजपुरुषादिषु; [2]तच्चापेक्षयैव, एतदनुसारात्; संभवति वै (?) प्रधानस्य सापेक्षस्यापि समास इत्यचोद्यमेतत्। यत् पुनरिदमुक्तम्—एकदेशस्य कर्मत्वाच्छब्दतोऽपि प्राधान्यं प्रतीयत इति, प्रत्युक्तं तत् समासवृत्तेरुपकार्योपकारकभावमनपेक्ष्य विशेषणविशेष्यभावरूपगुणप्राधान्याश्रयणेन प्रवृत्तेस्तदाश्रयत्वाच्च सापेक्षसमासानुशासनस्य; अन्यथा ह्युक्तोऽतिप्रसङ्ग इत्यनुपासितगुरुव्याख्यानमुपेक्षणीयम्। यत् पुनरिदमुक्तम्—अनुपात्तस्यासन्निधानात् कथं प्रमातुरेकदेशिनो वा समासार्थत्वम् इति, कोपादानमत्रोपयुज्यते? सन्निहितमात्रं हि सर्वनाम्नोऽर्थः; तत्रायं समासः; सन्निहितौ चात्रैकदेशिप्रमातारौ, बुद्धिशब्दादेकदेशद्वयसम्बन्धाच्च; अन्यतरेणापि च नियमेन सन्निधापितः सन्निहित एवेति समासार्थस्याविघातः। ननु प्रमातुरनुमेयानुमापकत्वभावात् लक्षणवाक्ये कथं [3]सम्बन्धः?

1. कर्मवत्क्रियया. मा.
2. पेक्षैव. मा.
3. कथमसम्बन्धः. मा.

**कर्मधारयपक्षो वा सम्बन्धिन्येकदेशता ॥ २ ॥**

**द्वयं वा ज्ञातसम्बन्धमुपलब्धं परस्परम् ।**
**तस्यैकदेशशब्दाभ्यामुच्येते समुदायिनौ ॥ ३ ॥**

**सम्बन्धो व्याप्तिरिष्टात्र लिङ्गधर्मस्य लिङ्गिना ।**

उच्यते—अनुमानानुमेयव्यवहारस्य प्रति[1]सम्बन्धिरूपत्वात् तस्य चात्र सम्बन्ध्यन्तरमन्तरेणानुपपत्तिः । सर्वप्रमाणलक्षणे चैतत् समानम् । तदुक्तम्—"पुरुषस्य बुद्धिजन्म" इति सूत्रकृता । समासबलीयस्त्वेन व्याख्यानान्तरमाह—**कर्मधारयपक्षो वेति** । ज्ञातश्चासौ सम्बन्धश्चेत्यर्थः । ननु सम्बन्धस्य निरवयवत्वात् "एकदेशदर्शनादेकदेशान्तरे" इत्यनुपपन्नमित्याशङ्क्याह — **सम्बन्धिन्येकदेशनेति** । सम्बन्धिनौ चारम्भकत्वादेकदेशत्वेनोपचर्येते इत्यर्थः ॥

प्रचयशिष्टयार्थादवगतः समुदायो वा समासार्थ इत्याह—**द्वयं वेति** । पूर्ववदारम्भकत्वेन समुदायस्य समुदायिनावेकदेशिनाविति "एकदेशदर्शनात्, एकदेशान्तरे" इत्येताभ्यां शब्दाभ्यामुपादीयेते ॥

एवं समासार्थं व्याख्याय अधुना वर्तिपदार्थौ व्याचष्टे । तत्र ज्ञेयस्वरूपेऽवधारिते तज्ज्ञानं शक्यं निरूपयितुमिति ज्ञातपदविलङ्घनेन सम्बन्धपदं व्याख्यास्यन्नाह—**सम्बन्धो व्याप्तिरिष्टेति** । ननु चान्येऽपि स्वस्वामिभावादयः सम्बन्धाः सन्तीत्यत आह—**अत्रेति** । अत्रानुमानानुमेयव्यवहारे व्याप्तिलक्षणः सम्बन्धोऽयमित्यर्थः । ननु च तादात्म्यतदुत्पत्तिलक्षणः सम्बन्धोऽनुमानाङ्गम्; कार्यमेव हि धूमोऽग्निम्, तदात्मिका च शिंशपा वृक्षत्वं गमयतीति । तदसत्, कार्यकारणभावतादात्म्यरहितानामपि कृत्तिकारोहिण्युदयादीनां गम्यगमकभावदर्शनात् । अपि च, कार्यमपि कार्यत्वान्न कारणं गमयति । किं तर्हि? तेन नियतत्वात् । अन्यथा हि कार्यं च भविष्यति कारणं च नानुमापयिष्यति; को न्वत्र विरोध इति शक्यं वक्तुम् । यस्तु तेन नियमः, ततोऽनुमापयतीति स एवानुमानाङ्गम्, स एव च व्याप्तिशब्देनाभिधीयते । यदि च धूमः कार्यत्वादग्निमनुमापयेत्, ततः सर्वात्मना

1. सम्बन्धान्तररूप. मा.

**व्याप्यस्य गमकत्वे [1]तु व्यापकं गम्यमिष्यते ॥ ४ ॥**

**यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् ।**
**स व्याप्यो व्यापकस्तस्य समो [2]वाप्यधिकोऽपि वा ॥ ५ ॥**

कार्यत्वात् कटुश्यामोर्ध्वगत्यादिभिराकारैरनुमापयेत्; न च भवतां कथंचित् कार्यत्वम्, निरन्वयविनाशाभ्युपगमात् । अथ सत्यपि कार्यत्वे य एवासौ नियतः स एवानुमापयिष्यति; व्यभिचरति तर्हि कार्यत्वम्; तत्सद्भावेऽप्यगमकत्वात् पुनश्च नियम एवाङ्गीकृतः स्यात् । तदात्मकस्य गमकत्वं दूरोत्सारितमेव, भेदाधिष्ठानत्वाद् गम्यगमकभावस्य; न ह्यभिन्ने प्रतिबन्धो नाम । नापि शिंशपा वृक्षात्मिका, ततो व्यावर्तमानत्वात्; यो हि यस्माद् व्यावर्तते न स [3]तद्रूपः घटादिव पटः; व्यावर्तते खदिरादिभ्यः शिंशपेत्यतदात्मिका; तदात्मकत्वे च लिङ्गग्रहणवेलायामेवाव्यतिरेकात् स्वरूपत एव लिङ्गिग्रहणप्रसङ्गादनुमेयत्वहानिः; तादात्म्येन च शिंशपाया गमकत्वे तादात्म्याविशेषाद् वृक्षत्वस्यापि शिंशपां प्रति गमकत्वप्रसङ्गः । अथानियतत्वादगमकत्वम्; नियततैव तर्हि गमकत्वे हेतुः; न तादात्म्यम्, व्यभिचारिण्यपि वृक्षत्वे तादात्म्यदर्शनात् । अथ तदात्मतैव वृक्षत्वे नास्ति; शिंशपापि तर्हि न तदात्मिका । सर्वथा ययोरेकत्वम्, न तयोर्गम्यगमकभावः; नानात्वे तु तादात्म्याभावः । एवं च शिंशपावृक्षापोहयोरपोहबुध्योर्वा गम्यगमकभावो निराकर्तव्यः । ननु व्याप्तेः सम्बन्धत्वात् संयोगवद् धूमाग्निसम्बन्धिसमवे[4]तत्वे सति धूमवदग्नेरपि गमकत्वप्रसङ्ग इत्याशङ्क्याह—**लिङ्गधर्मस्य लिङ्गिनेति ।** व्याप्यलक्षणसम्बन्धिसमवेतैव व्याप्तिः; न त्वियं संयोगवदुभयसमवेता, तथा अदर्शनादित्यर्थः । यत एवं तस्मान्न धूमवदग्नेरपि गमकत्वमित्याह—**व्याप्यस्येति ॥**

इदानीं व्याप्यैकसम्बधिसमवेतैव व्याप्तिः, न तु संयोगवदुभयसम्बन्धिसमवेतेत्येतत् प्रदर्शयितुं व्याप्यव्यापकयोर्लक्षणं करोति—**यो यस्येति ॥**

यः कृतकत्वधूमत्वादिरर्थान्तरेणानित्यत्ववह्नित्वादिना यथासंख्येन देशकालाभ्यां समो न्यूनो वा, स व्याप्यः; यश्चानित्यत्ववह्नित्वादिरर्थान्तरेण कृतकत्वधूम-

1. च. चौ. सु.
2. वाम्यधिकः. चौ. सु.
3. तदर्थः. मा.
4. तत्व........धूम. मा.

**तेन व्याप्ये गृहीतेऽर्थे व्यापकस्तस्य गृह्यते ।**
**न ह्यन्यथा भवत्येषा व्याप्यव्यापकता तयोः ॥ ६ ॥**

**व्यापकत्वगृहीतस्तु व्याप्यो यद्यपि वस्तुतः ।**
**आधिक्येऽप्यविरुद्धत्वाद् व्याप्यं न प्रतिपादयेत् ॥ ७ ॥**

**विस्पष्टं दृष्टमेतच्च गोविषाणित्वयोर्मितौ ।**
**व्याप्यत्वाद् गमिका गावो व्यापिका न विषाणिता ॥ ८ ॥**

**तेन यत्राप्युभौ धर्मौ व्याप्यव्यापकसम्मतौ ।**
**तत्रापि व्याप्यतैव स्यादङ्गं न व्यापिता मितौ ॥ ९ ॥**

**तेन धर्म्यन्तरेष्वेषा यस्य येनैव [1]यादृशा ।**

त्वादिना देशकालाभ्यां यथासंख्येन समो वाधिको वा, स व्यापकः। तस्माद् व्याप्यसमवेतैव व्याप्तिः; अतस्तस्यैव गमकत्वम्, न तु व्यापकस्येत्याह—**तेन व्याप्य इति** ॥

ननु समलक्षणे व्यापकेऽपि व्याप्तिसमवायात् किमिति कृतकत्वं प्रत्यनित्यत्वस्यापि गमकत्वं न भवतीत्याशङ्क्याह—**व्यापकत्वेति** । क एवमाह—अनित्यत्वस्य कृतकत्वं प्रति गमकत्वं नास्ति इति? उभयरूपे तु तस्मिन् व्याप्यरूपसमवेतैव व्याप्तिः; न तु व्यापकरूपसमवेता; आधिक्येऽप्येतस्य रूपस्याग्न्यादौ दर्शनादित्यतोऽनित्यत्वस्यापि व्याप्यतयैव गमकत्वम्; न तु व्यापकतयेत्यर्थः ॥

अत्रैवोदाहरणमाह—**विस्पष्टमिति** ॥

यत एवं तेन यत्रापीत्याह—**तेन यत्रापीति** ॥

"व्यापकं गम्यमिष्यते"—इत्युक्तम्, तदनुपपन्नम्; धर्मिद्वयानवच्छिन्नस्य हि तस्य गम्यत्वं स्यात्, साध्यधर्मावच्छिन्नस्य वा । तत्र धर्मिद्वयानवच्छिन्नपक्षेऽग्निमात्रस्य साध्यतायां सिद्धसाध्यता; साध्यधर्मावच्छिन्नपक्षेऽपि पर्वतविशिष्टस्य साध्यतायां हेतोरनुगमाभावः; न हि यत्र यत्र धूमस्तत्र तत्र पर्वतावच्छिन्नोऽग्निरित्याशङ्क्याह—**तेन धर्म्यन्तरेष्वेषा यस्येत्यादिना**

1. यादृशी. चौ. मु.

**देशे यावति काले वा व्याप्यता प्राङ्निरूपिता ॥ १० ॥**

**तस्य तावति तादृक् [1]स्याद् दृष्टो धर्म्यन्त[2]रेषु नः ।**
**व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादकः ॥ ११ ॥**

**भूयोदर्शन[3]गम्या हि व्याप्तिः सामान्यधर्मयोः ।**
**ज्ञायते भेदहानेन क्वचिच्चापि विशेषयोः ॥ १२ ॥**

श्लोकद्वयेन । अयमर्थः—न वयं सामान्यं वा विशेषं वा विजानीमः; किन्तु यादृशो[4] यो येन यादृशा च दृष्टान्तधर्मिणि व्याप्तोऽवगतः, स तादृशस्तं तादृशमेव साध्यधर्मिणि दृष्टोऽवगमयति । "व्याप्यता प्राङ्निरूपिता" "दृष्टो धर्म्यन्तरेषु नः" इत्यनेन सम्बन्धिद्वयावगतिपूर्विकां साध्यावगतिं दर्शयति । साध्यधर्मपर्युपस्थापने हि प्रथमं विकल्पद्वयेन दोषद्वयमाशङ्कयेत । न त्वसन्निकृष्टसाध्यसन्निधौ प्रथमं किंचित् प्रमाणमस्तीति श्लोकद्वयस्यार्थः ॥

ज्ञातसम्बन्धस्य—इत्ययं ज्ञातसम्बन्धमनुमानाङ्गमाह; न च तदवगतौ किंचित् प्रमाणमुपलभामहे; अनन्यभावावगमपूर्विका ह्यग्निना धूमस्य व्याप्तिः; न पुनरग्नौ दर्शनमात्रात्वसेया । न च देशकालविप्रकृष्टेष्वनग्निषु दृश्यादर्शनमस्तीत्याशङ्क्याह—**भूयोदर्शनगम्या हि व्याप्तिरिति ।** अयमर्थः—सन्निकृष्टानन्यभावावगमे सति शतशो यदग्नौ धूमदर्शनं तदन्यथानुपपत्त्या 'नियतोऽयमग्निना' इति तावन्नियमज्ञानमुपजायते । नियमज्ञानस्य चानग्नौ धूमदर्शनम् बाधकप्रत्ययः । न च तदस्ति । भविष्यति—इत्यपि बाधकप्रत्ययाशङ्का रजतेऽपि रजतज्ञाने समाना । उक्तं च तत्र समाधानम्—"दोषज्ञाने त्वनुत्पन्ने नाशङ्का निष्प्रमाणिका" इति । एवं चार्थं भूयोदर्शनश्लोकस्य स्वयमेव वदिष्यति "[5]न चादर्शनमात्रेण गमकः सहकारिणः"—इति । नन्वग्निस्वलक्षणस्य धूमदर्शनानन्तरं विनाशात् पुनरग्न्यन्तरे धूमान्तरदर्शनम्, तत् कथं भूयोदर्शनमुच्यत इत्याशङ्क्याह—**सामान्यधर्मयोः । ज्ञायते भेदहानेनेति ।** उभयभेदपरित्यागेन धूमत्वस्याग्नित्वेन पुनःपुनर्दर्शनमस्तीत्यर्थः । क्वचित्तु विशेषयोरपि भूयोदर्शनमस्तीत्याह—**क्वचिच्चापि विशेषयोरिति ॥**

1. स दृष्टः. चौ. मु.
2. न्तरे पुनः. चौ. मु.
3. गम्या च. चौ. मु.
4. यादृशो येन. मा.
5. .......सहकारिणः. मा.

**कृत्तिकोदयमालक्ष्य रोहिण्यासत्तिक्लृप्तिवत् ।**
**व्याप्तेश्च दृश्यमानायाः कश्चिद् धर्मः प्रयोजकः ॥ १३ ॥**

**अस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते ।**
**अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ॥ १४ ॥**

**[1]दृष्टैरपि न तैरिष्टा व्यापकांशावधारणा ।**
**ये तु तानपि विस्रब्धं साध्य[2]सिद्धौ प्रयुञ्जते ॥ १५ ॥**

**[3]सुलभप्रतिहेत्वादिदोषैर्भ्राम्यन्ति ते चिरम् ।**
**तेष्वागमविरुद्धत्वं स्वयं चेष्टविघातिता ॥ १६ ॥**

**अलौकिकविवादाश्च वर्ज्यास्ते हैतुकैस्ततः ।**
**निषिद्धत्वेन हिंसानामधर्मत्वं प्रयुज्यते ॥ १७ ॥**

अत्रैवोदाहरणमाह—**कृत्तिके**त्यर्धेन । प्रतिदिवसम् 'स एवायम्' इति तत्त्वप्रत्ययाद् भेदप्रत्ययाभावाच्च व्यक्तिनिबन्धनैवेयं तत्त्वावगतिरिति विशेषयोरेवात्र भूयोदर्शनं युक्तम् ।

ननु व्याप्यस्य गमकत्वेऽग्नीषोमीयादिष्वधर्मत्वावगतौ हिंसात्वस्यापि हेतुत्वप्रसङ्गः, व्याप्ता हि हिंसा ब्रह्महत्त्यादिष्वधर्मत्वेन; अनिष्टं चैतदित्याशङ्क्याह—**व्याप्तेश्च दृश्यमानाया** इत्यादिना श्लोकद्वयेन । इह तावद् ब्रह्महत्त्यादिष्वधर्मत्वयुक्तेषु हिंसात्वनिषिद्धत्वे उपलभ्यते । तत्रोभयधर्मसन्निधानेऽपि निषिद्धत्वमेवाक्षेपकमधर्मत्वस्य; न हिंसात्वम्; यतो निषेधविधि[4]प्रयुक्ता तत्रानिष्टानुबन्धिता, न हिंसात्वप्रयुक्ता । आक्षेपकं वाक्षिप्यमाणेन नियतम्; न हिंसात्वमाक्षेपकम्; यदि हि निषेधविधानं न स्यात्, ततो विनाप्यधर्मत्वं स्यादेव हिंसात्वम्; आक्षेपकं चान्यत्रोपलभ्यमानमाक्षेप्यं सन्निधापयति; अनाक्षेपकस्तूपलभ्यमानोऽपि न धर्मान्तरं सन्निधापयति, अनियतत्वादिति श्लोकद्वयार्थः ।

अप्रयोजकहेतुप्रयोगे प्रत्यक्षानुमानागमविरोधादयः प्रतिज्ञादोषाः विरुद्धानैकान्तिकत्वं च हेतोः साध्यविकलता च दृष्टान्तस्य; प्रयोजकहेतौ प्रयुक्ते कुतस्तेषामवसर इत्याह—**ये त्वि**त्यादिना श्लोकद्वयेन ।

इदानीं प्रयोजकाप्रयोजकविवेकं करोति—**निषिद्धत्वेने**त्यादिना श्लोक-

1. तैर्दृष्टैरपि नैव. चौ. मु.
2. साध्यसिध्यै. चौ. मु.
3. सुलभैः, चौ. मु.
4. युक्ते तत्रानिष्टा. मा.

तदभावे न तत्सिद्धिर्हिंसात्वादप्रयो[1]जकात् ।
हेतुद्वयप्रयुक्ते च मिथ्यात्वे सर्वबुद्धिषु ॥ १८ ॥

ज्ञानत्वोत्पत्तिमत्त्वादिसाधको [2]न प्रयोजकः ।
त्रैवर्णिकप्रयुक्ता च यागादेः स्वर्गहे[3]तुता ॥ १९ ॥

न मनुष्यत्वमात्रेण शूद्रत्वेन प्रयुज्यते ।
कृतसावयवत्वादिप्रयुक्ता च विनाशिता ॥ २० ॥

प्रयत्नानन्तरज्ञानसदर्शनं प्रयुज्यते ।
जातिमत्त्वैन्द्रियत्वादि वस्तुसन्मात्रबन्धनम् ॥ २१ ॥

शब्दानित्यत्वसिध्यर्थं को वदेद् यो न तार्किकः ।
[4]तस्माद् य एव यस्यार्थो दृष्टः साधनशक्तितः ॥ २२ ॥

स एव गमकस्तस्य न प्रसङ्गान्वितोऽपि यः ।
उपात्तश्चैकदेशाभ्यां [5]धर्माभ्यामेकदेशवान् ॥ २३ ॥

चतुष्टयेन । तत्राधर्मत्वमिथ्यात्वस्वर्गहेतुत्वानित्यत्वेषु साध्येषु यथासंख्येन निषिद्धत्वबाधकप्रत्ययत्वविहितत्वकृतकत्वादयो धर्माः प्रयोजकाः । हिंसात्वप्रत्ययत्वमनुष्यकर्तृकत्वप्रयत्नानन्तरीयकत्वादयस्त्वप्रयोजकाः ।

एवं च शब्दानित्यत्वसिद्धौ प्रयत्नानन्तरीयकत्वजातिमत्त्वैन्द्रियकत्वादीन् कुतार्किको यः स प्रयुङ्क्त इत्याह—**जातिमत्त्वेति** । [6]प्रकृतमुपसंहरति—**तस्मादिति** ।

"एकदेशदर्शनात्" इत्युक्तम्; तदनुपपन्नम्; एकदेशान्तरे वाग्न्याक्षेपकस्यैकदेशस्य धूमाख्यस्य दर्शनं स्यात्, एकदेशिनि वा पर्वताख्ये? न तावदेकदेशान्तरे, तस्यासन्निकृष्टार्थत्वात्; नाप्येकदेशिनि, लक्षणवाक्येऽनुपादानादित्याशङ्क्याह—**उपात्तश्चेत्यर्धेन** । "एकदेशदर्शनादेकदेशान्तरे" इत्येताभ्यामेकदेशिनोऽप्युपादानादेष वाक्यार्थः—एकदेशिन्येकदेशदर्शनात्, एकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः इति ॥

1. जनकः. मा.
2. नाप्रयो. चौ. मु.
3. हेतुकाम्. चौ. मु.
4. तस्मात्स एव. मा.
5. धर्म्यप्यत्रैक. चौ. मु.
6. कृतमुप. मा.

अपारार्थ्ये हि धूमादेः स्वरू[1]पे नैकदेशता ।
स एव चोभयात्मायं गम्यो गमक एव [2]च ॥ २४ ॥

असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः ।
आ[3]त्तः पृथगभिन्नो वा प्रयोक्तॄणां विवक्षया ॥ २५ ॥

अनित्यः कृतको यस्माद् धूमवानग्निमानिति ।
धर्म्यभिन्नमुपादानं भेदोऽत्राग्निरितीदृशे ॥ २६ ॥

एकदेशविशिष्टश्च धर्म्येवात्रानुमीयते ।
न हि तन्निरपेक्षत्वे संभवत्यनुमेयता ॥ २७ ॥

कथं पुनरेकदेशाभ्यामेकदेशिन उपादानमित्याह—**अपारार्थ्य** इत्यर्धेन । एकदेशशब्दो हि धर्मिधर्मतयाग्निधूमावाह, नाग्निधूमरूपतया ; धर्मश्चाविनाभावेन धर्मिणं गमयत्येवेत्यर्थः । गम्यगमकभावाभावेनानुमानलक्षणे कथमन्वयो धर्मिण इत्याशङ्क्याह—**स एव** चेत्यर्धेन ॥

सन्निकृष्टासन्निकृष्टयोर्गम्यगमकत्वे सति कथमेकस्य गम्यगमकभाव इति चेत् – इत्याशङ्क्याह—**असिद्धेने**त्यर्धेन । धूमविशिष्टतया गमकत्वमग्निविशिष्टतयास्यैव धर्मिणो गम्यत्वमित्यर्थः । प्रयोक्तृविवक्षावशेन च धर्मिण एव धर्माभ्यां भेदेनाभेदेन चोपात्तस्य गम्यगमकभाव इत्याह—**आत्त** इत्यर्धेन । ननु स्वार्थानुमाने शब्दप्रयोगभावात्—आत्तः, प्रयोक्तॄणाम् इति चैतद् द्वयमप्यनुपपन्नम् । उच्यते—आत्तः इति प्रतीयमानतामाह । प्रयोक्तृशब्देनापि त्रिरूपे लिङ्गे प्रयोक्तारं प्रमातारमाह ॥

अत्रैवोदाहरणमाह—**अनित्य इति** । अन्तःसञ्जल्पविवक्षया च भेदेनाभेदेन वा धर्माभ्यां धर्मिण उपादानम् ; न तु स्वार्थानुमाने शब्दप्रयोगोऽस्तीत्युक्तम् ॥

ननु किमिदमित्युच्यते—धर्म्येवासिद्धेनैकदेशेन विशिष्टो गम्यते इति, यावतैकदेशमात्रस्यैवासिद्धत्वाद् गम्यता किमिति न भवतीत्याशङ्क्याह—**एकदेशे**त्यर्धेन । कस्मादित्याह—**न हीति** ॥

1. स्वरूपेनैक. चौ. मु.
2. वा. चौ. मु.
3. अतः चौ. मु.

न धर्ममात्रं सिद्धत्वात् तथा धर्मी [1]तथोभयम् ।
व्यस्तं वापि समस्तं वा स्वातन्त्र्येणानुमीयते ॥ २८ ॥

एकदेशस्य लिङ्गत्वं साध्येनानुगमोऽस्य च ।
द्वयं च न स्यादिष्टं सत् पक्षेष्वेषु यथाक्रमम् ॥ २९ ॥

अनित्यत्वादिनो धर्माः कृतकत्वादयो न हि ।
ध्वनिनानुगमो नैषां नोभयस्योभयेन वा ॥ ३० ॥

सम्बन्धोऽप्यनुपादानान्नाम्ना षष्ठ्यापि वा मितौ ।
न चाप्यनुगमस्तेन लिङ्गस्येह निदर्श्यते ॥ ३१ ॥

न चाकारद्वयं तस्य साध्यसाधनभाग् भवेत् ।

एकदेशविशिष्टधर्मिनिरपेक्षतयानुमेयकल्पनायां धर्मधर्म्युभयेषा[2]मनुमेयत्वं स्यात्, तत्र च सिद्धसाध्यतेत्याह— **न धर्ममात्रमिति** ॥

एवमेतेषामनुमेयत्वं सिद्धसाध्यतया निराकृत्य अधुनैतेष्वेव साध्येषु हेतुदोषं प्रतिपादयितुमाह—**एकदेशस्येति** ॥

तत्रानित्यत्वमात्रानुमेयपक्षे कृतकत्वस्य पक्षधर्मता न स्यात्; शब्दलक्षणेऽपि च धर्मिण्यनुमेये व्याप्तिर्न स्यात्; न हि शब्देन कृतकत्वं व्याप्तम्; उभयानुमेयपक्षे तूभयं न स्यात्: न हि शब्दानित्यत्वयोः कृतकत्वं धर्मः, नाप्युभयेन व्याप्तमित्याह—**अनित्येति** ॥

नापि धर्मधर्मिणोः सम्बन्धोऽनुमेयः, नामपदेन षष्ठ्या वा लक्षणवाक्येऽनुपादानादित्याह—**सम्बन्ध** इत्यर्धेन । न च कृतकत्वेन सह धर्मधर्मिसम्बन्धस्य व्याप्तिलक्षणः सम्बन्धोऽस्तीत्याह—**न चेत्यर्धेन** ।

नापि कृतकत्वस्य धर्मधर्मिसम्बन्धधर्मतेत्याह—**न चाकारेत्यर्धेन** । तस्माद् यथा दण्डिशब्दस्य दण्डविशिष्टः पुरुषोऽर्थः, सम्बन्धस्तु गम्यमानः; एवं धूम-

1. ततोभयम्. मा. 2. मनुमानत्वम्. मा.

**तस्मादर्थगृहीतत्वान्मतुबर्थस्य [1]गम्यता ॥ ३२ ॥**

**न स्वातन्त्र्येण मन्तव्या यथा दण्डयादिशब्दतः ।**
**विशिष्टार्थ[2]प्रतीतौ स्यात् सम्बन्धो नान्तरीयकः ॥ ३३ ॥**

**विशेषणविशेष्यत्वमापन्नौ द्वाविमावतः ।**
**गम्यावङ्गाङ्गिभावस्तु कैश्चिदिष्टो विकल्पतः ॥ ३४ ॥**

**सर्वथा धर्मिणो धर्मो धर्मेण त्ववगम्यते ।**
**विशेषणविशेष्यत्वे न विशेषोऽवधार्यते ॥ ३५ ॥**

**तत्रोत्तरं वदन्त्यन्ये यदि धर्मी विशेषणम् ।**
**हेतुधर्मेण सम्बन्ध[3]स्तत्राप्राधान्यतोऽस्फुटः ॥ ३६ ॥**

स्यापि धर्मी धर्मविशिष्टोऽनुमेयः, सम्बन्धश्च गम्यमान इत्याह—**तस्मादि**त्यादिना सार्धेन श्लोकेन ॥

तस्माद् विशेषणविशेष्यभावापन्नयोर्धर्मधर्मिणोरनुमेयत्वम्, नैकस्य, नापि द्वयोर्विशेषणविशेष्यभावरहितयोरित्याह—**विशेषणेति गम्यौ** इत्यन्तेन। तत्र केचिदाहुः—भवतु विशिष्टस्यानुमेयत्वम्; धर्मिण एव तु धर्मविशिष्टस्य, न पुनर्विपर्यय इत्यत्र न किञ्चित् प्रमाणं प्रयोजनं चेति [4]इत्याह—**अङ्गाङ्गिभाव** इति शेषेण ॥

एतावत्त्वत्र तन्त्रमित्याह—**सर्वथे**त्यर्धेन। विशेषणविशेष्यभावनियमे न प्रमाणम्, नापि प्रयोजनमित्याह—**विशेषणे**त्यर्धेन ॥

तदेतद् दूषयितुमाह—**तत्रोत्तरमि**त्यादिना श्लोकद्वयेन सपादेन। यदि धर्मस्यापि धर्मिविशिष्टस्यानुमेयत्वं स्यात् तदा स्वार्थानुमानपूर्वकत्वेन परार्थानुमानस्य शब्दविशिष्टानित्यत्वप्रतिज्ञायां कृतकत्वमुपादीयमानं नैव धर्मिणा शब्देन संबध्येत, धर्मं प्रत्युपसर्जनत्वेन निर्देशात्; इष्यते च तद्धर्मत्वम्। कृतकत्वस्य विशेष्यत्वेन प्राधान्याद् धर्मेणैव सह सम्बन्धः प्राप्नोति। ततस्तत्रानुपपद्यमानमानर्थक्यतदङ्गन्यायेन धर्मिणा शब्देन योजयितव्यमिति विप्रकर्षः। शब्दस्य वा पुनरुच्चारणं कर्तव्यम्—

1. साध्यता. मा.
2. प्रतीता स्यात्. चौ. मु.
3. तस्याप्राधान्यतः स्फुटः. चौ. मु.
4. Omitted. इति. मा.

प्रधानत्वाद्धि धर्मेण सम्बन्धो वाक्यतो भवेत् ।
तत्रासम्भवतः पश्चात् कल्प्योऽसौ धर्मिणा सह ॥ ३७ ॥

ध्वनेरित्यथवा वाच्यमन्वयस्य तु दर्शने ।
भेदोपात्तस्य धर्मस्य गुणभावो न दुष्यति ॥ ३८ ॥

अग्नेर्देश[1]विशिष्टत्वे न चैतत् पक्षलक्षणम् ।
विशिष्टतास्य देशेन भवेदेवंप्रकारिका ॥ ३९ ॥

योऽग्निः सोऽस्ति क्वचिद् देशे यो दृष्टो यत्र तत्र वा ।
अग्निः पूर्वानुभूतो वा देशमात्रेण सङ्गतः ॥ ४० ॥

अनित्यः शब्दः कृतकत्वाच्छब्दस्य इति । ननु धर्मविशिष्टधर्मिप्रतिज्ञायामपि हेतुवचनवदन्वयवाक्येऽपि धर्मिणैव सह सम्बन्धः प्राप्नोति ; न धर्मान्तरेणानित्यत्वेन, प्रतिज्ञावाक्ये धर्म्युपसर्जनत्वेन निर्दिष्टत्वात्—यो यः कृतकः स शब्दः ; न पुनः— यद्यत् कृतकं तत्तदनित्यमित्याशङ्क्याह—**अन्वयस्य तु दर्शन** इत्यादित्रिपाद्या । यद्यपि प्रतिज्ञावाक्ये धर्म्युपसर्जनत्वेन धर्मनिर्देशः, तथापि स न दोषाय, पुनरुच्चारितस्यान्वयवाक्येन सम्बन्धात् । अवश्यंभावि च पुनरुच्चारणम् अन्यथान्वयानवगमादित्यर्थः ॥

इतश्च देशविशिष्टस्याग्नेरनुमेयत्वं नास्तीत्याह—**अग्नेरित्यर्धेन** । अग्निमात्रं वा देशमात्रेण विशिष्टमनुमेयं स्यात्, सम्बन्धग्रहणकालप्रतिपन्नस्य वाग्निविशेषस्यानिर्धारितदेशविशिष्टस्यानुमेयत्वम्, तस्यैव वाग्निविशेषस्य सर्वदेशविशिष्टस्यानुमेयत्वम्, अग्निमात्रं वा सन्निहितदेशविशिष्टमनुमेयं स्यात्, सम्बन्धग्रहणकालावगतस्य वाग्निविशेषस्य प्रत्यक्षदेशविशिष्टस्यानुमेयत्वम्, पर्वतस्थस्य वाग्निविशे[2]षस्य देशमात्रेण विशिष्टस्यानुमेयत्वम्, तस्यैव वाग्नेः रसवत्याख्यदेशविशिष्टस्यानुमेयत्वम्, पर्वतादिगतस्य वासन्निहितदेशपर्वतादिविशिष्टस्यानुमेयत्वं स्यादित्येतानष्टौ पक्षान् दूषणाय प्रदर्शयितुमाह–श्लोकत्रयेणाक्षरत्रयशून्येन **विशिष्टे**त्यादिना । तत्राद्ययोः सिद्धसाध्यता पक्षदोषः, तृतीयादिषु सप्तमपक्षपर्यन्तेषु प्रत्यक्षादिविरोधिनी प्रतिज्ञेत्याह—अक्षरत्रयाधिकेन **इह तु** इत्यादिनार्धेन ॥

1. देशाविशिष्टत्वे चौ. मु. 2. षणस्य. मा.

प्रधानत्वाद्धि धर्मेण सम्बन्धो वाक्यतो भवेत् ।
तत्रासम्भवतः पश्चात् कल्प्योऽसौ धर्मिणा सह ॥ ३७ ॥

ध्वनेरित्यथवा वाच्यमन्वयस्य तु दर्शने ।
भेदोपात्तस्य धर्मस्य गुणभावो न दुष्यति ॥ ३८ ॥

अग्नेर्देश[1]विशिष्टत्वे न चैतत् पक्षलक्षणम् ।
विशिष्टतास्य देशेन भवेदेवंप्रकारिका ॥ ३९ ॥

योऽग्निः सोऽस्ति क्वचिद् देशे यो दृष्टो यत्र तत्र वा ।
अग्निः पूर्वानुभूतो वा देशमात्रेण सङ्गतः ॥ ४० ॥

अनित्यः शब्दः कृतकत्वाच्छब्दस्य इति । ननु धर्मविशिष्टधर्मिप्रतिज्ञायामपि हेतु-वचनवदन्वयवाक्येऽपि धर्मिणैव सह सम्बन्धः प्राप्नोति ; न धर्मान्तरेणानित्यत्वेन, प्रतिज्ञावाक्ये धर्म्युपसर्जनत्वेन निर्दिष्टत्वात्—यो यः कृतकः स शब्दः ; न पुनः—यद्यत् कृतकं तत्तदनित्यमित्याशङ्क्याह—**अन्वयस्य तु दर्शन** इत्यादित्रिपाद्या । यद्यपि प्रतिज्ञावाक्ये धर्म्युपसर्जनत्वेन धर्मनिर्देशः, तथापि स न दोषाय, पुनरुच्चारितस्यान्वयवाक्येन सम्बन्धात् । अवश्यंभावि च पुनरुच्चारणम् अन्यथान्वयानवगमादित्यर्थः ॥

इतश्च देशविशिष्टस्याग्नेरनुमेयत्वं नास्तीत्याह—**अग्नेरित्यर्धेन** । अग्निमात्रं वा देशमात्रेण विशिष्टमनुमेयं स्यात्, सम्बन्धग्रहणकालप्रतिपन्नस्य वाग्निविशेषस्या-निर्धारितदेशविशिष्टस्यानुमेयत्वम्, तस्यैव वाग्निविशेषस्य सर्वदेशविशिष्टस्या-नुमेयत्वम्, अग्निमात्रं वा सन्निहितदेशविशिष्टमनुमेयं स्यात्, सम्बन्धग्रहणकाला-वगतस्य वाग्निविशेषस्य प्रत्यक्षदेशविशिष्टस्यानुमेयत्वम्, पर्वतस्थस्य वाग्निविशे[2]षस्य देशमात्रेण विशिष्टस्यानुमेयत्वम्, तस्यैव वाग्नेः रसवत्याख्यदेशविशिष्टस्यानुमेयत्वम्, पर्वतादिगतस्य वासन्निहितदेशपर्वतादिविशिष्टस्यानुमेयत्वं स्यादित्येतानष्टौ पक्षान् दूषणाय प्रदर्शयितुमाह—श्लोकत्रयेणाक्षरत्रयशून्येन **विशिष्टेत्यादिना** । तत्राद्ययोः सिद्धसाध्यता पक्षदोषः, तृतीयादिषु सप्तमपक्षपर्यन्तेषु प्रत्यक्षादिविरोधिनी प्रतिज्ञेत्याह—अक्षरत्रयाधिकेन **इह तु** इत्यादिनार्धेन ॥

1. देशाविशिष्टत्वे चौ. मु.  2. षणस्य. मा.

सा देशस्याग्नियुक्तस्य धूमस्यान्यैश्च कल्पिता ।
ननु शब्दवदेव स्याल्लिङ्गगम्यं विशेषणम् ॥ ४८ ॥

नैवं न ह्यत्र लिङ्गस्य शक्त्यनेकत्वकल्पना ।
न च तस्यानुमेयत्वं विशेष्यश्चावधारितः ॥ ४९ ॥

विशिष्टत्वेन चाज्ञानात्[1] तन्मात्रस्यानुमेयता ।
ननु [2]धूमस्य धर्मित्वे हेतोः पक्षैकदेशता ॥ ५० ॥

धर्मविशिष्टस्य धर्मिणोऽनुमेयत्वमुक्तम्, तदनुपपन्नम्; देशस्य पर्वतादेर्द्धर्मित्वं स्यात्, धूमस्य वा ? न तावत् पर्वतादेः; यो हि पर्वतावयवोऽग्निसंयुक्तः; स एव तेन विशिष्टः[3] । यस्तु पर्वतावयवः प्रत्यक्षः, तस्याग्निविशिष्टता नास्ति; यदि स्यात्, प्रत्यक्षगम्यतैव स्यात्; धूमस्य तु धर्मित्वे प्रतिज्ञार्थैकदेशता हेतोः स्यात् । तस्मादपरोक्षत्वेन तद्धर्मता धूमस्य न शक्यावगन्तुमित्याशङ्क्याह—**सा देशस्येत्यर्धेन** । [4]पर्वतस्यावयविनो धूमस्य वा धर्मित्वम्; अवयविनश्चोभयात्मतया गम्यगमकभावो युक्त एवेत्यर्थः । ननु शब्दवदेव नागृहीतविशेषणन्यायेन विशेषणमात्रविषयतैव धूमस्य कस्मान्न भवतीति चोदयति—**नन्वित्यर्धेन** ॥

तत्र परिहारमाह—**नैवमित्यर्धेन** । युक्तं यच्छब्दस्य विशेषणमात्रविषयत्वम्; विशेष्यविषयत्वे हि शक्त्यनेकत्वकल्पना स्यात्; न तत्कल्पनायां प्रमाणमस्ति, व्यक्तिप्रतिपत्तेरन्यथाप्युपपद्यमानत्वात् । लिङ्गस्य तु व्याप्तिबलेन गमकत्वम्' न शक्त्या । मत्वर्थश्च मत्वर्थेन व्याप्त इति तयोरेव गम्यगमकभावः, नाग्निधूमयोरित्यर्थः । न च विशेषणमात्रस्यानुमेयत्वम्, अग्न्यादेः सिद्धसाध्यत्वात् । नापि विशेष्यमात्रपर्वतादेः, प्रत्यक्षेणैव सन्निकृष्टत्वात् । धर्मविशिष्टस्य तु धर्मिणः प्रमाणान्तरेणासन्निकृष्टत्वात् तस्यैवानुमेयत्वमित्याह—**न च तस्येति** ।

ननु धूमस्य धर्मित्वे प्रतिज्ञार्थैकदेशो हेतुर्भवत्विति चोदयति—**नन्वित्यर्धेन** ।

1. तस्मात्तस्य. मा.
2. धूमविशेष्यत्वे. चौ. मु.
3. ष्टः । तस्माद.......न्तुम् । यस्तु. मा.
4. पर्वतावयविनः. मा.

**नैतदस्ति [1]विशिष्टे हि साध्ये सामान्यहेतुता ।**
**धूमतज्ज्ञानसम्बन्धस्मृतिप्रामाण्यकल्पने ॥ ५१ ॥**

**फलेन विषयैकत्वं तद्व्यापारात् पुरोदितम् ।**
**प्रमेयधीप्रमाणत्वं भाष्यकारस्तु मन्यते ॥ ५२ ॥**

**प्रत्यक्षानियमोक्तिश्च सर्वत्रैवानुषज्यते ।**
**अनुमानगृहीतस्य तेनैव प्रतिपादनम् ॥ ५३ ॥**

तत्र परिहारमाह—**नैतदस्तीत्यर्धेन** । धूमस्वलक्षणस्याग्निविशिष्टस्यानुमेयत्वम्, धूमत्वं च लिङ्गम् । अत्र च यदाग्निज्ञानं फलम्, तदा धूमज्ञानसम्बन्धस्मृतिचतुष्टयस्य विकल्पेन प्रामाण्यम्; फलेन च विषयैकत्वम्, तत्र व्यापारात् । तदुक्तम् "तत्र व्यापाराच्च प्रमाणता" इत्याह—**धूमतज्ज्ञानेति** । ननु भाष्यकारः प्रमेयबुद्धेः प्रामाण्यमाह—"अनुमानमसन्निकृष्टेऽर्थे बुद्धिः" इति । तत् कथं धूमादिचतुष्टयस्य विकल्पेन प्रामाण्यमित्याशङ्क्याह—**प्रमेयधीति** । प्रदर्शनार्थमेतत्—"अनुमानमसन्निकृष्टेऽर्थे बुद्धिः" इति; प्रत्यक्षसूत्रोक्तमेव त्वनियमाभिधानम्—"बुद्धिर्वा जन्म वा" इत्यादि सर्वत्रानुमानादौ योजनीयमित्यर्थः ।

अत्र केचिच्चोदयन्ति—"अनुमानं ज्ञातसम्बन्धस्य" इति परार्थानुमानमनेनाऽ[2]व्याप्तमिति । तत्रैवं चोदिते परार्थानुमानाभावेनैवाव्याप्तेः परिहारो वक्तव्यः; रूपत्रययुक्तस्य हि कृतकत्वादेर्वादिनं प्रतिवादिनं च प्रत्यनुमानत्वम्; तस्य च स्वार्थतैव । रूपत्रयप्रतिपादकस्य तु वाक्यस्य तत्र परार्थता । तस्य चागमकत्वान्नानुमानत्वम् । प्रतिवादिसिद्धमेव तु रूपत्रयं वादी स्ववाक्येन स्मारयति । तदुक्तम्—

"यतस्तु साधनापेक्षा तेनास्यैव प्रमाणता ।
तत्स्मृत्युत्पत्तिमात्रे तु वाक्यव्यापार इष्यते ॥" इति ।

एवं च वदतैतत् प्रदर्शितम्—यावतैव रूपत्रयस्मृतिर्भवति, तावदेव प्रयोक्तव्यम्; नाधिकं प्रतिज्ञावचनादि, असाधनाङ्गत्वादिति । [3]अथापि किमेतेन? भवतु परार्थानुमानम्; तत्राप्यभ्युपगमवादेनैतल्लक्षणं योजयितुमाह—**अनुमानगृहीतस्येति** ।

1. विशेषे. चौ. मु.
2. मनेनाप्तमिति. मा.
3. अथापि किं न तेन भवतु परमार्थानु. मा.

**परेभ्यो वाञ्छता वाच्यः [1]पूर्वं पक्षो यथोदितः ।**
**तत्र धर्मिणमुद्दिश्य साध्यधर्मो विधीयते ॥ ५४ ॥**

**नियमस्तद्विपक्षाच्च कल्प्यते नाविरोधिनः ।**
**असन्निकृष्टवाचा च द्वयमत्र जिहासितम् ॥ ५५ ॥**

**ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा[2] ।**
**प्रमितस्य प्रमाणे हि नापेक्षा जायते पुनः ॥ ५६ ॥**

यदानुमानगृहीतमनुमानेनैव प्रतिपादयितुं विवक्ष्यते [3]तदा यथोदितः पक्षो धर्मविशिष्टो धर्मी पूर्वं प्रतिपादनीयः ।

ननु परार्थानुमाने प्रतिज्ञावचनमसाधनाङ्गम् , प्रतिज्ञार्थसिद्धावनुपयुज्यमानत्वात् । तथा हि—न तत् साक्षादनित्यत्वं साधयति, अनित्यत्वेनानियतत्वात् । नापि साधनप्रतिपादकत्वेनाङ्गत्वम् हेतुत्ववचनवत्, साध्याभिधानात् । नापि साधनविषयप्रतिपादकत्वेन, साधनसाधनविषयप्रतिपादनस्यैवानुपयोगित्वात् ; अप्रदर्शितविषयमपि रूपत्रयं प्रयोक्तुं शक्यत एव; प्रयुक्तं च साध्यनिश्चयं जनयत्येव । सत्यमेवमेतत् ; प्रतिज्ञावचन एव तु परार्थानुमानवादिनः प्रष्टव्याः । अभ्युपगमवादेन त्वेतल्लक्षणं परार्थानुमानेऽपि योजितम् ; न तु परार्थानुमानं नाम किंचिदस्तीत्युक्तम् ।

कथं प्रतिपादनीय इत्याह—**तत्र धर्मिणमि**त्यर्धेन । तत्र प्रत्यक्षसिद्धं धर्मिणमुद्दिश्यासिद्धमनित्यत्वाद्युपादीयते—यः शब्दः, सोऽनित्यः इति ॥

ननूपादीयमानमनित्यत्वमत्रोद्दिश्यमा[4]नशब्दविशेषणम् ; तत्र यद्ययमर्थः—शब्द एवानित्यो न घटादिः [5]इति) तदा व्याप्तिशून्यता हेतोः ; अथ—शब्दोऽनित्य एव [6]इति) तदाप्यपक्षधर्मतेत्याशङ्क्याह—**नियम** इति । शब्दोद्देशेन ह्यनित्यत्वमुपादीयमानमनित्यत्वविरोधिधर्मान्तरव्यवच्छेदेनैव विशेषणम्—अनित्य एव शब्दः, न नित्यः इति ; अतो न व्याप्तिशून्यत्वं नाप्यपक्षधर्मता हेतोरित्यर्थः । असन्निकृष्टग्रहणेन च ताद्रूप्येण तद्विपर्ययेण वा सन्निकृष्टस्य पक्षाभासतां दर्शयति—**असन्निकृष्टेति** । यतः प्रमाणान्तरप्रमिते वस्तुनि प्रमाणान्तरापेक्षैव नास्तीत्याह—**प्रमितस्ये**त्यर्धेन ॥

1. पूर्वपक्षः. चौ. मु.
2. च. चौ. मु.
3. तथा. मा.
4. मानं शब्द. मा.
5. Omitted. इति. मा.
6. Omitted. इति. मा.

**तादूप्येण परिच्छिन्ने प्रमाणं निष्फलं परम् ।**
**वैपरीत्यपरिच्छिन्ने नावकाशः परस्य तु ॥ ५७ ॥**

**मूले तस्य ह्यनुत्पन्ने पूर्वेण विषयो हृतः ।**
**प्रत्यक्षादेश्च षट्कस्य येनैवार्थोऽवधारितः ॥ ५८ ॥**

यदि तावद्यथैव साधयितुमिष्टस्तथैव प्रमाणान्तरेण प्रतिपन्नः; ततः सिद्धसाध्यतेत्याह—**तादूप्येण परिच्छिन्न** इत्यर्धेन । अथ[1] *सिषाधयिषितानित्यत्वविपर्ययेण प्रत्यक्षादिना प्रतिपन्नः, ततः प्रत्यक्षादिविरोधिनी प्रतिज्ञेत्याह— **वैपरीत्ये**त्यर्धेन । प्रत्यक्षेण सिषाधयिषितधर्मविपर्ययेणावगते शब्दादावनुमानस्यावकाश एव नास्तीत्यर्थः ॥

ननु यदि नाम सिषाधयिषितधर्मविपर्ययेण प्रत्यक्षादिभ्यः शब्दादयोऽवगम्यन्ते' तथाप्यनुमानस्यावकाशः किमिति न भवति ? कृतकत्वं [2]ह्यनित्यत्वेन व्याप्तं शब्दधर्मतया अवगम्यमानमनित्यत्वज्ञानं जनयति ; तच्च रूपत्रययुक्तं कृतकत्वं प्रत्यक्षादिविरोधेऽपि प्रतिज्ञामात्रपर्यवसितेऽस्त्येव ; [3]अतः प्रत्यक्षादिविरोधो न प्रतिज्ञादोष इत्याशङ्कयाह—**मूले तस्ये**त्यर्धेन । प्रत्यक्षादिना सिषाधयिषितधर्मविपर्ययेणावगते शब्दादौ कृतकत्वमनित्यत्वज्ञानं न जनयत्येव, नित्यत्वेऽपि दर्शनादनैकान्तिकत्वादपक्षधर्मत्वाद्वा । हेतुदोष एव तर्ह्ययम् ' न प्रतिज्ञादोषः । सत्यम् ; रूपत्रयबाध एवायम् ; पक्षविपर्ययद्वारेण तु पक्षदोष इत्युच्यते साध्यविकलत्वादय इव दृष्टान्तदोषाः, न तु पक्षमात्रपर्यवसितोऽयं बाधः, पक्षस्याप्रमाणत्वात् ; हेतुश्चेदबाधितरूपः ; प्रत्यक्षादिना साध्यविपर्ययावगमेऽपि किमिति साध्यज्ञानं न जनयति ? रूपत्रययुक्तस्य तु बाधेन तल्लक्षणमेव दूषितं स्यात् । भवतु प्रत्यक्षेण विपर्ययावगमेऽनुमानस्य बाधः, अनुमानेन तु विपर्ययावगमे तुल्यत्वेन किमितीतरस्य बाध इत्याशङ्कयाह—**प्रत्यक्षादेश्चेति** । प्रत्यक्षादीनां मध्ये येनैव सिषाधयिषितधर्मविपर्ययोऽवगम्यते तेनैवेतरस्य बाधः । अनुमानेनापि हि सिद्धावयवेन

1. अथसिद्धसाध. मा.
2. कृतत्वस्य नित्यत्वेन व्याप्तश. मा.
3. अथ प्रत्यक्षादि. मा.
* षाध संसिद्धौ. धातुपाठः

तेनैवोत्तरबाधः स्याद् विकल्पादेरसम्भवात् ।
अग्राह्यता तु शब्दादेः प्रत्यक्षेण विरुध्यते ॥ ५९ ॥

तेषामश्रावणत्वादि विरुद्धमनुमानतः ।
न हि श्रावणता नाम प्रत्यक्षेणावगम्यते ॥ ६० ॥

सान्वयव्यतिरेकाभ्यां गम्यते बधिरादिषु ।
त्रिधा शब्दविरोधः स्यात् [1]प्रसिद्ध्यादिविभागतः ॥ ६१ ॥

प्रतिज्ञापूर्वसञ्जल्पसर्वलोकप्रसिद्धितः ।
यावज्जीवमहं मौनीत्युक्तिमात्रेण बाध्यते ॥ ६२ ॥

सर्ववाक्यमृषात्वे तु धर्मोक्त्यैवात्मबाधनम् ।

विपर्ययेऽवगते हेत्वन्तरमसिद्धावयवं सिषाधयिषितधर्मविपर्ययेऽपि दर्शनाद[2]-नैकान्तिकत्वेनापक्षधर्मत्वेन वा साध्यज्ञानं न जनयतीति विकल्पसमुच्चयौ नाशङ्कितव्यावित्यर्थः ।

तत्र तावत् प्रत्यक्षविरोधमाह—**अग्राह्यतेत्यर्धेन** । शब्दो न प्रतीयते—इति प्रतिज्ञायां प्रत्यक्षविरोधो वक्तव्यः ॥

अनुमानविरोधमाह—**तेषामित्यर्धेन** । अश्रावणः शब्दः—इति प्रतिज्ञायामनुमानविरोधो वक्तव्यः । ननु दिङ्नागेन "प्रत्यक्षोदाहरणमेतत्" इति वर्णितम्; तन्निराकरणार्थमाह—**न हीति** । श्रोत्रग्राह्यता हि शब्दधर्मः श्रोत्रेण नावसीयते, किन्तु बधिरादिगतान्वयव्यतिरेकलिङ्गावसेया ॥

इदानीं प्रसिद्ध्यादिविभागेन त्रिप्रकारं शब्दविरोधमाह—**त्रिधेत्यर्धेन** ॥

प्रसिद्ध्यादिविभागेन—इति यदुक्तं तत्रोदाहरणमाह—**प्रतिज्ञेत्यर्धेन** । तत्र तावत् प्रतिज्ञाविरोधं त्रिप्रकारमाह—**यावज्जीवमित्यर्धेन** । यावज्जीवमहं मौनी—इति प्रतिज्ञाते प्रतिज्ञोच्चारणेनैव धर्मधर्मिनिरपेक्षेण प्रतिज्ञार्थो बाध्यते, मौनित्वशब्दोच्चारणयोर्विरोधादिति ॥

इदानीं धर्मपर्यालोचनेन प्रतिज्ञयैव प्रतिज्ञार्थो बाध्यत इत्याह—**सर्ववाक्येत्यर्धेन** । सर्वं वाक्यं मृषा—इति प्रतिज्ञार्थे प्रतिपादकस्यापि वाक्यस्य धर्मित्वेन

1. प्रतिज्ञादि. चौ. मु.　　2. Omitted. अनैकान्तिकत्वेन. मा.

**धर्म्युक्त्याह यतो जातः सा वन्ध्या जननी मम ॥ ६३ ॥**

**बौद्धस्य शब्दनित्यत्वं पूर्वोपेतेन बाध्यते ।**
**चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति ॥ ६४ ॥**

**स सर्वलोकसिद्धेन चन्द्रज्ञानेन बाध्यते ।**
**ज्ञातगोगवयाकारं प्रति यः साधयेदिदम् ॥ ६५ ॥**

मृषात्वे [1]सत्यन्येषाममृषात्वप्रसङ्गः । सांप्रतं धर्मिपर्यालोचनेन प्रतिज्ञयैव प्रतिज्ञार्थो बाध्यत इत्याह—**धर्म्युक्त्येत्यर्धेन** । जननीत्वमेव हि वन्ध्यात्वस्य बाधकम् । विवक्षातश्चैतदुच्यते—धर्म्युक्त्येति ; वन्ध्यात्वमपि जननीत्वस्य बाधकं यतः ॥

अधुना पूर्वसङ्कल्पबाधोदाहरणमाह—**बौद्धस्येत्यर्धेन** । क्षणिकाः सर्वसंस्काराः—इत्यभ्युपगम्य शब्दनित्यत्व[2]प्रतिज्ञता पूर्वतनस्वाभ्युपगमेन तां बाधत इत्यर्थः । ननु च प्रत्यक्षानुमानव्यतिरेकेणाभ्युपगमप्रमाणाभावात् कोऽयमभ्युपगमविरोधो नाम ? अथ तयोरेवानेन मुखेनोपन्यासः, ताभ्यामेव तर्हि बाधः ; स च प्रदर्शित एव । शब्दबाधप्रकार[3]प्रदर्शने नैव प्रसङ्गः स्यात् । सत्यमेवम् ; प्रमाणान्तरपूर्वकेणैव तु क्षणिकत्वाभ्युपगमात्र प्रतिज्ञाबाधोऽयम् ; तावन्मात्रालोचनेनोच्यत इत्यदोषः ।

सर्वलोकप्रसिद्धिबाधायामुदाहरणमाह—**चन्द्रशब्देति** । शशिनि चन्द्रशब्दाभिधेयत्वनिषेधप्रतिज्ञा सर्वलोकप्रसिध्या बाध्यत इत्यर्थः । ननु लोकप्रसिद्धिर्न पृथक् प्रमाणम् ; कोऽयं तद्बाधोपन्यासः ? अथ तद्व्याजेन यत्पूर्विका सा, एतदेवोपन्यस्तम् ; एवं तर्हि अर्थापत्त्या तदभिधायकत्वावगमादर्थापत्तिबाधप्रदर्शनेनैव गतम् । सत्यमेवम् ; तथापि चन्द्रशब्दादनन्यथासिद्धं यच्चन्द्रज्ञानं तदेवेदमर्थापत्तिनिरपेक्षमुपन्यस्तमिति द्रष्टव्यम् । तथा चोक्तम्—चन्द्रज्ञानेन बाध्यते इति ।

एवं तावत् प्रतिज्ञाविभागेन शब्दविरोधं त्रिप्रकारमुपवर्ण्य इदानीमुपमानविरोधमाह—**ज्ञातेति** । उपमानेन ज्ञातगोगवयाकारं पुरुषं प्रति यः प्रतिज्ञां करोति 'गोर्गवयसादृश्यं नास्ति' इति, तस्य बाधा उपमानेनेत्यर्थः ।

1. सत्येषांमृषात्व. मा.
2. प्रतिज्ञापूर्व....स्वा. मा.
3. प्रदर्शनेन चैव. मा.

**न गोर्गवयसादृश्यं तस्य मानोपमानतः ।**
**गे[1]हावगतनास्तित्वो जीवंश्चैत्रो यदा बहिः ॥ ६६ ॥**

**नास्तीति साध्यते बाधस्तत्रार्थापत्तितो भवेत् ।**
**अग्नावदाहके साध्ये शब्दे चानभिधायके ॥ ६७ ॥**

**श्रोत्रादिनास्तितायां च शब्दानित्यत्वसाधने ।**
**श्रुतार्थापत्तिबाधोऽत्र यदाप्तोक्तिनिवारिते ॥ ६८ ॥**

**दिवाभुजो निषिध्येत हेतुना रात्रिभोजनम् ।**
**शशशृङ्गादि[2]सद्भावे विरोधोऽनुपलब्धितः ॥ ६९ ॥**

**एवं [3]तु धर्मसम्बन्धबाधस्तावदुदाहृतः ।**
**धर्मधर्म्युभयेषां च स्वरूपस्वविशेषयोः ॥ ७० ॥**

**श्रुत्यर्थाक्षि[4]प्तयोर्बाधो वाच्यः सर्वप्रमाणकः ।**
**तृणादिविक्रियाहेतोरग्निमद्धिमसाधने ॥ ७१ ॥**

सांप्रतमर्थापत्तिविरोधावसरे दृष्टार्थापत्तिबाधायामुदाहरणपञ्चकमाह श्लोकद्वयेन—**गेहेत्यादिना** ।

श्रुतार्थापत्तिबाधायामप्युदाहरणमाह—**श्रुतार्थापत्तीति** ।

शशशृङ्गादिसद्भावप्रतिज्ञायामप्यभावेन बाध इत्याह—**शशशृङ्गेत्यर्धेन** ॥

उपसंहरति—**एवमित्यर्धेन** । एवं तु धर्मसम्बन्धबाधं सर्वप्रमाणकमुपवर्ण्येदानीं धर्मधर्म्युभयेषां यौ स्वरूपस्वविशेषौ प्रतिज्ञायां श्रुत्यर्थापत्तिभ्यामुपात्तौ तयोरपि बाधः सर्वप्रमाणको वक्तव्य इत्याह—**धर्मधर्मीति** ।

[5]तत्र प्रत्यक्षेणार्थोक्तधर्मविशेषबाधोदाहरणमाह—**तृणादीति** । अग्निमद्धिमम्—इति हि प्रतिज्ञायामग्नेरौष्ण्यविशेषोऽर्थाक्षिप्तः ; तस्य प्रत्यक्षतः शैत्यावगमाद् बाध इत्यर्थः । हेतोरुपन्यासेन विशेषस्यापि प्रतिज्ञायामर्थोक्ततां दर्शयति, अन्यथा प्रतिज्ञाबाधे हेतुप्रदर्शनमसम्बद्धमेव स्यात् ।

1. गोभावगतनास्तित्वे. मा.
2. सद्भावविरोधः. चौ. मु.
3. च चौ. मु.
4. तयोर्वाक्ये. चौ. मु.
5. प्रत्य. मा.

प्रत्यक्षावगताच्छैत्यात् [1]तद्विशेषौष्ण्यबाधनम् ।
अधर्मो विहितो दुःखं करोत्यल्पमितीह तु ॥ ७२ ॥

विहितत्वाद्[2]धर्मत्वस्वरूपस्यैव बाधनम् ।
तथा दुःखनिमित्तत्वं विशेषस्तस्य बाध्यते ॥ ७३ ॥

अयथार्था धियः सर्वा इत्युक्ते द्वयबाधनम् ।
स्वरूपस्वविशेषाभ्यां तद्धीमिथ्यात्वसाधनात् ॥ ७४ ॥

क्षणिकात्यन्तमिथ्यात्वे विशेषौ च द्वयोरिह ।
दर्शनादेकदे[3]शस्येत्येतेनैतद् व्युदस्यते ॥ ७५ ॥

यत्रैकस्योभयोर्वापि संशयाधीविपर्ययाः ।
शैत्यान्न दाहको वह्निश्चाक्षुषत्वादनित्यता ॥ ७६ ॥

इदानीमागमेन धर्मिस्वरूपतद्विशेषबाधोदाहरणमाह—**अधर्म इति** सार्धेन । विहितत्वेनाविशेषिते धर्मिणि सिद्धसाध्यता ; विशेषिते त्वधर्मरूपता दुःखहेतुत्वं च विशेषोऽस्य बाध्यत इत्यर्थः । उभयबाधप्रदर्शनार्थं च विहितत्वं धर्मिविशेषणत्वेनोपात्तम् ॥

इदानीमुभयस्वरूपोभयविशेष[4]बाधायामुदाहरणमाह—**अयथार्था इति** ॥

धर्मधर्मिविशेषबुद्धेरपि मिथ्यात्वसाधनेनोभयबाधः । क्षणिकत्वं च धर्मिणो विशेषः, अत्यन्तमिथ्यात्वं धर्मस्येत्याह—**क्षणिकेत्यर्धेन** । एवमसन्निकृष्टग्रहणेन सन्निकृष्टस्य पक्षाभासत्वं दर्शितम् । "एकदेशदर्शनात्" इत्येतेनाप्युभयोर्वादिप्रतिवादिनोरेकस्य वा[5]ज्ञानसन्देहविपर्ययासिद्धस्य हेत्वाभासतां दर्शयितुमाह—**दर्शनादेकदेशस्येति** ।

तत्र द्वयोर्विपर्ययासिद्धावुदाहरणमाह—**शैत्यादिति** ।

1. तद्विशेषोत्थ. चौ. मु.
2. अधर्मस्य. चौ. मु.
3. शस्येत्यनेनैतत्. चौ. मु.
4. Omitted. बाधा. मा.
5. ज्ञानं सन्दिग्ध वि. मा.

शब्दस्येत्येवमादौ तु द्वयोः सिद्धो विपर्ययः ।
कृतकत्वगुणत्वादौ परोक्ते याज्ञिकं प्रति ॥ ७७ ॥

स्वोक्ते चैवंप्रकारे स्यादसिद्धोऽन्यतरस्य तु ।
बाष्पादिभावसन्दिग्धो द्वयोरन्यतरस्य वा ॥ ७८ ॥

धूमस्त्रिधाप्यसिद्धः स्यादेवं तावत् स्वरूपतः ।
एत एव प्रकाराः स्युराश्रयासिद्धिकल्पने ॥ ७९ ॥

ज्ञातेऽपि हि स्वरूपेण नातद्धर्मेऽस्ति हेतुता ।
सर्वत्र दृष्टकार्यत्वादात्मा सर्वगतस्त्विति ॥ ८० ॥

बौद्धं प्रत्याश्रयासिद्धो लौकिकादेस्तु संशयः ।
वाङ्मात्रासिद्धिमात्रेण व्यवहाराप्रकल्पनात् ॥ ८१ ॥

[1]इदानीमेकतरविपर्ययासिद्धमुदाहरति—**कृतकत्वेति** । शब्दानित्यत्वप्रतिज्ञायां कृतकत्वं गुणत्वं च मीमांसकं प्रति विपर्ययासिद्धम् ।

सन्दिग्धासिद्धिमुदाहरति—**बाष्पादिभावेति** । यदा बाष्पादिभावेन सन्दिग्धासिद्धावुपदिश्यते धूमस्तदा द्वयोर्वादिप्रतिवादिनोरेकस्य वादिनः प्रतिवादिनो वा त्रिधाप्यसिद्ध इत्यर्थः ।

आश्रयासिद्धत्वेनापि हेतोरप्रसिद्धत्वं त्रिप्रकारमेवेत्याह—**एत एवेत्यर्धेन** ॥

नन्वाश्रयासिद्धत्वेन हेतोरसिद्धता किमिति भवतीत्याशङ्क्याह—**ज्ञातेऽपीत्यर्धेन** । धर्मिधर्मतया गृह्यमाणस्य हेतुत्वम् ; असिद्धे च धर्मिणि कुतस्तद्धर्मतेत्यर्थः । अत्रैवोदाहरणमाह—**सर्वत्रेति** । आत्मनः सर्वगतत्वसिद्धौ [3]सर्वत्र सुखदुःखोपलब्धेर्हेतु[4]त्वमुच्यमानं बौद्धस्याश्रयविपर्ययेण विपर्ययासिद्धम् ; लौकिकादेस्तु सन्देहेन सन्दिग्धासिद्धमित्यर्थः ।

"यत्रैकस्य" इति तीर्थान्तराभिप्रायेणोक्तम् ; परमार्थतस्त्वन्यतरासिद्धं नाम वस्त्वेव नास्तीत्याह—**वाङ्मात्रेत्यादिना** श्लोकद्वयेन । अनित्यः शब्दः

1. इदानीमे...पर्थ. मा.
2. शब्दोऽनित्य. मा.
3. सर्वसुख. मा.
4. त्वमूह्यमानम्. मा.

**द्वाभ्यां योऽसत्त्वतो ज्ञातस्तद्वचोदूषणं मतम् ।**
**इतरत् साधनं तु स्याद् वादिना यदि साध्यते ॥ ८२ ॥**

**निराकरणसिद्धौ वा दूषणं प्रतिवादिनः ।**
**सन्देहविपरीतत्वहेतू चात्र निराकृतौ ॥ ८३ ॥**

**ज्ञातसम्बन्धवचनात् त्रयः संशयहेतवः ।**
**सत्साध्ये तदभावे [1]च द्वाभ्यां व्यावृत्त एव च ॥ ८४ ॥**

**द्वौ विरुद्धार्थसम्बन्धौ यावेकत्रैकदेशिनि ।**
**प्रमेयानित्यतामूर्तिधर्माः साधारणा द्वयोः ॥ ८५ ॥**

**नित्यायत्नोत्थयत्नो[2]त्थनित्येषु द्विरनि[3]त्यता ।**

कृतकत्वात् इत्युक्ते यदि मीमांसकः शब्दे प्रमाणेन कृतकत्वस्यासिद्धतामापादयति, तदा बौद्धस्याप्यसिद्ध एवेति दूषणम् ; अथ बौद्धः प्रमाणेन सिद्धतामापादयति, तदा मीमांसकस्यापि सिद्ध एवेति साधनतां प्रतिपद्यते ; यदि तु वाङ्मात्रेणासिद्धतां ब्रूयात्, ततो वादिनापि वाङ्मात्रेण सिद्धता शक्यत एव वक्तुम् । अनुमानव्यवहारोच्छेदप्रसङ्ग इत्यर्थः ।

"ज्ञातसम्बन्ध" इत्यनेनाप्यनैकान्तिकविरुद्धयोर्हेत्वाभासतां दर्शयतीत्याह—**सन्देहेति** त्रिपाद्या । तत्र सन्देहहेतोस्त्रिप्रकारतामाह—**त्रयः संशयहेतव इति** ।

तां त्रिप्रकारतां दर्शयितुमाह—**सत्साध्येति** । तत्र सत्साध्ये तदभावे च—इत्येकः प्रकारः साधारणसंज्ञकः ; द्वाभ्यां व्यावृत्त एव च—इत्येकोऽपरः ; अर्द्धेन [4]द्वौ—इत्यादिनापरो विरुद्धाव्यभिचारिलक्षणः । तत्र सत्साध्ये तदभावे च—इत्यत्रोदाहरणचतुष्टयमाह—**प्रमेयेति** । अत्र हि नित्यायत्नो[5]त्थयत्नोत्थनित्येषु साध्येषु यथासंख्येन प्रमेयत्वादयः साधनधर्माः साधारणाः । ननु च विषमसंख्यत्वाद् यथासंख्यं न घटत इत्याह—**द्विरनित्यतेति** । साधनधर्ममध्ये द्विरनित्यता द्रष्टव्या—प्रमेयानित्य[6]तानित्यतामूर्तिधर्मा इति यावत् । नित्यत्वे प्रमेयत्वं घटा-

1. वा. चौ. मु.
2. त्थानित्येषु. चौ. मु.
3. त्यतः. चौ. मु.
4. द्वावित्यपरः. मा.
5. त्थानित्येषु. रत्नाकर.
6. तानित्यामूर्ति. मा.

**नित्या भूर्गन्धवत्त्वेन स्यादसाधारणस्त्वयम् ॥ ८६ ॥**

**निश्चयैकाङ्ग्वैक[1]ल्यादुभौ संशयकारणम् ।**

काशयोः साधारणम् ; अप्रयत्नानन्तरीयकत्वेऽप्यनित्यत्वं विद्युद्घटयोः ; प्र[3]यत्नानन्तरीयकत्वेऽपि तदेवानित्यत्वं विद्युद्घटयोः ; नित्यत्वे चामूर्तत्वं कर्माकाशयोः । यच्च साधारणस्य चतुष्प्रकारत्वमन्यैरुक्तम्—सपक्षैकदेशवृत्तिविपक्षव्यापि—इत्यादिना विभागेन, तस्य सन्देहं प्रत्यनुपयोगित्वान्नोक्तम् ।

द्वाभ्यां व्यावृत्त एव—इत्यत्रोदाहरणमाह—**नित्या भूरित्यर्धेन** । नित्यत्वे तु शब्दस्य श्रावणत्वं शब्दत्वेऽपि सद्भावात् सम्यग्घेतुरेवेति तत्परित्यागेन गन्धवत्त्वमुदाहृतम् ; तस्य पृथिवीव्यतिरेकेणान्यत्रोदकादावभावाद् व्यवस्थितं पृथिव्यां [4]गन्धवत्त्वमिति दर्शनात् ॥

ननु साधारणस्यापि तावत् संशयहेतुत्वं [5]न दूषणम् ;—तथाहि—नित्यानित्यबुद्धिद्वयोत्पादकत्वेन वा प्रमेयत्वादेः संशयहेतुत्वम् , उभयकोटिसंस्पर्शिविज्ञानोत्पादकत्वेन वा ? न तावन्नित्यानित्यबुद्धिद्वयोत्पादकत्वेन, उभाभ्यामेकेनाप्यनियतत्वात् ; नियमलक्षणेन च सम्बन्धेनार्थान्तरमर्थान्तरे बुद्धिमुत्पादयति ; नियतत्वे चोभयत्र निश्चायकत्वमेव स्यात् यथा शिंशपात्ववृक्षत्वादिषु ; नापि सन्दिग्धैकविज्ञानजनकत्वेन, अर्थसन्देहाभावे केनाप्यनियतत्वात् ;—किमुतासाधारणस्य । तथाहि—न तावदुभयत्र बुद्ध्युत्पादकत्वम्, उभयत्राप्यदर्शनात् ; [6]नियतत्वं तु दूरोत्सारितमेव । नाप्युभयाभावव्युत्पादकत्वम् , पृथ्वीव्यतिरेकेणोभयाभावेऽप्यदर्शनात् ; तत्र चोभयाभावस्य सन्दिग्धत्वात् ; उभयाभावबुध्युत्पादकत्वे चोभयाभावेन सन्देहो न स्यात् । उभयाभावरहितस्य वस्तुनोऽदर्शनात् संशय इति चेत् , वस्तुत्वादेव तर्हि साधारणात् संशयः, न गन्धवत्त्वादसाधारणात् । भवतु वा साधारणस्य संशयहेतुत्वम् , तदुपलब्धौ संशयदर्शनात् ; असाधारणधर्मोपलब्धौ तु संशय एव नोपजायत इत्याशङ्क्याह—**निश्चयेत्यर्धेन** । तदनेन प्रयोग उपक्षिप्तः—

1. ल्यादेष. चौ. मु.
2. यत्नान्तरीय. मा.
3. यत्नान्तरीय. मा.
4. कन्धत्वमिति. मा.
5. Omitted. न. मा.
6. नित्यत्वम्. मा.

**साधारणो यथा दृष्टो बुद्धिद्वयनिमित्तकः ॥ ८७ ॥**

**विरुद्धैकानवाप्तेश्च संशये कारणं मतम् ।**
**[1]यत्रासाधारणो नास्ति तदभावमुखेन तु ॥ ८८ ॥**

**द्वयासत्त्वविरोधाच्च [2]स नः संशयकारणम् ।**
**सन्दिग्धहेतुता चैषां विषयापे[3]क्षयेष्यते ॥ ८९ ॥**

**निर्णयस्यापि हेतुत्वं दृष्टं साध्यान्तरे यतः ।**
**व्यवच्छेदान्वयौ लब्धा निष्क्रियादावमूर्तिवत् ॥ ९० ॥**

**क्षित्येक[4]देशसिद्धत्वे गन्धवत्त्वस्य हेतुता ।**

असाधारणो धर्मी, संशय हेतुरेष इति साध्यो धर्मः, निश्चयैकाङ्गविकलत्वादिति हेतुः, साधारणवदिति दृष्टान्तः ।

व्यतिरेकविकलो हि साधारणः; असाधारणोऽन्वयविकलः; एतदेव श्लोकद्वयेन दर्शयन्नाह—**साधारण इति ।** यथा हि साधारणस्योभयत्र दर्शनादुभयबुद्धिनिमित्तत्वं व्यतिरेकविकलत्वेन चोभाभ्यामेकेनाप्यनवाप्तेः संशयहेतुता, एवमेवासाधारणस्याप्युभयत्राप्यदर्शनादुभयाभावमुखे[6]नोभयरहितस्य वस्तुनोऽदर्शनात् संशयहेतुतेति प्रक्रिया ।

व्यतिरेकान्वयविकलत्वेन साधारणासाधारणयोः संशयहेतुत्वमुक्तम् । यत्र तु साध्ये साधारणोऽपि विपक्षव्यतिरेकं लभतेऽसाधारणश्चान्वयम्, तत्र तयोर्गमकत्वमेवेत्याह—**सन्दिग्धेति** सपादश्लोकेन । अत्रैवोदाहरणमाह—**निष्क्रियेत्यादि** त्रिपाद्या । अत्र च साधारणत्वे सत्येव न हेतुत्वम्; किन्तु निष्क्रियत्वे मूर्तत्वस्य क्षित्येक[7]देशासिद्धत्वे च गन्धवत्त्वस्य साधारणासाधारणत्वमेव नास्तीत्यर्थः ।

1. अत्रासा. चौ. मु
2. मतः. चौ. मु.
3. क्षयोच्यते. चौ. मु.
4. सिक्तत्वे. मा.
5. नापिवाव्याप्तेः. मा.
6. नोपरहितस्य. मा.
7. देशसिक्तत्वे. मा.

यत्राप्रत्यक्षता वायोररूपत्वेन साध्यते ॥ ९१ ॥

स्पर्शात् प्रत्यक्षता [1]चासौ विरुद्धाव्यभिचारिता ।
केचिज्जात्यन्तरं चैनां वर्णयन्त्यपरे पुनः ॥ ९२ ॥

साधारणत्वमंशेन समस्तं वाप्यनन्वयम् ।
प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य साधनैः ॥ ९३ ॥

तत्पराजयतः कार्यो निर्णयो बाधवर्जनात् ।
क्वचित् संशयहेतू यौ प्रत्येकत्वेन लक्षितौ ॥ ९४ ॥

"द्वौ विरुद्धार्थसम्बन्धौ" इति यदुक्तं तत्रोदाहरणमाह—**यत्रेति**। [2]चक्षुर्ग्राह्यत्वाग्राह्यत्वे अत्र साध्यत्वेन विवक्षिते ; अप्रत्यक्षत्वमात्रे तु रसादावरूपत्वस्य सद्भावादनैकान्तिकत्वं स्यात् ।

विरुद्धाव्यभिचारित्वं च केचित् साधारणासाधारणाभ्यां संशयहेत्वन्तरं वर्णयन्ति : अपरे त्वरूपस्पर्शत्वयोरंशेन सपक्षविपक्षयोर्वृत्तिदर्शनात् साधारणत्वम् । धर्मद्वयस्य तु ताभ्यां व्यावृत्तत्वेनासाधारणत्वमित्याह—**केचिदिति**।

कथं पुनरत्र निर्णय इत्याह—**प्रतिज्ञेति**। "द्वौ विरुद्धार्थसम्बन्धौ यावेकत्रैकदेशिनि"—इति विरुद्धव्यभिचारिणो लक्षणम् । तत्र द्वयोर्विरुद्धार्थसम्बन्धत्वं संशयहेतुत्वे कारणम् ; न द्वयोरेकत्र दर्शनमात्रम् । तथा हि—विरुद्धार्थसम्बन्धितामन्तरेण धर्मद्वयस्याप्ये[3]कत्रोपलब्धौ प्रत्येकमगमकयोरूर्ध्वत्वकाकवत्त्वयोर्गमकयोर्वा प्रयत्नानन्तरीयकत्वकृतकत्वयोर्निश्चायकत्वम् ; स्थाणुरयमूर्ध्वत्वे सति काकनिलयनात् ; अनित्यः शब्दः प्रयत्नानन्तरीयत्वकृतकत्वाभ्यामित्याह—**क्वचिदित्यादिना** सार्धेन ॥

1. वासौ. चौ. मु.

2. अत्र रसादौ व्यभिचारवारणाय अप्रत्यक्षत्वं चक्षुरग्राह्यत्वं विवक्षितमित्युक्तम् । यद्येवं तर्हि रूपादौ नीरूपत्वस्य व्यभिचारस्तदवस्थ एव । अत इदमत्र प्रमादपतितमिति भाति । व्यभिचारपरिहारस्तु द्रव्यत्वविशेषणेन यथान्यायरत्नाकरं द्रष्टव्यः ।

3. कत्वोपलब्धौ प्रत्येकमवगमक. मा.

सङ्घाते निर्णयस्ताभ्यामूर्ध्वताकाकवत्त्ववत् ।
प्रत्येकं संहतौ [1]चापि गमकावविरोधिनौ ॥ ९५ ॥

तस्माद् भिन्नौ विरुद्धार्थहेतू चात्र नि[2]दर्शनम् ।
षोढा विरुद्धतामाहुश्चतुर्धा चैकधापि वा ॥ ९६ ॥

श्रुत्यर्थोक्तस्य बाधायां प्रतिज्ञार्थस्य हेतुना ।
नित्यत्वे कृतकत्वस्य धर्मबाधाद् विरुद्धता ॥ ९७ ॥

बाधो धर्मविशेषस्य यदा त्वेवं प्रयुज्यते ।
अर्थवच्छब्दरूपं स्यात् प्राक् सम्बन्धावधारणात् ॥ ९८ ॥

विभक्तिमत्त्वात् पश्चाद्वत् स्वरूपेणेति चाश्रिते ।
अस्वरूपार्थयोगस्तु पश्चाच्छब्दस्य दृश्यते ॥ ९९ ॥

उपसंहरति—**तस्मादित्यर्धेन** । द्वयोः [3]पृथग्गमकयोः विरुद्धार्थसम्बन्धयोरेकत्र दर्शनं विरुद्धाव्यभिचारिण्युदाहरणमिति । एवं सन्देहहेतोस्त्रिप्रकारतामुपन्यस्येदानीं विपरीतहेतोर्दर्शनभेदेनानेकप्रकारतां दर्शयितुमाह—**षोढेति** । श्रुत्यर्थोक्तस्य प्रतिज्ञार्थस्य हेतुना बाधायां विरुद्धत्वम्; षट्प्रकारं तदेके मन्यन्ते—धर्मधर्म्युभयेषां स्वरूपविशेषे विपरीतसाधनात्, चतुष्प्रकारत्वमपरे—धर्मधर्मिस्वरूपविपरीतसाधनादुभयस्वरूपोभयविशेषयोस्तत्रैवान्तर्भावात्; साध्यविपर्ययसाधनादेकप्रकारमपरे ।

हेतुना साध्यधर्मस्वरूपबाधामुदाहरति—**नित्यत्व इत्यर्धेन** । हेतुनार्थोक्तधर्मविशेषबाधोऽयमत्र प्रयोग इत्याह—**बाध इति सार्धेन** । शब्दस्वरूपं धर्मि, पूर्वमपि सम्बन्धावधारणादर्थवदिति साध्यो धर्मः, विभक्तिमत्त्वादिति हेतुः, सम्बन्धग्रहणोत्तरकालवदिति [4]दृष्टान्तः । पूर्वं सम्बन्धग्रहणादर्थवत्ता सिध्यन्ती स्वरूपेणैवार्थेन [5]सिध्यतीत्यर्थवत्त्वसाध्यधर्मविशेषोऽयमर्थोक्तोऽभिप्रेतः ॥

यथा चार्थोक्तधर्मविशेषबाधस्तथा दर्शयितुमाह—**अस्वरूपार्थयोगस्त्विति** ॥

1. वापि. चौ. मु.
2. दर्शितौ. चौ. मु.
3. Omitted पृथग्गमकयोः. मा.
4. Omitted दृष्टान्तः. मा.
5. सिध्यन्तीत्यर्थ. मा.

तेन प्रागपि सम्बन्धादस्वरूपार्थता भवेत् ।
इहप्रत्ययहेतुत्वाद् द्रव्यादेर्व्यतिरिच्यते ॥ १०० ॥

समवायो यथेहायं घट इत्यादिसङ्गतिः ।
अत्राप्य[1]समवायत्वं संयोगस्येव सिध्यति ॥ १०१ ॥

तेन धर्मिस्वरूपस्य वैपरीत्याद् विरुद्धता ।
यच्च सत्तावदेकत्वं समवायस्य कल्पितम् ॥ १०२ ॥

तत्र संयोगवद्भेदात् स्याद् विशेषविरुद्धता ।
नित्यमात्मास्तिता कैश्चिद् यदा सौत्रान्तिकं प्रति ॥ १०३ ॥

साध्यतेऽवयवाभावाद् व्योमवद् द्वयबाधनम् ।
तदोभयोर्विशेषस्य [2]बाधैवं साध्यते यदा ॥ १०४ ॥

इदानीं [3]धर्मिस्वरूपबाधं प्रदर्शयितुं प्रयोगमुदाहरति—**इहेति** । समवाय-स्वरूपं धर्मि, द्रव्यगुणकर्मसामान्यविशेषेभ्यो व्यतिरिच्यत इति साध्यो धर्मः, इह-प्रत्ययोत्पादकत्वादिति हेतुः, संयोगवदिति दृष्टान्तः ॥

अत्र प्रयोगे धर्मिस्वरूपविपरीतसाधनोऽयं हेतुरित्याह—**अत्रापीति** ॥

संयोगवदिहप्रत्ययहेतुत्वेन गुणान्तर्गतिसाधनाद् धर्मिविशेषविपरीतसाध-कोऽप्ययं हेतुरित्याह—**यच्चेति** । एकत्वं समवायस्य धर्मिणोऽभिप्रेतम्; इहप्रत्यय-[4]हेतुत्वं च संयोगवदनेकतां साधयति ॥

उभयस्वरूपबाधोऽत्र प्रयोग इत्याह—**नित्येति** । निरवयवत्वस्योभयाभावेन व्याप्तेराकाशे सौत्रान्तिकस्येत्येतत्प्रदर्शनार्थं सौत्रान्तिकग्रहणम् ॥

उभयविशेषबाधोऽत्र प्रयोग इति दर्शयति—**तदोभयोरिति** । चक्षुरादीना-मिति धर्मिनिर्देशः, पारार्थ्यमिति साध्यो धर्मः, [5]भागवत्त्वलक्षणात् सङ्घातादिति हेतुः, [6]शयनादिवदिति दृष्टान्तः ॥

1. समवायित्वं संयोगस्यैव. मा.
2. बाधोऽयम्. चौ. मु.
3. धर्मस्वरूप. मा.
4. हेतुश्च. मा.
5. मावत्वलक्षणात्. मा.
6. स्वपनादि. मा.

**पारार्थ्यं चक्षुरादीनां सङ्घाताच्छयनादिवत् ।**
**शयने सङ्घपारार्थ्यं भौतिकव्याप्तहेतुके ॥ १०५ ॥**

**आत्मानं प्रति पारार्थ्यमसिद्धमिति बाधनम् ।**
**असंहतपरार्थत्वे [1]इष्टे संहततापि च ॥ १०६ ॥**

**[2]अनाहङ्कारिकत्वं च चक्षुरादेः प्रसज्यते ।**
**गमकस्यैकदेशस्य [3]व्याप्तिं गम्येन भाषितुम् ॥ १०७ ॥**

**साध्यसाधर्म्यवैधर्म्यदृष्टान्तः प्रतिपाद्यते ।**
**तत्र हेत्वर्थमुद्दिश्य साध्योपादानमिष्यते ॥ १०८ ॥**

अधुना यथोभयविशेष[4]बाधः तथा दर्शयति—**शयन इति** । शयनाख्ये हि दृष्टान्तधर्मिणि खट्वायां सावयवत्वलक्षणो हेतुः संहतपारार्थ्येन भौतिकत्वेन च व्याप्तो दृश्यमानश्चक्षुरादीनां तथाविधमेव पारार्थ्यं भौतिकत्वं च साधयतीत्यभिमतात्मसिद्धिविपर्ययसाधनाद् विरुद्धत्वमिति ॥

चक्षुःपरार्थत्वयोः धर्मधर्मिस्वरूपयोः यौ विशेषावभिप्रेतौ—असंहताभौतिकत्वे तदुभयविशेषविरुद्धोऽयमुच्यत इत्याह—**असंहतेति** ॥

"सन्देहविपरी[5]तत्वहेतू चात्र निराकृतौ । [6]ज्ञातसम्बन्धवचनात्"—इत्युक्तम्; कथं पुनरेकदेशस्यैकदेशान्तरेण नियमसम्बन्धः परस्मै प्रतिपाद्यत इत्याह—**गमकस्येति** । गमकस्य हि धूमादेर्गम्येनाग्निना सह व्याप्तिप्रतिपादनाय साधर्म्यवैधर्म्यदृष्टान्तौ प्रयोक्तव्यावित्यर्थः ॥

एवं सति रूपद्वयप्रतिपादकत्वेन हेतुवचनावेवैतौ पक्षधर्माप्रतिपादकत्वेन न तथा व्यवहारः । तत्र साधर्म्यदृष्टान्तलक्षणं तावदाह—**तत्रेत्यर्धेन** । साधर्म्यदृष्टान्तवाक्ये हि हेतुमुद्दिश्य साध्यमुपादेयम्—यत् कृतकं तदनित्यमेव इति ॥

1. दृष्ट. चौ. मु.
2. अनह. चौ. मु.
3. व्याप्तिः. चौ. मु.
4. बाधक. मा.
5. तत्वेहतौ. मा.
6. अज्ञातसम्बन्ध. मा.
7. धर्मप्रतिपादके व्यवहारः. मा.

**उद्देश्यो व्याप्यते धर्मी व्यापकश्चेतरो मतः ।**
**यद्वृत्तयोगः प्राथम्यमित्या[1]द्युद्देश्यलक्षणम् ॥ १०९ ॥**

**तद्वृत्तमेवकारश्च स्यादु[2]पादेयलक्षणम् ।**
**वदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया ॥ ११० ॥**

**साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः ।**
**तत्राज्ञानाद् यदा वक्ता [3]सहभावविवक्षया ॥ १११ ॥**

एवं हेत्वर्थः साध्येन व्याप्तः कथितो भवतीत्याह—**उद्देश्य इत्यर्धेन** । कथं पुनरुद्दिश्यमानस्य निर्देशः कर्तव्यः, कथं चोपादेयस्येत्याह—**यद्वृत्तयोग इति** । उद्दिश्यमानं हि यद्वृत्तयुक्तं प्रथमं च निर्देष्टव्यम्; उपादीयमानं तद्वृत्तैवकाराभ्यां—यत् कृतकं, यतः कृतकः; तदनित्यमेव, ततोऽनित्य एव—इति वा । यतो वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात् तरतमौ च प्रत्ययाविति ॥

इदानीमुक्तसाधर्म्यदृष्टान्तलक्षणानन्वितत्वेनार्थसिद्धं साधर्म्यदृष्टान्ताभासमप्रयोगाय दर्शयितुं प्रसक्तिं तावदाह—**वदत्यर्थमिति** । यदि हेतोः साध्येनानुगमप्रदर्शनविवक्षायां यावदुच्चार्यते साहित्यप्रतिपादकं विपरीतप्रतिपादकं वा वाक्यम्, तत्सर्वं वक्तुर्विवक्षानुरोधेन स्वार्थपरित्यागेन तथैव प्रतिपादयेत्—अनित्यः शब्दः कृतकत्वात्, पटे कृतकनाशित्वे स्तः, यदनित्यं तत् कृतकमेव इति वा; तदा नैव साधर्म्यदृष्टान्ताभासता भवेत्; तथा सम्यक् प्रयुक्तेऽपि वाक्ये यदि शब्दानुरोधेनैवार्थो व्यवतिष्ठेत, तदापि नैव साधर्म्यदृष्टान्ताभासता भवेत्—अमूर्तत्वात् अनित्यः शब्दः, यदमूर्तं तदनित्यमेव कर्मवत् इत्यादि; यदा तु वक्तृविवक्षापरित्यागेन स्वशक्त्या शब्दोऽर्थं प्रतिपादयति, गम्यगमकभावोऽपि वार्थानां वस्तुबलप्रवृत्तव्याप्त्यपेक्षया, न शब्दानुरोधेन; तदास्ति प्रसक्तिः साधर्म्यदृष्टान्ताभासस्य शब्ददोषेण वस्तुदोषेण वा । तत्र शब्ददोषकृतं तावत् सोदाहरणमाह—**तत्राज्ञानादिति** सार्धेन श्लोकद्वयेन । यदा हेतोः साध्येनानुगमप्रदर्शनमजानन्

1. उद्देश. मा.
2. उपादान. रत्नाकरः.
3. सहचार. चौ. मु.

**विपर्ययेण [1]वा हेतोर्न व्याप्यत्वं विवक्षति ।**
**विवक्षन्नपि वा शब्दं तद्योग्यं न वदेद्[2] यदा ॥ ११२ ॥**

**घटे कृतकनाशित्वे नाशि व्याप्तं कृतेन वा ।**
**न तदेष्टस्य हेतुत्वं स्यादनिष्टस्य [3]वापि तत् ॥ ११३ ॥**

**तस्माद् व्याप्यत्वरूपेण वाच्यो हेतुत्वसम्मतः ।**
**यदा सम्यक् प्रयुक्तेऽपि वाक्येऽर्थो न तथा भवेत् ॥ ११४ ॥**

**साध्यहेतूभयव्याप्तिशून्यत्वात् परमार्थतः ।**
**नित्यो ध्वनिरमूर्तत्वात् कर्मवत् परमाणुवत् ॥ ११५ ॥**

**पटवद् व्योमवच्चापि तदसद्वादिनं प्रति ।**
**धर्म्यसिद्धावपि ह्येवं दृष्टान्ताभासता भवेत् ॥ ११६ ॥**

साहित्यमात्रं विपरीतव्याप्तिं वा प्रतिपादयति, जानन्नपि वा विवक्षानुसारेण शब्द-परिज्ञानेन प्रमादाद्वा नोच्चारयति-घटे कृतकनाशित्वे नाशि व्याप्तं कृतेन वा दर्शयति, तत्र साहित्यपक्षे कृतकत्वस्य हेतुत्वेनाभिमतस्य हेतुत्वं न स्यात् । विपरीतपक्षे तु साध्यत्वेनाभिमतस्यानित्यत्वस्य हेतुत्वं स्यादिति साधर्म्यदृष्टान्ता-भासते[4]त्याह—**तत्राज्ञानादिति** । उपसंहरति—**तस्मादि**त्यर्धेन ॥

"साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः" । इति वस्तुदोषस्य यदुक्तं तद्दर्शयति—**यदेति** । नित्यः शब्दोऽमूर्तत्वात् यदमूर्तं तन्नित्यमेव—इत्येवं प्रयुक्तेऽपि साधर्म्यवाक्ये यदा साध्यहेतूभयव्याप्तिशून्यत्वेन व्याप्यत्वं मूर्तस्य कर्माद्यालोचनया नास्ति, तदापि साधर्म्यदृष्टान्ताभासत्वमित्यर्थः ॥

अत्रैवोदाहरणमाह—**नित्यो ध्वनिरिति पटवदन्तेन** । यदा शब्द-नित्यत्वप्रतिज्ञायाममूर्तत्वं हेतुत्वेनोपदिश्यते, तदा क्रियापरमाणुघटानां यथासंख्येन साध्यहेतूभयशून्यता ।

आकाशस्यापि तदसद्वादिनं सौत्रान्तिकं प्रति तदभावेनैवोभयशून्य-तेत्याह—**व्योमवच्चापीति** सशेषेणार्धेन ॥

1. वाहेतौ न. चौ. मु.
2. यदि. चौ. मु.
3. चौम. चौ. मु.
4. त्यर्थः । उप. इति भाष्यम् ! मा.

**तत्सद्भावेऽपि च व्योम्नि द्वययुक्तेऽपि कीर्तिते ।**
**कर्माद्यालोचनाद् व्याप्तिर्हेतोर्नास्तीति वर्जनम् ॥ ११७ ॥**

**व्याप्त्या साधर्म्य उक्ते च न वैधर्म्य[1]मपेक्षते ।**
**सहभावित्वदृष्ट्या तु यदाऽव्याप्तिं न लक्षयेत् ॥ ११८ ॥**

**परः साधर्म्यदृष्टान्तात् [2]तं वा नापेक्षते यदा ।**
**वक्ता वा सहभावित्वं शुद्धं तेन वदेद् यदा ॥ ११९ ॥**

**विपरीता[3]न्वयत्वं वा तत्समाधित्सया तदा ।**
**पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम् ॥ १२० ॥**

व्याप्तिशून्यतायामुदाहरणमाह—**तत्सद्भाव इति** । आकाशस्यैव सद्भाववादिनं प्रति सत्यपि नित्यत्वामूर्तत्वद्वययोगे कर्मादौ नित्यत्वाभावेऽपि अमूर्तत्वादर्शनाद् व्याप्तिशून्यतेत्यर्थः ॥

> "गमकस्यैकदेशस्य व्याप्तिं गम्येन भाषितुम् ।
> साध्यसाधर्म्यवैधर्म्यदृष्टान्तः प्रतिपाद्यते ॥"

इति यदुक्तं [4]तदनुपपन्नमित्याह—**व्याप्त्येत्यर्धेन** । यत्र यत्र धूमस्तत्र तत्राग्निः—इत्युक्ते साधर्म्यमात्रादेवाग्निना धूमस्य व्याप्तिरवगता, किं वैधर्म्येण ? नापि विकल्पेन पक्षेऽर्थवत्ता, असाधारणेऽपि वैधर्म्यप्रयोगेणातुल्यार्थत्वात् । नापि विरुद्धानैकान्तिकप्रतिपक्षेण साधर्म्यवैधर्म्यद्वयं प्रयोक्तव्यम्, यत्र यत्र धूमस्तत्र तत्राग्निरिति साधर्म्यमात्रादपि सिद्धेः । सत्यमेवम् ; तथापि यदा नाम कदाचिदेवमापतति तदैवं प्रयोक्तव्यम् । कथं पुनरापततीत्याह—**सहभावित्वेति** सार्धश्लोकद्वयेन । वादिना सम्यक् प्रयुक्तेऽपि साधर्म्ये यदा प्रतिवादी भ्रान्त्या सहभावित्वदर्शनेन व्याप्तिमप्रतिपद्यमानो विपक्षव्यतिरेकं न प्रतिपद्यते, अवगते वा सपक्षान्वये विपक्षव्यतिरेकाकाङ्क्षायां साधर्म्यं नापेक्षते ; यदा वा वादी हेतुसाध्ययोः सहभावमात्रं अपरिज्ञानेन साध्यस्य वा हेतुना व्याप्तिं प्रतिपादयति, तदा विपक्षव्यतिरेकसिद्धये वैधर्म्यमपि प्रयोक्तव्यमित्यर्थः ॥

1, अपेक्ष्यते. चौ. मु.
2. तं च ना. चौ. मु.
3. अन्वयं वापि. चौ. मु.
4. तदुप. मा.

साहित्यमात्रं पूर्वोक्तं हेतोस्तत्रोपयुज्यते ।
व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ॥ १२१ ॥

तयोरभावयोस्तस्माद् विपरीतः प्रतीयते ।
धूमभावेऽग्निभावेन व्याप्तेऽनग्निस्ततश्च्युतः ॥ १२२ ॥

अधूम एव विद्येतेत्येवं व्याप्यत्वमश्नुते ।
तथानग्नावधूमेन व्याप्ते धूमस्ततश्च्युतः ॥ १२३ ॥

अन्यत्रानवकाशत्वाद् व्याप्यते ध्रुवमग्निना ।
व्यापकौ तु यदोच्येते भावाभावौ तदा ततः ॥ १२४ ॥

तत्र तदा वैधर्म्यादेव विपक्षव्यतिरेके सिद्धे किं साधर्म्येणेत्याशङ्क्याह—**साहित्यमात्रमित्यर्धेन** । असाधारणेऽपि विपक्षव्यतिरेकदर्शनात् [1]तन्निवृत्तये सपक्षान्वयप्रतिपत्तिफलं साधर्म्यमित्यर्थः । कथं पुनस्तत्प्रयोक्तव्यमित्याह—**व्याप्यव्यापकेति** । यादृगन्वयसिद्धये साधर्म्यदृष्टान्तेन हेतुसाध्यभावयोर्धूमाग्न्योः व्याप्यव्यापकभावः प्रदर्शितः, [2]तथा विपक्षव्यतिरेकसिद्धये तयोरभावयोः विपरीतव्याप्तिप्रतिपादकवैधर्म्यवाक्यं प्रयोक्तव्यम्—यत्रानग्निस्तत्राधूम एव इति ।

यथैव साधर्म्यवाक्यं हेतुभावस्य साध्यभावेन व्याप्तिं प्रतिपादयत् हेतुभावे साध्यविपर्ययव्यतिरेकद्वारेण साधनाङ्गतां प्रतिपद्यते, तथा वैधर्म्यवाक्यमपि साध्यविपर्ययस्य साधनविपर्ययेण व्याप्तिं प्रतिपादयत् साध्यविपर्ययेऽनग्नौ साधनधूमच्युतिद्वारेण साधनाङ्गतां प्रतिपद्यत इत्याह—**धूमभाव इति** श्लोकद्वयेन ।

यदि तु यथाग्निभावो धूमभावं प्रति व्यापकत्वेन दर्शितः साधर्म्यवाक्येन तथा तदभावोऽप्यनग्निर्हेत्वभावमधूमं प्रति व्यापकत्वेन कथ्यते, तदानग्निनाधूमस्य नियतत्वेन हेत्वभावे साध्यं नास्तीति दर्शितम् । अनग्निस्त्वधूमेनानियत इत्यनग्नेर्विपक्षस्य व्याप्याद् धूमात् प्रच्युतिर्न[3] कथितेति वैधर्म्यस्य साधनाङ्गता न स्यादित्याह—**व्यापकाविति** ।

1. तन्निवृत्तयेम.......न्वय. मा.
2. तथाहिपक्ष. मा.
3. प्रच्युनिर्न........तेति. मा.

नैव व्याप्याद् विपक्षस्य प्रच्युतिः कथिता भवेत् ।
तस्माद् धूमेन साध्यत्वमग्नेः प्रार्थयते यदा ॥ १२५ ॥

तदानग्निरधूमेन व्याप्तो वाच्यो न चान्यथा ।
अनग्न्यधूमसाहित्ये व्याप्तेर्वापि विपर्यये ॥ १२६ ॥

न प्रस्तुतो[1]पयोगः स्यादन्यद् वापि प्रसाध्यते ।
तत्राप्यर्थस्य शून्यत्वं द्वाभ्यामेकेन वा भवेत् ॥ १२७ ॥

यदनित्यं तु तन्मूर्तमणुवद् बुद्धिवत् खवत् ।
साध्येन व्याप्तिसिध्यै [2]च व्यतिरेकोऽत्र कथ्यते ॥ १२८ ॥

तस्माद् धूमस्य गमकत्वमिच्छतानग्निरधूमेन व्याप्तः कथयितव्य इत्याह—**तस्मादिति** ।

एवं तावद् वैधर्म्यदृष्टान्तं प्रतिपाद्येदानीं—"वदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया"—इत्यनेन न्यायेन वैधर्म्यदृष्टान्ताभासप्रसक्तिं प्रदर्शयितुमाह—**अनग्नीति** । "तत्राज्ञानाद् यदा वक्ता" इत्यनेन न्यायेन सहभावा[3]विवक्षया साहित्यमात्रं प्रतिपादयति, विवक्षन्नपि वा साध्याभावस्य हेत्वभावेन व्याप्तिं तत्प्रतिपादकं वाक्यं प्रमाणं नोच्चारयति, अधूमं वानग्निना नियतं प्रतिपादयति, तदा साहित्यपक्षेऽनग्नेरधूमेनानियतत्वात् प्रतिज्ञातविपक्षव्यतिरेकोपयोगिता न स्यात्; विपर्ययेऽप्यधूमस्यानग्निना नियतत्वेनानग्निस्ततो निवर्तमानोऽधूमं गमयतीति प्रस्तुतविपरीतं स्यादित्यर्थः ।

तथा—नित्यः शब्दोऽमूर्तत्वात् यदनित्यं तन्मूर्तम् इत्येवं सम्यक् प्रयुक्ते वैधर्म्ये यदार्थस्तथा नास्ति साध्यहेतूभयव्यावृत्तिशून्यतया, तदापि वैधर्म्याभासतेत्याह—**यत्राप्यर्थस्येति** ।

नित्यत्वेऽमूर्तत्वस्य हेतोर्व्यतिरेकमुखेन व्याप्तिसिद्धये वैधर्म्यदृष्टान्तः प्रयुज्यते । साध्यहेतूभयव्यावृत्तिशून्ये वस्तुनि परमाण्वादौ विपक्षव्यतिरेकाभावेन वैधर्म्याभासतेत्याह—**साध्येनेति** ।

1. उपकारः. चौ. मु.
2. व. चौ. मु.
3. विवक्षया विवक्षन्नपि वा साध्याभावस्य हेत्वभावेन व्याप्तिप्रतिपादकं वाक्यं प्रमाणं नोच्चारयति साहित्यमात्रमधूमम्. मा.

**यस्यायं नास्त्यसौ हेतुस्तेन साध्येन नाप्यते ।**
**तेन दृष्टेऽपि साहित्ये न सर्वो गम्य इष्यते ॥ १२९ ॥**

**सहदृष्टिर्न सम्बन्धो व्याप्तिर्नैव च तावता ।**
**मूर्तानित्यत्वयुक्तेऽपि तस्मादङ्गीकृते घटे ॥ १३० ॥**

**कर्मादौ व्याप्त्यभावेन न दृष्टान्तत्वमिष्यते ।**
**अशेषापेक्षितत्वाच्च सौकर्याच्चाप्यदर्शनात् ॥ १३१ ॥**

**साधने यद्यपीष्टोऽत्र व्यतिरेकोऽनुमां प्रति ।**
**तावता न ह्यनङ्गत्वं युक्तिः [1]शब्देऽभिधास्यते ॥ १३२ ॥**

**बोधप्रसङ्गो भेदानां न चाव्याप्तेर्भविष्यति ।**
**अस्ति सामान्यवस्त्वेषु [2]व्यापित्वं तत्र गम्यताम् ॥ १३३ ॥**

तेन नित्यः शब्दोऽमूर्तत्वात् जातिवत्—इति दृष्टेऽपि सपक्षान्वये साध्य-हेतूभयव्यावृत्तिशून्यता विपक्षव्यतिरेकाभावान्नास्ति गम्यगमकभाव इत्याह—**तेने**त्यर्धेन ।

इदानीमुभयाभावयुक्तेऽपि वस्तुनि—यदनित्यं तन्मूर्तं घटवत् इति व्याप्ति-शून्यतया वैधर्म्याभासतेत्याह—**मूर्तानित्यत्वयुक्त इति** ।

"साध्येन व्याप्तिसिद्धौ च व्यतिरेकोऽत्र कथ्यते ।" इत्युक्तम्, तद-नुपपन्नमित्याशङ्क्यते—अशेषविपक्षापेक्षित्वेनादर्शनमात्रावसेयत्वेन च सुखग्राह्य-त्वादन्वयनिरपेक्षस्य व्यतिरेकमात्रस्यैवाङ्गत्वात्; अन्वयस्तु दर्शनादवसेयः; न च तत् सर्वत्र सपक्षे संभवति सकलसपक्षग्रहणाभावेन—इत्याशङ्क्याह—**अशेषेति** सार्धेन श्लोकेन । यद्यपि विपक्षव्यतिरेकस्याङ्गत्वम्; तथापि नान्वयनिरपेक्षस्य असाधारणेऽपि भावादित्यर्थः ॥

यत्तु सकलसपक्षग्रहणासम्भवेनान्वयग्रहणस्याशक्यत्वेनागमकत्वमाशङ्क्यते, तत्राप्याह—**बोधेति** । धूमत्वमग्नित्वेनान्वितं सपक्षेऽवगन्तव्यमसाधारणाशङ्का-निवृत्त्यर्थम् । तत्त्वेकस्मिन्नपि धूमस्वलक्षणे सकलमस्तीति नान्वयग्रहणमशेषस्व-

1. शाब्दे हि वक्ष्यते. चौ. मु.          2. व्यापिता. चौ. मु.

केचित् साधर्म्यदृष्टान्ते व्याप्त्यापि कथिते पुनः ।
वैधर्म्योक्तिमपीच्छन्ति व्यावृत्तिनियमेच्छया ॥ १३४ ॥

हेतौ साधर्म्यदृष्टान्तात् साध्येनैवावधारिते ।
व्यावृत्तिः सर्वतः प्राप्ता साध्याभावे नियम्यते ॥ १३५ ॥

तत्तु मन्दमलं यस्मात् [1]पक्षेऽप्येतन्निरूपितम् ।
व्यापकाभावमात्रं हि व्याप्यान्नित्यं निवर्तते ॥ १३६ ॥

तस्माद् यथैव शुक्लत्वे पटस्योक्ते विरोधिनाम् ।
निवृत्तिर्न तु दैर्घ्यादेस्तथात्रापि भविष्यति ॥ १३७ ॥

द्वैविध्यं नोपपन्नं तु यथैव ह्यग्निधूमयोः ।
प्रत्यक्षदृष्टः सम्बन्धो गतिप्राप्त्योस्तथैव हि ॥ १३८ ॥

लक्षणग्रहणापेक्षमित्यर्थः । "व्याप्त्या साधर्म्ये उक्ते च न वैधर्म्यमपेक्षत" इति दर्शनम् 'यदा तु नाम कदाचिदेवमापतति तदेवं प्रयोक्तव्यमि[2]त्यन्तेन निराकृतम् ।' अपरेषां तु दर्शनम्—यत् कृतकं तदनित्यमेव—इत्युक्ते नित्यवदन्यत्रापि निवृत्तौ सत्यां नित्यत्वे तु कृतकत्वं नास्तीति व्यावृत्तिनियमेच्छया वैधर्म्यमपि प्रयोक्तव्यमित्याह—**केचिदिति** द्वयेन ।

तदयुक्तमित्याह—**तत्त्विति** द्वयेन ।

कृतकत्वोद्देशेनानित्यत्वमुपादीयमानं प्रसक्तस्यैव व्यवच्छेदं करोति नित्यत्वं च विरोधित्वेन प्रसक्तम् ; यतो यथा शुक्लादीनां विशेषणत्वं विरोधिनीलादिव्यवच्छेदेन तथात्रापि भविष्यति ; तदेतत् पक्षेऽपि निरूपितम्—

"नियमस्तद्विपक्षाच्च कल्प्यते नाविरोधिनः" इति ।

"तत्तु द्विविधम्" इत्यादि भाष्यम् ; तदाक्षिपन्नाह—**द्वैविध्यमिति** श्लोकद्वयेन । यथैव धूमत्वाग्नित्वयोः प्रत्यक्षत्वेन महानसादौ प्रत्यक्षदृष्टः सम्बन्धः, तथैव 'चलति' इति प्रत्ययालम्बनत्वेन गमनस्य प्रत्यक्षत्वाद् देवदत्तादौ प्रदेशान्तरप्राप्त्या सह प्रत्यक्षदृष्ट एव सम्बन्धः । 'चलति' इति प्रत्ययस्य संयोगविभागमात्रालम्बनत्वेन गमनस्य नित्यानुमेयतेति चेत्, एवमपि प्रत्यक्षदृष्टतानुमानदृष्टता च वक्तव्या ; किमिदम् "सामान्यतो दृष्टसम्बन्धम्" इति ? न च 'अयं

1. पेक्षेऽप्येवम्. चौ. मु.    2. त्यर्थः । अपरेषाम्. मा.

आदित्येऽनुपलब्धिश्चेन्न देशेऽप्यधुनातने ।
क्वचित् तत्रोपलब्धिश्चेद् देवदत्तेऽपि दृश्यताम् ॥ १३९ ॥

यदि धर्म्यन्तरापेक्षा तत्र सामान्यदृष्टता ।
स्यादग्निधूमयोः सैवं तस्मादेवं प्रचक्षते ॥ १४० ॥

प्रत्यक्ष[1]दृष्टः सम्बन्धो ययोरेव विशेषयोः ।
गोमयेन्धनतज्जन्यविशेषादिमतिः कृता ॥ १४१ ॥

चलति' इति प्रत्ययः संयोगविभागमात्रालम्बनः; संयोगविभागव्यतिरेकेणान्यस्यापि प्रतिभासनात्, अचलतोऽपि 'चलति' इति प्रत्ययप्रसङ्गात्, अविरतसंयोगविभागालम्बनत्वेऽप्यतीतवर्तमानभाविनामेकस्यालम्बनत्वेनाविशेषात्, पुरुषभूमिगतयोश्च संयोगविभागयोरुभयत्र 'चलति' इति प्रत्ययप्रसङ्गात्। प्रत्यक्षावगतसंयोगविभागलिङ्गजन्योऽयमिति चेन्न, अपरोक्षतया युगपच्चलनसंयोगविभागयोः प्रतिभासनात्, सम्बन्धग्रहणासम्भवाच्च, यतो नित्यं संयोगविभागानुमेयैव गतिः। नापि सयोगविभागयोरन्यथानुपपद्यमानयोश्चलनावगतिकारकत्वम्, अपरोक्षतया युगपत् प्रतिभासनादित्युक्तत्वात्। आदित्येऽनुमेयत्वादप्रत्यक्षतेति चेत्, एतदग्नित्वस्यापि साध्यधर्मिणि तुल्यम्। महानसादौ धूमत्वाग्नित्वयोः प्रत्यक्षत्वे प्रत्यक्षदृष्टसम्बन्धतेति चेत्, एतदपि देवदत्तादौ गतिप्राप्त्योः प्रत्यक्षत्वेन तुल्यम्। तस्मादुभयोरपि प्रत्यक्षदृष्टसम्बन्धत्वेन द्वैविध्यमनुपपन्नमित्यर्थः ॥

अथैकस्मिन् धर्मिणि देवदत्ताख्ये गतिप्राप्त्योः सामान्यतः प्रत्यक्षेण सम्बन्धमुपलभ्यादित्याख्ये धर्मिणि देशान्तरप्राप्तिदर्शनेन गत्यनुमानं सामान्यतोदृष्टसम्बन्धमनुमानमुच्यते; एतदप्यग्निधूमयोर्महानसादौ सामान्यत एव सम्बन्धदर्श[2]नादविशिष्टमित्युभयोः सामान्यतोदृष्टसम्बन्धत्वेन द्वैविध्याभाव इत्याह—**यदि धर्म्यन्तरापेक्षेति** त्रिपाद्या। एवं द्वैविध्यमाक्षिप्य प्रतिसमाधास्यन्नाह—**तस्मादेवमिति** पादन्यूनेन श्लोकत्रयेण। यस्मिन्नेव धर्मिणि गोमयेन्धनजन्याग्निविशेषतज्जन्यधूमविशेषयोः सम्बन्धग्रहणं तस्मिन्नेव कालान्तरे धूमविशेषदर्शनेन पुनः पुनः सन्दिह्यमानसद्भावस्य यदग्नेरनुमानम्, तत् प्रत्यक्षदृष्टसम्बन्धमुच्यत इत्य-

1. दृष्टसम्बन्धम्. चौ. मु.  2. नादित्यविशिष्टम्. मा.

**तद्देशस्थेन तेनैव गत्वा कालान्तरेऽपि तम् ।**
**[1]यदाग्निं बुध्यते तस्य पूर्वबोधात् पुनः पुनः ॥ १४२ ॥**

**सन्दिह्यमानसद्भाववस्तुबोधात् प्रमाणता ।**
**विशेषदृष्टमेतच्च लिखितं विन्ध्यवासिना ॥ १४३ ॥**

**आकृत्योरेव चैवेष्टा व्यवच्छेदेन केनचित् ।**
**हेतुसाध्यव्यवस्थेति विशेषो नोपदर्शितः ॥ १४४ ॥**

**अग्निधूमान्तरत्वे च वाच्ये सामान्यतो मितौ ।**
**सामान्यदृष्टमेकान्तादत्रेत्यादित्य उच्यते ॥ १४५ ॥**

**सामान्यविषयत्वं च [2]प्रत्यक्षस्य प्रसाधितम् ।**

भिप्रायः । ननु विशेषदृष्टत्वेनैतस्य "धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम्" इति भाष्यमनुपपन्नमिति चोदयति—**विशेषदृष्टमित्यर्धेन** ॥

तत्र परिहारमाह—**आकृत्योरिति** । नात्र स्वलक्षणयोर्गम्यगमकभावः, सम्बन्धग्रहणकालावगतयोर्विनष्टत्वात् ; आकृत्योरेव गोमयेन्धनादिना केनचिद्-वच्छेदेनावच्छिन्नयोर्गम्यगमकभाव इत्यर्थः । धर्म्यन्तरे तु देवदत्ताख्ये गतिप्राप्त्योः सम्बन्धमुपलभ्यादित्यगत्यनुमानं सामान्यतोदृष्टसम्बन्धाभिलप्यम् ॥

एवं तर्हि धर्म्यन्तरविवक्षायां सामान्यतोदृष्टसम्बन्धस्याप्येतदेवोदाहरण दातव्यम् "धूमाकृतिदर्शनादग्न्याकृतिविज्ञानम्" इति किमुच्यते "देवदत्तस्य" इति—इत्याशङ्कयाह—**अग्निधूमान्तरत्व इति** । सत्यमेवमेतत्, आदित्यो-दाहरणात् कदाचित् तत्र [3]न प्रत्यक्षदृष्टता संभवति, सर्वदादित्ये देशान्तर-प्राप्त्यानुमेयत्वाद् गतेरित्यर्थः ॥

नन्ववस्तुत्वेन सामान्यस्य स्वलक्षणविषयं प्रत्यक्षम् । तदुक्तम्—[4]"स्वलक्ष-णविषयं प्रत्यक्षम्, सामान्यविषयमनुमानम्" [5]इति । अतः कथं धूमाकृतिदर्श-नादग्न्याकृतिविज्ञाने प्रत्यक्षदृष्टसम्बन्धतेत्याशङ्कयाह—**सामान्यविषयत्वं चेति**

1. यदाग्निर्बुध्यते. चौ. मु.
2. प्रत्यक्षविषयत्वं च सामान्यस्य. मा.
3. Omitted. न. मा.
4. स्वलक्षणाविषयम्. मा.
5. Omitted. इति. मा.

वस्तुत्वं चात्र हेतुर्वा द्वयस्याप्यभिधीयते ॥ १४६ ॥

धूमादग्न्यनुमानस्य वस्त्वालम्बनता भवेत् ।
अभावान्यप्रमाणत्वात् स्वार्थे श्रोत्रादिबुद्धिवत् ॥ १४७ ॥

सामान्यस्य च वस्तुत्वं प्रत्यक्षग्राह्यतापि च ।
अभावान्यप्रमेयत्वादसाधारणवस्तुवत् ॥ १४८ ॥

सामान्यं नानुमानेन विना यस्य प्रतीयते ।
न च लिङ्गविनिर्मुक्तमनुमानं प्रवर्तते ॥ १४९ ॥

असामान्यस्य लिङ्गत्वं न च केनचिदिष्यते ।
न चानवगतं लिङ्गं किञ्चिदस्ति प्रकाशकम् ॥१५० ॥

तस्य [1]चाप्यनुमानेन स्यादन्येन गतिः पुनः ।
तदुत्पत्तिश्च लिङ्गात् स्यात् सामान्य[2]ज्ञानसंहितात् ॥ १५१ ॥

**वस्तुत्वं** चेत्यन्तेन । "निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः । ग्रहणम्" इत्यत्र प्रसाधितमित्यर्थः । अत्रैव तावत् स्वलक्षण[3]विषयताप्रत्यक्षस्य साधकं चेति प्रमाणमुच्यत इत्याह—**अत्र हेतुरिति** शेषेण । तदाह—**धूमादिति** । धूमादग्न्यनुमानं धर्मि, वस्त्वालम्बनमिति साध्यो धर्मः, अभावान्यत्वे सति प्रमाणत्वादिति हेतुः, स्वार्थे श्रोत्रादिबुद्धिवदिति दृष्टान्तः ॥

सांप्रतं [4]सामान्यस्य वस्तुत्वसिद्धौ प्रत्यक्षग्राह्यतायां च प्रमाणमाह—**सामान्यस्येति** । सामान्यं धर्मि, वस्तु प्रत्यक्षग्राह्यं तदिति साध्यधर्मद्वयम्, अभावान्यत्वे सति प्रमेयत्वादिति हेतुः, स्वलक्षणवदिति दृष्टान्तः । एवं सिद्धे सामान्यस्य प्रत्यक्षत्वे सिद्धा धूमाकृतिदर्शनादग्न्याकृतिविज्ञानस्य प्रत्यक्षदृष्टसम्बन्धतेति ॥

अनुमानैकसमधिगम्ये तु सामान्ये लिङ्गस्य—नार्थशब्दविशेषस्य—इत्यनेन न्यायेन(?) सामान्यरूपत्वे सत्यनुमेयत्वेनानवस्थानादनुमानव्यवहारोच्छेदप्रसङ्ग इत्याह—**सामान्यमित्यादिना** श्लोकद्वयेन ॥

1. न. वाप्यनु. चौ. मु.
2. ज्ञानसंहतात्. चौ. मु.
3. विषयप्रत्यक्षनिदर्शनेनानुमानविषयं धर्मि प्रसाध्य तस्य वस्तुतायाः साधकं प्रत्यक्षत्वस्य साधकं चेति—इति भाव्यमिति भाति.
4. सामान्यवस्तुत्व. मा.

तस्य चाप्यनु[1]मानस्य भवेल् लिङ्गेन चोद्भवः ।
अनुमानान्तरादेव ज्ञातेनैवं च [2]कल्पिते ॥ १५२ ॥

लिङ्गलिङ्ग्यनुमानानामानन्त्यादेकलिङ्गिनि ।
गतिर्युगसहस्रेषु बहुष्वपि न विद्यते ॥ १५३ ॥

अथ सामान्यभूतेऽपि लिङ्गेऽन्यस्माद् गतिर्भवेत् ।
प्रमाणादप्रमाणाद् वा [3]लिङ्गिन्यपि तथा भवेत् ॥ १५४ ॥

एवमप्यनुमानस्य नित्योच्छेदः प्रसज्यते ।
प्रमाणान्तर[4]मेयं स्यात् सामान्यस्यावबोधकम् ॥ १५५ ॥

अप्रमाणावबुद्धाद् वा लिङ्गाल्लिङ्गिनि या मतिः ।
सापि मिथ्या भवेन्नित्यं बाष्पजाताग्निबुद्धिवत् ॥ १५६ ॥

नन्वप्रमाणभूतापि सम्बन्धस्मृतिरिष्यते ।
यथा लिङ्गिगतौ हेतुस्तथा लिङ्गगतिर्भवेत् ॥ १५७ ॥

अथ सामान्यभूतस्यापि लिङ्गस्य प्रत्यक्षानुमानव्यतिरिक्तेन विज्ञानान्तरेण, ग्रहणम् , यथोक्तम्—“ अन्यदेवेदं तत्सहचरसमुदायविषयं स्मार्तमभेदेन ज्ञानमुत्पद्यते ” इति तदनुपपन्नम् । तद्विज्ञानान्तरं प्रत्यक्षानुमानव्यतिरिक्तं प्रमाणमप्रमाणं वाभ्युपगम्येत ? तत्र प्रमाणपक्षे तावद् दूषणमाह—**अथेति** श्लोकद्वयेन । एवमप्यनुमानोच्छेद एव ; एतदेव प्रमाणान्तरमनुमेयस्यापि सामान्यस्य ग्राहकं भविष्यति किमनुमानेनेत्यर्थः ॥

अथाप्रमाणभूतम् ; तत्राह—**अप्रमाणेति** । सर्वमेवानु[5]मानमप्रमाणं प्राप्तम्, अप्रमाणावगतलिङ्गजन्यत्वेन धूमविज्ञानविषयीकृतबाष्पजाताग्निबुद्धिवदित्यर्थः ॥

ननु व्याप्तिस्मरणमप्रमाणमप्यनुमितावङ्गत्वेनेष्टम् ; एवं हि लिङ्गग्राहकमपि भविष्यतीति चोदयति—**नन्वप्रमाणेति** ॥

1. मानत्वात्. चौ. मु.
2. कल्पने. चौ. मु.
3. तथालिङ्गिगतिः. चौ. मु.
4. एवं स्यात्. चौ. मु.
5. मानं प्रमाणम्. मा.

तत्र यत् पूर्वविज्ञानं तस्य प्रामाण्यमिष्यते ।
तदुपस्थानमात्रेण स्मृतेः स्याच्चरितार्थता ॥ १५८ ॥

न तु लिङ्गगतौ किञ्चित् प्रमाणमुपपद्यते ।
तदभावात् स्मृतिश्चात्र न कथञ्चित् प्रवर्तते ॥ १५९ ॥

स्मार्तमेतदभेदेन विज्ञानमिति यो वदेत् ।
तस्य वन्ध्यासुतेऽप्यस्ति नूनं स्मरणशक्तता ॥ १६० ॥

न चासाधारणोऽर्थात्मा सामान्यज्ञानकारणम् ।
यस्मान्नास्याविनाभावस्तेन दृष्टः कथञ्चन ॥ १६१ ॥

स्याद् वा सम्बन्धदृष्टयासौ सामान्यं कृतकत्ववत् ।
न ह्यसाधारणं वस्तु पूर्वत्रेह च विद्यते ॥ १६२ ॥

तत्र परिहारमाह—**तत्रेति**। व्याप्तिग्राहकप्रमाणपर्युपस्थानेन तस्योपयोगः।

तत्र लिङ्गग्राहकं प्रत्यक्षमनुमानं वा प्रवृत्तम्, स्वलक्षणविषयत्वात् प्रत्यक्षस्य; अनुमानग्रहणे वानवस्थेत्याह—**न तु लिङ्गगतावित्यर्धेन**। तदभावेन च स्मार्ततापि लिङ्गज्ञानस्य दुर्भणैवेत्याह—**तदभावादित्यर्धेन** ॥

एवं सत्यपि स्मरणमुच्यमानं वन्ध्यासुतस्मरणतुल्यमायातीत्याह—**स्मार्तमेतदभेदेनेति** ॥

ननु धूमस्वलक्षणस्यैव लिङ्गत्वमतद्रूपपरावृत्त्या, तस्य च प्रत्यक्षावसेयत्वात्; लिङ्गग्रहणे नानवस्थेत्याशङ्क्याह—**न चेति**। न धूमस्वलक्षणस्वरूपतया लिङ्गत्वम्, पर्वतस्थस्य रसवतीस्थेनाग्निस्वलक्षणेन सहानन्वयात्; रसवतीस्थस्याप्यपक्षधर्मत्वेन। अधूमव्यावृत्तिरपि धूमस्वलक्षणादन्या वानन्या वा स्यात्; अन्यत्वे सति न प्रत्यक्षावसेया; अनन्यत्वे तु स्वलक्षणस्वरूपानतिरिक्तैवेत्यर्थः ॥

अथ रसवतीस्थस्यैव धूमस्वलक्षणस्यावगतान्वयस्य पर्वतेऽपि सद्भाव इष्यते, हन्त! तर्हि सामान्यमेव तत् प्राप्तमित्याह—**स्याद्वेति** ॥

न चाप्यव्यप[1]देश्यस्य विकल्परहितस्य च ।
विना पूर्वानुसन्धानाल्लिङ्गत्वमुपपद्यते ॥ १६३ ॥

[2]कल्प्यन्तेऽपि विशेषा ये तेऽप्यलिङ्गमनन्वयात् ।
एतस्मादेव हेतोः स्यात् तज्ज्ञानस्याप्यलिङ्गता ॥ १६४ ॥

सामान्यरूपतायां [3]च तथैवानवधारणम् ।
क्वचिद् वा दृष्टसम्बन्धे सर्वः प्रत्यायको भवेत् ॥ १६५ ॥

सम्बन्धानु[4]भवेऽप्येवमेषितव्यं च लिङ्गिना ।
अनुमानप्रवृत्तेश्च [5]प्राङ्मानं तत्र नास्ति ते ॥ १६६ ॥

इतश्च स्वलक्षणस्य लिङ्गत्वं नास्तीत्याह—**न चापीति**। यो हि पर्वतधर्मतयाग्निकार्यत्वेन च विकल्पास्पदं न भवति, तस्य कथं लिङ्गत्वमित्यर्थः ॥

अथ धूमस्यैवान्यत्र व्यावर्तमानस्य काल्पनिकीं विशेषरूपतामभ्युपगम्य लिङ्गत्वमुच्यते, तत्राप्याह—**कल्प्यन्तेऽपी**त्यर्धेन। विशेषाणामपि स्वलक्षणवदनन्वयादित्यर्थः। नापि धूमज्ञानस्याग्निज्ञानं प्रति लिङ्गत्वम्, अनन्वयादेवेत्याह—**एतस्मादि**त्यर्धेन ॥

अथ सामान्यरूपतामभ्युपगम्यान्वय इष्यते, तत्रापि स्वलक्षणविषयत्वात् प्रत्यक्षेणाग्रहणम्, अनुमानेन ग्रहणे तथैवानवस्थयानवधारणमित्याह—**सामान्ये**त्यर्धेन। अथ स्वलक्षणस्यैव रसवतीस्थस्यान्वयग्रहणम्, पर्वतस्थस्य च लिङ्गत्वम्, तत्राप्याह—**क्वचिदि**त्यर्धेन ॥

इतश्चानुमानैकसमधिगम्ये सामान्ये सत्यनुमानोच्छेद इत्याह—**सम्बन्धानुभव इति**। सम्बन्धग्रहणसव्यपेक्षमनुमानम्; न च भवत्पक्षे सम्बन्धग्राहकं प्रमाणमस्ति। सामान्ययोर्गम्यगमकभावः; न च तयोः सम्बन्धः प्रत्यक्षावसेयः, स्वलक्षणविषयत्वात् प्रत्यक्षस्य; नाप्यनुमानावसेयः, अनवस्थाप्रसङ्गादित्यर्थः ॥

1. देशस्य. चौ. मु.
2. कल्पन्ते. मा.
3. वा. चौ. मु.
4. भवोऽवश्यमेषितव्यश्च. चौ. मु.
5. त्तेश्च प्राग्ज्ञानम्. चौ. मु.

**न चापि वासनामात्राल्लिङ्गज्ञानस्य सम्भवः ।**
**लिङ्गिज्ञानं च तद्वत् स्यात् त्रिरूपाल्लिङ्गतो न तत् ॥ १६७ ॥**

**[1]यत्राभावस्य लिङ्गत्वं न चाभावानुमानिकः ।**
**प्रमाणा[2]न्तरवेद्यत्वात् तत्र दोषो न जायते ॥ १६८ ॥**

**प्रत्यक्षावगताल्लिङ्गाद् यस्य [3]लिङ्गिगतिर्भवेत् ।**
**तस्य नातोऽधिकं किञ्चित् प्रार्थनीयं प्रसज्यते ॥ १६९ ॥**

**यत्राप्यनुमिताल्लिङ्गाल्लिङ्गिनोग्रहणं भवेत् ।**
**तत्रापि मौलिकं लिङ्गं [4]प्रत्यक्षादेव गम्यते ॥ १७० ॥**

**लिङ्गत्वं कृतकत्वादौ क्रियायाः कारकस्य वा ।**
**प्रत्यक्षत्वं च तस्येष्टमिति दूरं न गम्यते ॥ १७१ ॥**

नन्वनुमानेन लिङ्गग्रहणे सत्यनवस्था ; प्रत्यक्षानुमानव्यतिरिक्तं तु वासनामात्रबलेन विज्ञानमुत्पद्यमानं लिङ्गग्राहकं भविष्यतीति नानवस्थेत्याशङ्क्याह— **न चापीति** । यदि वासनाबलेन लिङ्गग्राहकं विज्ञानमुत्पद्यमानं प्रमाणमिष्येत, तदा प्रत्यक्षानुमानव्यतिरिक्तप्रमाणप्रसङ्गः । लिङ्गसामान्यवच्च लिङ्गिसामान्यस्यापि परोक्षस्य तदेव ग्राहकं भविष्यतीति किमनुमानेन ? तदाप्यनुमानत्रैरूप्यवर्जितत्वादित्यर्थः ॥

अभावगम्येऽपि लिङ्गे तस्यानुमानात् प्रमाणान्तरत्वेन नानवस्थेत्याह— **यत्राभावस्येति** ॥

अस्मत्पक्षे तु नायं दोष इत्याह—**प्रत्यक्षावगतादिति** ॥

अनुमितानुमाने तु सत्यपि लिङ्गस्यानुमेयत्वे लिङ्गग्राहकस्य प्रत्यक्षपूर्वकत्वे नानवस्थेत्याह—**यत्राप्यनुमितादिति** ॥

ननु यद्यनुमानगम्ये लिङ्गे सत्यनवस्था, कृतकत्वस्य तर्हि न स्याल्लिङ्गत्वमनित्यत्वावगतौ ; क्रियाकारकसम्बन्धो हि तत् कृतकत्वम् , "कृत्तद्धितसमासेषु सम्बन्धाभिधानं भावप्रत्ययेन" इति स्मरणात् ; तस्य चान्वयव्यतिरेकलिङ्गानुमेयत्वेनानवस्थेत्याशङ्क्याह—**लिङ्गत्वमिति** । उत्पत्तिक्रियैवानित्यत्वावगतौ लिङ्गम् ;

1. तत्र. चौ. मु.
2. गम्यत्वात्. चौ. मु.
3. लिङ्गिनि. चौ. मु.
4. प्रत्यक्षाद्येन. मा.

एवं शब्दोपमानादौ सामान्याश्रयता यतः ।
तद्दौस्थित्येन दौस्थित्यं सर्वत्रातः प्रसज्यते ॥ १७२ ॥

तस्मात् प्रत्यक्षपूर्वत्वं प्रमाणान्तर [1]इष्यताम् ।
प्रत्यक्षत्वं च सामान्ये नान्यथा हि गतिर्भवेत् ॥ १७३ ॥

प्रत्यक्षालम्बनत्वं च विशेषस्य कथं भवेत् ।
यदा वस्त्वन्त[2]रापेक्षः सामान्यांशः स कीर्त्यते ॥ १७४ ॥

रूपादयो हि सामान्यं सर्वे नीलाद्यपेक्षया ।
स्वविशेषानपेक्ष्याथ नीलादीनां समानता ॥ १७५ ॥

ते चापि तावत् सामान्यं यावत् स्युः परमाणवः ।
द्व्यणुकस्यापि यद्रूपं तद्धि साधारणं द्वयोः ॥ १७६ ॥

कृतकत्वप्रदर्शनं तदुपलक्षणार्थमेव ; प्रत्यक्षा च क्रियेति साधितम् ; कारकसङ्कीर्तनं च श्लोके प्रदर्शनार्थम् , न तु कारकस्य प्रत्यक्षता ; शक्तिस्तदवच्छिन्नं वा द्रव्यं कारकम् ; सा चार्थापत्तिसमधिगम्येति वक्ष्यामः ॥

एवमनुमानैकसमधिगम्ये सामान्ये सति तस्याभावः, तदभावाच्च—

" नार्थशब्दविशेषस्य वाच्यवाचकतेष्यते ।
तस्य पूर्वमदृष्टत्वात् सामान्यं तूपदेक्ष्यते ॥ "

इत्यनेन न्यायेन सामान्यविषयत्वेनानुमानवच्छब्दोपमानादीनामप्यभाव इत्याह— **एवमिति** ॥

उपसंहरति—**तस्मादिति** ॥

एवं धूमाकृतेः प्रत्यक्षदृष्टतासिध्यर्थं सामान्यविषयतापि प्रत्यक्षस्यास्तीति प्रतिपाद्य इदानीं प्रौढ्या सामान्यमेव प्रत्यक्षमिति साधयितुमाह—**प्रत्यक्षेति** ॥

तद्दर्शयति—**रूपादय इति** श्लोकद्वयेन । सर्वमेव रूपादि द्व्यणुकरूपपर्यन्तं नीलादिस्वविशेषापेक्षं सामान्यमित्यर्थः ॥

1. इष्यते. चौ. मु. 2. राक्षेपः. मा.

**न चान्त्येन विशेषेण व्यवहारोऽस्ति कस्यचित् ।**
**न च प्रत्यक्षता तस्य सङ्घाते केवलस्य वा ॥ १७७ ॥**

**भेदेनागृह्य[1]माणश्च न भेदो ग्राह्यतां व्रजेत् ।**
**न च भिन्नेष्वभिन्नत्वबुद्धिग्राह्यत्वसम्भवः ॥ १७८ ॥**

**समुदायो [2]न चाप्यस्ति भवतां न च सर्वदा ।**
**सर्वेषामसतार्थेन प्रत्ययोत्पत्तिसम्भवः ॥ १७९ ॥**

**न चैकजातियोगेन विनास्ति समुदायता ।**
**समुदायेऽपि चाणुत्वं [3]न तेषामपगच्छति ॥ १८० ॥**

अथ परमाणवः 'देवदत्तोऽयम्' इति यत् प्रत्यक्षं तस्यालम्बनम्, तेषां च विशेषात्मकत्वेन विशेषविषयता प्रत्यक्षस्य ; तदपि नास्तीत्याह—**न चान्त्येनेति** । परमाणवो हि समुदिताः प्रत्येकं वालम्बनम्? न प्रत्येकम्, स्थूलप्रतिभासनात् ; नापि समुदिताः, घटशरावादिषु बुद्धिप्रमेयवैलक्षण्याभावप्रसङ्गादित्यर्थः ॥

*अभिन्नप्रतिभासं चेदं विज्ञानमुत्पद्यते ; परस्परविभिन्नाश्च परमाणवः ; ते कथमभिन्नसंवेदनग्राह्या इत्याह—**भेदेनेति** ॥

नापि परमाणुसमुदायस्यालम्बनत्वम्, समुदायिव्यतिरेकेण समुदायस्य भवद्भिरनभ्युपगतत्वादित्याह—**समुदायो न चाप्यस्ति भवतामिति** । न चासत एव समुदायस्यालम्बनत्वेन सर्वदा सर्वेषां ज्ञानोत्पादकत्वमित्याह—**न च सर्वदेति** शेषेण ॥

अपि च परस्परविभिन्नानामेकधर्मावच्छेदेन[4] समुदायत्वापत्तिर्भवति, न च तदस्तीत्याह—**न चेत्यर्धेन** । न च परमाणुत्वमेवावच्छेदकमित्याह—**समुदायेऽपीत्यर्धेन** । अणुत्वावच्छिन्नः कथं स्थूलप्रतिभाससंवेद्य इत्यर्थः ॥

1. मणस्य नाभेदः. चौ. मु.
2. न वाप्यस्तु. चौ. मु.
3. नैतेषाम्. चौ. मु.
4. देन च न च समु. मा.

* इदम् 'न च भिन्नेषु' इत्युत्तरार्धमात्रावतरणं संगच्छते ।

**सामान्यमित्यदृश्येऽपि तेन सामान्य[1] एव नः ।**
**व्यासङ्गिनि[2] भवत्येषा धीर्विनाप्येककल्पनात् ॥ १८१ ॥**

**व्यासज्यवर्तमानस्य सामान्यस्य यथेन्द्रियैः ।**
**ग्रहणं तद्वदेव स्यात् प्रतिव्यक्ति निवेशिनः ॥ १८२ ॥**

**मीमांसकैश्च नावश्यमिष्यन्ते परमाणवः ।**
**यद्बलेनोपलब्धस्य मिथ्यात्वं कल्पयेद् भवान् ॥ १८३ ॥**

**समूहरूपं प्रत्यक्षमदृश्यैः परमाणुभिः ।**
**[3]यो हरेत शशस्यापि सोऽभावं शृङ्गतो वदेत् ॥ १८४ ॥**

**समूहपरमार्थत्वे स्थिते [4]तद्बुद्धिहेतुका ।**
**यदि नामावगम्येत परमाण्वस्तिता पुनः ॥ १८५ ॥**

तस्मात् 'देवदत्तोऽयम्' इति ज्ञानं परमाणुकार्यमवयव्याख्यमभिन्नं स्थूलमालम्बते, तथा प्रतिभासात् । स तु स्वावयवेषु व्यासज्यवर्तमानत्वात् सामान्यमेवेति सामान्यविषयता प्रत्यक्षस्येत्याह—**सामान्यमिति** ॥

एवमेव 'गौरयम्' इत्यपि प्रत्यक्षं प्रतिव्यक्तिसमवेतसामान्यग्राहकमित्याह—**व्यासज्येति** ॥

अथ स्थूलप्रतिभासं विज्ञानं परमाणुष्वेवोपपद्यमानत्वात् स्थूलं न कल्पयति, तत्राप्याह—**मीमांसकैरिति** । 'देवदत्तोऽयम्', 'घटोऽयम्' इति स्थूलप्रतिभासं विज्ञानमुत्पद्यते; तत्रानुपलभ्यमानमपि सूक्ष्ममस्ति, तद्बलेन चोपलभ्यमानस्य बाध इति चित्रम् ॥

यश्च स्थूलप्रतिभासं विज्ञानमुत्पद्यमानं परमाणुष्वेवाभ्युपगम्य स्थूलबाधमाह, स शशशृङ्गाभ्युपगमेन शशबाधं कुर्यादित्याह—**समूहरूपमिति** ॥

कल्प्यमानमपि सूक्ष्मं स्थूलप्रतिपत्त्यन्यथानुपपत्त्यैव कल्प्यत इति न स्थूलसम्बाधने समर्थमित्याह—**समूहेति** ॥

1. मान्यमेव. मा.
2. व्यासङ्गिनी. मा. चौ, मु.
3. योऽपह्नुते. चौ. मु.
4. तत्सिद्धिहेतुका. चौ. मु.

**तस्माद् यद् गृह्यते वस्तु येन रूपेण सर्वदा ।**
**तत् तथैवाभ्युपेतव्यं सामान्यमथवेतरत् ॥ १८६ ॥**

**सत्तादिसामान्यमपेक्ष्य सर्वं [1]गोत्वाद्यसाधारणतामुपैति ।**
**तस्मादसाधारणमक्षगम्यं वदन्न सामान्यमपह्नुवीत ॥ १८७ ॥**

**सामान्यरूपेण न गृह्यते चेत्**
**किं वास्त्यसाधरणबुद्धिरत्र ।**
**यद्वस्तु [2]लोकः प्रतिपद्यतेऽत्र[3]**
**द्विधापि तच्छक्यत एव वक्तुम् ॥ १८८ ॥**

**इत्यनुमानपरिच्छेदः ।**

—:*:—

उपसंहरति—**तस्मादिति** ॥

अथवासाधारणविषयत्वेऽपि प्रत्यक्षस्योच्यमाने धूमाकृतेः प्रत्यक्षदृष्टता नैवापैति, सत्ताद्यपेक्षया धूमत्वस्यापि विशेषरूपत्वादित्याह—**सत्तादीति** ॥

अथवास्तु समान्यरूपतैव धूमत्वादेः, तथापि निर्विकल्पकप्रत्यक्षविषयता नैवापैति । तदुक्तम्—"निर्विकल्पकबोधे च" इति । अथ 'सामान्यम्' इत्येवं प्रतिभासाभावेनाग्रहणम्, हन्त तर्हि 'असाधारणम्' इति प्रतिभासाभावेन स्वलक्षणस्याप्यग्रहणप्रसङ्ग इत्याह—**सामान्येत्यर्धेन** । सर्वथा यत् प्रत्यक्षप्रमेय-मवयवजात्यादि तदुभयमप्युक्तेन प्रकारेण साधारणासाधारणाभ्यां शक्यं व्यपदेष्टु-मित्यनुपपन्नमेतत्—स्वलक्षणविषयमेव प्रत्यक्षम्, सामान्यविषयमेवानुमानम्—इतीत्याह—**यदिति** ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
अनुमानं समाप्तम्

---

1. गोत्वादि साधारण. चौ. मु.
2. लोके प्रतिपद्यते. मा.
3. पद्यतेऽस्मिन्. चौ. मु.

# अथ शब्दपरिच्छेदः ।

**प्रत्यक्षादिषु वक्तव्यं शब्दमात्रस्य लक्षणम् ।**
**तदतित्वरितेनेह किं शास्त्रस्याभिधीयते ॥ १ ॥**

**सामान्यलक्षणं [1]मुक्त्वा विशेषस्यैव लक्षणात् ।**
**न शक्यं केवलं वक्तुमितोऽप्यस्य न वाच्यता ॥ २ ॥**

**यच्चोक्तं शब्दविज्ञानादर्थे ज्ञानमितीदृशम् ।**
**अविशिष्टं विशिष्टस्य न तच्छास्त्रस्य लक्षणम् ॥ ३ ॥**

**प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।**
**पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥ ४ ॥**

## अथ शाब्दं प्रमाणम् ॥

"शास्त्रं शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानम्" इति भाष्यम् । तत्र शास्त्रमिति लक्ष्यनिर्देशः; शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानमिति लक्षणम् । तदसम्बद्धत्वेन दूषयितुमाह वार्तिककारः—**प्रत्यक्षादिष्विति** । प्रत्यक्षानुमानशब्दोपमानादिषु व्यभिचारशङ्कायां तन्निवृत्तये शब्दमात्रस्यैव लक्षणं कर्तव्यम्; तद्विशेषलक्षणकरणमसम्बद्धम् । तथा च सूत्रकारेण सत्संप्रयोगसूत्रेण प्रत्यक्षमात्रस्यैव लक्षणं कृतम्, न तद्विशेषस्य चाक्षुषस्येत्यर्थः ॥

न च शक्येतापि सामान्यलक्षणपरिहारेण विशेषस्य लक्षणं कर्तुमित्याह—**सामान्यलक्षणमिति** ॥

लक्षणमप्येतद् विशेषस्य न भवतीत्याह—**यच्चेति** । "शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्"—इति शब्दमात्रस्यैव लक्षणम्, न तद्विशेषस्य शास्त्रस्येत्यर्थः ॥

इदं तु तद्विशेषस्य शास्त्रस्य लक्षणमित्याह—**प्रवृत्तिरिति** ॥

1. त्यक्त्वा चौ. मु.

स्वरूपकथनं यत्तु कस्यचित् तत्र दृश्यते ।
तदङ्गत्वेन तस्यापि शास्त्रत्वमवगम्यते ॥ ५ ॥

भावनायां समस्तायां वाक्यादेवोपजायते ।
प्रवृत्तिर्वा निवृत्तिर्वा तच्छास्त्रं न पदाद्यतः ॥ ६ ॥

अपरीक्षामिषेणापि लक्षणानि वदन्नयम् ।
न स्वतन्त्रोपयोगित्वनिरपेक्षाणि जल्पति ॥ ७ ॥

तत्र यल्लोकवाक्यस्थं कथयेच्छब्दलक्षणम् ।
वेदं व्याख्यातुकामस्य तन्नातीवोपयुज्यते ॥ ८ ॥

नन्वेतस्मिन्नपि लक्षणे स्वरूपप्रतिपादकस्य "सोऽरोदीत्" इत्येवमादेरशास्त्रत्वमित्याशङ्क्याह—**स्वरूपकथनमिति** । स्वरूपप्रतिपादकस्यापि स्तुतिनिन्दापरत्वेन प्रवृत्तिनिवृत्तिप्रतिपादकाङ्गत्वात् शास्त्रत्वम् "विधिना त्वेकवाक्यत्वात्" इत्यर्थः ॥

एवं तर्हि प्रेरणाप्रतिपादकस्य प्रत्ययस्य स्तुतिनिन्दाप्रतिपादकसहितस्य भवतु शास्त्रत्वम्; प्रेर्यविषयविशेषप्रतिपादकस्य तु न प्राप्नोति इत्याशङ्क्याह—**भावनायामिति** । अनुबन्धद्वयावच्छिन्नायां भावनायां प्रेर्यविषयसमर्पकपदसव्यपेक्षस्यैव प्रेरकत्वम् । तदनेन प्रेरणाप्रतिपादकस्य स्तुतिनिन्दाविषयप्रेर्यविषयसापेक्षत्वेन वाक्यस्य शास्त्रत्वमुक्तं भवतीत्यर्थः ॥

एवं दूषिते समर्थयितुमाह—**अपरीक्षामिषेणेति** । अपरीक्षाव्याजेनापि लक्षणमुच्यमानं चोदनोपदेशशब्दाभ्यां प्रस्तुतस्य तद्विशेषस्यैव शास्त्रस्य व्यभिचारवृत्तये लक्षणं कर्तव्यम्; न शब्दमात्रस्य, अप्रस्तुतत्वात् ॥

गामानय—इत्यादिव्यक्तिस्थस्य शब्दस्य लक्षणमतीव वेदव्याख्यायामनुपयोगीत्याह—**तत्र यदिति** ॥

प्रत्यक्षाद्यु[1]पयोगन्तु वर्णमात्रादितः[2] पुरा ।
शास्त्रार्थज्ञानवेलायां मत्वा तल्लक्षणं कृतम् ॥ ९ ॥

यत्तु गामानयेत्यादिवाक्यस्थं शब्दलक्षणम् ।
तस्य नेहोपयोगोऽस्ति तस्माच्छास्त्रगतं कृतम् ॥ १० ॥

विशेषश्च न सामान्यमन्तरे[3]णापि कश्चन ।
तस्मात् तमप्युदाहृत्य सामान्यं लक्षयेत् [4]स्फुटम् ॥ ११ ॥

सामान्यरूपमप्येतदधिकाराद् विशिष्यते ।
चोदना चोपदेशश्च शास्त्रमेवेत्युदाहृतम् ॥ १२ ॥

प्रत्यक्षलक्षणमपि वेदव्याख्यायामनुपयोगीति न वक्तव्यमित्याशङ्क्याह—**प्रत्यक्षाद्युप[5]योगन्त्विति**। अवगतस्य प्रमाणत्वं वेदस्य; तदवगमे च—'विश्वजिता यजेत स्वर्गकामः प्रकृतिवत्' इत्यादौ प्रत्यक्षादयः प्रमाणम्। अतस्तेषां लक्षणं व्यभिचारनिवृत्तये चोदनालक्षणप्रतिज्ञायामुपयोगि ॥

'गामानय' इत्यादिवाक्यगतस्य तु चोदनालक्षणप्रतिज्ञायामुपयोगिता नास्तीत्याह—**यत्त्विति** ॥

यत् पुनरिदमुक्तम्—सामान्यलक्षणमकृत्वा विशेषलक्षणमशक्यं कर्तुम् इति, तत्राप्याह—**विशेषश्चेति**। विशेषस्थमेव सामान्यं लक्षयितुं शक्यते; न विशेषपरित्यागेन, अप्रतीतेरित्यर्थः ॥

यच्चाप्युक्तम्—लक्षणमप्येतद् विशेषस्य न संभवति इति, तत्राप्याह—**सामान्यरूपमित्यर्धेन**। "चोदनालक्षणोऽर्थो धर्मः" इत्यत्र शब्दविशेषार्थविशेषयोः प्रकृतत्वादिह सम्बन्धः; अत एष लक्षणार्थः—विधायकशब्दविज्ञानात् कार्येऽर्थे विज्ञानं शास्त्रम् इति। हन्त! तर्हि 'चोदना' इति लक्ष्यनिर्देशः कर्तव्यः; किमिदम् "शास्त्रम्" इतीत्याह—**चोदना चोपदेशश्चेति** ॥

1. उपयोगित्वम्. मा.
2. नः. मा.
3. णास्ति. चौ मु.
4. सुखम्. चौ. मु.
5. उपयोगं तु. चौ. मु.

**यथा च चोदनाशब्दो वैदिक्यामेव वर्तते ।**
**शब्दज्ञानार्थविज्ञानशब्दौ शास्त्रे तथा स्थितौ ॥ १३ ॥**
**प्रत्यक्षाद्यपरीक्ष्यत्वे तदन्तर्गतिहेतुकम् ।**
**शास्त्रस्याप्यपरीक्ष्यत्वमनयैव दिशोदितम् ॥ १४ ॥**
**तत्रानुमानमेवेदं [1]बौद्धवैशेषिकैः [2]श्रितम् ।**
**भेदः सांख्यादिभिस्त्विष्टो न तूक्तं भेदकारणम् ॥ १५ ॥**
**पूर्वसंस्कारयुक्तान्त्यवर्णवाक्यादिकल्पना ।**
**विवक्षादि च धूमादौ नास्तीत्येतेन भिन्नता ॥ १६ ॥**

भवति च प्रक्रमबलेन विशेषलाभ इत्याह—**यथा चेति** । यथा "अथातो धर्मजिज्ञासा" इति [3]प्रक्रमापेक्षया "चोदनालक्षणोऽर्थो धर्मः" इत्यत्र चोदनाशब्दो वैदिक्यामेव वर्तते, तथा लक्षणग्रन्थे शब्दविज्ञानार्थविज्ञानशब्दौ विधायकशब्दकार्यार्थविषयौ द्रष्टव्यावित्यर्थः ॥

यदपि प्रत्यक्षाद्यन्तर्गततत्वेन शास्त्रस्य अव्यभिचारित्वमुक्तम्—"प्रत्यक्षादीनि प्रसिद्धानि प्रमाणानि; तदन्तर्गतं च शास्त्रम्" इत्यस्मिन् भाष्ये, तदपि "न स्वतन्त्रोपयोगित्वनिरपेक्षाणि [4]जल्पति" इत्यनेनैवाभिप्रायेणेत्याह—**प्रत्यक्षाद्यपरीक्ष्यत्व इति** ॥

ननु शब्दविज्ञानादसंनिकृष्टेऽर्थे यद् विज्ञानं तदनुमानमेव, "सदृशात्मनः । अप्रत्यक्षस्य सम्बन्धादन्यतः [6]प्रतिपत्तितः ॥" इत्यनेन न्यायेन । ततश्च "अनुमानं ज्ञातसम्बन्धस्य"—इत्यनेनैवानुमानलक्षणेन लक्षितत्वात् पृथग् लक्षणं न कर्तव्यमिति चोदयति—**तत्रानुमानमित्यर्धेन** । ननु भेदः सांख्यादिभिरिष्ट एव ; तदभिप्रायं पृथग् लक्षणम् ; तत्राह—**भेदः सांख्यादिभिस्त्विष्ट इत्यर्धेन** ॥

ननु पूर्ववर्णजनितसंस्कारविशिष्टस्यान्त्यवर्णस्यार्थप्रतिपादकत्वं विवक्षावशेन; न तु धूमादयो विवक्षावशेनार्थं प्रतिपादयन्तीत्युक्तमेव भेदकारणम्, किमुच्यते—"न तूक्तं भेदकारणम्" इति इत्याशङ्क्याह—**पूर्वेति सपदद्वयेन श्लोकेन** ।

1. बौद्धवैशे.
2. स्थितम्. मा.
3. प्रमापे. मा.
4. निरपेक्षाणि कल्पनीति. मा.
5. शब्दशा......अप्र. मा.
6. प्रतिपत्तेः. मा.

यैरुक्ता तत्र वैधर्म्यविकल्पसमजातिता ।
धूमानित्यविषाण्यादिविशेषान्न हि भिन्नता ॥ १७ ॥

त्रैलक्षण्यपरित्यागो यावन्न प्रतिपाद्यते ।
तावद् विशेषमात्रेण वदतो जातिता भवेत् ॥ १८ ॥

यथेष्टविनियोगेन प्रतीतिर्यापि शब्दतः ।
न धूमादेरितीहापि व्यभिचारोऽङ्गवृत्तिभिः ॥ १९ ॥

हस्तसंज्ञादयो येऽपि यदर्थप्रतिपादने ।
भवेयुः कृतसङ्केतास्ते [1]तल्लिङ्गमिति स्थितिः ॥ २० ॥

पुरुषापेक्षितायां च तथैव व्यभिचारिता ।
पदवैदिकवाक्यानां न सेत्यव्यापिका भवेत् ॥ २१ ॥

सम्बन्धानुभवश्चायं सोऽन्यत्रापि विलक्षणः ।
एतस्मिन् पुरुषापेक्षो देशापेक्षो[2]ऽग्निधूमयोः ॥ २२ ॥

सत्यमुक्तम्; न तु भेदकारणं तदित्याह—**तत्र वैधर्म्येति** शेषेण ।

अनुमानापरित्यागेनैव वैलक्षण्यमात्रमेतत्; तदनुमानेऽपि प्रतिलिङ्गमस्तीत्याह—**धूमानित्ये**त्यर्धेन ॥

सर्वथानुमानाद् भेदं प्रतिपादयता त्रैलक्षण्यपरित्यागो वक्तव्यः; तमनुक्त्वैवैतत् पूर्वमुक्तम्; कारणमभिधास्यते च यथेष्टविनियोज्यत्वात् इति; तत् सर्वं जात्युत्तरमित्याह—**त्रैलक्षण्येति** ॥

नापि यथेष्टविनियोज्यत्वेनानुमानाद् भेदः, यथेष्टविनियोज्यत्वस्यानुमानेऽपि सद्भावादनैकान्तिकत्वादित्याह—**यथेष्टेति** ॥

विपक्षतां दर्शयति—**हस्तसंज्ञादय इति** ॥

आप्तपुरुषसापेक्षत्वमङ्गवृत्तिभिरेव व्यभिचारणीयमित्याह—**पुरुषापेक्षितायामि**त्यर्धेन । भागासिद्धताप्यत्रास्तीति दर्शयति—**पदवैदिकवाक्यानामि**त्यर्धेन । पदवैदिकवाक्यानां नित्यत्वेनाप्तप्रणीतत्वाभावादित्यर्थः ॥

अपि च, आप्तप्रणीतत्वमविसंवादित्वेन व्याप्तमुपलब्धमिति सम्बन्धोपलक्षणपरमेतत् । तस्य चानुमानेऽपि प्रतिलिङ्गं विलक्षणत्वेन भेद इत्याह—**सम्बन्धेति** श्लोकेन सपादेन ॥

1. नलिङ्ग. चौ. मु.  2. पेक्षा. चौ. मु.

कालाद्यपेक्षया चान्य उक्ता चान्यैरभिन्नता ।
आप्तवादाविसंवादसामान्यादनुमानता ॥ २३ ॥

न चापूर्वादिशब्दानां भेदात् सर्वत्र [1]भिद्यते ।
न चेहाश्वादिशब्देभ्यो भेदस्तेषां प्रतीयते ॥ २४ ॥

न चाप्यज्ञातसम्बन्धं पदं किञ्चित् प्रकाशकम् ।
सम्बन्धाननुभूत्यातो न स्यादननुमानता ॥ २५ ॥

तुल्याकारतयाप्यत्र शब्दज्ञानार्थतद्धियाम् ।
अग्निधूमेष्वदृष्टत्वान्न भेदस्तन्निवारणात् ॥ २६ ॥

प्रतिबिम्बेष्वनेकान्तो बिम्बं यादृग्घि दर्पणे ।
तादृङ्मुखादि बुध्यन्ते न चात्राननुमानता ॥ २७ ॥

अपि च, आप्तवादाविसंवादसामान्येनैव कैश्चिदनुमानत्वमुक्तम्; तत् कथं भेदं साधयतीत्याह—**उक्तेति** पादत्रयेण ॥

ननु वैदिकानामपौरुषेयत्वेन तन्नास्तीति कथमनुमानत्वमित्याशङ्क्याह—**न चापूर्वादिशब्दानामित्यर्धेन** । भवेद् वैदिकानामपौरुषेयत्वेनाप्तवादाविसंवाद-सामान्याभावेनानुमानाद् [3]भेदः, न तावता भेदोऽन्येषामपि भवेदित्यर्थः ॥

अपि च, त एवमाहुः—वैदिकानामपि पौरुषेयत्वादाप्तवादाविसंवाद-सामान्येनास्त्येव सम्बन्धग्रह[4]णमिति नाश्वादिशब्देभ्यस्तेषां भेद इत्याह—**न चेति** सार्धश्लोकेन ॥

नापि शब्दार्थतद्बुद्धीनां तुल्याकारत्वेनानुमानाद् भेदः, तन्निराकरणादि-त्याह—**तुल्याकारतयापीति** । "गोत्वे सास्नादिमद्रूपा" इत्यत्र तुल्याकारत्वस्य निराकृतत्वादसिद्धत्वं हेतोरित्यर्थः ॥

अभ्युपगम्य सिद्धत्वमनैकान्तिकत्वं दर्शयति—**प्रतिबिम्बेष्विति** ॥

1. भिन्नता चौ. मु.
2. भवदसाध. मा.
3. दः न कृतं भेदाद. मा.
4. णमिति । नापि शब्दार्थ. मा.

प्रत्यक्षता [1]यदा तत्र तदान्यैर्व्यभिचारिता ।
यत्र पादादि बिम्बेन गतानामनुमीयते ॥ २८ ॥

एकवाक्यात् सकृच्चोक्तान्नाप्यनेकस्य [2]तत्क्षणात् ।
स्याद् विरुद्धावि[3]रुद्धस्य बोधादेतस्य भिन्नता ॥ २९ ॥

लिङ्गस्यापि हि ताद्रूप्यं दृष्टं हेतुविरुद्धयोः ।
विरोधान्नानुमानं चेत् स्यादनागमतापि ते ॥ ३० ॥

यत्र चैकार्थता वाक्ये तत्र स्यादनुमानता ।
सकृदुच्चरिते [4]वाक्ये विवक्षैकैव दृश्यते ॥ ३१ ॥

अथापि तत्र प्रत्यक्षत्वेन सपक्षत्वम्, तथाप्यत्रानैकान्तिकत्वमित्याह— **प्रत्यक्षतेति** । तत्र गतानामिति परोक्षविषयत्वेनानुमानविषयत्वं दर्शयति ॥

नाप्येकस्य वाक्यस्य सकृदुच्चारितस्यैकस्मिन् क्षणे [5]विरुद्धाविरुद्धानेकार्थ-प्रतिपादकत्वेनानुमानाद् भेदः शब्दस्येत्याह— **एकवाक्यादिति** ॥

कस्मादित्याह— **लिङ्गस्यापीत्यर्धेन** । हेतुभूतस्यापि लिङ्गस्य शिंशपादेर-विरुद्धानेकार्थप्रतिपादकत्वम् । नित्यः शब्दः कृतकत्वात्— इति विरुद्धस्यापि विरुद्धानेकार्थप्रतिपादकत्वमित्यनैकान्तिकतां दर्शयति । प्रतिज्ञाभिप्रायेण च विरुद्धानेकार्थम्, वस्तुतस्तु विपर्ययमेवैकं साधयतीत्यर्थः । अथ विरुद्धानेकार्थप्रति-पादकस्यानुमानाभासत्वेनाविपक्षता, हन्त ! तर्हि विरुद्धार्थप्रतिपादकस्य शब्दस्या-प्यागमाभासत्वेन [6]न अनुमानात् प्रमाणान्तरतेत्याह— **विरोधादित्यर्धेन** ॥

भागासिद्धश्चायं हेतुरिति दर्शयति— **यत्र चैकार्थतेत्यर्धेन** । अनेकार्थ-स्यापि 'श्वेतो धावति' इत्येकस्मिन्नुच्चारणे एकार्थप्रतिपादकत्वमित्यसिद्धतां दर्शयति— **सकृदित्यर्धेन** ॥

1. तदाप्यत्र. चौ. मु.
2. क्षणम्. चौ. मु.
3. रुद्धार्थे बोधात्. मा.
4. चास्मिन्. चौ. मु.
5. Omitted विरुद्धा. मा.
6. Omitted न. मा.

यस्त्वनिर्द्धारितार्थानामनेकप्रतिभोद्भवः ।
स लिङ्गेऽप्यस्फुटे दृष्टस्तस्मान्नैतेन भिद्यते ॥ ३२ ॥

दृष्टान्तानभिधानं च धूमादौ व्यभिचारितम् ।
प्रसिद्धत्वाद्धि तत्रापि न दृष्टान्तोऽभिधीयते ॥ ३३ ॥

अनभ्यस्ते त्वपेक्षन्ते शब्दे [1]सम्बन्धिनः स्मृतिम् ।
अत्र प्रयुक्त इत्येवं [2]बुध्यते हि चिरात् क्वचित् ॥ ३४ ॥

[3]परोक्ता हेतवश्चात्र नाभेदस्य निवारिताः ।
शब्दानुमानयोरैक्यं धूमादग्न्यनुमानवत् ॥ ३५ ॥

अन्वयव्यतिरेकाभ्यामेकप्रत्यक्षदर्शनात् ।
सम्बन्धपूर्वकत्वाच्च प्रतिपत्तिरितो यतः ॥ ३६ ॥

यस्तु प्रकरणाद्यपरामर्शेनानेकार्थप्रतिभोद्भवः, स लिङ्गेऽप्यस्फुटे दृष्ट इत्यनैकान्तिकत्वान्नैतेनापि भिद्यत इत्याह—**यस्त्विति** ।

नापि दृष्टान्तनिरपेक्षार्थप्रतिपादकत्वेन प्रत्यक्षवच्छब्दस्यानुमानाद् भेदः, अभ्यस्तसम्बन्धस्यानुमानेऽपि सद्भावादनैकान्तिकोऽयमित्याह — **दृष्टान्तानभिधानमिति** ॥

अनभ्यस्तसम्बन्धे[4] तु शब्देऽप्यपेक्ष्यत इत्यसिद्धोऽयं हेतुरिति दर्शयति—**अनभ्यस्ते त्विति** ॥

तस्माद् यद्यत् सांख्यादिभिर्भेदकारणमुक्तम्, तदीदृशम्; परोक्ताभेदहेतुनिराकरणमपि न तैः कृतमिति दर्शयति श्लोकत्रयेण—**परोक्ता** इत्यादिना । शब्दानुमानयोरिति धर्मिनिर्देशः, ऐक्यमिति साध्यो धर्मः, धूमादग्न्यनुमानवदिति दृष्टान्तः, अन्वयव्यतिरेकाभ्यमेकप्रत्यक्षदर्शनात् सम्बन्धपूर्वकत्वाच्चेति हेतुत्रयम् । प्रतिपत्तिरितो यतः—इति च प्रत्येकमनुषज्यते । प्रत्यक्षान्यप्रमाणत्वादित्यादि चात्रैव साध्ये हेतुचतुष्टयम् ॥

1. शब्दसम्बन्धिनः मा.
2. बुध्यन्ते. चौ. मु.
3. परोक्षाः. मा.
4. सम्बन्धस्तु. मा.

प्रत्यक्षान्यप्रमाणत्वात् तदद्दष्टार्थबोधनात् ।
सामान्यविषयत्वाच्च त्रैकाल्यविषयाश्रयात् ॥ ३७ ॥

कैश्चिन् मीमांसकैरुक्तो भेदोऽस्य[1] विषयान्तरात् ।
पूर्वाभ्यां ह्यपरिच्छिन्ने शास्त्रमर्थे प्रवर्तते ॥ ३८ ॥

तत्रापि नागमत्वं स्यात् पुरुषोक्तेस्तथास्तु चेत् ।
प्रत्ययः किंनिमित्तोऽर्थे वक्तृबुद्धेः कुतो न्वसौ ॥ ३९ ॥

न शब्दार्थस्य सा लिङ्गं न शब्दोऽस्याः कथञ्चन ।
विशेषो गम्यते ताभ्यां न चैतस्यानुमेयता ॥ ४० ॥

अन्ये तु मीमांसका एव विषयान्तरत्वेन शास्त्रस्यानुमानात् भेदं वर्णयन्ति—सम्बन्धग्रहणासापेक्षत्वेन प्रत्यक्षानुमानप्रतीतोऽर्थोऽनुमानस्य विषयः; शास्त्रस्य तु प्रत्यक्षानुमानाभ्यामप्रतीतः कार्यरूपोऽर्थो विषयः [2]इति । तदेतदाह—**कैश्चिदिति** ॥

तदेतद् दूषयितुमाह पूर्वपक्षवादी—**तत्रापि नागमत्वं स्यात् पुरुषोक्तेरिति** । भवतु शास्त्रस्य विषयान्तरतो[3]ऽन्यप्रमाणत्वम्, पौरुषेयस्य तु वाक्यस्य विषयान्यत्वाभावेन प्रमाणान्तरत्वाभावादप्रामाण्यप्रसङ्ग इत्यभिप्रायः । पौरुषेयस्याप्यनुमानत्वेन प्रामाण्यं भविष्यतीति नैव प्रमाणान्तरत्वेऽपि [4]नः क्षतिरिति चेदित्याह—**तथास्तु चेदिति** । विषयान्यत्वाभावेन प्रमाणान्तरत्वाभावाद् वक्ष्यमाणेनैव न्यायेनानुमानत्वाभावादप्रामाण्यमित्याह—**प्रत्ययः किंनिमित्तोऽर्थ इति** । इतरोऽनुमानाभिप्रायेणाह—**वक्तृबुद्धेरिति** । वाक्याद् वक्तृबुद्धिः प्रतीयते; ततोऽर्थतत्त्वावसाय इत्यर्थः । एवमुक्ते सति पूर्वपक्षवादी स्वाभिप्रायं प्रकटयति—**कुतो न्वसाविति** ॥

अवगता हि वक्तृबुद्धिः शब्दार्थतथात्वावगतौ लिङ्गम्; न च तदवगतौ किञ्चिल्लिङ्गान्तरमुपलभामह इत्याह—**न शब्दार्थस्येति** । सम्बन्धग्रहणसापेक्षत्वेन

1. अत्र. चौ. मु.
2. Omitted.
3. तो न प्रमाणम्. मा.
4. न इति चोदित्याह. मा.

**तेन वक्तुरभिप्राये प्रत्यक्षाद्यनिरूपिते ।**
**पुरुषोक्तिरपि श्रोतुरागमत्वं प्रपद्यते ॥ ४१ ॥**

**न चाप्यननुमेयत्वमागमार्थस्य शक्यते ।**
**लिङ्गं हि शब्द एवास्य धूमोऽग्नेरिव कल्प्यते ॥ ४२ ॥**

**न चाप्यननुमेयत्वात् प्रमाणान्तरगम्यता ।**
**रूपस्याश्रावणत्वेन न ह्यप्रत्य[1]क्षगम्यता ॥ ४३ ॥**

**[2]एवं स्थिते स्वयूथ्या नः केचिन्नाति[3]प्रयत्निनः ।**
**अनुमानविशेषोऽयमीदृग् धर्मस्य बोधकः ॥ ४४ ॥**

सामान्यविषयमनुमानम्, वक्तृबुद्धेरर्थतथात्वस्य च विशेषात्मकत्वान्नानुमानविषयत्वमिति पूर्ववाद्यभिप्रायः ॥

तेनावश्यं पौरुषेयस्य वाक्यस्य वक्तृबुद्धौ वाक्यार्थतथात्वे वा प्रामाण्यमभ्युपगन्तव्यम्; न च तदुक्तेन न्यायेनानुमानम् । नापि भवत्पक्षे विषयान्यत्वाभावेन प्रामाणान्तरमित्याह—**तेन वक्तुरभिप्राय इति** ॥

अपि च, शब्दलिङ्गजमनुमानं कार्यार्थग्राहकं धूम इवाग्नेरित्याह—**न चाप्यननुमेयत्वमिति** ॥

न चार्थात्मकलिङ्गाभावेन प्रमाणान्तरप्रमेयत्वं कार्यस्य, शब्दात्मकलिङ्गसद्भावात् यथा श्रोत्रेन्द्रियग्राह्यत्वाभावेऽपि रूपस्य न प्रमाणान्तरप्रमेयत्वं चक्षुर्ग्राह्यत्वेन प्रत्यक्षतैवेत्याह—**न चेति** । तदेवमुक्तेन प्रकारेण न प्रमाणान्तरत्वम् । अनुमानान्तर्गतस्य च तल्लक्षणेनैव लक्षितत्वात् पृथग् [4]लक्षणमवचनीयमिति ॥

एवं प्राप्ते उच्यते—**एवं स्थित** इत्यादिना । केचिदेवं समर्थयन्ति—शब्दविज्ञानादसंनिकृष्टेऽर्थे यद् विज्ञानं तदनुमानमेव । शब्दलिङ्गजस्यैवानुमानविशेषस्य कार्येऽर्थे प्रामाण्यं प्रतिज्ञातम् "चोदनालक्षणोऽर्थो धर्मः" इति; अत्र प्रतिज्ञार्थे न काचित् क्षतिरित्यर्थः ॥

1. क्षतेष्यते. चौ. मु.
2. एवं सति. चौ. मु.
3. प्रपञ्चिनः. चौ. मु.
4. लक्षणमेवचनीय. मा.

**भविष्यत्यर्थरूपं तु लिङ्गं धर्मे निराकृतम् ।**
**संज्ञानुमानतेच्छा तु न दुष्येदागमेऽपि नः ॥ ४५ ॥**

**लक्षणेन त्वभिन्नत्वं यदि शब्दानुमानयोः ।**
**वेदज्ञानाप्रमाणत्वं स्यादतल्लक्षणत्वतः ॥ ४६ ॥**

**आप्तवादाविसंवादसामान्यान्नृवचस्सु हि ।**
**लक्षणेनानुमानत्वात् प्रामाण्यं सिद्धिमृच्छति ॥ ४७ ॥**

**वेदे त्वाप्तनराभावात् सम्बन्धानुभावाद् ऋते ।**
**लक्षणं नानुमानस्येत्यप्रामाण्यं प्रसज्यते ॥ ४८ ॥**

**नन्वेकदेशसत्यत्वात्[1] तस्य स्यादनुमानता ।**
**वेदत्वादग्निहोत्रादौ वायुक्षेपिष्ठवाक्यवत् ॥ ४९ ॥**

**नादित्ययूपेऽनैकान्तात् तद्वद् वा गौणता भवेत् ।**

लक्षणैक्याभ्युपगमेन तु शाब्दानुमानयोरैक्याभ्युपगमे वेदस्यातल्लक्षणत्वेनाप्रामाण्यप्रसङ्ग इत्याह—**लक्षणेनेति** ॥

किं पुनस्तल्लक्षणम्, कथं च तद्वेदे नास्तीत्याह—**आप्तवादेति** श्लोकद्वयेन । आप्तवादत्वमविसंवादित्वेन व्याप्तमुपलब्धम् । लौकिकेषु च तत्सद्भावात् भवत्वनुमानत्वेनैव प्रामाण्यम्; वेदस्य त्वपौरुषेयतया सम्बन्धग्रहणाभावादप्रामाण्यप्रसङ्ग इत्यर्थः ॥

ननु लक्षणैक्येनापि शाब्दस्यानुमानत्वे सति किमित्यप्रामाण्यं वेदस्य? अनुमानत्वेनैव कार्येऽर्थे वेदस्य प्रामाण्यं भविष्यति । एवं हि तत्र सम्बन्धग्रहणं वायुक्षेपिष्ठत्वादिषु वेदैकदेशत्वं सत्यत्वेन व्याप्तमुपलब्धम्; विध्युद्देशादिषु तदुपलभ्यमानं सत्यतां साधयतीत्याह—**नन्वेकदेशसत्यत्वादिति** ॥

तदनुपपन्नमित्याह—**नादित्ययूपेऽनैकान्तादिति** । "आदित्यो यूपः" इत्यसत्येऽपि वेदैकदेशत्वदर्शनादनैकान्तिकत्वमित्यर्थः । अथ तत्रास्त्येव गुणवादेन

1. सत्यत्वे. चौ. मु.

# अथ चित्राक्षेपः

**परलोकफलाः पूर्वमाक्षिप्ताश्चोदनाः परैः ।**
**इदानीमैहिकाक्षेपः सूत्रकारेण [1]वोच्यते ॥ १ ॥**

" अनिमित्तं विद्यमानोपलम्भनत्वात् " इति सूत्रावयवं प्रत्यक्षसूत्रादपच्छिद्य वृत्तिकारेण प्रतिज्ञातचोदनाप्रामाण्याक्षेपपरं व्याख्यातम्—" प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि ; शब्दस्तु न प्रमाणम्, अनिमित्तं अप्रमाणं शब्दः, विद्यमानोपलम्भनत्वात् " इत्यादिना । तस्य— " नन्वथ "–इत्यादिना सह पौनरुक्त्यमाशङ्क्य वार्तिककारः परिहारद्वयमाह—**परलोकफला इति** । परलोकफलानामग्निहोत्रादिवाक्यानां तत्राक्षेपः ; ऐहिकफलानां तु चित्रादिवाक्यानामत्रेति । अथवा पूर्वोक्तमेव सर्वविषयमाक्षेपं सूत्रारूढं करोतीति श्लोकार्थः । तदनुपपन्नम् ; " नन्वतथाभूतमपि " इत्यत्र लोकायतिकमतेन परतःप्रामाण्याभ्युपगमेन........ " चोदना[2] नैव प्रमाणम् " इति स्वतःप्रामाण्यप्रतिज्ञाक्षेपः ; अत्र तु अनन्तरं फलानुपलब्ध्या प्रत्यक्षविरोधेन च प्रतिज्ञार्थस्याक्षेपः ; तत्र का पुनरुक्तता ? यच्चेदमुक्तम्—परलोकफलानां तत्राक्षेपः, [3]अत्र त्वैहिकफलानाम्—इति ; तदप्ययुक्तम् ; परतः प्रामाण्येनार्थासंस्पर्शितया वा तत्राक्षेपः, स चैहिकफलानामप्यविशिष्टः । अत्र " यदा तावदसौ विद्यमानासीत् तदा फलं न दत्तवती, असती कथं दास्यति " इत्येवम् ; स परलोकफलानामप्यविशिष्टः । अपि च, अत्रैहिकफलानामाक्षेपेऽभ्युपगम्यमाने—" एवं दृष्टापचारस्य स्वर्गाद्यपि फलं नास्ति इति मन्यामहे " इति विरुध्येत । यदपि " सूत्रकारेण वोच्यते " इत्युक्तम्, तदप्याक्षेपैक्ये सति घटते, नान्यथेति । [4]तस्मान्न पौनरुक्त्याशङ्कया परिहारद्वयमनुपपन्नम् । अपि च, धात्वर्थकर्मत्वे निराकृते विधिबलेन भावनाकर्मत्वे साधिते अपूर्वद्वारेण च कालान्तरभावित्वेऽवस्थिते गुणवादेन च दृष्टविरोधपरिहारे दत्ते कोऽयमाक्षेप इति न विद्मः । अलमतिविस्तरेण ; [5]प्रकृतमेव आक्षेपविभागं मुख्यं वस्त्वनुसरामः ॥

1. चोद्यते. चौ. मु.
2. चौदनैवप्रमाणम्. मा.
3. अत्रत्वितिफलानाम्. मा.
4. तस्मान्न पौन. मा.
5. प्रकृतमेव आक्षेपविपमाग. मा.

विषयोऽन्यादृशस्तावद् दृश्यते लिङ्गशब्दयोः ।
सामान्यविषयत्वं[1] हि पदस्य स्थापयिष्यते[2] ॥ ५५ ॥

[3]धर्मी धर्मविशिष्टश्च लिङ्गीत्येतच्च साधितम् ।
न तावदनुमानं हि यावत् तद्विषयं हि[4] तत् ॥ ५६ ॥

सामान्यादतिरिक्तं तु शाब्दे वाक्यस्य गोचरः ।
सामर्थ्यादनुमेयत्वादश्रुतेऽपि पदान्तरे ॥ ५७ ॥

संख्यादिमान् पदार्थश्चेन्न तावत् सोऽव्ययादिषु ।
यत्रापि ते प्रतीयन्ते तत्र व्यक्तेर्विशेषणम् ॥ ५८ ॥

तत्रापि विषयभेदेन तावद् भेदमाह—**विषय इति श्लोकद्वयेन**। सामान्यमात्रं हि पदस्य विषय इत्याकृत्यधिकरणे स्थापयिष्यामः। प्रसिद्धधर्मविशिष्टश्च धर्मी लिङ्गस्य विषय इत्येतत् साधितम्—"एकदेशविशिष्टश्च धर्म्येवात्रानुमीयते" इत्यत्र, "असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः"—इत्यत्र च ॥

यत्तु सामान्यातिरिक्तं संसर्गादि प्रतीयते, तत् सामर्थ्यप्रकरणादिलभ्यपदसमभिव्याहारात्मकस्य वाक्यस्य विषय इत्याह—**सामान्यादिति** ॥

ननु पदस्यापि संख्यादिविशिष्टपदार्थविषयत्वादसिद्धोऽयं हेतुः—विषयभेदादिति चोदयति—**संख्यादिमान् पदार्थश्चेदिति**। तत्र परिहारमाह—**न तावत् सोऽव्ययादिष्विति**। भुक्त्वा[5] इत्यादिषु "अलिङ्गमसंख्यमव्ययम्" इति स्मरणात् अप्रतीते[6]श्चेति। यत्रापि—"पशुना यजेत"—इत्यादिषु प्रतीतिः, तत्राप्याश्रयाश्रयिभावेन व्यक्तेः ऐदमर्थ्येन पदान्तरोपात्तस्य भावार्थस्य विशेषणमिति वक्ष्यामः—"शब्दवत्तूपलभ्यते"—इत्यत्रेत्याह—**यत्रापि त इति**।

1. त्वं च. चौ. मु.
2. ष्यति. चौ. मु.
3. धर्माधर्म. चौ. मु.
4. षयं न तत्. चौ. मु.
5. भुङ्क्तेत्यादिषु. मा.
6. स्मरणादप्रतीति श्चेति. मा.

**पदान्तराभिधेयस्य तादर्थ्याच्च क्रियात्मनः ।**
**वाक्यार्थेऽपि पदं यत्र गोमदादि प्रयुज्यते ॥ ५९ ॥**

**सत्यप्यत्र विशिष्टत्वे सिद्धत्वान्नैव पक्षता ।**
**तावानेव हि तत्रार्थो यः पूर्वमवधारितः ॥ ६० ॥**

**भेदबुद्धेश्च वैषम्यं प्रकृतिप्रत्ययार्थयोः[1] ।**
**विशेषणविशेष्यार्थस्वातन्त्र्यग्रहणं न च ॥ ६१ ॥**

**विशेष्यपूर्विका तत्र बुद्धिश्चात्र विपर्ययः ।**
**अथ शब्दोऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते ॥ ६२ ॥**

ननु मत्वन्तस्य विशिष्टविषयत्वेन विषयभेदादिति भागासिद्धोऽयं हेतु-रित्याशङ्क्याह—**वाक्यार्थेऽपि** इत्यर्धत्रयेण । प्रसिद्धधर्मविशिष्टो हि धर्मी लिङ्गस्य विषयः गोमानित्येवमादिषु त्विदानीं धर्मिणोऽप्यसिद्धत्वं सम्बन्धग्रहणकाले च द्वयोरपि सिद्धतेत्यर्थः ॥

एवं तावदभ्युपगम्य विशिष्टविषयत्वमसिद्धत्वेन विषयभेदः साधितः । इदानीं विशिष्टविषयतैव नास्तीत्याह—**भेदबुद्धेरित्यर्धेन** । विशिष्टविषयता हि लिङ्गस्य; गोमान् इत्येवमादिषु तु प्रकृतिप्रत्यययोर्विशेषणविशेष्यमात्रविषयत्वेन नैक-स्यापि विशिष्टविषयतेत्यर्थः ।

अपि च, विविक्तावगतयोर्विशेष्यप्रतिपत्तिपूर्विका[2] लिङ्गाद् विशिष्टावगतिः, पदात्तु विशिष्ट एव सम्बन्धग्रहणात् विशेषणप्रतिपत्तिपूर्विकेत्याह—**विशेषणविशे-ष्येति** । अनेनापि प्रकारेण विषयभेद एव प्रतिपादितः । अथ गोशब्दस्यात्मै-वार्थविशिष्टः कस्माद् विषयो न भवति ? तथोक्तम्—"देशस्याग्नियुक्तस्य धूम-स्यान्यैश्च कल्पिता" इति चोदयति—**अथ शब्दोऽर्थवत्त्वेनेत्यर्धेन** ॥

अत्रापि दूषणमाह—**प्रतिज्ञार्थेति** द्वाभ्यां श्लोकाभ्याम् । अर्थविशिष्टतया

1. यात्मनोः. मा.    2. पूर्वकात्. मा.

प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते ।
पक्षे धूमविशेषे हि सामान्यं हेतुरिष्यते ॥ ६३ ॥

शब्दत्वं गमकं नात्र गोशब्दत्वं निषेत्स्यते ।
व्यक्तिरेव विशेष्यातो हेतुश्चैका प्रसज्यते ॥ ६४ ॥

भवेद् व्यञ्जकभेदाच्चेन्न त्वेवं प्रत्ययोऽस्ति नः ।
कथं [1]चार्थविशिष्टत्वं न तावद् देशकालतः ॥ ६५ ॥

तत्प्रतीतिविशिष्टश्चेत् परं किमनुमीयते ।
न प्रत्यायकशक्तिश्च विशेषस्यानुमीयते ॥ ६६ ॥

विशेषाणां न शक्तिर्हि सैकदेशोऽग्निजातिवत् ।
सामान्यस्यैव शक्तत्वं पक्षो हेतुः स एव च ॥ ६७ ॥

गोशब्दव्यक्तेः पक्षत्वे गोशब्दव्यक्तेरेव लिङ्गत्वं स्यात् गो[2]शब्दत्वशब्दत्वयोर्वा ? न तावद्[3] गोशब्दव्यक्तेरेव लिङ्गत्वम् , प्रतिज्ञार्थैकदेशत्वेनासिद्धत्वात् । नापि गोशब्दत्वशब्दत्वयोः, असिद्धानैकान्तिकत्वाभ्याम् । धूमविशेषे तु धर्मित्वे सामान्यस्य लिङ्गत्वमुक्तमित्यभिप्रायः ॥

नापि गोशब्दव्यक्तेरेव तद्रूपाव्यवच्छेदेन धर्मित्वमनवच्छिन्नायास्तु लिङ्गत्वम्, अनवच्छिन्नायाः सम्बन्धग्रहणाभावेनाप्रतिपादकत्वादित्याह—**भवेद् व्यञ्जकभेदादित्यर्धेन** । अपि च, अर्थविशिष्टस्य वा शब्दस्य पक्षत्वं स्यात्, अर्थप्रतीतिविशिष्टस्य वा ? न तावदर्थस्य विशेषणत्वम् , तद्देशादावसद्भावात् ; नाप्यप्रतीतेः, लिङ्गव्यापाराभावात् । सम्भवे वा परं किमनुमेयमित्याह—**कथमिति** । अत एव न द्रुतादिभेदेनार्थप्रत्यायनशक्तिविशिष्टतया शब्दस्य[4] पक्षत्वम् [5]द्रुताद्यनुगतस्य लिङ्गत्वम् , [5]द्रुताद्यवच्छिन्नस्य सम्बन्धग्रहणाभावेनाशक्तत्वादित्याह—**न प्रत्यायकशक्तिरिति** । वैधर्म्यदृष्टान्तत्वेनोपादानम् यथा प्रतिदेशमग्निजातिरेका, नैवं विशेषाणां शक्तिरेकेत्यर्थः । [6]द्रुताद्यनुगतस्य तु रूपस्य सम्बन्धग्रहणसद्भावाच्छक्तत्वेन पक्षत्वे हेत्वन्तराभावेन तस्यैव हेतुत्वेऽस्त्येव प्रतिज्ञार्थैकदेशतेत्याह—**सामान्यस्येत्यर्धेन** ॥

1. चास्य विशि. चौ. मु.
2. गोत्वशब्दत्वयोः मा.
3. तावल्लिङ्गात् शब्द. मा.
4. शब्दव्यपेक्षत्वम्. मा.
5. भूताद्यनु. मा.
6. श्रुताद्य. मा.

तस्मादर्थविशिष्टस्य न शब्दस्यानुमेयता ।
कथं च पक्षधर्मत्वं शब्दस्येह निरूप्यते ॥ ६८ ॥

न क्रियाकर्तृसम्बन्धाद् ऋते सम्बन्धनं क्वचित् ।
राजा भर्ता मनुष्यस्य तेन राज्ञः स उच्यते ॥ ६९ ॥

वृक्षस्तिष्ठति शाखासु ता वा तत्रेति तस्य ताः ।
देशोऽग्निमति धूमस्य कर्तृत्वं भवनं प्रति ॥ ७० ॥

कार्यकारणभावादौ क्रिया सर्वत्र विद्यते ।
न चानवगताकारः सम्बन्धोऽस्तीति गम्यते ॥ ७१ ॥

न चास्त्यसति सम्बन्धे षष्ठीतत्पुरुषोऽपि वा ।
तस्मान्न पक्षधर्मोऽयमिति शक्या निरूपणा ॥ ७२ ॥

निवृत्तेऽन्यत्र सम्बन्धे येऽपि तद्विषयात्मना ।
वदेयुः पक्षधर्मत्वं शब्दस्यानुपलब्धिवत् ॥ ७३ ॥

व्यवहितमुपसंहरति—**तस्मादित्यर्धेन** । एवं प्रत्यक्षवद् विषयभेदेनानुमानाच्छब्दस्य भेदं प्रतिपाद्येदानीं प्रत्यक्षवदेव सामग्रीभेदेनापि भेदं प्रदर्शयितुमाह श्लोकत्रयेण—**कथं चेत्यादिना** । अर्थधर्मता हि शब्दस्य क्रियाकारकसंबन्धेन वा स्यात् स्वस्वामिभावादिशेषरूपेण वा ? तत्रोभयोरपि नित्यत्वेन क्रियाकारकलक्षणः सम्बन्धः तज्जन्यत्वाच्च तदभावे शेषलक्षणोऽपि नास्तीति । तदुक्तम्—"सम्बन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः" इति श्लोकत्रयस्यार्थः ।

उभयरूपव्यतिरेकेण सम्बन्धाभावेन वृत्तिवाक्ययोरुभयोरप्यभाव इत्याह—**न चेति** । उपसंहरति—**तस्मादित्यर्धेन** ॥

यैरप्युक्तम्—विनापि क्रियाकारकभावादिना सम्बन्धेन विषयविषयिभावेन शब्द[1]स्यार्थधर्मत्वं भविष्यति यथा घटाभावे साध्ये घटानुपलब्धेः पक्षधर्मत्वमिति, तद्दर्शयति—**निवृत्तेऽन्यत्रेति** ॥

1. स्यार्थस्वधर्म.

तैरप्येतन्निरूप्यं तु शब्दस्तु[1] विषयः कथम् ।
न तद्देशादिसद्भावो नाभिमुख्यादि तस्य च[2] ॥ ७४ ॥
तस्मा[3]दुत्थापयत्येष यतोऽर्थविषयां मतिम् ।
ततस्तद्विषयः शब्द इति धर्मत्वकल्पना ॥ ७५ ॥
तत्र वाचकतायां [4]वः सिद्धायां पक्षधर्मता ।
न प्रतीत्यङ्गतां गच्छेन्न चैवमनुमानता ॥ ७६ ॥
गमकत्वाच्च धर्मत्वं धर्मत्वाद् गमको यदि ।
स्यादन्योन्याश्रयत्वं [5]तु तस्मान्नैषापि कल्पना ॥ ७७ ॥
न चागृहीतसम्बन्धः[6] स्वरूपव्यतिरेकतः ।
शब्दं [7]जानाति येनात्र पक्षधर्ममतिर्भवेत् ॥ ७८ ॥

तत्राप्याह—**तैरप्येतदिति** । अर्थविषयता हि शब्दस्य समानदेशत्वेन वा स्यात् समानकालत्वेन वा ? न तावत् समानदेशत्वम् ; "मुखे हि शब्दमुपलभामहे भूमावर्थम्"—इति वक्ष्यामः । नापि समानकालत्वम्, युधिष्ठिराभावेऽपि युधिष्ठिरशब्दप्रयोगसद्भावात् । नित्यत्वविभुत्वाभ्यामप्युच्यमाने सर्वस्य सर्वत्र गमकत्वं स्यात् ; अर्थाभिमुख्यं तु शब्दस्य दूरोत्सारितमेवेत्यर्थः ॥

अर्थविषयप्रतीत्युत्पादकत्वेन शब्दस्य विषयविषयिभावेनार्थधर्मत्वप्रतिपत्तावनङ्गत्वेन नानुमानत्वमित्याह—**तस्मादिति** द्वयेन । पक्षधर्मत्वमुखेन यद्विज्ञानमुत्पद्यते तदनुमानमिति तार्किकस्थितिः । अर्थप्रतिपत्त्युत्तरकालं तु विषयत्वेन पक्षधर्मत्वं न प्रतीतावङ्गमिति श्लोकद्वयस्यार्थः ॥

तत्र बुध्युत्पादकत्वेन तद्विषयत्वात् पक्षधर्मत्वमिति इतरेतराश्रयत्वं प्राप्नोति; गमकत्वेन तद्विषयत्वात् पक्षधर्मत्वम्, पक्षधर्मत्वाच्च गमकत्वमिति दर्शयति—**गमकत्वाच्चेति** ॥

इतश्च, अन्वयव्यतिरेक[8]व्यतिरिक्तरूपं पक्षधर्मत्वं शब्दस्य नास्ति ; यदि स्यादगृहीतसम्बन्धोऽपि शब्दस्वरूपस्य व्यतिरेकमाधिक्यमर्थधर्मतां प्रतिपद्येत । शब्दस्वरूपमात्रमेव तु प्रतिपद्यते, नार्थधर्मत्वमित्याह—**न चागृहीतसम्बन्ध इति** ॥

1. शब्दस्तद्विषयः. चौ. मु.
2. वा. चौ. मु.
3. दुत्पादय. चौ. मु.
4. च. चौ. मु.
5. हि. चौ. मु.
6. सम्बन्धाः. चौ. मु.
7. जानन्ति. चौ. मु.
8. Omitted. व्यतिरेक. मा.

**न च स्वरूपमात्रेण धूमादेः पक्षधर्मता ।**
**न चापि धूमसम्बन्धमपेक्ष्यैषा प्रवर्तते[1] ॥ ७९ ॥**

**धूमवानयमित्येवमपूर्वस्यापि जायते ।**
**पक्षधर्ममतिस्तेन भिद्येतोत्तरलक्षणात् ॥ ८० ॥**

**न त्वत्र पूर्वसम्बन्धादधिका पक्षधर्मता ।**
**न चार्थप्रत्ययात् पूर्वमित्यनङ्गमियं भवेत् ॥ ८१ ॥**

**न च धर्मी गृहीतोऽत्र येन तद्धर्मता भवेत् ।**
**पर्वतादिर्यथा देशः प्राग्धर्मत्वावधारणात् ॥ ८२ ॥**

**यश्चात्र कल्प्यते धर्मी प्रमेयोऽस्य स एव नः ।**
**न चानव[2]गते तस्मिंस्तद्धर्मत्वावधारणा ॥ ८३ ॥**

साध्यधर्मिधर्मता च पक्षधर्मत्वम्, न स्वरूपमित्याह—**न च स्वरूपे**त्यर्धेन । अथान्वयव्यतिरेकव्यतिरिक्तस्यापि पक्षधर्मत्वस्य सम्बन्धग्रहणसापेक्षं ग्रहणमित्यगृहीतसम्बन्धो न प्रतिपद्यते, तदपि नास्तीत्याह—**न चापि धूमसम्बन्धमिति मतिरि**त्यन्तेन । पूर्वमगृहीतान्वयव्यतिरेकोऽपि धूमस्य पर्वतधर्मतां प्रतिपद्यत इत्यर्थः । उपसंहरति—**तेन भिद्येतोत्तरलक्षणादिति** । यस्मादन्वयव्यतिरेकं विनापि प्रमेयत्वादेः पर्वतधर्मत्वमस्ति, तस्मिन् सत्यपि नास्ति चाक्षुषत्वादेः, तद्ग्रहणनिरपेक्षं च ग्रहणम्; अतोऽन्वयव्यतिरेकलक्षणादुत्तराद् भिन्नमिदं रूपान्तरम्; न च शब्दे तदस्ति, सम्बन्धग्रहणनिरपेक्षैर्धूमवदर्थधर्मतयाप्रतीतेः ॥

अभ्युपेत्यवादमात्रं चैतत्; गृहीतसम्बन्धोऽप्यर्थधर्मतया नैव शब्दं प्रतिपद्यत इत्याह—**न त्वत्रे**त्यर्धेन । अर्थप्रतिपादकत्वेन तु तद्विषयत्वात् पक्षधर्मत्वमुत्तरकालीनत्वादनङ्गमिति पूर्वोक्तमुपसंहरति—**न चार्थप्रत्ययादि**त्यर्धेन ॥

एवं पक्षधर्मत्वाभावं प्रतिपाद्येदानीं ग्रहणाभावं दर्शयितुमाह श्लोकद्वयेन—**न च धर्मीति** । पर्वतवत् तृतीयस्य वस्तुनोऽत्राविद्यमानत्वादर्थ एवात्र धर्मी । न च तस्मिन्नप्रतिपन्ने तद्धर्मत्वावधारणं शक्यमिति श्लोकद्वयस्यार्थः ॥

1. प्रसज्यते. चौ. मु. 2. धृते. चौ. मु.

प्राक् स चेत् पक्षधर्मत्वाद् गृहीतः किं ततः परम् ।
पक्षधर्मादिभिर्ज्ञातैर्येन स्यादनुमानता ॥ ८४ ॥

अन्वयो न च शब्दस्य प्रमेयेण [1]निरूप्यते ।
व्यापारेण हि सर्वेषा[2]मन्वेतृत्वं प्रतीयते ॥ ८५ ॥

यत्र धूमोऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटः ।
न त्वेवं यत्र शब्दोऽस्ति तत्रार्थोऽस्तीति [3]निश्चयः ॥ ८६ ॥

न तावत् तत्र देशेऽसौ तत्काले वावगम्यते ।
भवेन्नित्यविभुत्वाच्चेत् सर्वार्थेषु च तत्समम् ॥ ८७ ॥

तेन सर्वत्र दृष्टत्वाद् व्यतिरेकस्य चागतेः ।
सर्वशब्दैरशेषार्थप्रतिपत्तिः प्रसज्यते ॥ ८८ ॥

अथैवं देशकालाभ्यामसत्यन्व[4]यदर्शने ।
वाचकप्रत्ययं कश्चिद् ब्रूयादर्थधियान्वितम् ॥ ८९ ॥

प्रतीयते चेत् पक्षधर्मत्वग्रहणकाल एव प्रतिपन्नत्वादर्थस्य किमपरमनुमेयमित्याह—**प्राक् स चेदिति ।**

एवं पक्षधर्मत्वं निराकृत्याधुनान्वयं निराकर्तुमाह सार्धेन श्लोकद्वयेन—**अन्वयो न चेत्यादिना ।** नियमलक्षणेन हि सम्बन्धेनाग्निर्धूममन्वेति; न च शब्दोऽर्थेन देशकालाभ्यां नियतः, तदभावेऽपि भावादित्यर्थः ।

अथ शब्दार्थयोर्नियतत्वेन सर्वगतत्वेन चान्वय उच्यते, तत्रापि गोशब्दस्य गोत्वाश्वत्वयोरपि दर्शनात् सर्वत्र गमकत्वं स्यादित्याह—**भवेन्नित्यविभुत्वाच्चेदिति** सार्धेन श्लोकेन ॥

कश्चिदाह—विनापि शब्दस्वरूपस्यार्थस्वरूपेणान्वयं शब्दज्ञानस्यार्थज्ञानेनान्वयो भविष्यति । यत्र यत्र गोशब्दज्ञानं तत्र तत्र गोज्ञानमिति दर्शयति—**अथैवं देशकालाभ्यामिति ॥**

1. निरस्यते. मा.
2. अन्वितत्वम्. चौ. मु.
3. निश्चितम्. मा.
4. यकल्पने. मा.

**नैवमप्यस्ति दृष्टो हि विनाप्यर्थधिया क्वचित् ।**
**वाचकप्रत्ययोऽस्माभिरव्युत्पन्नं नरं प्रति ॥ ९० ॥**

**द्वितीयादिप्रयोगेऽथ भवेदन्वयकल्पना ।**
**शतकृत्वः प्रयुक्तेऽपि नैव दृष्टार्थधीः क्वचित् ॥ ९१ ॥**

**ननु ये ज्ञातसम्बन्धास्तेषां दृष्टोऽन्वयः [1]सदा ।**
**यद्येवमन्वयात् पूर्वं सम्बन्धः कोऽपि कल्पितः ॥ ९२ ॥**

**नाङ्गमर्थधियामेषा भवेदन्वयकल्पना ।**
**अन्वयाधीनजन्मत्वमनुमाने[2] व्यवस्थितम् ॥ ९३ ॥**

**ज्ञाते प्रतीतिसामर्थ्ये तद्वशादेव जायते ।**
**पश्चादन्वय इत्येष कारणं कथमुच्यते ॥ ९४ ॥**

**तस्मात् तन्निरपेक्षैव शब्दशक्तिः प्रतीयते ।**
**न च [3]धूमेऽन्वयात् पूर्वं [4]शक्तत्वं गम्यते तथा ॥ ९५ ॥**

**व्यतिरेकोऽप्यविज्ञातादर्थाच्छाब्दधियो यदि ।**

तत्राप्याह—**नैवमपीति** श्लोकद्वयेन । अगृहीतसम्बन्धस्यार्थज्ञानव्यतिरेकेणापि शब्दज्ञानदर्शनात् कुतोऽन्वय इति श्लोकद्वयार्थः ॥

नन्ववगतसम्बन्धानां शब्दज्ञानस्यार्थज्ञानेनान्वयोऽस्त्येवेति चोदयति—**ननु य** इत्यर्धेन ।

तत्र दूषणमाह श्लोकत्रयेण सार्धेन—**यदीत्यादिना** । अन्वयात् [5]पूर्वं सम्बन्धाभ्युपगमे सति तस्यैवार्थप्रतिपत्तावङ्गत्वेनान्वयस्य तु तदधीनत्वेनानङ्गत्वान्नानुमानत्वं स्यात्; यतोऽन्वयबलेन यदुत्पद्यते विज्ञानं तदनुमानमिति तार्किकस्थितिः ॥

एवमन्वयं निराकृत्याधुना विपक्षव्यतिरेकं निराकर्तुमाह—**व्यतिरेक इति** । न तावद् गोत्वाभावे गोशब्दव्यतिरेको वक्तव्यः, तस्याश्वत्वाभावेऽपि भावेन

1. स्फुटः. चौ. मु.
2. मानस्य. च स्थितम्. चौ. मु.
3. धूमान्वयात्. चौ. मु.
4. शक्तत्वमवगम्यते. चौ. मु.
5. पूर्वसम्बन्धा. मा.

सोऽपि पश्चा[1]त्कृतत्वेन नार्थप्रत्यय[2]कारणम् ॥ ९६ ॥

सम्बन्धं यं तु वक्ष्यामस्तस्य निर्णयकारणम् ।
स्यादन्वयोऽतिरेकश्च न त्वर्थाधिगमस्य तौ ॥ ९७ ॥

तस्मादननुमानत्वं शाब्दे प्रत्यक्षवद् भवेत् ।
त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् ॥ ९८ ॥

सति चास्य प्रमाणत्वे भेदाभेदनिरूपणा ।
युक्ता न तु पदज्ञानात् पदार्थोऽत्र प्रतीयते ॥ ९९ ॥

पदं प्रयुज्यमानं हि चतुर्धार्थे प्रयुज्यते ।
प्रत्यक्षे च परोऽक्षे च ज्ञातेऽज्ञातेऽथ[3] वा पुरा ॥ १०० ॥

नियतं गमकत्वं न स्यात् । नाप्यर्थज्ञानाभावे शब्दज्ञानाभावः, अगृहीतसम्बन्धस्य तदभावेऽपि भावात्, गृहीतसम्बन्धस्य तु व्यतिरेकाभ्युपगमे पूर्ववत् तस्यैवाङ्गत्वेन व्यतिरेकस्यानङ्गत्वात् । तस्मान्न शब्दस्यार्थं प्रतिपादयतो धूमवदन्वव्यतिरेकावङ्गम् ॥

हन्त तर्हि क्वान्वयव्यतिरेकयोरुपयोग इत्याह—**सम्बन्धमिति** । वाचकशक्तिनियामकावन्वयव्यतिरेकावित्यर्थः । वक्ष्यति तु—

"अन्वयव्यतिरेकाभ्यां निष्कृष्टेऽर्थे नियम्यते" इति ।

अत्रैव प्रयोगद्वयमाह—**तस्मादिति** । शाब्दं धर्मि, अननुमानत्वं तस्येति साध्यो धर्मः, त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् इति हेतुद्वयम्, प्रत्यक्षवदिति दृष्टान्तः ॥

एव तावदभ्युपगम्य पदस्य पदार्थे प्रामाण्यं प्रमाणान्तरत्वमुक्तम् । अधुना तु प्रमाणत्वमेव नास्तीत्याह—**सति चेति** ॥

कस्मादित्याह—**पदं प्रयुज्यमानमिति** । पदं हि प्रयुज्यमानं प्रत्यक्षे वार्थे प्रयुज्यते परोऽक्षे वा । तत्र प्रत्यक्षे तु गृहीतसम्बन्धेऽ[4]गृहीतसम्बन्धे वा तथा परोऽक्षेऽपीति विकल्पचतुष्टयम् ॥

1. स्थितत्वेन. चौ. मु.
2. साधनम्. चौ. मु.
3. अज्ञातेऽपि वा. चौ. मु.
4. Omitted. अगृहीतसम्बन्धे. मा.

तत्र यत् पूर्वविज्ञाते प्रत्यक्षे च प्रयुज्यते ।
प्रमिते च [1]प्रवृत्तत्वादनुवादोऽधिकाद् विना ॥ १०१ ॥

अदृष्टपूर्वे त्वज्ञानं सम्बन्धप्रत्ययोऽपि वा ।
सम्बन्धो न च तस्यार्थो योऽर्थः स त्वन्यतो[2] गतः ॥ १०२ ॥

परोक्षेऽननुभूते च नाभिधेय[3]मतिर्भवेत् ।
परोक्षश्चानुभूतश्च यस्तत्र स्मृतिरिष्यते ॥ १०३ ॥

प्रमिते च प्रवृत्तत्वात् स्मृतेर्नास्ति प्रमाणता ।
परिच्छेदफलत्वाद्धि प्रामाण्यमु[4]पपद्यते ॥ १०४ ॥

ततः किमित्याह—**तत्र यदिति** । प्रत्यक्षेण प्रतीयमानेऽर्थे गृहीतसम्बन्धपदं प्रयुज्यमानं प्रतिपत्तिं जनयति ; अधिकाभावेन तु अनुवादकत्वादप्रमाणमित्यर्थः ॥

अगृहीतसम्बन्धे [5]तु प्रत्यक्षे प्रयुज्यमानं प्रतिपत्तिमेव न जनयतीत्याह—**अदृष्टपूर्व** इत्यर्धेन । 'अयं पनसः' इति वा प्रयुज्यमाने वाच्यवाचकलक्षणसम्बन्धावगतिः । न च स एव पनसशब्दवाच्यः, अयमिति प्रसिद्धार्थपदसामानाधिकरण्यावसेयत्वात् । अर्थोऽपि प्रमाणान्तरावसेयो न तदा तत एव प्रतीयते ; न हि महानसादौ सम्बन्धावगतिकाले धूमानुमेयोऽग्निरित्याह—**सम्बन्धो न च**इत्यर्धेन ॥

परोऽक्षेऽप्यगृहीतसम्बन्धे प्रतिपत्तिमेव न जनयतीत्याह—**परोऽक्ष** इत्यर्धेन । गृहीतसम्बन्धे तु स्मरणमित्याह—**परोक्षश्चे**त्यर्धेन ॥

ननु स्मरणेऽप्यनधिगतावगमोऽप्यस्त्येव ; अतीतविज्ञानकर्मतया हि तत्र घटः प्रतिभासते तद्विशिष्टतया वा गृहीत इति । अतीते त्वपरोऽक्षतया 'अयम्' इति ग्रहणात् । तत् सत्यपि स्मरणे किमिति न प्रमाणमित्याशङ्क्याह—**प्रमिते चेति** ॥

1. प्रयुक्तत्वात्. चौ. मु.
2. अन्यगोचरः. चौ. मु.
3. धेये मतिः. चौ. मु.
4. उपजायते. चौ. मु.
5. त्वप्रत्यक्षे. मा.

तादात्त्विकपरिच्छेदफलत्वेन प्रमाणता ।
प्रत्यभिज्ञानवत् कस्मात् स्मृतेरपि न कल्प्यते ॥ १०५ ॥

यावान् [1]पूर्वानुभूतोऽर्थस्तावानेवावधार्यते ।
स्मृत्या तदनुसारेण तदा सत्त्वेऽस्य नैव धीः ॥ १०६ ॥

पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते ।
[2]यदाधिक्यं भवेत् तत्र स पदस्य न गोचरः ॥ १०७ ॥

प्रमाणमनुमानं [3]च यद्यपि स्यात् पदा[4]न्मतिः ।
[5]वाक्यार्थस्यागमार्थत्वाद् दोषो नागमवादिनाम् ॥ १०८ ॥

ननु प्रमिते प्रत्यभिज्ञानं [6]तदार्थसत्तापरिच्छेदकत्वेन प्रमाणमिष्टम्, तद्वत् पदादावपि पदार्थज्ञानं भविष्यतीति चोदयति—**तादात्विकेति** ॥

तत्र परिहारमाह—**यावान् पूर्वानुभूत इति**। पूर्वानुभववशेन स्मरणमुत्पद्यमानं तदनुसारेणैवोत्पद्यते, तदा सत्तां प्रत्यभिज्ञानवन्न[7] बोधयतीति प्रक्रिया ॥

ननु पदं पदार्थमनुभूततया नैव प्रतिपादयति, तत्कथं स्मरणमित्याशङ्क्याह—**पदमभ्यधिकेत्यर्धेन**। आधिक्याभावेन स्मरणान्न विशिष्यते—इत्याह, न पुनः स्मरणमेवेत्यर्थः। यत् पुनः 'गामानय' इत्यादावाधिक्यं क्रियान्वयोऽवगम्यते वाक्यावगम्यत्वात् स पदस्य न गोचर इत्याह—**यदेत्यर्धेन** ॥

इदानीमभ्युपगम्य पदस्य पदार्थे प्रमाणत्वमनुमानत्वं च विवक्षायामिव शब्दस्य करणस्यैवात्मसिद्धौ न कदाचित् "चोदनालक्षणोऽर्थो धर्मः" इति प्रतिज्ञायाः क्षतिरित्याह—**प्रमाणमिति**। वाक्यं हि वाक्यार्थे प्रमाणत्वेन प्रतिज्ञातम्; तत्र चानुमानगन्धोऽपि नास्तीत्यर्थः ॥

कस्मादित्याह—**वाक्यार्थे हीति**। तदनेन प्रमाणस्वरूपमुक्तम्[8] वाक्याद् वाक्यर्थज्ञानं धर्मि, अनुमानाद् भिन्नमिति साध्यो धर्मः, सम्बन्धग्रहणनिरपेक्षेभ्यः पदार्थेभ्य उत्पद्यमानत्वादिति हेतुः, प्रत्यक्षवदिति दृष्टान्तः ॥

1. पूर्वपरिच्छिन्नः चौ. मु.
2. पदाधिक्यं भवेत्किञ्चित्. चौ. मु.
3. वा. चौ. मु.
4. मितिः. चौ. मु.
5. वाक्यार्थे तु. चौ. मु.
6. तदा.......क. मा.
7. ज्ञानवद्बोध. मा.
8. णरूपातीतम्. मा.

**वाक्यार्थे हि पदार्थेभ्यः सम्बन्धानुभवादृते ।**
**बुद्धिरुत्पद्यते तेन भिन्ना[1] साप्यक्षबुद्धिवत् ॥ १०९ ॥**

**वाक्याधिकरणे चास्य हेतोः सिद्धिर्भविष्यति ।**
**सर्वेषां तु [2]परोक्तानां वाक्यबुद्धावसिद्धता ॥ ११० ॥**

**वाक्येष्वदृष्टेष्वपि सार्थकेषु**
**[3]पदार्थविन्मात्रतया प्रतीतिम् ।**
**दृष्ट्वानुमानव्यतिरेकभीताः**
**क्लिष्टाः पदाभेदविचारणायाम् ॥ १११ ॥**

**इति शाब्दं प्रकरणं समाप्तम्**

—: ❋ :—

पदार्थानामपि वाक्यार्थे सम्बन्धग्रहणसापेक्षत्वादसिद्धोऽयं हेतुरित्याशङ्क्याह—**वाक्याधिकरण** इत्यर्धेन । न पदार्थानां वाक्यार्थे सम्बन्धग्रहणापेक्षा, तदभावेऽपीन्द्रियवद् बोधकत्वात्; न चातिप्रसङ्गः, अपेक्षासंनिधियोग्यतानां नियामकत्वात् । सर्वं चैतत् तद्भूताधिकरणे विस्तरेण स्थापयिष्यते इत्यर्थः । अभेदप्रतिपादकानां च "सम्बन्धपूर्विका[4] चात्र प्रतिपत्तिरितो यतः" इत्येवमादीनां वाक्यबुद्धावसिद्धतेत्याह—**सर्वेषामि**त्यर्धेन ॥

यदि वाक्यं वाक्यार्थे प्रमाणम् पदं तु पदार्थेऽनुवादकत्वात् स्मृतिवदप्रमाणम्, किमर्थं तर्हि परैस्तत्राभेदप्रतिपादनपूर्वकं वाक्ये तदतिदिष्टम्? सापि सङ्गतिविज्ञानव्यवच्छिन्नेत्यर्थ इष्यते; तेन नान्योऽनुमानत इत्याशङ्क्याह—**वाक्येष्विति** । प्रथममदृष्टादप्यभिनवकविरचिताद् वाक्यात् पदार्थविदो वाक्यार्थज्ञानं दृष्ट्वा स्पष्टानुमानव्यतिरेकभीताः क्लिष्टाः पदाभेदविचारणायामिति ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
शाब्दं समाप्तम्

---

1. भिन्नासावक्ष. चौ. मु.
2. परोक्षाणाम्. मा.
3. पदार्थचिन्मात्र मा.
4. सम्बन्धग्रहणपू. मा.

# उपमानप्रकरणम् ।

**कीदृग् गवय इत्येवं पृष्टो नागरिकैर्यदा**[1] ।
**ब्रवीत्यारण्यको वाक्यं यथा गौर्गवयस्तथा ॥ १ ॥**

**एतस्मिन्नुपमानत्वं प्रसिद्धं शाबरे पुनः ।**
**तस्यागमाबहिर्भावादन्यथैवोपवर्णितम् ॥ २ ॥**

**पुरुषप्रत्ययेनैव** [2]**तस्यार्थः संप्रतीयते ।**
**तदीयवचनत्वेन तस्मादागम एव सः ॥ ३ ॥**

**सदृशादुपजायेत या मतिः सदृशान्तरे ।**
**ध्यानादिस्मृतितुल्यत्वात् सा प्रमाणं कथं भवेत् ॥ ४ ॥**

## अथोपमानम्

"उपमानमपि सादृश्यमसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति" इति भाष्यम् । तस्यायमर्थः—उपमानमपि न व्यभिचरति, सादृश्यमसंनिकृष्टेऽर्थे बुद्धिमुत्पादयति—इत्येवंलक्षणकत्वात् इति । तत्र लोके 'गौरिव गवयः' इति वाक्यमुपमानत्वेन-प्रसिद्धम् । नैयायिकानां तु—प्रत्यक्षदृष्टगोत्वानाम् 'गौरिव गवयः' इति श्रुतातिदेशवाक्यानां वने गवयदर्शनात् 'असौ गवयः' इति गोसादृश्यविशिष्टगवयग्राहकं यद् विज्ञानं तदुपमानत्वेन प्रसिद्धम् । तत्रोभयविप्रतिपत्तिनिरासार्थमुदाहरणान्तरमाह भाष्यकारः—"यथा गवयदर्शनं गोस्मरणस्य" इति । प्रत्यक्षेण प्रतिपन्नायां गवि स्मरणायां च वने गवयदर्शनात् 'एतत्सदृशी गौः' इति यद् विज्ञानं तदुपमानमिति । तत्र वार्तिककारः सर्वप्रकारमुपमानं दूषयितुमाह—**कीदृगित्या**दिना **तत्र यद्यपि गां स्मृत्वा तज्ज्ञानमुपजायते** इत्येवमन्तेन । तत्र यल्लौकिकमुपमानं तस्यागमत्वेन प्रमाणान्तरत्वाभावादिति **कीदृग् गवय** इत्यादिश्लोकत्रयस्यार्थः ॥

यदपि भाष्यकारेणोदाहृतम् तस्यापि स्मृतित्वेन प्रामाण्याभावः इत्याह—**सदृशादिति** । यदपि सदृशदर्शनादनुभूते गवि परोऽक्षे 'उपलभ्यमानगवयस-

1. यदि· चौ. मु.     2. तत्रार्थः. चौ. मु.

देशकालादिभेदेन यथान्यत्र विशिष्यते ।
प्रमेयं नैवमस्त्यत्र नगरस्थानुसारतः ॥ ५ ॥

श्रुतातिदेशवाक्यानामरण्ये गवये मतिः ।
या सोपमानं केषांचिद् गोसादृश्येन[1] रञ्जिता ॥ ६ ॥

प्रत्यक्षो गवयस्तावत् सादृश्ये[2] स्मृतिरत्र तु ।
ननु सादृश्ययुक्तेऽर्थे न स्मृतिर्नेन्द्रियाद् गतिः ॥ ७ ॥

पूर्ववाक्यार्थविज्ञानान्नाधिक्यं गवये यदि ।

दृशो गौः' इति ज्ञानमुपमानमुदाहृतम्, तदपि ध्यानादिवदनुभूते सदृशदर्शना[3]-भ्युत्थसंस्कारजन्यत्वेन स्मृतिवदप्रमाणमित्यर्थः ॥

न चानुभूते संस्कारजन्यत्वेऽपि प्रत्यभिज्ञानवत् प्रामाण्यमित्याह— **देशकालेति** । अनुभूतेऽपि प्रत्यभिज्ञा देशान्तरादिषु पूर्वानुभूतातिरेकेण सत्तां गृह्णाति । तदुक्तम्—

"इदानीन्तनमस्तित्वं न हि पूर्वधिया गतम्" इति ।

उपमानं तु नगरस्थानुभवानुसारेणोत्पद्यमानमतुल्यं प्रत्यभिज्ञयेत्यर्थः ॥

इदानीं नैयायिकोक्तमुपमानं दूषयितुमाह—**श्रुतेति** । प्रत्यक्षदृष्टगोत्वानाम् 'गौरिव गवयः' इति श्रुतातिदेशवाक्यानां च वने गवयदर्शनात् 'अयं गवयः' इति गोसादृश्यविशिष्टगवयग्राहकं यद् विज्ञानं तदुपमानम् । तदुक्तम्— "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्" इति ॥

तदपि दूषयितुमाह—**प्रत्यक्ष** इत्यर्धेन । गवयस्वरूपालम्बनमुपगम्येत[4], तद्गतगोसादृश्यालम्बनं वा ? तत्र पूर्वस्मिन् पक्षे इन्द्रियसंनिकर्षोत्पन्नत्वेन प्रत्यक्षत्वम्, इतरत्राप्यतिदेशवाक्यादेव गवयगतत्वेन गोसादृश्यस्यावगतत्वात् स्मृतित्वमित्यर्थः । ननु सादृश्यविशिष्टगवयग्राहकत्वेन स्मृतिप्रत्यक्षाभ्यामुत्तीर्णमेतदिति चोदयति—**ननु सादृश्ययुक्त** इत्यर्धेन ॥

अत्रापि दूषणमाह—**पूर्ववाक्यार्थविज्ञानादिति** । गवयत्वोपलक्षितव्यक्ति-

1. सादृश्यानुरञ्जिता. चौ. मु.
2. सादृश्यस्मृति.
3. दर्शनादिवक्तृसं. मा.
4. मुपगम्यैततद्गत. मा.

**स्मरणादविशिष्टत्वात् सङ्गतेर्न प्रमाणता ॥ ८ ॥**
**अथ त्वधिकृता काचित् प्रत्यक्षादेव[1] सा भवेत् ।**
**यावद्धीन्द्रियसम्बन्धस्तत्प्रत्यक्षमिति स्थितम् ॥ ९ ॥**

**स्मर्यमाणस्य चांशस्य विवेकेनाप्रमाणता ।**
**श्रुतातिदेशवाक्यत्वं न चातीवोपयुज्यते ॥ १० ॥**

**येऽपि ह्यश्रुततद्वाक्यास्तेषामपि भवत्ययम् ।**
**प्रत्यक्षदृष्टगोत्वानां वने गवयदर्शिनाम् ॥ ११ ॥**

**अथ संज्ञानुसन्धानं तेषां नास्तीति वर्ण्यते ।**
**न नाम वस्तु तत्तावत् सर्वथा तैः प्रतीयते ॥ १२ ॥**

मात्रं वा गोसादृश्यविशिष्टमालम्बनम्, संनिहिता [2]वा व्यक्तिः 'अयं गवयः' इति? तत्र पूर्वस्मिन् पक्षेऽतिदेशवाक्यादेव गवयत्वोपलक्षितस्य व्यक्तिमात्रस्य गोसादृश्यविशिष्टतयावगतत्वात् स्मृतित्वम् ॥

इतरत्रापि संनिहितस्य गवयत्वोपलक्षितस्य गोसादृश्यविशिष्टत[3]याक्षावसेयत्वेन प्रत्यक्षत्वमित्याह—**अथ त्वधिकृतेति** ॥

कामम् 'अयं स गवयः' इत्यत्रापि, 'स गवयः' इत्येतावन्मात्रं स्मृतित्वेनाप्रमाणं स्यात्, न तु 'अयम्' इति यत्रापरोऽक्षतया गोसादृश्यविशिष्टोऽर्थोऽवभासत इत्याह—**स्मर्यमाणस्येत्यर्धेन** । इदानीम् 'श्रुतातिदेशवाक्यानाम्' इत्युपमानलक्षणावयवं दूषयितुमाह—**श्रुतातिदेशवाक्यत्वमिति** सार्धेन श्लोकेन । अश्रुतातिदेशवाक्यानामपि प्रत्यक्षदृष्टगोत्वानां वने गवयदर्शनोत्तरकालम् 'गोसदृशोऽयम्' इति ज्ञानमुत्पद्यत एवेत्यर्थः ॥

[4]अथाश्रुतातिदेशवाक्यानाम् 'अयं स गवयः' इति संज्ञानुसन्धानेन ज्ञानं नोत्पद्यते, मा भूदेवम्; तथापि सादृश्यविशिष्टतया संनिहितम् प्रतिपद्यत एवेत्याह—**अथ संज्ञानुसन्धानमिति** ॥

1. प्रत्यक्षादिवशाद भवेत्. चौ. मु.
2. वाक्यव्यक्तिः. मा.
3. तयार्थावसेय. मा.
4. तथा. मा.

**न च शब्दार्थसम्बन्धः प्रमेयोऽत्र तदेष्यते ।**
**[1]सादृश्यावगते वाच्ये वाक्यादवगतो ह्यसौ ॥ १३ ॥**

**न चास्य प्रत्यभिज्ञानं पुनरुत्पद्यते वने ।**
**शक्त्योरतीन्द्रियत्वेन स्मृतिरेव हि सेष्यते ॥ १४ ॥**

**शब्दानुविद्धबोधोऽपि प्रत्यक्षमुपपादितम् ।**

ननु 'अयं स गवयः' इत्युपमानस्य संज्ञासंज्ञिलक्षणः सम्बन्धः प्रमेयत्वेनेष्टस्तैः । तदुक्तम्—"संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरुपमानार्थः" इति । अश्रुतातिदेशवाक्यश्च गोसादृश्यविशिष्टतया संनिहितं प्रतिपद्यते गोसदृशोऽयं किमपि, न तु तं गवयशब्दवाच्यतयेत्याशङ्क्याह—**न च शब्दार्थसम्बन्ध इति ।** अयमाशयः— न तावद् गोसादृश्यविशिष्टायां गवयव्यक्तौ संज्ञासंज्ञिसम्बन्धज्ञानमानन्त्यव्यभिचाराभ्याम् । अथ गोसादृश्यविशिष्टे गवयत्वेन यः संज्ञासंज्ञिसम्बन्धः स उपमानस्य विषय इति, तत्र गोसादृश्यविशिष्टव्यक्तिमात्रस्य गवयशब्दवाच्यतयातिदेशवाक्यादेव प्रतिपन्नत्वात् तद्विषयत्वाभ्युपगमे स्मृतित्वप्रसङ्गः । संनिहितस्य तु गवयत्वोपलक्षितस्य सादृश्यविशिष्टतयालम्बनत्वेऽभ्युपगम्यमाने प्रत्यक्षत्वमित्युक्तम्—

"अथ त्वधिकता काचित् प्रत्यक्षादेव सा भवेत् ।" इत्यत्र ।

अथ त्वतिदेशवाक्यादवगत एव गोसदृशो गवयशब्दवाच्यतया[2] येन स गवयमेव पुनरप्यक्षेण प्रत्यभिजानातीति न स्मृतित्वम्, तत्राप्याह - **न चास्येति ।** तत्रैतदेव तावद् वक्तव्यम्—एवमपि प्रत्यक्षत्वेनोपमानस्य प्रमाणान्तरत्वमप[3]गतमेव । एतदपि नास्ति, वाच्यवाचकशक्त्योरर्थापत्तिप्रमेयत्वे[4]नाक्षावसेयत्वाभावात् ॥

ननु गोसदृशदर्शने सत्यतिदेशवाक्यावगतगवयशब्दस्मरणोत्तरकालम् 'अयं स गवयः' इति ज्ञानमुत्पद्यमानं कथमक्षजं स्यादित्याशङ्क्याह—**शब्दानुविद्धबोधोऽपीत्यर्धेन ।** "तेनेन्द्रियार्थसम्बन्धे विद्यमाने स्मरन्नपि" इत्यत्रोक्तमिह परामृष्टम् । तस्मादुपमानस्य प्रमाणान्तरतामिच्छता स्मृतिप्रत्यक्षाभ्यामविषयीकृतः सादृश्यविशिष्टोऽर्थः प्रमेयत्वेन वक्तव्यः । न च तदस्ति, गवयत्वोपलक्षितस्य

1. सादृश्यावधृते वाक्ये. चौ, मु.
2. तया......सगवय. मा.
3. अवगत. मा.
4. अर्थावसेय. मा.

[1]तस्मात् सादृश्ययुक्तोऽर्थः प्रमेयोऽपूर्व उच्यताम् ॥ १५ ॥

व्यवसायात्मकत्वं तु प्रत्यक्षस्य यदिष्यते ।
जात्यादिवत्तदानेन सादृश्यं किं न मीयते ॥ १६ ॥

प्रत्यक्षाभासमेतत् तु निर्विकल्पकवादिनाम् ।
प्रमेयवस्त्वभावाच्च नाभिप्रेता प्रमाणता ॥ १७ ॥

सादृश्यस्य च वस्तुत्वं न शक्यमपबाधितुम् ।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य तत् ॥ १८ ॥

संनिहितस्य गोसादृश्यविशिष्टस्य प्रत्यक्षत्वात् व्यक्तिमात्रस्य च गोसादृश्यविशिष्टस्यातिदेशवाक्यादेव प्रतिपन्नत्वेन [2]स्मृतत्वादित्याह—**तस्मादित्यर्धेन** ॥

यस्य तु 'अयं गवयः' इत्युपमानवादिनः "इन्द्रियार्थसंनिकर्षोत्पन्नमव्यपदेश्यमव्यभिचारि व्यवसायात्मकम्"—इति प्रत्यक्षलक्षणम्, तस्य व्यवसायात्मकत्वेन सविकल्पकत्वात् 'अयं स गवयः' इति सादृश्यग्राहकस्य 'गौरयम्' इत्यादिवज्जातिग्राहकस्य सुतरां प्रत्यक्षत्वमित्याह—**व्यवसायात्मकत्वमिति** ॥

अपरे त्वाहुः—गृह्णीम एतत् 'उपमानाख्यं प्रमाणान्तरमेतन्न भवति; इति, प्रत्यक्षमेतदिति न मृष्यामह इत्याह—**प्रत्यक्षाभासमिति** ॥

सविकल्पकत्वेनावस्तुसादृश्यविषयत्वेन च प्रत्यक्षाभासः [3]प्रमाणं नेदमिति बौद्धाः । तत्र प्रामाण्यसिद्धये सादृश्यस्य वस्तुत्वं तावदापादयति—**सादृश्यस्ये** त्यादिना **वस्तुत्वे सति चास्यैवमित्येव**मन्तेन । भूयसामवयवसामान्यानां कर्तृत्वादीनां जात्यन्तरोपलक्षितेऽवयविनि यो योगः तत् सादृश्यम् । तच्च सदृशप्रत्ययोत्पादकत्वेन '[4]गवयसदृशेन यजेत' इत्येवमादिचोदनार्थनिष्पादकत्वेन वार्थक्रियाकारित्वात् वस्त्वेवेत्यर्थः । अवयवग्रहणं च धर्मप्रदर्शनार्थम् । जात्यन्तरग्रहणं चोपलक्षणं व्यक्त्यन्तरप्रदर्शनार्थम् । तेनेदमपि सिद्धं भवति—अग्निरिव माणवकः, यज्ञदत्तसदृशश्च देवदत्तः इति । यत्रापि स्व्यवयवानां पद्मावयवैः सादृश्यम् यथा 'पद्मद-

1. तस्यासादृश्य. मा.
2. स्मृतित्वात्. मा.
3. प्रमाणं चेदम्. मा.
4. गवयेनेदृशेन. मा.

सदृशावयवत्वं तु यत्र पद्मदलाक्षिवत् ।
तत्स्वावयवसामान्यभूम्ना तेषां भविष्यति ॥ १९ ॥

एवं जातिगुणद्रव्यक्रियाशक्तिस्वधर्मतः ।
एकैकद्वित्रिसामस्त्यभे[1]दादस्य च चित्रता ॥ २० ॥

न धर्मा एव सादृश्यं भूयस्ता वा तदाश्रया ।
भूयस्त्ववद्धि जात्यादि सदृशत्वेन गम्यते ॥ २१ ॥

यमयोः कथमेतच्चेद् दृष्टत्वात् किमिहोच्यते ।
क्वचिद्धि भूयसामेतत् क्वचिदल्पीयसामपि ॥ २२ ॥

लाक्षी' इति, तत्रापि स्वावयवसामान्यापेक्षमेव सादृश्यमिति न लक्षणस्याव्यापकत्वमित्याह—**सदृशेति** ॥

इदानीं वस्तुत्वसिध्यर्थमेव विचित्रतां सादृश्यस्य दर्शयति—**एवमिति** ॥

भूयोऽवयवसामान्ययोगः—इत्यत्र योगग्रहणस्य व्यावर्त्यं दर्शयितुमाह—**न धर्मा इति** ॥

अत्रेदं चोद्यम्—**यमयोः कथमेतच्चेदिति** । भूयोऽवयवसामान्ययोगलक्षणे सादृश्ये यमयोः कथमेतत् सादृश्यमिति । तत्र चोदयन्ति—यमयोरपि भूयोऽवयवसामान्ययोगे सति किमिदमुच्यते 'यमयोः कथमेतच्चेत्' इति ? अथ जात्यन्तरत्वमत्र नास्ति, तदपि वर्णितं तत्रैव—जात्यन्तरग्रहणमुपलक्षणं व्यक्त्यन्तरप्रदर्शनार्थम् इति । अयमाशयः—अवयवसामान्ययोगः सादृश्यमित्युक्तम् । नित्यं च सामान्यमभ्युपगतम् । तत्र यमयोर्विनाशेनावयवानां विनाशादाश्रयाभावेन सामान्यस्याभावात् सादृश्यस्याभावप्रसङ्गः । तत्र परिहारमाह—**दृष्टत्वात् किमिहोच्यत इति** । यमयोरप्यवयवसामान्ययोगस्य दृष्टत्वेन सद्भावादित्यर्थः । क्वचिद्धि भूयसामवयवसामान्ययोगः क्वचिद् द्वयोरेव ; नैतावतावयवसामान्ययोगस्यावस्तुत्वमित्याह—**क्वचिद्धीति** ।

1. भेदादेतस्य. चौ. मु.

**नैतावता विशेषेण वस्तुत्वं तस्य हीयते ।**
**सामान्यान्यपि चैतानि नाशीन्याश्रयनाशतः ॥ २३ ॥**

**अनन्ताश्रययोगाद्धि न नाशोऽन्यत्र विद्यते ।**
**तेन सर्वं न सामान्यं नित्यत्वेन प्रकल्प्यते ॥ २४ ॥**

**सामान्यस्य न वा नाशः क्वचिदभ्युपगम्यते ।**
**सर्वस्य ह्याश्रयः कश्चिदस्ति देशान्तरादिषु ॥ २५ ॥**

**तेषां भूयस्त्ववाचेदं सादृश्यमतिरिच्यते ।**
**तानि व्यस्तानि सन्त्येव [1]सादृश्येऽपि क्वचित् क्वचित् ॥ २६ ॥**

**सादृशावयवत्त्वं तु यत्र नाम प्रतीयते ।**
**तदप्यवयवानां स्यात् सामान्यावयवान्तरैः ॥ २७ ॥**

**एवं तावद्यतो नास्ति पराभेदप्रकल्पना ।**

यत् पुनर्यमयोर्विनाशादवयवानामभावादनित्यत्वं सामान्यस्योक्तम्, तत्राप्याह—**सामान्यान्यपीति ।** आश्रयाभावेन यदि क्वचिज्जातेरनित्यत्वं भवति, भवतु; को दोषः ? गोत्वादेस्त्वनन्ताश्रयसद्भावेन नित्यत्वम्, न जातित्वादित्यर्थः । उपसंहरति—**तेनेत्यर्धेन ॥**

अथवा यमयोरपि यदवयवसामान्यम्, तन्नित्यमेव; क्वचित् तेषामवयवानामव्यस्तानां पिण्डान्तरेऽपि भावेनाश्रयसद्भावात्; भूयस्त्वाभावेन तु सादृश्यं मा भूत्, न त्ववयवानामभाव इत्याह श्लोकद्वयेन—**सामान्यस्येत्यादिना ॥**

"सादृशावयत्वं तु यत्र नाम प्रतीयते ।
तदप्यवयवानां स्यात् सामान्यावयवान्तरैः ॥" इत्येतत्

"सदृशावयत्वं तु यत्र पद्मदलाक्षिवत्" इत्यनेन पुनरुक्तत्वादुपेक्षणीयमिति ॥

एवं तावत् सावयवे वस्तुनि सर्वत्र भूयोवयवसामान्ययोगः सादृश्यमित्याह—**एवं तावदित्यर्धेन ।** भेदः [2]स्वावयवः, यदपेक्षया सावयवत्वमुच्यते; तत्प्रतिषेधोऽभेदः

1. प्रत्यक्षेऽपि. मा.
2. स्वावयवापेक्षया सावयवत्वमुच्यते तत्प्रतिषेधभेदो निरवयवत्वं यद्यतो यत्र. मा.

**ततः परं तु सामान्यं भवेत् सादृश्यवर्जितम् ॥ २८ ॥**

**प्रधानानां तु सामान्यं यत्रैकं संप्रतीयते ।**
**स एवेति भवेत् तत्र तद्भेदे सदृशत्वधीः ॥ २९ ॥**

**चित्रादौ यत्र सादृश्य सामान्यं तत्र किं भवेत् ।**
**तत्रापि पृथिवीवर्णविशेषादि समानता ॥ ३० ॥**

**रूपगन्धरसानां च कस्यचित् तुल्यता क्वचित् ।**
**नावश्यं सर्वसामान्यात् सादृश्यमुपजायते ॥ ३१ ॥**

**पृथिव्यादिषु चैतेषां सतामेव स्वभावतः ।**
**परिणामादभिव्यक्तिर्यथादृष्टव्यवधार्यते ॥ ३२ ॥**

**न हि शक्त्यात्मना किञ्चिदसज्जन्म प्रपद्यते ।**
**धर्माणां न च नानात्वमस्ति चावान्तरस्थितिः ॥ ३३ ॥**

निरवयवत्वम्, तत् यतः यत्र नास्तीत्यर्थः । निरवयवेषु तु परमाणुषु सादृश्यमेव नास्तीत्याह—**ततः परमित्यर्धेन** ॥

अधुना जात्यन्तरग्रहणस्य व्यवच्छेद्यं दर्शयति—**प्रधानानामिति** ॥

ननु यदि भूयोऽवयवसामान्ययोग. सादृश्यम्, कथं देवदत्तस्य चैत्रेण लैप्येन च सादृश्यम्? न हि तत्र देवदत्तावयवानां सद्भावोऽस्तीति चोदयति—**चित्राद्दावित्यर्धेन** । तत्र परिहारमाह सार्धेन श्लोकेन—**तत्रापीत्यादिना** । अवयवसामान्ययोगेनो[1]पलक्षितत्वादित्यर्थः ॥

इदानी सांख्यमतेन लैप्येऽपि देवदत्तावयवानां सद्भावमाह—**पृथिव्यादिष्वित्यादिना** सार्द्धेन श्लोकेन । लैप्येऽपि देवदत्तावयवानां सद्भावोऽस्त्येव; विशिष्टेन तु परिणामेनाभिव्यज्यन्ते । सर्वमेव च घटादि कुलालादिव्यापारेण सदेवाभिव्यज्यते विविधकार्यनियमदर्शनादित्यर्थः ॥

यद्यपि च कथंचिदवयवानामेकत्वम्, तथापि भिन्नाभिन्ने वस्तुनि भेदोऽप्यस्त्येवेत्युपपन्नं भूयोऽवयवसामान्यलक्षणसादृश्यस्य वस्तुत्वेन प्रमेयत्वमित्याह—**धर्माणामित्यर्धेन** । बहूनामप्यवयवानामेकावयविनैकत्वम्, एकस्याप्यवयविनोऽनेकरूपतया नानात्वमित्यर्थः ॥

1. योगस्योप. मा.

वस्तुत्वे सति चास्यैवं सम्बन्धस्य च चक्षुषा ।
द्वयोरेकत्र वा दृष्टेः प्रत्यक्षत्वं न वार्यते ॥ ३४ ॥

सामान्यवच्च सादृश्यमेकैकत्र समाप्यते ।
प्रतियोगिन्यदृष्टेऽपि तस्मात् तदुपलभ्यते ॥ ३५ ॥

तत्र यद्यपि गां स्मृत्वा तज्ज्ञानमुपजायते ।
संनिधेर्गवयस्थत्वाद् भवेदिन्द्रियगोचरः ॥ ३६ ॥

तस्मात् यत् स्मर्यते तत् स्यात् सादृश्येन विशेषितम् ।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥ ३७ ॥

प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि तु स्मृते ।

एवं तावत् सादृश्यस्य वस्तुत्वप्रतिपादनेन—'प्रमेयवस्त्वभावाच्च नाभिप्रेता प्रमाणता'—इति यदुक्तं तन्निरस्तम् । अधुना तु "प्रत्यक्षाभासमेतत्"—इति यदुक्तं तन्निराकर्तुमाह—**वस्तुत्व इति** । एवमुक्तेन प्रकारेण वस्तुत्वे सति सादृश्यस्य न प्रत्यक्षत्वमपैतीत्यर्थः ॥

ननु व्यासज्यवर्तमानस्य कथमेकत्र ग्रहणमित्याशङ्क्याह—**सामान्यवच्चेति** । जातिवदेकत्रैव[1] सादृश्यस्य समाप्तत्वेन द्वयोरेकत्र वा ग्रहणमित्यर्थः ॥

ननु निर्विकल्पकेन वने गवयं दृष्ट्वा प्रतिपन्नगोस्मरणोत्तरकालम् 'अयं स गवयः' इति ज्ञानमुत्पद्यमानं कथमक्षजं स्यादित्याशङ्क्याह—**तत्र यद्यपीति** । स्मरणोत्तरकालमप्यपरोक्षतया विस्फारिताक्षस्य 'अयं स गवयः' इत्यत्र संनिहितगवयव्यक्तिगतत्वेन सादृश्यं प्रकाशमानं जातिवत् प्रत्यक्षमित्यर्थः ॥

तस्माल्लौकिकस्यागमत्वं भाष्यकारोदाहृतस्य स्मृतित्वं नैयायिकोक्तस्य च प्रत्यक्षत्वमिति नोपमानं प्रमाणान्तरमिति लक्ष्याभावेनालक्ष्यमेतदिति प्राप्ते भाष्यकारोदाहृतमेव समर्थयितुमाह वार्तिककारः—**तस्मादिति** । गवयदर्शनात् 'एतत्सदृशो गौः' इति यद् विज्ञानं तदेवोपमानम् । तस्य च प्रमेयं गवयसादृश्यविशिष्टतया स्मर्यमाणः परोऽक्षो गौः स्मर्यमाणगोगत वा गवयसादृश्यमित्यर्थः ॥

यत् पुनरिदमुक्तम्—"ध्यानादिस्मृतितुल्यत्वात्" इति, तत्राप्याह—**प्रत्यक्षेणेति** । स्मर्यमाणस्य गवयस्य सादृश्यविशिष्टतया प्रमेयत्वम् । न च तथा गौः प्रमा-

1. एकत्रैकसादृश्यसमाप्त. मा.

**विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता ॥ ३८ ॥**

**प्रत्यक्षेऽपि यथा देशे स्मर्यमाणे च पावके ।**
**विशिष्टस्यान्यतोऽसिद्धेरनुमानप्रमाणता ॥ ३९ ॥**

**यत्र त्वसदृशादेव कल्पयित्वोपजायते ।**
**सादृश्यप्रत्ययस्तत्र तदाभासत्वकल्पना ॥ ४० ॥**

**बाधकज्ञानतश्चैषां सादृश्याभासता भवेत् ।**
**यथा पलालकूटस्य सादृश्यं कुञ्जरादिना ॥ ४१ ॥**

**समीपस्थो विजानाति सादृश्यं नेति तत्र हि ।**
**न बाध्यते समीपादौ यत्तु सादृश्यमेव तत् ॥ ४२ ॥**

णान्तरेणावगतः, वनस्थेन प्रत्यक्षेण गवयगतगोसादृश्यमात्रावगमात्; नगरस्थेन च गवयसादृश्यविविक्तगोपदार्थमात्रावगमात्, न ह्यनवगतगवयः पुरुषो गवयसादृश्यविशिष्टतया गोपदार्थं प्रतिपद्यते । ननु खुरत्ववर्णत्वादियोगः सादृश्यम् । तच्चावगतमेव नगरस्थेन प्रत्यक्षेणैव, [1]अवयवग्रहणपुरस्सरत्वादवयविग्रहणस्य; अग्रहणे वा गवयग्रहणेऽपि सदृशप्रतिपत्तिर्न स्यात् । उच्यते—अनवगतगवयस्य सदृशप्रतिभासाभावेन सादृश्यमवगतमिति चित्रम् । खुरत्वादयोऽपि सादृश्यान्तरोपलक्षितावयविगतत्वेन प्रतीताः पुनर्जात्यन्तरोपलक्षितावयविनि प्रतीयमानाः [2]सादृश्यरूपतां प्रतिपद्यन्ते, नान्यथा । "भूयोवयवसामान्ययोगः" इत्युक्तम् । न चात्र गौर्गवयसादृश्यविशिष्टो गृहीततया प्रतिभासते । तेनात्र स्मृतिगन्धोऽपि नास्ति ॥

अत्रैव दृष्टान्तमाह—**प्रत्यक्षेपीति** ॥

तस्मादेवंलक्षणकत्वादुपमानमपि न व्यभिचरति । यत्र तु व्यभिचारः, तदुपमानमेव न भवतीत्याह—**यत्र त्विति** ॥

तत्र तदाभासत्वे किं प्रमाणमित्याह—**बाधकज्ञानत** इत्यर्धेन । किमुदाहरणमित्याह—**यथेत्यर्धेन** ॥

बाधकप्रत्ययं दर्शयति—**समीपस्थ इति** ॥

1. अवगतगवयग्रह. मा. 2. सामान्यरूपताम्. मा.

**न चैतस्यानुमानत्वं पक्षधर्माद्यसम्भवात् ।**
**प्राक्प्रमेयस्य सादृश्यं न धर्मत्वेन गृह्यते ॥ ४३ ॥**

**गवये गृह्यमाणं च न गवामनुमापकम् ।**
**प्रतिज्ञार्थैकदेशत्वाद् गोगतस्य न लिङ्गता ॥ ४४ ॥**

**गवयश्चाप्यसम्बन्धो न गोलिङ्गत्वमृच्छति ।**
**सादृश्यं न च सर्वेण पूर्वदृष्टं तदन्वयि ॥ ४५ ॥**

**एकस्मिन्नपि दृष्टेऽर्थे द्वितीयं पश्यतो वने ।**
**सादृश्येन सहैवास्मिंस्तदैवोत्पद्यते मतिः ॥ ४६ ॥**

यदर्थान्तरप्रतीतेः प्रमाणत्वेनानुमात्वम्, ततश्च "अनुमानं ज्ञातसम्बन्ध" इत्यनेनैव गतत्वादुपमानपृथग्लक्षणं न कर्तव्यमित्याशङ्क्याह श्लोकत्रयेण—**न चैतस्येत्यादिना** । तदनेन प्रमाणं [1]निरूपितम् 'गवयसदृशो गौः' इति विज्ञानं धर्मि, अनुमानाद् भिन्नमिति साध्यो धर्मः, पक्षधर्माद्यनङ्गत्वादिति हेतुः ; प्रत्यक्षवदिति दृष्टान्तः । गवयसादृश्यवत्त्वेऽप्यनुमेये[2] सादृश्यस्य वा लिङ्गत्वं स्यात् गवयस्य वा ? सादृश्यस्यापि [3]गोगतत्वेन वा प्रतीयमानस्य गवयगतत्वेन वा ? न तावद् गोगतस्य, उपमानज्ञानोत्पत्तेः प्रथममप्रतीतेः, तत्प्रमेयत्वात् तस्य; [4]यदि तु पक्षधर्मता तत्प्रमेया स्यात्, प्रतिज्ञार्थैकदेशत्वं स्यात् । [5]नापि गोगतस्यानुमेयत्वं गवयगतस्य प्रतीयमानत्वेन लिङ्गत्वं वक्तव्यम्, पक्षधर्मत्वाभावात् । अत एव न गवयस्यापि [6]लिङ्गत्वम् । अन्वयोऽपि गवयगतस्य सादृश्यस्य गोगतेन नास्तीति श्लोकत्रयस्यार्थः ॥

ननु गवयगतसादृश्यप्रतियोगित्वस्य गोगवयौ वा सदृशद्वयं वा किञ्चित् युगपत् पश्यतो गवयसादृश्यस्यान्वयो द्रष्टुं शक्यत इत्याशङ्क्य तथादर्शनाभावेऽपि गोमात्रं दृष्टवतो वने गवयदर्शनानन्तरं तत्सादृश्यविशिष्टगोप्रतीतेर्नैवमित्याह—**एकस्मिन्निति** ॥

1. प्रमाणादारूपतितम्. मा.
2. नुमेयेन ग्राह्यस्य वा. मा.
3. स्यापि लिङ्गत्वेन वा मा.
4. न हि न पक्ष. मा.
5. सापि. मा.
6. लिङ्गत्वमिति श्लोकत्रयस्यार्थः । अन्वयोऽपि गवयगतस्य सादृश्यस्य गोपदार्थेन नास्तीत्याह—एकस्मिन्निति. मा.

[1]शृङ्गित्वादेरथोच्येत सम्बन्धाल्लिङ्गता गवि ।
[2]नैतेषां गवयज्ञानव्यापारं प्रत्युपक्षयात् ॥ ४७ ॥

यदि तेभ्यः प्रतीतिः स्यान्निस्सादृश्यैव सा भवेत् ।
न गौः शृङ्गादि[3]सदृशः सदृशो गवयेन तु ॥ ४८ ॥

सदृशप्रत्ययं दृष्ट्वा शृङ्गादिप्रत्ययात् परम् ।
गवयप्रत्ययादेव गोज्ञानमुपजायते ॥ ४९ ॥

सदृशावयवत्वे तु तेषामेवोपमा भवेत् ।
न च शृङ्गादयो यत्र तत्र गौरनुमीयते ॥ ५० ॥

इत्थं चानुमिमानस्य [4]भ्रान्तिज्ञानं प्रसज्यते ।
नगरस्थं तु गोज्ञानं स्मरणं[5] नातिवर्तते ॥ ५१ ॥

भिन्नानुमानादुपमेयमुक्ता
सौर्यादिवाक्यैरसहापि [6]दृष्टम् ।

नापि गवयसम्बन्धिनः शृङ्गित्वादेर्लिङ्गत्वमित्याह सार्धेन श्लोकत्रयेण—**शृङ्गित्वादेरित्यादिना** । रूपस्य हि कारणस्य लिङ्गत्वम्, न च गवयसम्बन्धिनः शृङ्गित्वादेरुपमानोत्पत्तौ कारणत्वम्, शृङ्गाद्यवयवप्रत्ययस्य गवयावयविप्रत्यय [7]एवोपयोगात्; सदृशदर्शनं चोपमानस्य कारणम्, न च शृङ्गसदृशो गौः—इति श्लोकत्रयस्यार्थः ॥

तत्र शृङ्गादेर्लिङ्गत्वं नास्तीत्याह—**न च शृङ्गादय इति** । शृङ्गित्वादयो हि वनस्थगवयसमवेताः, सादृश्यविशिष्टश्च गौर्नगर इति अनित्यः शब्दः, काकस्य कार्ष्ण्यात्—इति तुल्यतेत्यर्थः ॥

अथ गवय एव गोविशिष्टोऽनुमेयः, [8]तत्राप्यप्रत्यक्षविरोधेन पक्षेऽभावोऽस्तीत्याह—**इत्थं चेति** ॥

इदानीं भेदप्रतिपादनस्य स्वतन्त्रोपयोगितामाह—**भिन्नेति** ॥

1. शृङ्गत्वादेः. मा.
2. न तेषाम्. चौ. मु.
3. सदृशी सदृशी. चौ. मु.
4. भ्रान्तज्ञानम्. चौ. मु.
5. स्मरणान्नाति. चौ. मु.
6. दृष्टाम्. मा.
7. इव. मा.
8. तत्रापि प्रत्यक्षविरोधेन पक्षाभावे सती. मा.

सादृश्यतोऽन्नयादियुतं कथं नु
प्रत्याययेदित्युपयुज्यते नः ॥ ५२ ॥

प्रतिनिधिरपि चैवं व्रीहिसादृश्ययोगाद्
भवति तदपचारे यत्र नीवारजातौ ।
तदपि फलमभीष्टं लक्षणस्योपमायाः
[1]प्रतिकृतिरपि गौणैर्बो[2]ध्यते यत्र चान्यैः ॥ ५३ ॥

यदि सुसदृशमन्यल्लभ्यते तत्र मिथ्या
भवति विसदृशत्वान्मन्दसादृश्ययुक्तम् ।
मतिरपि च तथैव द्रागिवोत्पद्यतेऽस्मिन्
इतरविषयबोधे सत्यपीत्थं च बाधः ॥ ५४ ॥

इत्युपमानं समाप्तम् ॥

—:*:—

अधुना प्रामाण्यप्रतिपादनस्य स्वतन्त्रोपयोगितामाह — **प्रतिनिधिरिति** त्रिगाथा। अत्रैवोदाहरणमाह—**प्रतिकृतिरपीति** पादेन। शमीपिष्टः क्रियताम्-इति यत्र लौकिकायमानप्रयोजनता, तदपेक्षणीयम् ॥

इदानीमापेक्षिकत्वं तस्या दर्शयति—**यदि सुसदृशमन्यदित्यर्धेन**। भवतु [3]सदृशदर्शनात् सुसदृशस्योपादानम्, तथापि मन्दसादृश्येऽपि सदृशवदवगतिरुत्पद्यत एव; किमिति सा न प्रमाणमित्याह—**मतिरपीति**। विशिष्टाभावे सुसदृशा च तावत् पूर्वमुपमितिरुत्पद्यते, तदुपादानादेव सिद्धेऽर्थे इतरत्र पश्चादुत्पन्नापि कृतकेत्यतो बाध्यत इत्यर्थः ॥

इति श्रीभट्टोम्बेकविरचितायां तात्पर्यटीकायां
उपमानं समाप्तम्

---

1. प्रकृतिरपि. मा, चौ. मु.
2. बाध्यते. मा, चौ. मु.
3. दर्शनात्सदृशवदेव गतिरुत्पद्यते. मा.

# अथार्थापत्तिः

—: * :—

प्रमाणषट्कविज्ञातो यत्रार्थो नान्यथा [1]भवन् ।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥ १ ॥

दृष्टः पञ्चभिरप्यस्माद् भेदेनोक्ता श्रुतोद्भवा ।
प्रमाणग्राहिणीत्वेन यस्मात् पूर्वविलक्षणा ॥ २ ॥

## अथार्थापत्तिप्रकरणम्

"अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थकल्पना" इति भाष्यम् । तत्र अर्थापत्तिरिति लक्ष्यनिर्देशः; दृष्टः श्रुतो वेत्यादि लक्षणम् । तत्र लक्षणग्रन्थे श्रुतग्रहणमनुपपन्नमिव दृश्यते । तथा हि—दृशिरुपलब्धिगोचरे वा स्यात् चक्षुर्दृष्टे वार्थे वर्तेत? तत्रोपलब्धिवचनत्वे "श्रुतो वा" इति पुनरुपादानमनर्थकम्; चक्षुर्दृष्टिवचनत्वे चार्थापत्तिद्वयोपादानेनानुमानादिपूर्विका नोपात्ता स्यात्; तत्राव्यापकत्वं नाम लक्षणस्य; तथा "नोपपद्यते" इति; न हि प्रमाणावगतस्य दाहादेरनुपपत्तिर्युक्ता; यद्यवगतो नोपपद्यते, किमित्यर्थान्तरं कल्पयति? न ह्यङ्गुल्यग्राधिकरणादौ हस्तियूथशतावगतिरर्थान्तरं कल्पयति; अथ प्रमाणावगतो नोपपद्यते, किमिदं कल्पयति—इत्याशङ्क्याह—**प्रमाणषट्कविज्ञात इति** । यथाविषयं प्रमाणषट्कप्रमितोऽर्थोऽन्यथानुपपत्त्या यदर्थान्तरं कल्पयति, सार्थापत्तिः । उपलब्धिवचनोऽयं दृशिरिति यावत् । अवगतोऽन्यथानुपपद्यमानश्च यथैवावगतस्तथैवोपपद्यमानो यदर्थान्तरं कल्पयतीत्यर्थः ॥

"श्रुतो वा" इति तह्यनर्थकमित्याह—**दृष्ट इति** । श्रुतार्थापत्तेर्भेदेनोपादानं प्रमाणविषयत्वेनार्थविषयाया दृष्टार्थापत्तेर्वैलक्षण्यप्रदर्शनार्थम् । वक्ष्यति च "सविकल्पकविज्ञानैः" इति ॥

1. भवेत्. चौ. मु.

तत्र प्रत्यक्षतो [1]ज्ञाताद् दाहाद् दहनशक्तता ।
वह्नेरनुमितात् सूर्ये यानात् तच्छक्तियोग्यता ॥ ३ ॥

श्रुतार्थापत्तिरत्रैव परस्तादभिधास्यते ।
गवयोपमितायाः[2] गोस्तज्ज्ञानग्राह्यता मता ॥ ४ ॥

"प्रमाणषट्कविज्ञातोऽर्थः" इत्युक्तम्, तत्र प्रत्यक्षपूर्विकां तावदुदाहरति **तत्रेति वह्नेरित्यन्तेन** ।

**इत आरभ्य "गृहाभावस्तु यः शुद्धः" ( श्लो. २१ ) इति प्रतीकारम्भपर्यन्तं समूलतात्पर्यटीकायामस्यां ग्रन्थपातः; अतः काशिकया पूर्यते ।**

अनुमानपूर्विकामर्थापत्तिमुदाहरति—**अनुमितादिति** । देशान्तरप्राप्त्या सूर्ये यानमनुमीयते; ततोऽर्थापत्त्या तच्छक्तिः । अत्रापि प्रमाणान्तरविरोध एवानुपपत्तिः । गमनं हि प्राणिनां विशिष्टपादादिसाधनकमवगतम् । अयं तु अनुमिततद्विधर्मसाधनोऽपि तथैव गन्तुमर्हतीति वितर्कः । सोऽयं शक्तिकल्पनया निवार्यते—अस्ति नाम सा काचिदस्य शक्तिः, यया गन्त्रन्तरविधर्मसाधनोऽपि पातनिपातयोः सममुपसर्पतीति ॥

श्रुतार्थापत्तिस्तु भिन्नविषया दृष्टार्थापत्तिभ्यो विविच्य पश्चादेवाभिधास्यत इत्याह—**श्रुतेत्यर्धेन** ॥

उपमानपूर्विकां दर्शयति—**गवयेत्यर्धेन** । 'गवयसदृशो गौः' इत्युपमिते सदृशज्ञानग्राह्यशक्तिर्गोरर्थापत्त्या कल्प्यते । ईदृशी च तत्रानुपपत्तिर्भवति—कथं गवि सुसदृशज्ञानं जायते? यदि हि जनयेत् प्रथमदर्शन एव किं न जनयेत्? सन्ति हि तदापि गवि गवयावयवसामान्यानि । तदेवं जातमपि गव्युपमानमनुपपत्त्यावसीदति; तच्छक्तिकल्पनयोपपद्यते । अस्ति नाम कोऽपि गोरतिशयः, यः प्रतियोगिदर्शनप्रतिलब्धाभिव्यक्तिर्गवयसदृशीं धियमुपजनयति; यच्चेदं समाने पशुत्वे गौरेव गवयसदृश इत्युपमीयते, तदपि तस्य शक्तिविशेषाभ्युपगमाद् विना नोपपद्यत इति ।

1. ज्ञानात्. चौ. मु.  2. उपमिता या गौः चौ. मु, मा.

**अभिधानप्रसिध्यर्थमर्थापत्त्यावबोधितात् ।**
**शब्दे बोधकसामर्थ्यात् तन्नित्यत्वप्रकल्पनम् ॥ ५ ॥**

**अभिधा नान्यथा सिध्येदिति वाचकशक्तताम् ।**
**अर्थापत्त्यावगम्यैवं तदनन्यगतेः पुनः ॥ ६ ॥**

**अर्थापत्त्यन्तरेणात्र शब्दनित्यत्वनिश्चयः ।**
**दर्शनस्य परार्थत्वादित्यस्मिन्नभिधास्यते ॥ ७ ॥**

**प्रमाणाभावनिर्णीतचैत्राभावविशेषितात् ।**
**गेहाच्चैत्रबहिर्भावसिद्धिर्या त्विह दर्शिता ॥ ८ ॥**

**तामभावोत्थितामन्यामर्थापत्तिमुदाहरत् ।**

अर्थापत्तिपूर्विकामुदाहरति—**अभिधानेति** । शब्दानन्तरमर्थप्रतिपत्तिं दृष्ट्वा तस्य तत्कारणत्वमवसीयते । न च व्यापारमन्तरेण कारणत्वमुपपद्यत इति शब्दसमवायी व्यापारोऽनुमीयते । स चाभिधेति प्रसिद्धम् । तत्सिध्यर्थं च शब्दे वाचकसामर्थ्यमर्थापत्त्या प्रमीयते । अभिधायकत्वे ह्यनुमिते भवत्यनुपपत्तिः—नायमभिधायकः प्रागिव । सम्बन्धज्ञानात् गृहीतसम्बन्धः प्रत्यायक इति चेन्न, तदभावात् । न ह्यस्यार्थेन संयोगादीनामन्यतमः सम्बन्धो दृश्यते ; तदस्यामनुपपत्तौ शक्तिकल्पनोपपादिका भवति । अस्ति खल्वनयोर्वाच्यवाचकशक्तिरूपः सम्बन्धः, यद्ग्रहणान्नार्थोऽवगम्यत इति । एवं च शक्तिकल्पनोत्तरकालं शक्तेरपि नित्यत्वमन्तरेणानुपपत्तेरर्थापत्त्यन्तरेण शब्दस्य नित्यता प्रतीयत इति ॥

एतदेव विवृणोति—**अभिधेति** सार्धेन श्लोकेन । एतच्च स्वयं जैमिनिनैव शब्दाधिकरणेऽभिधास्यत इत्याह—**दर्शनस्येत्यर्धेन** ॥

अभावपूर्विका तु भाष्यकारेण स्वयमुदाहृतेति न पृथगुदाह्रियत इत्याह—**प्रमाणाभावेति** सार्धेन । अस्यार्थः—"यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना" इति भाष्ये या चैत्रस्य बहिर्भावसिद्धिर्दर्शिता, तामेव प्रकृताभ्योऽन्यामभावपूर्विकामर्थापत्तिं भाष्यकार उदाहृतवानिति ।

**पक्षदोषेषु चान्यासामुदाहरणविस्तरः ॥ ९ ॥**

**अभावावगताच्चैत्राद् बहिर्भावस्य सूचनम् ।**
**पक्षधर्माद्यनङ्गत्वात् भिन्नैषाप्यनुमानतः ॥ १० ॥**

**बहिर्देशविशिष्टेऽर्थे देशे वा तद्विशेषिते ।**
**प्रमेयो यो गृहाभावः पक्षधर्मस्त्वसौ कथम् ॥ ११ ॥**

**तदभावविशिष्टं तु गृहं धर्मो न कस्यचित् ।**
**गृहाभावविशिष्टस्तु तदासौ न प्रतीयते ॥ १२ ॥**

प्रपञ्चस्त्वर्थापत्त्युदाहरणानां पक्षदोषाभिधानावसरे "श्रोत्रादिनास्तितायाम्" इत्यादिनानुमाने वर्णित इत्याह—**पक्षदोषेष्वित्यर्धेन** ॥

इदानीमर्थापत्तेरनुमानाद् भेदे वदितव्ये भाष्योक्तत्वादभावपूर्विकाया एव भेदं तावदाह—**अभावेति** । येयमभावप्रमाणेन 'गृहे नास्ति' इत्यनेन रूपेणावगताच्चैत्राद् बहिर्भावसूचनात्मिकार्थापत्तिः, सापि पक्षधर्मादीनामनङ्गत्वात् शाब्दवदुपमानवदनुमानाद् भिद्यत इति ॥

पक्षधर्माद्यनङ्गत्वमेव दर्शयति—**बहिर्देशेति** । इह हि बहिर्देशविशिष्टश्चैत्रः पक्षः तद्विशिष्टो वा बहिर्देशः । न चोभयस्यापि गृहगतोऽभावो धर्म इति पक्षधर्मत्वं कथम् ? न कथञ्चिदित्यर्थः । नाभावमात्रमविशेषितं चैत्रस्य बहिर्भावे लिङ्गम्; न चास्य गृहं विशेषणं भवति; परतन्त्रं हि विशेषणम् यथा नीलिमोत्पलद्रव्यस्य । एवमिहापि द्रव्यभूतं गृहमेव तत्परतन्त्रेणाभावेन विशेष्यते इति युक्तम् । व्यापकत्वाच्चाभावो गृहस्य विशेषणम्; शक्यते हि तेन चैत्राधिष्ठितैकदेशव्यतिरिक्तजगद्व्यापिना गृहं व्याप्तुम्; अल्पं तु गृहं न महाविषयमभावं व्याप्तुं शक्नोति । अतो यथा व्याप्यस्य धूमस्याग्निविशिष्टत्वमवगम्यते, अनेनापि प्रकारेण गृहमेवाभावविशिष्टं बहिर्भावस्य लिङ्गमित्यापतति । तच्च तदभावविशिष्टं गृहं न कथञ्चित् चैत्रबहिर्देशाभ्यां संबध्यते । अभावस्य तावत् कथञ्चिदस्ति चैत्रान्वयः; चैत्राभावः—इति हि संप्रतीयते । गृहं तु न कथञ्चिच्चैत्रसम्बद्धमवगम्यत इत्यपक्षधर्म इत्याह—**तदभावेत्यर्धेन** । इतश्च गृहाभावो न पक्षधर्म इत्याह—**गृहाभावेत्यर्धेन** । गृहीते हि पक्षे तद्धर्मप्रत्ययो भवति; न च चैत्रबहिर्देशौ गृहेऽसत्तयावगम्येते इति ॥

**गम्यते तु गृहं तत्र न च चैत्रः प्रतीयते ।**
**न चात्रादर्शनं हेतुर्यथाभावेऽभिधास्यते ॥ १३ ॥**

**तेन वेश्मन्यदृष्टत्वादिति हेतुर्न कल्प्यते ।**
**अदर्शनादभावे च प्रमेयस्यावधारिते ॥ १४ ॥**

**बहिर्भावमतिर्नासौ तेनादर्शनहेतुका ।**
**चैत्राभावस्य हेतुत्वं गेहेऽभावश्च संस्थितः ॥ १५ ॥**

**पूर्वं न चागृहीतस्य धर्मिणः स्यात् प्रमेयता ।**
**न चात्र बाह्यदेशो वा चैत्रो वा गृह्यते पुरा ॥ १६ ॥**

**नदीपूरेण या वृष्टिरुपरिष्टात् प्रतीयते ।**
**देशे कथमदृष्टे तु पक्षधर्मत्वसम्भवः ॥ १७ ॥**

गृहमेव तु तत्र प्रत्यक्षावगतमिति तद्धर्मप्रतीतिरेवाभावे भवतीत्याह—**गम्यते तु गृहमिति** । न च तत्र गृह एव चैत्रोऽनुमीयते, अभावविरोधादित्यभिप्रायेणाह—**तत्र न च चैत्रः प्रतीयत इति** । अदर्शनं हि चैत्रसम्बद्धमवगतमिति तल्लिङ्गं भविष्यतीत्यत आह—**न चेत्यर्धेन** । न च दर्शनाभावो बहिर्भावे लिङ्गम् ; एतदभावेऽभिधास्यत इति ॥

अतो गृहेऽदर्शनमहेतुरित्याह—**तेनेत्यर्धेन** । किञ्च गृहाभावावधारणोपक्षीणेऽदर्शने बहिर्भावमतिर्भवति ; कथमसौ तद्धेतुका भविष्यतीत्यभिप्रायेणाह—**अदर्शनादिति** मतिरन्तेन । अभिप्रायं विवृणोति—**नासौ तेनादर्शनहेतुकेति** । अदर्शनावधारितस्य चैत्राभावस्यैवान्यत्रानुपयुक्तस्य हेतुत्वं संभवति, तच्चापक्षधर्मतया निराकृतमित्याह—**चैत्राभावस्येत्यर्धेन** ॥

एवं तावत् पक्षधर्मता निराकृता ; पक्षोऽप्यत्रानुमानात् पूर्वं नोपलक्ष्यत इत्याह—**पूर्वमिति** ॥

अत्र चोदयति—**नदीपूरेणेति** । अत्र ह्यप्रतिपन्न एवोपरिदेशे पक्षेऽतद्धर्मः पूरो लिङ्गम्, तद्वदिहापि भविष्यतीति भावः ॥

**वृष्टिमत्परदेशत्वं नदीपूरवतोऽत्र तु ।**
**देशस्य प्रतिपद्यन्ते यद्वार्थापत्तिरेव सा ॥ १८ ॥**

**जीवतश्च गृहाभावः पक्षधर्मोऽत्र कल्प्यते ।**
**तत्संवित्तिर्बहिर्भावं न चाबुध्वोपजायते ॥ १९ ॥**

**अग्निमत्तानपेक्षा तु धूमवत्ता प्रतीयते ।**
**न तद्ग्रहणवेलायामग्न्यधीनं हि किञ्चन ॥ २० ॥**

**[1]गृहाभावस्तु यः शुद्धो विद्यमानत्ववर्जितः ।**
**स मृतेष्वपि दृष्टत्वाद् बहिर्वृत्तेर्न साधकः ॥ २१ ॥**

**विद्यमानत्वसंसृष्टगृहाभावधियानया ।**
**गेहादुत्कालितश्चैत्रो विद्यते बहिरेव हि ॥ २२ ॥**

परिहरति—**वृष्टिमदिति प्रतिपद्यन्ते**ऽन्तेन । एवं चानुमीयमाने लोकविरोधः; न ह्येवं लौकिका बुध्यन्ते; अत आह—**यद्वार्थापत्तिरेव सेति** । दृष्टस्य पूरस्य कारणाभावानुपपत्त्योपरिष्टाद् वृष्टिः कल्प्यते । इदमपि चान्वारूढेनोक्तम् । परमार्थेन तु व्याप्तिबलोत्थमिदमनुमानमेव; न चापक्षधर्मता दोषः, उपरिदेशस्य पूरसम्बद्धदेशसम्बन्धात्; असम्बद्धो हि न हेतुर्भविष्यतीति ॥

इतश्च गृहाभावो बहिर्भावे न लिङ्गमित्याह —**जीवतश्चेति** । निश्चितरूपं हि लिङ्गमनुमाने गमकम्; इह च यो जीवतो गृहाभावः, स प्रमाणान्तरविरोधान्निश्चेतुमेव न शक्यते । एवं हि तत्र भवति वितर्कः—जीवता हि क्वचिद् भवितव्यम्, कथमिह न स्यात्? एवं चानध्यवसायादप्रतिष्ठितो गृहाभावोऽसिद्धत्वादलिङ्गम् । सिद्धिस्तु नानन्तर्भाव्य बहिर्भावमस्य भवति; तदन्तर्भावे च परस्तात् प्रमेयाभाव इति भावः ॥

अनुमाने त्वनपेक्षितप्रमेयमेव धूमादिलिङ्गस्य स्वरूपं सिद्धमवगम्यत इत्याह—**अग्निमत्तेति** । यदि त्विहापि हेतोरनपेक्षत्वसिध्यर्थं गृहाभावमात्रमविशेषितं जीवनेन हेतुरिष्यते, ततोऽनैकान्तिक इत्याह—**गृहाभावस्तु यः शुद्ध इति** ॥

विद्यमानत्व[2]संसृष्टं बहिर्विद्यमानतामवगमयतीत्याह—**विद्यमानत्वसंसृष्टेति** ॥

1. गेहाभावस्तु. चौ. मु.    2. संसृष्टमविद्यमान. मा.

**गेहाभावत्वमात्रं तु यत् स्वतन्त्रं प्रतीयते ।**
**न तावता बहिर्भावश्चैत्रस्यैवावधार्यते ॥ २३ ॥**

**सिद्धे सद्भावविज्ञाने गेहाभावधियात्र तु ।**
**गेहादुत्कालिता सत्ता बहिरेवावतिष्ठते ॥ २४ ॥**

**तेनात्र निरपेक्षस्य व्यभिचारो मृतादिना ।**
**यस्य त्वव्यभिचारित्वं न ततोऽन्यत् प्रतीयते ॥ २५ ॥**

**तस्मात् प्रत्यक्षतो गेहे चैत्राभावे ह्यभावतः ।**
**ज्ञाते यत् सत्त्वविज्ञानं तदेवेदं बहिःस्थितम् ॥ २६ ॥**

**पक्षधर्मात्मलाभाय बहिर्भावः प्रवेशितः ।**
**तद्विशिष्टोऽनुमेयः स्यात् पक्षधर्मान्वयादिभिः ॥ २७ ॥**

**पक्षधर्मादिविज्ञानं बहिःसंबोधतो यदि ।**
**तैश्च तद्बोधतोऽवश्यमन्योन्याश्रयता भवेत् ॥ २८ ॥**

जीवनवदपरमपि गृहाभावस्य चैत्रत्वं चैत्रबहिर्भावे प्रमेये विशेषणमिति दर्शयति—**गेहाभावत्वमात्रन्त्विति** श्लोकद्वयेन ॥

जीवत एव चैत्रस्यैवाभावश्चैत्रस्य बहिर्भावं साधयति, अन्यतरविशेषणापाये तु नेत्याह—**तेनात्र निरपेक्षस्येत्यर्धेन** । न चैत्रमात्रेण विशेषितं गमयति, मृतेऽपि भावात् । [1]नापि जीवनमात्रेण, चैत्रबहिर्भावाभावेऽपि देवदत्तबहिर्भावे सद्भावादित्यर्थः । उभयविशेषितस्य तु गृहाभावस्य बहिर्भावसाधकत्वम्, तस्य चोपपत्तिर्बहिर्भावावगतिपूर्विकेति न तदवगतौ तस्य लिङ्गत्वमित्याह—**यस्य त्वव्यभिचारित्वमित्यर्धेन** ॥

उपसंहरति—**तस्मादिति द्वयेन** । तस्माद् गृहाभावप्रतिपत्तेर्बहिर्भावावगतिपूर्वकत्वान्न तत्प्रतिपत्तौ तस्य लिङ्गत्वम्; अनपेक्षा तु धूमवत्ता प्रतीयते, सम्बन्धग्रहणाभावेऽपि तत्प्रतीतेरिति वैलक्षण्यम् ॥

एवं सत्यपि लिङ्गत्वाभ्युपगमे इतरेतराश्रयत्वं प्राप्नोतीत्याह—**पक्षधर्मादिविज्ञानमिति** ॥

1. Omitted. नापि. मा.

**न चैकदेशे नास्तित्वाद् व्याप्तिर्हेतोर्भविष्यति ॥ ३५ ॥**

**नन्वत्राविद्यमानत्वं गम्यतेऽनुपलब्धितः ।**
**सा चाप्रयत्नसाध्यत्वादेकस्थस्यैव सिध्यति ॥ ३६ ॥**

**नैतयानुपलब्ध्यात्र[1] वस्त्वभावः प्रतीयते ।**
**तद्देशागमनात् सा हि दूरस्थेष्वस्ति सत्स्वपि ॥ ३७ ॥**

**गत्वा गत्वा तु तान् देशान् यद्यर्थो नोपलभ्यते ।**
**ततोऽन्यकारणाभावादसन्नित्यवगम्यते ॥ ३८ ॥**

**ननु चाग्न्याद्यभावेऽपि धूमादिव्यतिरेकिणाम् ।**
**तद्देशागमनात् स्पष्टो व्यतिरेको न सिध्यति ॥ ३९ ॥**

चैत्रस्याभावमभावेन प्रतिपद्यते अभावेनाविनाभावग्रहणात्; किमुच्यतेऽर्थापत्तिपूर्वकत्वमित्याशङ्क्याह—**न चैकदेशे नास्तित्वादि**त्यर्धेन । चैत्राधिष्ठितव्यतिरिक्तानन्तदेशगतो ह्यभावो भावस्य सम्बन्धिनः संनिकृष्टव्यतिरिक्तगत एव; तस्य च प्रमाणान्तरेणावगमाभावादर्थापत्तिपूर्वत्वम् । पञ्चमी च तृतीयार्थे ॥

नन्वनुपलब्धिर[2]भावलिङ्गम्; तेनानुमानेनैकदेशव्यवस्थितोऽपि सर्वत्र चैत्राधिष्ठितव्यतिरिक्ते देशेऽभावं प्रतिपद्यत एव । किमुच्यतेऽर्थापत्तिपूर्वत्वमत्रेति इति चोदयति—**नन्वत्राविद्यमानत्वमिति** ॥

तत्र परिहारमाह—**नैतयानुपलब्ध्या** हीत्यादिना श्लोकद्वयेन । दृश्यानुपलब्धिरभावे लिङ्गम्; न त्वनुपलब्धिमात्रम्, अनैकान्तिकत्वात् ॥

यदि हि दृश्यानुपलब्धिरभावे लिङ्गम्, न तर्हि सर्वत्रानग्नौ धूमाभावः प्रतीयते, दृश्यादर्शनस्याभावादिति सन्दिग्धो व्यतिरेक इति चोदयति—**ननु चाग्न्याद्यभावेऽपीति** । येऽपि धूमादयोऽग्न्यभावे व्यतिरेकिण इष्यन्ते तेषामपि व्यतिरेको न सिध्यति, अनन्तानग्निदेशागमनादिति ॥

1. लब्ध्या हि. मा. 2. लिङ्गकेनानुमानेन. मा.

यस्य वस्त्वन्तराभावः प्रमेयस्तस्य दुष्यति ।
मम त्वदृष्टमात्रेण गमकः सहचारिणः ॥ ४० ॥

नन्वेवमितरत्रापि सम्बन्धोऽनुपलब्धितः ।
चैत्राभावस्य भावेन दृष्टत्वादुपपद्यते ॥ ४१ ॥

साहित्ये मितदेशत्वाद् प्रसिद्धे चाग्निधूमयोः ।
व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्प्यते ॥ ४२ ॥

इह साहित्यमेवेदमेकस्य सहभाविनः ।
अनन्तदेशवर्तित्वान्न तावदुपपद्यते ॥ ४३ ॥

तत्र परिहारमाह—**यस्य वस्त्वन्तराभाव इति** । यस्यानग्निव्यवच्छेदो गम्यः, तस्यैव तद् दूषणम्; तेन ह्यनग्नावभावो ग्राह्यः; न च तत् संभवति, दृश्यानुपलब्धेरभावात् । मीमांसकानां तु दर्शनादर्शनाभ्यां नियमज्ञानमुत्पद्यते । तत्रानग्नौ दर्शनं बाधकः; स च नास्ति । आशङ्कायां तु परिहारो दत्त एव "दोषज्ञाने त्वनुत्पन्ने" इति ॥

नन्वत्रापि किमर्थापत्तिपूर्वत्वेन रोमशायां चैत्रस्य सद्भावं प्रत्यक्षेण प्रतिपद्य तदधिष्ठितदेशव्यतिरिक्तसमीपदेशे च दृश्यानुपलब्ध्या चैत्राभावं प्रतिपद्य चैत्रसद्भावस्य तदधिष्ठितदेशव्यतिरिक्तसमीपदेशगतेन चैत्राभावेन सहचारित्वमवगम्य अग्निधूमयोरिवोत्तरकालं चैत्रदर्शनादन्यत्राभावावगतिर्लैङ्गिकी भविष्यतीति चोदयति—**नन्वेवमिति** ॥

तत्र वैलक्षण्यमाह—**साहित्ये मितदेशत्वादिति** । युक्तं धूमत्वस्याग्नित्वेन सह भूयोदर्शनेन सहचारित्वग्रहणम्; तयोरुभयोरप्येकस्मिन् प्रदेशे कृत्स्नोपलब्धेः, विपक्षे च दर्शनाभावात् । व्यतिरेकशब्देन व्यभिचारमाह ॥

इह तु रोमशाव्यवस्थितस्यानन्तदेशसम्बन्धी चैत्राभावः प्रमेयः । न चानवगते तस्मिन् रोमशाव्यवस्थितस्य चैत्रभावस्य सहचारित्वग्रहणं संभवति । न च तदन्यथानुपपत्तिं मुक्त्वा तत्र किंचित् प्रमाणम् । [1]तत्रैतस्मिन्नुदाहरणे सम्बन्धवेलायां संबन्ध्यन्यतरो ध्रुवमर्थापत्त्यैव गन्तव्य इत्याह—**इह साहित्यमेवेदमिति** ॥

1. तत्रैकस्मिन्. मा॰

**ननु देशान्तरं शून्यं चैत्रेणैवं प्रतीयते ।**
**तद्देशव्यतिरिक्तत्वात् समीपस्थितदेशवत् ॥ ४४ ॥**

**विरुद्धाव्यभिचारित्वं तद्वदेव हि गम्यते ।**
**समीपदेशभिन्नत्वाच्चैत्राधिष्ठितदेशवत् ॥ ४५ ॥**

**पुरुषस्य तु कात्स्न्र्येन यदेकत्रोपलम्भनम् ।**
**तस्यान्यथा न सिद्धिः स्यादित्यन्येष्वस्य नास्तिता ॥ ४६ ॥**

**तेनार्थापत्तिपूर्वत्वमत्र यत्र च कारणे ।**
**कार्यादर्शनतः शक्तेरस्तित्वं संप्रतीयते ॥ ४७ ॥**

नन्वर्थापत्तिव्यतिरिक्तमनुमानं तदवगतावस्त्येव प्रमाणम्; किमुच्यते अर्थापत्त्यैवा[1]वगन्तव्य इति चोदयति—**ननु देशान्तरमिति** । तदयं प्रयोगार्थः— विमत्यधिकरणभावापन्नदेशान्तरं चैत्रशून्यम्, चैत्राधिष्ठितदेशव्यतिरिक्तत्वात्, चैत्राधिष्ठित(देश)समीपदेशवत् इति ॥

तत्र दूषणमाह—**विरुद्धाव्यभिचारित्वमिति** । तत्राप्ययं प्रयोगार्थः— तदेव देशान्तरं चैत्रयुक्तम्, चैत्राधिष्ठितसमीपदेशव्यतिरिक्तत्वात्, चैत्राधिष्ठित- देशवत् इति ॥

नन्वर्थापत्त्यापि कथं देशान्तरे चैत्राभावावगतिः, उभयत्रापि जातिवत् सद्भावोपपत्तेरित्याशङ्क्याह—**पुरुषस्येति** । एकस्य सावयवस्य सकलावयवग्रह- णान्यथानुपपत्तिरन्यत्राभावे प्रमाणमित्यर्थः ॥

उपसंहरति—**तेनार्थापत्तिपूर्वत्वमत्रेति** । इदमपरमनुमानविविक्तमर्थापत्ते- रुदाहरणमाह—**यत्र च कारणे इति** त्रिपाद्या । अग्निसम्पर्के सति शरीरविकारा- त्मकं दाहमुपलभ्य तदन्यथानुपपत्त्याग्नेर्दाहिका शक्तिरस्तीति यद् विज्ञानं सार्थापत्तिः ॥

1. पत्त्यैव गन्तव्यः. मा,

**कार्यस्य ननु लिङ्गत्वं न सम्बन्धानपेक्षणात् ।**
**दृष्ट्वा सम्बन्धितां चैषा शक्तिर्गम्येत नान्यथा ॥ ४८ ॥**

**तद्दर्शने तदानीं च प्रत्यक्षादेरसम्भवात् ।**
**अर्थापत्तेः प्रमाणत्वं त्रैलक्षण्याद् विना भवेत् ॥ ४९ ॥**

**अनुमानादभिन्नत्वान्नोक्तौ जयपराजयौ ।**
**वध्यघातकभावेन यौ सर्पनकुलादिषु ॥ ५० ॥**

**पीनो दिवा न भुङ्क्ते चेत्येवमादिवचःश्रुतौ ।**
**रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ॥ ५१ ॥**

**तामर्थवि[1]षयां केचिदपरे शब्दगोचराम् ।**
**कल्पयन्त्यागमाच्चैनामभिन्नां प्रतिजानते ॥ ५२ ॥**

नन्विदमपि कारणशक्तिसद्भावेऽनुमेयकार्यलिङ्गमनुमानमेवेति चोदयति— **कार्यस्य ननु लिङ्गत्वमिति** । तत्र दूषणमाह—**न सम्बन्धानपेक्षणादि**त्यादिना न्यूनपादेन श्लोकद्वयेन । सम्बन्धग्रहणसापेक्षं हि लिङ्गं लिङ्गिनमवगमयति । सम्बन्धिग्रहणपुरस्सरं च सम्बन्धग्रहणम् । न च शक्त्याख्ये सम्बन्धिनि कार्यान्यथानुपपत्तिं मुक्त्वा प्रत्यक्षादि प्रमाणमस्ति । ननु पदार्थस्वरूपानन्तरं कार्यमुपजायमानं तज्जन्यमेव स्यात्; किमत्र परोक्षातिशयकल्पनया? तदनुपपन्नम्; क्वचिदग्निसंपर्के प्रत्यभिज्ञायामपि कार्यानुत्पादात् । शक्तिपक्षेऽप्यविशिष्टमिति चेन्न, कार्यावसेयस्य यावत्कार्यं सद्भावादित्यर्थः ॥

इदानीं वृत्त्यन्तरोदाहृतपरित्यागेनोदाहरणान्तरस्य प्रयोजनमाह—**अनुमानादभिन्नत्वादिति** ॥

"श्रुतार्थापत्तिरत्रैव परस्तादभिधास्यते" इत्युक्तम्; तामाह—**पीन इति** ॥

ननु प्रमाणग्राहिणीत्वेन पूर्वमभिधायेदानीं—"रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते"—इत्यर्थविषयतां दर्शयति; तदेतत् पूर्वापरविरुद्धमित्याशङ्क्याह— **तामर्थविषयामिति** ॥

1. तामर्थगोचरां. चौ. मु.

प्रायशश्चानया वेदे व्यवहारो व्यवस्थितः ।
सोऽवैदिकः प्रसज्येत यद्येषा भिद्यते ततः ॥ ५३ ॥

वचनस्य श्रुतस्यैव सोऽप्यर्थः कैश्चिदाश्रितः ।
तदर्थोपप्लुतस्यान्यैरिष्टो वाक्यान्तरस्य तु ॥ ५४ ॥

न तावच्छ्रूयमाणस्य वचसोऽर्थोऽयमिष्यते ।
न ह्यनेकार्थता युक्ता वाक्ये वाचकता तथा ॥ ५५ ॥

पदार्थान्वयरूपेण वाक्यार्थो हि प्रतीयते ।
न रात्र्यादिपदार्थश्च दिवावाक्येन गम्यते ॥ ५६ ॥

न दिवादिपदार्थानां संसर्गो रात्रिभोजनम् ।
न भेदो येन तद् वाक्यं तस्य स्यात् प्रतिपादकम् ॥ ५७ ॥

आगमान्तर्भावप्रतिपादने तेषां किं प्रयोजनमित्याह—**प्रायशश्चानया वेद इति** ॥

आगमवादिनोऽपि केचिच्छ्रुतागमप्रमेयत्वमेव रात्रिभोजनस्यापि दिवाभोजनप्रतिषेधवद् वर्णयन्ति । अन्ये तु श्रुतागमप्रमेयपर्यवस्थापितस्यागमान्तरस्येत्याह—**वचनस्य श्रुतस्यैवेति** ॥

तदेवमनेकधा विप्रतिपत्तौ सत्यां प्रमाणान्तरत्वं शब्दगोचरत्वं च स्वतन्त्रप्रक्रियानुरोधेन प्रतिपादयितुमाह—**न तावदिति** । यदि श्रूयमाणस्यैव दिवाभोजनप्रतिषेधवदितरोऽप्यर्थः परिकल्प्येत, तदानेकपरत्वं शक्त्यन्तरपरिकल्पनं च प्राप्नोति ; न च तद्युक्तम्, अन्यथापि रात्रिभोजनप्रतीतेरित्यर्थः ॥

पदार्थान्वयरूपेण हि प्रतीयमानो वाक्यार्थः शब्दशक्तिविकल्पनाहेतुर्भवति । न च दिवावाक्ये रात्र्यादिपदार्थान्वयरूपेणेति । एवं सत्यपि यदि वाक्यपदार्थानां भेदः संसर्गो वा रात्रिभोजनं भवेत्, तदा श्रूयमाणस्यैव दिवाभोजनप्रतिषेधवदयमर्थो भवेत् ; न त्वेतदस्तीत्याह—**पदार्थेति श्लोकद्वयेन**[1] ॥

1. पदार्थेति सार्धेन श्लोकद्वयेन न दिवादिपदार्थानामिति. मा.

अन्यार्थव्यापृतत्वाच्च न द्वितीयार्थकल्पना ।
तस्माद् वाक्यान्तरेणायं बुद्धिस्थेन प्रतीयते ॥ ५८ ॥

तस्य चागमिकत्वेऽपि यत् तद् वाक्यं प्रतीयते ।
प्रमाणं तस्य वक्तव्यं प्रत्यक्षादिषु यद् भवेत् ॥ ५९ ॥

न[1] त्वनुच्चारिते वाक्ये प्रत्यक्षं तावदिष्यते ।
नानुमानं न चेदं हि दृष्टं तेन सह क्वचित् ॥ ६० ॥

यदि त्वनुपलब्धेऽपि सम्बन्धे लिङ्गतेष्यते ।
तदुच्चारणमात्रेण सर्ववाक्यमितिर्भवेत् ॥ ६१ ॥

न चार्थापत्तिगम्यानि सर्वैः सर्ववचांसि हि ।
सम्बद्धान्युपलब्धानि येन तेष्वनुमा भवेत् ॥ ६२ ॥

न च सत्तानुमानेन विशेषो वानुमीयते ।

तस्माच्छ्रूयमाणवाक्यार्थोपप्लुतस्य "रात्रौ भुङ्क्ते" इत्यस्यैव वाक्यस्यायमर्थः इत्याह—**तस्मादित्यर्धेन** ॥

तस्यानुपप्लुतवाक्यप्रमेयत्वेनार्थापत्तिप्रमेयत्वं मा भूत्; तद्वाक्यसद्भाव एव तु किं प्रमाणमित्याह—**तस्य चागमिकत्वेऽपीति** ॥

न तावत् प्रत्यक्षम्, अनुच्चरितत्वात् । नानुमानम्, सम्बन्धग्रहणाभावादित्याह—**न त्वनुच्चारिते वाक्य इति** ॥

संबन्धग्रहणाभावेन तु लिङ्गत्वे वाक्यमात्रस्यानुमेयत्वमित्याह—**यदि त्विति** ॥

यदि लिङ्गादिपर्युदस्थापितानि वाक्यानि तादर्थ्यावगमे प्रमाणत्वेनेष्यन्ते, यथोक्तम्—"विनियोक्त्री श्रुतिस्तावत् सर्वेष्वेतेषु संमता" इति । तेषामर्थापत्तिप्रमाणैकसमधिगम्यत्वेन सम्बन्धग्रहणासम्भवेनानुमेयत्वं न स्यादित्याह—**न चार्थापत्तिगम्यानीति** ॥

अपि च, वाक्यविशेषस्यात्र सत्ता प्रतीयते । न च तयोर्द्वयोरप्यनुमेयत्वम्, सत्तायां साध्यायां भावाभावोभयधर्मस्यासिद्धविरुद्धानैकान्तिकत्वेन हेतोरभावात् सामान्यरूपत्वाच्च लिङ्गलिङ्गिनोरित्याह—**न चेति** ॥

1. न ह्यनुचरिते. चौ. मु.

इह वाक्यविशेषस्य सत्त्वैत्र त्ववगम्यते ॥ ६३ ॥

पूर्वसिद्धः-स्वतन्त्रोऽर्थः स्वतन्त्रेण विशेषितः ।
धर्माधर्मविशिष्टोऽत्र नानुमेयः प्रतीयते ॥ ६४ ॥

अथ श्रुतस्य वाक्यस्य मीयते तद्विशिष्टता ।
ततः पक्षोऽभ्युपेतः स्यादप्रसिद्धविशेषणः ॥ ६५ ॥

किंच लिङ्गान्तराभावादेतस्य यदि लिङ्गता ।
प्रतिज्ञार्थैकदेशत्वं पदवत्ते प्रसज्यते ॥ ६६ ॥

तद्वदेव [1]निवार्यात्र वचसो धर्मधर्मिता ।
नागृहीते हि तद्धर्मो गृहीते नानुमेयता ॥ ६७ ॥

क्रियाकारकसम्बन्धात् ऋते नास्ति तु धर्मता ।
अवाचकतया चैतन्न धर्मो विषयात्मना ॥ ६८ ॥

यादृग् लिङ्गस्य विषयस्तादृशोऽत्र नास्तीत्याह—**पूर्वसिद्धः स्वतन्त्र इति** ॥

नापि दिवावाक्यस्य रात्रिविशेषस्य अप्रसिद्धत्वेनाप्रसिद्धविशेषणत्वात् पक्षतेत्याह—**अथ श्रुतस्य वाक्यस्येति** ॥

लिङ्गान्तराभावेन च प्रतिज्ञार्थैकदेशतापि हेतोरित्याह—**किञ्चेति**। यथा पदस्य पदार्थविशिष्टतयानुमेयत्वे प्रतिज्ञार्थैकदेशत्वम्, एवं तत्रापीत्यर्थः ॥

पदवदेव दिवावाक्यरात्रिवाक्ययोर्धर्मधर्मिभावो निराकर्तव्य इत्याह—**तद्वदेव निवार्यात्रेति**। अप्रतिपन्ने रात्रिवाक्ये धर्मिणि श्रूयमाणस्य तद्धर्मतया ग्रहणासम्भवात् प्रतिपन्ने चानुमेयाभावादित्यर्थः ॥

पदवदेव च क्रियाकारकलक्षणसम्बन्धाभावेन दिवावाक्यस्य रात्रिवाक्यधर्मता निराकर्तव्येत्याह—**क्रियाकारकसम्बन्धादित्यर्धेन**। दिवावाक्यस्य रात्रिवाक्यं प्रत्यव्यापकत्वेन विषयविषयिभावोऽपि नास्तीत्याह — **अवाचकतया चैतदित्यर्धेन** ॥

1. निराकार्या. चौ. मु.

**प्रतीतेर्वाचकत्वं चेत् प्रसक्तानेकशक्तिता ।**
**अनुमाविषयोत्थं [1]चेद् धर्मत्वं निष्फलं भवेत् ॥ ६९ ॥**

**पदार्थैरपि तद् वाक्यं नासम्बन्धात् प्रतीयते ।**
**सामान्यान्यन्यथासिद्धेर्विशेषं गमयन्ति हि ॥ ७० ॥**

**न तु वाक्यान्तरेणैषां विना किंचिन्न सिध्यति ।**
**न चाप्यन्यः प्रकारोऽस्ति तेन वाक्येन सङ्गतौ ॥ ७१ ॥**

**अथैतद् वाचि कल्प्येत वाक्यमन्यत् तथैव च ।**
**प्रसङ्गात् तत्र दूरेऽपि नासम्बन्धात् प्रमुच्यते ॥ ७२ ॥**

अथ दिवावाक्योच्चारणे सति रात्रिवाक्यप्रतीतेरस्त्येव वाचकत्वमिति चोदयति—**प्रतीतेर्वाचकत्वं चेदिति** । तत्र परिहारमाह—**प्रसक्तानेकशक्तितेति** । प्रतिपत्त्यन्यथानुपपत्त्या शक्त्यन्तरं तर्हि कल्पनीयम्; न च तत् कल्पयितुं शक्यम्, अर्थापत्त्यापि तत्प्रतीतेरित्यर्थः । अथ लैङ्गिकीं प्रतिपत्तिमाश्रित्य दिवावाक्यस्य रात्रिवाक्यविषयतया पक्षधर्मत्वम्, तस्यापि प्रतिपत्त्युत्तरकालत्वेन प्रतिपत्तावनङ्गत्वमित्याह—**अनुमाविषयोत्थं चेदित्यर्धेन** ॥

एवं तावद् दिवावाक्यस्य रात्रिवाक्यं प्रति लिङ्गत्वं नास्तीत्युक्तम् । अधुना तु दिवावाक्यपदार्थानामपि सम्बन्धग्रहणाभावेन न तत्प्रतिपत्तौ लिङ्गत्वमित्याह—**पदार्थैरपि तद्वाक्यमित्यर्धेन** । नाप्यन्यथानुपपत्त्या रात्रिवाक्यप्रतिपत्तौ तेषां व्यापारः सामान्यरूपत्वात् पदार्थानां व्यक्तिमात्रेणैव विनानुपपत्तिः, न रात्रिवाक्येनेत्याह—**सामान्यान्यन्यथासिद्धेरिति** ॥

न च दिवावाक्यपदार्थानामन्यथानुपपत्तिलिङ्गं चान्तरेण रात्रिवाक्यप्रतिपत्तौ व्यापार इत्याह —**न चाप्यन्य इत्यर्धेन** ॥

एवं तावन्न रात्रिवाक्यस्य प्रत्यक्षत्वं नानुमेयत्वं नापि कल्प्यागमप्रमेयत्वम्, कल्प्यस्यापि सम्बन्धग्रहणाभावेन तत्प्रतिपत्तौ लिङ्गत्वाभावात् सम्बन्धग्रहणाभावेन च प्रतिपादकत्वे वरं श्रूयमाणस्यैवार्थापत्तिपर्युत्थापकत्वेन प्रमाणत्वम्; किमन्येनेत्याह—**अथैतद्वाचि कल्प्येतेति सार्धेन** ॥

1. तु धर्मत्व. चौ. मु.

**ततश्च प्रथमादेव वरं ज्ञातुमसङ्गतात् ।**
**अन्वयव्यतिरेकौ च प्रतिषेध्यौ पदे यथा ॥ ७३ ॥**

**श्रुतवाक्येन सादृश्यं नाश्रुतस्यास्ति किञ्चन ।**
**तस्मादनुपमानत्वमर्थस्याप्यनया दिशा ॥ ७४ ॥**

**उपमानत्वलिङ्गेन वाक्यं प्रति निवारिते ।**
**अर्थेऽपि चैवमेव स्यात् तस्मात् पूर्वत्वसम्भवः ॥ ७५ ॥**

**अतः श्रुतस्य वाक्यस्य यदर्थप्रतिपादनम् ।**
**तदात्मलाभ एव स्याद् विना नेत्येतदिष्यते ॥ ७६ ॥**

**एतदर्थाद् विना नायमित्यर्थः किं न कल्प्यते ।**

एवं तावद् दिवावाक्यस्य रात्रिवाक्यं प्रति पक्षधर्मत्वं नास्तीत्युक्तम् । अधुना तु पदार्थवदन्वयव्यतिरेकावपि न स्त इत्याह—**अन्वयव्यतिरेकौ चे**त्यर्धेन ॥

नापि दिवावाक्यस्य रात्रिवाक्यं प्रत्युपमानत्वम्, असादृश्यत्वादित्याह—**श्रुतवाक्येन सादृश्यमिति** श्लोकद्वयेन ॥

यथा च दिवावाक्यस्य रात्रिवाक्यं प्रति नोपमानत्वं नापि लिङ्गत्वं तथा तदर्थस्यापि उपमानत्वलिङ्गत्वे न स्त इत्याह—**अतः श्रुतस्येति** । पीनत्वे सति दिवाभोजनप्रतिषेधस्यात्मलाभो रात्रिवाक्यं विना नोपपद्यत इति श्रुतार्थापत्तेः प्रमाणविषयत्वेन दृष्टार्थापत्तेर्वैलक्षण्यम् ॥

अत्र चोदयति—**एतदर्थाद्विना नायमि**त्यर्धेन । पीनस्य दिवाभोजनप्रतिषेधो रात्रिभोजनं विना नोपपद्यते, भोजनकार्यत्वात् पीनत्वस्य दिवानिषेधेन तस्यैवान्यत्र सद्भावः प्रतीयते ; न रात्रिवाक्यस्य । स एव त्वर्थापत्त्या प्रतिपन्नस्तद्बुद्धौ संनिधापयति, नार्थापत्तिप्रमिता वाक्यार्थावगतिः ; रात्रिभोजनप्रतीतेः पूर्वं रात्रिवाक्यप्रतिपत्तौ प्रमाणाभावात् । रात्रिवाक्यस्याप्येतदुपपादकार्थप्रतिपादकत्वेनैव प्रमेयत्वम्, न स्वरूपेण । न च स्वतन्त्रेऽपि काचित् क्षतिः चोदनार्थान्यथानुपपत्त्यार्थान्तरमवगम्यमानं विनापि शब्दकल्पनया चोदनालक्षणमेव स्यात् कल्प्यवाक्यवत् लिङ्गादयश्च तादर्थ्यावगतौ पर्यालोचनया विप्रकृष्टत्वेन श्रुतिबाध्या

**वाक्यार्थवच्च किं नायमागमार्थः प्रतीयते ॥ ७७ ॥**

**सविकल्पकविज्ञानैः शब्दः पूर्वं प्रतीयते ।**
**लब्धप्रयोजने वाक्ये परं नागमिकं च नः ॥ ७८ ॥**

**ननु चासति सम्बन्धे सति वानवधारिते ।**
**गम्यज्ञानमिदं वाक्यं प्रसज्येताप्रमाणकम् ॥ ७९ ॥**

भविष्यन्ति । तदुक्तम्—"रात्रिभोजनविज्ञानम्" इति । अथवा दिवाभोजनप्रतिषेधवद्रात्रिभोजनसद्भावोऽपि दिवावाक्यस्यैवार्थो भवतु, प्रमाणान्तरपरिकल्पनं तु वृथेति चोदनान्तरमाह—**वाक्यार्थवच्च किं नाय**मित्यर्धेन । तदुक्तम्—

"वचनस्य श्रुतस्यैव सोऽप्यर्थः कैश्चिदाश्रितः" इति ॥

तत्राद्यस्य तावत् परिहारमाह—**सविकल्पकविज्ञानै**रित्यर्धेन । श्रुतार्थान्यथानुपपत्त्या हि सविकल्पकविज्ञानमुत्पद्यते, तच्च शब्दानुवेधेनार्थं विषयीकरोतीति प्रथमतरप्रतीतत्वेन तस्यैव प्रमेयत्वम् । तत्प्रतिपन्नात्तु शब्दादर्थावगतिरिति । तदनुपपन्नम्—स्मर्यमाणस्य हि शब्दस्य सविकल्पकज्ञानोत्पादकत्वम्; न प्रमेयत्वेन । तदुक्तम्—"विविक्ता एव तेऽर्था हि" इति । अपि च, दृष्टार्थान्यथानुपपत्त्यापि सविकल्पकमेव विज्ञानमुत्पद्यत इति शब्दप्रमेयत्वप्रसङ्गः प्रत्यक्षादिषु च । अयमाशयः—प्रमाणैकदेशश्रवणान्यथानुपपत्त्या तदवयवस्यैव परिकल्पना, नार्थस्य; प्रेर्यविषयप्रतिपादकपदसहितस्य हि प्रेरकप्रतिपादकस्य भावनायाः प्रमाणत्वम्, नावयवस्य । ततः "श्रुतो वा" इति च प्रमावयवश्रवणमाह । शरीरविकारात्मकदाहग्राहकस्य तु प्रत्यक्षस्य नापरिपूर्णता। तत्प्रमेयस्त्वात्मलाभसिध्यर्थः शक्तिं कल्पयतीत्यर्थविषयता । चोद्यान्तरपरिहारमाह—**लब्धप्रयोजने वाक्य** इत्यर्धेन । दिवावाक्योच्चारणानन्तरं दिवाभोजनप्रतिषेधप्रतिपत्त्या लब्धप्रयोजने दिवावाक्ये दिवाभोजनप्रतिषेधप्रतिपत्त्युत्तरकालं रात्रिभोजनमवगम्यमानं श्रुतार्थापत्तिपर्युपस्थापितप्रमाणावयवस्य प्रतिपद्यते, न श्रूयमाणागमस्येत्यर्थः ॥

ननु तादात्म्यतदुत्पत्त्यविनाभावादिभिरसम्बद्धाद् दिवावाक्याद्रात्रिवाक्यावगतिर्भवन्ती मिथ्या स्यादिति चोदयति—**ननु चासतीति** ॥

सम्बन्धस्य प्रमाणत्वं स्थितं किञ्चेश्वराज्ञया ।
प्रत्यक्षस्य प्रमाणत्वं कथं वा सङ्गतेर्विना ॥ ८० ॥

अस्तीन्द्रियार्थसम्बन्धस्तत्र चेन्नानपेक्षणात् ।
न हि प्रत्यक्षवेलायां सर्वेणासौ निरूप्यते ॥ ८१ ॥

येनापि तु निरूप्येत पश्चादनुभवादसौ ।
न स्यादेव प्रमाणाङ्गमसता तुल्य एव सः ॥ ८२ ॥

अप्राप्यकारिणी येषां चक्षुःश्रोत्रे च ते यथा ।
तज्ज्ञानस्य प्रमाणत्वमिच्छन्त्येवं भविष्यति ॥ ८३ ॥

तत्र परिहारमाह—**सम्बन्धस्य** [1]**प्रमाणत्वमि**त्यर्धेन । यद्यसम्बन्धाद-प्यर्थान्तरप्रतिपत्तिर्बाधकापेता भवति, किं सम्बन्धेनेत्यर्थः । यथा चक्षुरिन्द्रिय-मविनाभावादिभिर्विनैव रूपप्रतिपत्तिं प्रमाणभूतां जनयति, तद्वदेतदपीत्याह—**प्रत्यक्षस्य प्रमाणत्वमि**त्यर्धेन ॥

ननु चक्षुरिन्द्रियमपि सम्बन्धेनैव रूपप्रतिपत्तिं जनयति, तदभावे तु रसप्रति-पत्तिमपि जनयेदिति चोदयति—**अस्तीन्द्रियार्थसम्बन्धस्तत्र चेदिति** । तत्र परिहारमाह—**नानपेक्षणादिति** । यो हीन्द्रियमपि सम्बन्धबलेनैव प्रतिपादय-तीति मन्यते, स धूमवत्तत्र सम्बन्धग्रहणमपेक्षेत ; न तु चक्षुरिन्द्रियैकसमधिगम्ये रूपे रूपैकसमधिगम्यस्य चक्षुरिन्द्रियस्य सम्बन्धग्रहणमस्तीत्यर्थः । अपि च योग्य-तालक्षणेन वा सम्बन्धेन चक्षुरिन्द्रियं रूपप्रतिपत्तिं जनयति, संयोगेन वा ? [2]न तावद्योग्यतया, तत्परामर्शाभावेऽपि रूपप्रतिपत्तेर्भावादित्याह—**न हीत्य**र्धेन ॥

रूपप्रतिपत्तिलक्षणकार्यप्रतिपत्त्युत्तरकालं च योग्यतावगम्यमाना कथं तत्प्रतिपत्तावङ्गमित्याह—**येनापि त्विति** ॥

नापि संयोगेन, तदभावादित्याह—**अप्राप्यकारिणीति** । अनेनैतदपि प्रत्युक्तम्—विषयादिपदार्थप्रतिपत्त्युत्तरकालमपेतबाधकादिप्रत्ययः तदन्वयोऽवगम्य-

1. प्रमाणवदिति. मा.  2. Omitte p. न. मा.

**तस्मादसत्त्वे सत्त्वे वा सम्बन्धस्य यदेव नः ।**
**जायेताभङ्गुरं ज्ञानं तस्यैव स्यात् प्रमाणता ॥ ८४ ॥**

**न चाप्यस्याः प्रमाणत्वे कश्चिद् विप्रतिपद्यते ।**
**भेदाभेदे विसंवादः कुतस्तत्र च निर्णयः ॥ ८५ ॥**

**[1]ऋते यत्र तु सम्बन्धाद् बुद्धिरेव न जायते ।**
**तत्र किं क्रियतां सोऽपि प्रामाण्ये नैव कारणम् ॥ ८६ ॥**

**स्मृत्या श्रुतिर्या परिकल्प्यतेऽस्मिन्**
**लिङ्गादिभिर्या विनियोजिका च ।**

मानोऽपेक्षासंनिधियोग्यत्वैरभिधानेन [2]पदप्रतिपादितार्थनिमित्ततया च चोदनालक्षणत्वं भविष्यति—[3]इति ॥

उपसंहरति—**तस्मादसत्त्वे सत्त्वे वेति** ॥

न चात्र[4] प्रमाणतायां विप्रतिपत्तिः । यत्र तु विप्रतिपत्तिस्तत्र निर्णयः कुत एवेत्याह—**न चाप्यस्याः प्रमाणत्व इति** ॥

ननु च यदि विनापि सम्बन्धेनार्थान्तरप्रतिपत्तिर्भवति, धूमस्यापि तर्हि किमविनाभावेन तद्ग्रहणेन चेत्याशङ्क्याह—**ऋते यत्र त्विति क्रियतामन्तेन** । योग्यतैवागृहीता स्वकार्यं करोति; धूमस्त्वविनाभावेऽग्निमवगमयति, न योग्यतया ; स च प्रतीयमानोऽवगतावङ्गम् , नान्यथेति किं कुर्मः तस्यापि प्रतिपत्त्युत्पादन एवाङ्गत्वम्; उत्पन्नायास्तु बाधकापेततैव प्रामाण्यकारणमित्याह—**सोऽपि प्रामाण्ये नैव कारणमिति** ॥

भेदप्रतिपादनस्य स्वतन्त्रोपयोगितामाह—**स्मृत्या श्रुतिरित्यादिना** सार्ध-श्लोकेन ॥

1. कृते यत्र च. चौ. मु.
2. पदप्रतिपदार्थ. मा.
3. Omitted. इति. मा.
4. चाप्यस्याम्. मा.

**फलादिभिर्यत् परिपूर्णं च**
**सम्बन्धदृक् तत्र न काचिदस्ति ॥ ८७ ॥**

**तत् सर्वमित्याद्यसमञ्जसं स्या-**
**न्नचेदियं स्यादनुमानतोऽन्या ।**
**एवंस्वभावाप्यनुमानशब्दं**
**लभेत चेदस्ति यथेप्सितं नः ॥ ८८ ॥**

**इत्यर्थापत्तिप्रकरणम् ।**

———:०:———

एवं सामग्रीभेदेन प्रत्यक्षवदनुमानादर्थापत्तेः भेदे साधिते यः कश्चित् [1]पश्चान्मानसामान्यादनुमानशब्दं प्रयुङ्क्ते, न च कश्चिद्वारयतीत्याह—**एवंस्वभावापीति** ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
अर्थापत्तिः समाप्ता

———

1. पश्चात्मना सामान्या. मा. पश्चान्मानात् इति च पाठः । चौ. मु.

# अथाभाववादः ।

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥ १ ॥

वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रया ।
क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ॥ २ ॥

## अथाभावप्रमाणम् ।

"अभावोऽपि प्रमाणाभावः" इति भाष्यम् । तस्यायमर्थः—अभावोऽपि न व्यभिचरति, एवं लक्षणकत्वात् इति । तत्र भूप्रदेशातिरेकेण घटाभावस्याभावात् तत्सद्भावे वा संनिकृष्टस्य प्रत्यक्षावसेयत्वादुभयविप्रतिपत्तिनिरासायाह— "नास्तीत्यस्यार्थस्यासंनिकृष्टस्य" इति । तत्र "नास्तीत्यस्यार्थस्य" इत्यनेन भाष्यकारो भूप्रदेशातिरिक्त[1]स्मर्यमाणघटावच्छिन्नं भूप्रदेशाधिकरणम्—न त्वाक्षप्रमेयम्—अभावं दर्शयतीत्याह वार्तिककारः—**प्रमाणपञ्चकमिति** । यत्र घटाख्ये वस्तुनि प्रत्यक्षादि सद्भावं नोपग्राहयते[2], तस्य नास्तिता भूप्रदेशाधिकरणाभावस्य प्रमाणस्य प्रमेयेत्यर्थः ॥

"असंनिकृष्टस्य" इत्यनेनापि भाष्यकारस्तस्य प्रत्यक्षाद्यविषयतां दर्शयतीत्याह वार्तिककारः—**वस्त्वसङ्करसिद्धिश्चे**त्यनेन । घटविविक्तता हि भूप्रदेशाख्ये धर्मिणि धर्मोऽभावः । तत्र धर्मी प्रत्यक्षेण प्रतीयते । तद्धर्मस्त्वभावप्रमाणावसेयः । न च घटविविक्तता भूप्रदेशादभिन्ना, घटसंनिधानेऽपि "नास्ति" इति विज्ञानप्रसङ्गात् । न च भिन्नाप्यक्षानुमानावसेयेति वक्ष्यामः—"जायतेऽक्षानपेक्षया"—इत्यत्र च । तस्माद् घटविविक्तता भूप्रदेशस्य तत्प्रमाण्यसमाश्रया, न प्रत्यक्षादिविषयेत्यर्थः ॥

सांप्रतं तामेव नास्तितामभावप्रमेयां प्रागभावादिभेदेन चतुष्प्रकारां दर्शयितुमाह—**क्षीरे दध्यादी**त्यादिना सार्धेन श्लोकद्वयेन ॥

1. रिक्तास्मर्य. मा.  2. नोपजग्राहकायते. मा

नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते ।
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ॥ ३ ॥

शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ।
शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥ ४ ॥

क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः ।
शशे शृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि ॥ ५ ॥

अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह ।
व्योम्नि संस्पर्शिता ते च न चेदस्य प्रमाणता ॥ ६ ॥

न च स्याद्-व्यवहारोऽयं कारणादिविभागतः ।
प्रागभावादिभेदेन नाभावो भिद्यते यदि ॥ ७ ॥

न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता ।
कार्यादीनामभावः को [1]भावो यः कारणादिनः ॥ ८ ॥

अभावप्रमाणाभावे तु पूर्वोक्तस्य विपर्ययमाह—**क्षीरे दधि भवेदित्यादिना** श्लोकद्वयेन ॥

इदानीमभावप्रकारोपवर्णनस्योपयोगितामाह—**न च स्यादिति** । यस्य यत्र प्रागभावस्तस्य तत्कार्यत्वम् । यस्य यत्र प्रध्वंसस्तत्र तस्य कारणत्वम् ॥

अपरमपि भेदप्रतिपादनस्योपयोगान्तरमाह—**न चावस्तुन इत्यर्धेन** । तदनेन भिद्यमानत्वेन [2]प्रमाणोपपादितं स्वलक्षणवदभावस्य वस्तुत्वमिति । तेनेदमपि परिहृतं भवति—कथमभावस्यावस्तुत्वेन प्रमेयत्वम् इति । इतश्चाभावस्य वस्तुत्वमित्याह—**कार्यादीनामित्यर्धेन** । कारणस्वरूपमेव कार्यस्याभावः । तस्य च वस्तुत्वमिष्टमेव । तदिदमनुपपन्नम्; घटविविक्ततां भूप्रदेशाधिकरणां वस्त्वसङ्करशब्देनाभावमभिधायेदानीम्—“भावो यः कारणादिनः”—इत्यनेन भावमेवाभावं वदतीति पूर्वापरविरुद्धम्, भावस्याभावत्वे प्रत्यक्षावसेयत्वेनाभावप्रमाणोच्छेदः । तस्मात् कार्याभावस्य वस्तुत्वसिद्धये कारणधर्मतां दर्शयतीति व्याख्येयम् ॥

1. योऽभावः. चौ. मु. 2. प्रमाणदारूपादितं भिद्यमानत्वेन. मा.

यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम् ।
तस्माद् गवादिवद् वस्तु प्रमेयत्वाच्च गम्यते ॥ ९ ॥

न चौपचारिकत्वं वा भ्रान्तिर्वापि यदृच्छया ।
भवन्त्यतो न सामान्यविशेषात्मकता मृषा ॥ १० ॥

प्रत्यक्षादेरनुत्पत्तिः प्रमाणाभाव उच्यते ।
[1]सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि ॥ ११ ॥

वस्तुत्वसिद्धावेव प्रयोगद्वयमाह—**यद्वेति** । चतुर्विधस्यापि वस्तुत्वमभावस्यानुवृत्तिबुद्धिग्राह्यत्वेन प्रमेयत्वेन च गवादिवदिति ॥

न चैतस्य प्रत्ययद्वयस्य मिथ्यात्वम्, बाधकप्रत्ययाभावादित्याह—**न चौपचारिकत्वमिति** ॥

एवं तावत् प्रमेयप्रतिपादकं भाष्यं व्याख्यायाधुना—"अभावोऽपि प्रमाणाभावः" इति प्रमाणप्रतिपादकं भाष्यं व्याचष्टे । तत्र "अभावोऽपि" इति लक्ष्यनिर्देशः, "प्रमाणाभावः" इति लक्षणम् । तदनुपपन्नमिव शङ्कते । सर्वप्रमाणाभावोऽभावस्य लक्षणं स्यात्, तद्व्यतिरिक्तेतरप्रमाणाभावो वा ? न तावत् सर्वप्रमाणाभावस्य लक्षणत्वम्, असम्भवात्; न ह्यभावाख्ये प्रमाणाभावाख्यस्य प्रमाणस्याभावसम्भवः । नापि तद्व्यतिरिक्तेतरप्रमाणाभावोऽभावस्य लक्षणम्, अतिव्यापकत्वात् । प्रत्यक्षेऽपि तद्व्यतिरिक्तेतरप्रमाणाभावस्य सम्भवात् । नाप्यनेनाभावस्याभावमेव प्रतिपादयति, "अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासंनिकृष्टस्य" इति प्रमेयनिर्देशात् । "स्यादेतदेवं यदि पञ्चैव प्रमाणान्यभविष्यन्"—इत्यादिभाष्यविरोधाच्चेत्याशङ्क्याह—**प्रत्यक्षादेरनुत्पत्तिरित्येवं** । प्रत्यक्षादेरर्थापत्तिपर्यन्तस्य यथाविषयमनुत्पत्तिरभावस्य प्रमाणस्य लक्षणमित्यर्थः । तामेव प्रत्यक्षाद्यनुत्पत्तिं विवृणोति—**सात्मनोऽपरिणामो वेति** । उत्तरपदार्थप्रतिषेधमात्रविषया सात्मनः [2]अपरिणामो वेत्याह । घटज्ञातृरूपतया परिणतस्यात्मनो घटसद्भावः प्रमेयः । तथा अपरिणतस्य तदभाव इत्यर्थः । उत्तरपदार्थपर्युदस्तवस्त्वन्तरविवक्षायां—**विज्ञानं वान्यवस्तुनीत्याह** । भूप्रदेशे घटव्यतिरिक्त-

1. सात्मनः परि. चौ. मु.  2. परिणामो. मा.

**स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।**
**वस्तुनि ज्ञायते कैश्चिद् रूपं किंचित् कदाचन ॥ १२ ॥**

**यस्य यत्र यदोद्भूतिर्जिघृक्षा वोपजायते ।**
**चेत्यतेऽनुभवस्तस्य तेन च व्यपदिश्यते ॥ १३ ॥**

वस्तुनि घटविविक्तताख्ये 'इह देशे घटो नास्ति' इति यद् विज्ञानं तदभावसंज्ञकं प्रमाणमित्यर्थः । अयमाशयः—इह प्रदेशे दृश्यादर्शनं चास्ति ; तदनन्तरम् 'घटो नास्ति' इति ज्ञानं चोत्पद्यते । तत्र घटाभावे प्रमेये दृश्यादर्शनमेव कदाचित् प्रमाणत्वेन विवक्ष्यते, तदा सात्मनोऽपरिणामो वेति पक्षः । अथ तदनन्तरं 'नास्ति' इति ज्ञानं यत्, तत् प्रमाणत्वेन विवक्ष्यते बोधकत्वेन बाधकप्रत्ययाभावेन च तदा—विज्ञानं वान्यवस्तुनि इति पक्षः । ननु घटादर्शनव्यतिरेकेण तद्विपर्ययावगतेरभावात् कस्याभावः प्रमेयः ? कथं चोच्यते—'विज्ञानं वान्यवस्तुनि' इति ? घटासद्व्यवहारोऽपि घटाप्रतिपत्तिनिमित्तक एव, न पुनस्तद्विपर्ययावगतिनिमित्तकः । तदनुपपन्नम्, दृश्यादर्शनानन्तरमभावसंवेदनस्योत्पत्तेः, तदभावे वा घटार्थिनस्तत्र निवृत्तिर्न स्यात् । घटादर्शनस्यापि तद्विपर्ययावगतिकारणत्वेनैव घटासद्व्यवहारकत्वम्, नाकिञ्चित्करत्वेन ; अन्यथा पुनरन्धकारेऽपि घटादर्शनाद् घटासद्व्यवहारः स्यात् । दृश्यविशेषणस्याप्यभावावगतिकारकत्वेनैवादर्शनं प्रत्यर्थवत्ता ॥

ननु भवतु दृश्यादर्शनादनन्तरम् "इह प्रदेशे घटो नास्ति"—इति विज्ञानम् । भूप्रदेश एव तु तस्यालम्बनम् । घटाभावोऽपि स एव, भूप्रदेशव्यतिरेकेणान्यस्याप्रतिभासात् । तदुक्तम्—"घटविविक्तभूतलोपलम्भ एव घटानुपलम्भः ; घटविविक्तश्च भूप्रदेशो घटाभावः" इतीत्याशङ्क्याह—**स्वरूपपररूपाभ्यामिति श्लोकद्वयेन** ॥

[1]अथ य एवमाह—घटो नास्ति—इति विज्ञानस्योत्पद्यमानस्य भूप्रदेश एवालम्बनम् इति, असौ विकल्प्य प्रष्टव्यः—प्रदेशमात्रस्य वालम्बनत्वं स्यात्, घटविविक्तताविशिष्टस्य वा ? न तावत् प्रदेशमात्रस्य, घटसंनिधानेऽपि 'नास्ति' इति विज्ञानप्रसङ्गात् । नापि घटविविक्तताविशिष्टस्य ; घटविविक्तता हि भूप्रदेशाद् भिन्ना वा स्यादभिन्ना वा ? तत्राभिन्नत्वे घटसंनिधानेऽपि 'नास्ति' इति

1. अन्यमेवमाह. मा.

*तस्योपकारकत्वेन वर्ततेऽशस्तदेतरः ।
उभयोरपि संवित्तावुभयानुगमोऽस्ति हि ॥ १४ ॥

अयमेवेति यो ह्येष भावे भवति निर्णयः ।
नैष वस्त्वन्तराभावसंवित्यनुगमादृते ॥ १५ ॥

नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमादृते ।
ज्ञानं न जायते किञ्चिदुपष्टम्भनवर्जितम् ॥ १६ ॥

प्रत्यक्षाद्यवतारस्तु भावांशो गृह्यते यदा ।
व्यापारस्तदनुत्पत्तिरभावांशे जिघृक्षिते ॥ १७ ॥

विज्ञानप्रसङ्गः; भिन्ना चेत्, सिद्धम् तर्हि प्रमेयान्तरत्वमभावस्य । तत्रासदंशोद्भवे स प्राधान्येन चेत्यते; यतस्तस्यानुभव उत्पन्न इति; सदंशस्तु चेत्यमानोऽपि असदंशोपकारे वर्तते । एवमितरग्रहणेऽपीतरस्योपकारकत्वमित्याह—**तस्योपकारत्वेनेति** ॥

कथं पुनरभावस्य भावप्रतिपत्तावुपकारकत्वम्? यतो घटाभावपरामर्शं विनापि प्रदेशसद्भावः प्रतीयत एवेत्याशङ्क्याह—**अयमेवेति** । सावधारणे हि भावग्रहणेऽभावग्रहणस्योपकारकत्वम्, न भावग्रहणमात्र इत्यर्थः ॥

सर्वं ह्यभावग्रहणं भावद्वयोपष्टम्भं विना नेत्याह—**नास्तीत्यपीति** । तत्र सदंशः प्रत्यक्षादिभिरर्थापत्तिपर्यन्तैः प्रतीयते । अभावांशे तु तदनुत्पत्तेः 'नास्ति' इति ज्ञानस्य चाव्यापारः । संनिकृष्टाग्रहणं च वक्तव्यम् ॥

असंनिकृष्टे त्वर्थापत्त्यादयोऽपि प्रवर्तन्त एवेत्याह—**प्रत्यक्षाद्यवतारस्त्विति** ॥

ननु भवतु घटाभावे प्रमेये 'नास्ति' इति ज्ञानं प्रमाणम्; इन्द्रियार्थसंनिकर्षेण तूत्पद्यमानं प्रत्यक्षमेवेदम् । तथा हि—इन्द्रियार्थसंनिकर्षोत्पन्नता प्रत्यक्षलक्षणम् । स च संनिकर्षः षोढा भिद्यते—संयोगाद् द्रव्यग्रहणम्, संयुक्तसमवायाद् गुणग्रहणम्, संयुक्तसमवेतसमवायाद् गुणत्वग्रहणम्, समवायात् शब्दग्रहणम्,

* षड्विंशश्लोकमानं समग्रमस्ति, अन्येषां प्रतीकमात्रम्. मा.

न तावदिन्द्रियेणैषा[1] नास्तीत्युत्पद्यते मतिः ।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥ १८ ॥

ननु भावादभिन्नत्वात् संप्रयोगोऽस्ति तेन च ।
न ह्यत्यन्तमभेदोऽस्ति रूपादिवदिहापि नः ॥ १९ ॥

धर्मयोर्भेद इष्टो हि धर्म्यभेदेऽपि नः स्थिते ।
उद्भवाभिभवात्मत्वाद् ग्रहणं चावतिष्ठते ॥ २० ॥

इदमेव निमित्तं च विवेकस्य प्रतीयते ।
भावाभावधियोरक्षैः सम्बन्धोऽक्षानपेक्षणम् ॥ २१ ॥

रूपादेरपि भेदं च केचिद् ग्राहकभेदतः ।
वर्णयन्ति यथैकस्य पुंसः पुत्रादिरूपताम् ॥ २२ ॥

समवेतसमवायाच्छब्दत्वग्रहणम्, संयुक्तविशेषणत्वादभावग्रहणम्; यथा फलवती शाखेत्याशङ्क्याह—न तावदिन्द्रियेणेति ॥ न संयोगस्तावदिन्द्रियस्याभावेन सह, अद्रव्यत्वात्। नापि संयुक्तविशेषणत्वमभावस्य, भावाभावयोर्भवत्पक्षे सम्बन्धाभावेनाविशेषणत्वात्। न तावदभावस्य भावेन सह संयोगः, अद्रव्यत्वात्। नापि समवायः; गुणादिचतुष्टयस्य द्रव्येण समवायः; न चाभावस्य तत्र पाठः। संयुक्तविशेषणत्वेन च घटाभावस्याक्षग्रहणे रसादयोऽपि चक्षुषा गृह्येरन्। अथायोग्यत्वादग्रहणम्, योग्यतैव का तर्हि कार्यानुमेया ग्रहणकारणमिति संनिकर्षषट्प्रकारत्वमयुक्तम् ॥

ननु भावादभिन्नत्वेनाभावस्य केनापि सह योग्यता नास्तीति चोदयति—ननु भावादित्यर्धेन। तत्र परिहारमाह—न ह्यत्यन्तमभेदोऽस्तीत्यादिना सार्धश्लोकेन। अभिन्नेऽपि भूप्रदेशाख्ये धर्मिणि रूपरसादिवदेव सदंशासदंशयोर्भेदोऽस्त्येवेत्यर्थः ॥

रूपरसादिवदेव च ग्राहकभेदस्तद्भेदकारणमित्याह—[2]इदमेवेत्यादिना श्लोकद्वयेन ॥

1. न तावदिन्द्रियैरेषा. चौ. मु.
2. श्लोकद्वयेन इदमेवेत्यादिना श्लोकद्वयेन. मा.

**बुद्धिमात्रकृतो भेदो रूपादौ नित्यमेव हि ।**
**न च देशाद्यभिन्नानां समुदायात्रकल्पना ॥ २३ ॥**

**सद्गुणद्रव्यरूपेण रूपादेरेकतेष्यते ।**
**स्वरूपापेक्षया चैषां परस्परविभिन्नता ॥ २४ ॥**

**यदि तद्वदपेक्षात्र न स्याद् भेदोऽत्र नैव हि ।**
**सदसद्रूपता बुद्धेर्भवेदन्यतरत्र नः ॥ २५ ॥**

**[1]सत्सम्बन्धे सदित्येवं सद्रूपत्वं प्रतीयते ।**
**नास्त्यत्रेदमितीदं तु तदसंयोगहेतुकम् ॥ २६ ॥**

अथापि रूपरसादीनां बुद्धिभेदाद्भेदः, तथापि सदंशासदंशयोः सदसद्-बुद्धिभेदादस्त्येव भेद इत्याह—**बुद्धिमात्रे**त्यर्धेन । ननु धर्मातिरेकेण धर्मिणोऽनुपलम्भनात् कथं धर्मयोर्भेदः ? इष्टो हि धर्मभेदो नो धर्म्यभेदेऽप्यवस्थिते'—इत्युक्तम् । एकदेशावच्छिन्नरूपादि[2]समुदायमात्रालम्बनैकार्थप्रत्ययवत् प्रदेशप्रत्यय इत्याशङ्क्याह—**न च देशाद्यभिन्नाना**मित्यर्धेन । तदुक्तम्—

"आविर्भावतिरोभावधर्मकेष्वनुयायि यत् ।
तद्धर्मि यत्र वा ज्ञानं प्राग्धर्मग्रहणाद् भवेत् ॥"

तस्माद् यथैव रूपादीनां सद्रूपतया गुणरूपतया एकधर्मिधर्मतया वाभेदः, स्वरूपापेक्षया तु भेदः, तथैव च सदंशासदंशयोरपीत्याह—**सद्गुणद्रव्यरूपेणेति** ॥

अथैवं नाभ्युपगम्येत तदा सदंशासदंशयोर्भेदप्रतिभासो न स्यादित्याह—**यदि तद्वदपेक्षात्रेति** ॥

"भावांशेनैव सम्बन्धो योग्यत्वात्"—इति यदुपक्रान्तम्, तदुपसंहरति—**सत्सम्बन्ध इति** ॥

ननु विष्फारिते चक्षुषि प्रदेशसंज्ञानं चोत्पद्यते[3] नास्तीति ज्ञानं च—इह प्रदेशे घटो नास्ति—इति, निमीलिते च चक्षुष्युभयोरभावः । तत्र समाने तद्भावभावित्वे कथं प्रदेशज्ञानमक्षजम्, 'नास्ति' इति तु ज्ञानं तदसंयोगहेतु-

1. तत्सम्बन्धे सदित्येवं तद्रूपत्वं. चौ. मु.
2. समुदायमात्रालम्बन एवार्थः प्रत्ययवत्. मा.
3. चाद्येते. मा.

**गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षणात् ॥ २७ ॥**

**स्वरूपमात्रं दृष्ट्वापि पश्चात् किञ्चित् स्मरन्नपि ।
तत्रान्यनास्तितां पृष्टस्तदैव प्रतिपद्यते ॥ २८ ॥**

कमित्याशङ्क्याभ्युपगम्य तद्भावभावित्वमन्यथासिद्धतां दर्शयितुमाह—**गृहीत्वा वस्तुसद्भावमिति ।** भूप्रदेशग्रहणसापेक्षत्वादभावग्रहणस्य तस्य चाक्षजन्यत्वेन तद्भावभावित्वमन्यथासिद्धम् अभावज्ञानस्य । तद्यथा—विष्फारिते चक्षुषि दूर-व्यवस्थितेऽग्नौ रूपज्ञानं चोत्पद्यते स्पर्शज्ञानं च । तत्र रूपज्ञानमेवाक्षजमिष्यते स्पर्शज्ञानं त्वेकार्थसमवायिनो रूपादानुमानिकमिष्यते । तद्भावभावित्वं चान्यथा-सिद्धम्, एवमिहापीति श्लोकस्यार्थः ॥

अपरे त्वन्यथा वर्णयन्ति—विष्फारिते चक्षुषि प्रदेशग्रहणघटस्मरणोत्तर-कालम् 'घटो नास्ति' इति ज्ञानमक्षव्यापारस्य विज्ञानद्वयव्यवहितत्वेन नाक्षजं स्यात् इति । तदुक्तम्—गृहीत्वेति । तदयुक्तम्; [1]सविकल्पकस्याप्रत्यक्षप्रसङ्गात् तदपि गृहीत्वा निर्विकल्पकेन स्मृत्वा च पूर्वगृहीतमर्थं शब्दं च—स एवायम् इत्युपजायमानं नाक्षजं स्यात्—"तत्र शब्दार्थसम्बन्धं प्रमातुः स्मरतोऽपि च" इत्यादि, "न चापि स्मरणात् पश्चादिन्द्रियस्य प्रवर्तनम्" इत्यादि च पूर्वापर-विरुद्धं स्यात् । तस्मात् तद्भावभावित्वमन्यथासिद्धमनेन दर्शयतीत्येवमेव व्या-ख्येयम् ॥

इदानीं तद्भावभावित्वमेव नास्तीत्याह—**स्वरूपमात्रमिति ।** कश्चित् प्रदेशं स्वरूपेण दृष्ट्वा पुनः कालान्तरे प्रदेशान्तरगतस्य—आसीत्तत्र देवदत्तः ? इत्यन्येन पृष्टस्य प्रदेशं स्मृत्वा—नासीत्तत्र देवदत्तः इति ज्ञानमुत्पद्यमानमतीता-भावग्राहकत्वेन कथमक्षजं स्यादित्यर्थः ॥

तदनुपपन्नमिति केचित्—देवदत्तविविक्तस्य वा प्रदेशस्यावगतिरासीत्, तत्सहितस्य वा ? उभयथाप्युत्तरकालमन्येन पृष्टस्य प्रदेशवत् प्रतिपन्नतया देवदत्त-तदभावयोः स्मरणम्, नापूर्वावगतिः । किञ्चेदम् "स्वरूपमात्रं दृष्टं च" इति ? यदि तावत् भूप्रदेशस्य प्रतिपत्तिः, देवदत्तस्य तत्र न प्रतिपत्तिः, नाप्यप्रतिपत्तिरासीत्;

1. न हि सविकल्पकस्य. मा.

**न [1]चाप्यस्यानुमानत्वं लिङ्गाभावात् प्रतीयते ।**
**भावांशो ननु लिङ्गं स्यात् तदानीं नाजिघृक्षणात् ॥ २९ ॥**

**अभावावगतेर्जन्म भावांशे ह्यजिघृक्षिते ।**
**तस्मिन् प्रतीयमाने तु नाभावे जायते मतिः ॥ ३० ॥**

**न चैष [2]तस्य धर्मत्वं पदवत् प्रतिपद्यते ।**
**सह सर्वैरभावैश्च भावो नैकान्ततो गतः ॥ ३१ ॥**

तत उत्तरकालं देवदत्तांशे सन्देहः । अथ सावधारणभूप्रदेशग्रहणम्, तदन्याभावे संवित्तिपूर्वकमेव । तदुक्तम् "अयमेवे" इति । तत उत्तरकालं भूप्रदेशवत् देवदत्ताभावेऽपि स्मरणम् । तस्मादेवं व्याख्येयम्—भूप्रदेशप्रतिपत्तिवेलायां देवदत्तविषयं दृश्यादर्शनमासीत् । न च तदा 'नास्ति' इति विज्ञानमुत्पन्नम्, अजिघृक्षितत्वेन सहकारिकारणाभावेन च । इदानीं त्वन्येन पृष्टस्य प्रदेशदेवदत्तविषयदृश्यादर्शनं च स्मृत्वा—नासीत्तत्र देवदत्तः इति ज्ञानमुपजायमानमनवगतिविषयत्वेन प्रमाणमनक्षजं स्यादित्यर्थः ॥

एवं प्रमाणप्रमेययोः स्वरूपमुपवर्ण्य प्रत्यक्षाच्च भेदं प्रतिपाद्य इदानीमनुमानभेदमभावस्य दर्शयितुमाह—**न चाप्यस्यानुमानत्वमित्यर्धेन** । त्रिरूपलिङ्गजं विज्ञानमनुमानम् । न चात्र तदस्तीति तत्र चोदयति—**भावांशो ननु लिङ्गं स्यादिति** । तद्विकल्प्य दूषयति । भूप्रदेशाख्ये धर्मिणि घटाभावेऽनुमेये घटभावस्य[3] वा लिङ्गत्वं स्यात्, भूप्रदेशस्य वा ? न तावद्घटस्येत्याह—**तदानीं नाजिघृक्षणादिति** सपादेन श्लोकेन । घटाभावप्रतिपत्तिवेलायामप्रतीयमानस्य घटस्य कथं लिङ्गत्वम् ? तत्प्रतिपत्तिवेलायां च तदभावप्रतिपत्तिर्नास्तीत्यर्थः ॥

नापि भूप्रदेशस्यैव लिङ्गत्वम्, घटाभावेऽनुमेये भूप्रदेशस्य पदवत् तद्धर्मतया ग्रहणाभावादित्याह—**न चैष तस्य धर्मत्वमित्यर्धेन** । अनेनाभावप्रतिपत्तौ च लिङ्गत्वाभ्युपगमे सम्बन्धग्रहणाभावेन प्रतिपत्तिर्न स्यादित्याह—**सह सर्वैरित्यर्धेन** ॥

1. न चाप्यत्रानुमानत्वं. चौ. मु.
2. पक्षधर्मत्वम्. चौ. मु.
3. घटाभावस्य. मा.

**क्वचिद् भावेऽपि सद्भावो ज्ञातो यस्य कदाचन ।**
**तस्याभावोऽपि तत्रैव कदाचिदवगम्यते ॥ ३२ ॥**

**यत्राप्यदृष्टपूर्वत्वं यदभावस्य तत्र च ।**
**तदभावमतिर्दृष्टा सम्बन्धेऽक्षानपेक्षया ॥ ३३ ॥**

**कस्यचिद् यदि भावस्य स्यादभावेन केनचित् ।**
**सम्बन्धदर्शनं तत्र सर्वमानं प्रसज्यते ॥ ३४ ॥**

**गृहीतेऽपि च भावांशे नैवाभावेऽन्यवस्तुनः ।**
**सर्वस्य मतिरित्येवं व्यभिचारादलिङ्गता ॥ ३५ ॥**

**सम्बन्धे गृह्यमाणे च सम्बन्धिग्रहणं ध्रुवम् ।**
**तत्राभावमतिः केन प्रमाणेनोपजायते ॥ ३६ ॥**

**तदानीं न हि लिङ्गेन सम्बन्धिग्रहणं भवेत् ।**
**तत्रावश्यमभावस्य प्रमाणान्तरतो गतिः ॥ ३७ ॥**

इतश्च घटाभावेऽनुमेये भूप्रदेशस्य लिङ्गत्वं नास्ति, घटभावेऽपि भावादित्याह—**क्वचिदिति** ॥

यत्रापि यस्याभावो न कदाचित् प्रतिपन्नः, पुनस्तत्रैव तदभावः प्रतीयते, तत्र सम्बन्धग्रहणाभावेन तदवगतौ कथं लिङ्गत्वमित्याह—**यत्रापीति** ॥

नापि कस्यचित् सह सम्बन्धग्रहणेनान्यलिङ्गत्वम्, अतिप्रसङ्गादित्याह—**कस्यचिद्यदि भावस्येति** ॥

नापि भूप्रदेशप्रतिपत्तेः घटाभावप्रतिपत्तिं प्रति लिङ्गत्वम्, तदभावेऽपि भावादित्याह—**गृहीतेऽपि च भावांश इति** ॥

लिङ्गैकसमधिगम्ये च घटाभावे प्रमाणान्तरादवगतस्य सम्बन्धग्रहणाभावेनानुमेयत्वं न स्यात् । प्रमाणान्तरग्रहणपक्षेऽप्यभावस्य प्रमाणान्तरत्वप्रसङ्ग इत्याह—**सम्बन्धे गृह्यमाण** इत्यादिना श्लोकद्वयेन ॥

प्रत्यक्षादेरनुत्पत्तिर्न [1]च लिङ्गं भविष्यति ।
न विशेषणसम्बन्धस्तस्याः सामान्यतो भवेत् ॥ ३८ ॥

न चाप्यभावसामान्ये प्रमाणमुपजायते ।
व्यभिचाराद् विशेषास्तु प्रतीयेरन् कथं तया ॥ ३९ ॥

न चानवगतं लिङ्गं गृह्यते चेदसावपि ।
अभावत्वादभावेन गृह्येतान्येन हेतुना ॥ ४० ॥

स चान्येन ग्रहीतव्यो नागृहीते हि लिङ्गता ।
तद्गृहीतिर्हि लिङ्गेन स्यादन्येनेत्यनन्तता ॥ ४१ ॥

[2]लिङ्गग्यभावे तथैव स्यादनवस्थेयमित्यतः ।
क्वाप्यस्य स्यात् प्रमाणत्वं लिङ्गत्वेन विना ध्रुवम् ॥ ४२ ॥

ननु मा भूद्घटाभावेऽनुमेये घटस्य भूप्रदेशस्य वा लिङ्गत्वम्; प्रत्यक्षाद्यनुत्पत्तेर्भविष्यतीति चोदयति—**प्रत्यक्षादेरनुत्पत्तिरित्यर्धेन** । तद्विकल्प्य निराकरोति—**न विशेषणेत्यादिना** सार्धेन श्लोकेन । घटाभावेऽनुमेये प्रत्यक्षानुत्पत्तिमात्रस्य लिङ्गत्वं स्यात्, घटविषयाया एव वा ? न तावत् प्रत्यक्षाद्यनुत्पत्तिमात्रस्य, घटाभावेऽपि भावात्, अभावस्य चाप्रतीतेरित्यर्थः । यथा तु घटाभावेऽनुमेये घटविषयायाः प्रत्यक्षाद्यनुत्पत्तेर्लिङ्गत्वं नास्ति तथोपरिष्टाद्वक्ष्यामः—

"प्रमाणानामनुत्पत्ते[3]र्न चाभावस्य धर्मता"—इत्यत्र ॥

अवगतं च लिङ्गमनुमेयावगतौ करणम्; प्रत्यक्षाद्यनुत्पत्त्यात्मकं च लिङ्गमभावात्मकत्वात् प्रत्यक्षात्मकेनैव लिङ्गेन ग्रहीतव्यम्; तस्याप्येवमेव ग्रहणेऽनवस्थेत्याह—**न चेति** श्लोकद्वयेन ॥

एवं लिङ्गग्रहणेऽनवस्थामभिधायेदानीं लिङ्ग्यग्रहणेऽपि सम्बन्धिग्रहणकाले तथैवेत्याह—**लिङ्ग्यभावे तथैवेति** इत्यन्तेन ॥

तस्मादनवस्थापरिहारार्थमन्तेऽपि प्रत्यक्षाद्यनुत्पत्तेरुभयाभावं प्रति सम्बन्धग्रहणनिरपेक्षाया एव प्रमाणत्वं वक्तव्यम् । अतश्च सिद्धं प्रमाणान्तरत्वमित्याह—**अतः । क्वाप्यस्येति** सैकपदेनार्धेन ॥

1. तु. चौ. मु.
2. लिङ्गाभावे. चौ. मु.
3. नाभावस्यापि चौ. मु.

नास्तीति धीः फलं चैषा प्रत्यक्षादेरजन्मनः ।
तस्यैव च प्रमाणत्वमानन्तर्यात् प्रतीयते ॥ ४३ ॥

त्रिलक्षणेन या बुद्धिर्जन्यते सानुमेष्यते ।
न चानुत्पत्तिरूपस्य कारणापेक्षिता क्वचित् ॥ ४४ ॥

मानं कथमभावश्चेत् प्रमेयं चास्य कीदृशम् ।
मेयो यद्वदभावो हि मानमप्येवमिष्यताम् ॥ ४५ ॥

[1]भावात्मके [2]यथा मेये नाभावस्य प्रमाणता ।
तथाभावप्रमेयेऽपि न भावस्य प्रमाणता ॥ ४६ ॥

भावात्मकस्य मानत्वं न च राजाज्ञया स्थितम् ।
परिच्छेदफलत्वाद्धि प्रामाण्यं स्याद् द्वयोरपि ॥ ४७ ॥

एवं तावत् पर्युदासवृत्त्या "नास्ति" इति ज्ञानं प्रमाणमाश्रित्य बहिर्भावः प्रतिपादितः । यदा तु प्रसज्यप्रतिषेधाभिप्रायेण घटाभावे प्रमेये दृश्यादर्शनमेव प्रमाणम्, "नास्ति" इति ज्ञानं फलम्; तदानुमानगन्धोऽपि नास्तीत्याह— **नास्तीति धीरिति** । कस्मादित्याह— **त्रिलक्षणेन या बुद्धिरिति** । त्रिरूपलिङ्ग[3]-जन्यं विज्ञानमनुमानम् । न च प्रागभावस्य जन्यत्वम्, नापि विज्ञानरूपत्व-मित्यर्थः ॥

कथमवस्तुनः प्रमाणत्वमिति चोदयति— **मानं कथमभावश्चेदिति** । तत्र परिहारमाह— **प्रमेयं चात्र कीदृशमिति** । तदेव विवृणोति— **मेयो यद्वदभावो हीत्यर्धेन** ॥

तत्र यथैव भावात्मके प्रमेये घटादावभावस्य प्रामाण्यं नास्ति, तथैवाभाव-रूपेऽपि प्रमेये भावात्मकयोः प्रत्यक्षानुमानयोः प्रामाण्यं नास्तीत्याह— **भावात्मके यथेति** ॥

यद् भावात्मकस्याप्यनुमानादेः परिच्छेदफलत्वेन प्रमाणत्वम्, तदभाव-स्याप्यभावपरिच्छेदकत्वेन समानमित्याह— **भावात्मकस्य मानत्वमिति** ॥

1. इतोऽस्मिन् प्रकरणे मूलश्लोकाः न समग्रा दृश्यन्ते मातृकायाम्.
2. तथा. चौ. मु. 3. इति रूपजन्यम्. मा.

**यदि चास्य प्रमाणत्वमभावत्वेन नेष्यते ।**
**वस्तुनः कारणत्वं हि दृष्टमित्यभिमानिता ॥ ४८ ॥**

**न लिङ्गत्वप्रमेयत्वे भवेतां तद्वदेव हि ।**
**तथा सति च पूर्वोक्तो व्यवहारो न सिध्यति ॥ ४९ ॥**

**प्रमाणानामनुत्पत्तेर्नाभावस्यापि धर्मता ।**
**यत्राभावोऽस्ति तेनास्याः सम्बन्धो नैव विद्यते ॥ ५० ॥**

**यो न संनिहितस्तत्र तस्य धर्मो भवेदियम् ।**
**न च तस्य प्रमेयत्वं धर्मधर्मित्ववर्जनात् ॥ ५१ ॥**

[1]यद्यवस्तुत्वेनाभावस्य प्रमाणत्वं नेष्यते, लिङ्गत्वमपि तर्हि [2]न प्राप्नोतीत्याह—**यदि चेति** सार्धेन श्लोकेन । जनकविशेषस्य लिङ्गत्वम्, अवस्तुनः कथं जनकत्वमित्यभिप्रायः ॥

प्रमाणान्तरत्ववदनुमानत्वमपि मा भूदिति चेदित्याशङ्कयाह—**तथा सति चेत्यर्धेन** ॥

यदि वाभावप्रमाणाभावेन—"वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रया" इति [3]यदुक्तं तदसदित्यर्थः । "प्रमाणानामनुत्पत्तेः"—इत्यादेस्तु श्लोकचतुष्टयस्यापकृष्य व्याख्यानं कर्तव्यम् । यत्रेदमुक्तम्—"प्रत्यक्षादेरनुत्पत्तिर्लिङ्गं[4] तत्र भविष्यति ।" इति, तत्र घटाभावेऽनुमेये प्रत्यक्षानुत्पत्तिमात्रस्य व्यभिचारेण लिङ्गत्वं नास्तीत्युक्तम्—"न विशेषणसम्बन्धस्तस्याः"—इत्यादिना । सांप्रतमिदमुच्यते—नापि घटविषया प्रत्यक्षानुत्पत्तिर्लिङ्गम्[5] अपक्षधर्मत्वात् । न तावत् घटाभावेऽनुमेये तद्धर्मत्वम्, घटविषया तद्विपर्ययधर्मत्वं कथं प्रतिपद्यत इत्याह—**प्रमाणानामित्यर्धेन** । अत [6]एव न संनिहितभूप्रदेशधर्मत्वमित्याह—**यत्राभावोऽस्ति तेनास्या इत्यर्धेन** ॥

तत्रासंनिहितघटस्य धर्मो भवेदियम् । तस्य तु धर्मधर्मिरहितत्वेनानुमेयत्वं न भवतीत्याह—**यो न संनिहित इति** ॥

1. यस्य वस्तु. मा.
2. Omitted. न. मा.
3. तदुक्तम्. मा.
4. न च लिङ्गं. चौ. मु.
5. पत्तिलिङ्गत्वम्. मा.
6. एवम्. मा.

अभावेन तु सम्बन्धो भवेत् तद्विषयत्वतः।
तज्ज्ञानाद् विषयत्वं च ज्ञाने मेयं न विद्यते ॥ ५२ ॥

संयोगसमवायादिसम्बन्धो नैव विद्यते ।
नागृहीते हि धर्मत्वं गृहीते सिद्धसाधनम् ॥ ५३ ॥

अभावशब्दवाच्यत्वात् प्रत्यक्षादेश्च भिद्यते ।
प्रमाणानामभावो हि प्रमेयाणामभाववत् ॥ ५४ ॥

अभावो वा प्रमाणेन स्वानुरूपेण मीयते ।
प्रमेयत्वाद् यथा भावस्तस्माद् भावात्मकात् पृथक् ॥ ५५ ॥

कर्माणि सर्वाणि फलैः समस्तैः
सर्वैर्यथावच्च यदङ्गकाण्डैः ।

ननु विषयविषयिभावलक्षणेन सम्बन्धेन घटविषयापि प्रत्यक्षानुत्पत्तिरभावतां प्रतिपद्यत इत्याशङ्कयाह—**अभावेन त्विति**। घटाभावप्रतिपत्त्युत्तरकालं प्रत्यक्षानुत्पत्तेर्विषयविषयिभावः प्रतीयमानो न प्रमितावङ्गमित्यर्थः ॥

नापि संयोगसमवायादिना सम्बन्धेन घटविषयायाः प्रत्यक्षानुत्पत्तेर्घटाभावधर्मत्वम्, तदभावादित्याह **संयोगे**त्यर्धेन । अवगते च घटाभावे प्रत्यक्षानुत्पत्तेस्तद्धर्मतया ग्रहणम्; तथा सति च पक्षधर्मग्रहणोत्तरकालमनुमेयाभाव इत्याह— **नागृहीत** इत्यर्धेन ॥

एवं प्रत्यक्षादेरभावस्य भेदमभिधायेदानीं तत्रैव प्रमाणमाह—**अभावशब्दवाच्यत्वादिति**। प्रमाणाभावो धर्मी, प्रत्यक्षादेर्भिद्यत इति साध्यो धर्मः, अभावशब्दवाच्यत्वादिति हेतुः, प्रमेयाभाववदिति दृष्टान्तः ॥

तत्रैव प्रमाणान्तरमाह—**अभावो वेति**। प्रमेयाभावो धर्मी, स्वानुरूपेण प्रमाणेन मीयत इति साध्यो धर्मः, प्रमेयत्वादिति हेतुः, भावाख्यप्रमेयवदिति दृष्टान्तः। तथा च सिद्धं भावात्मकात् प्रत्यक्षादेरभावस्यान्यत्वमित्यर्थः ॥

इदानीमभावप्रतिपादनस्य स्वतन्त्रोपयोगितामाह—**कर्माणि सर्वाणीति**। तदुक्तम्—"वस्त्वसङ्करसिद्धिश्च" इति ॥

न सङ्गतानीह परस्परं च
नाङ्गं तदेतत्प्रभवं क्रतूनाम् ॥ ५६ ॥

युक्त्यागमाभ्यामिति तर्कितोऽयं
प्रमाणषट्कं प्रविभज्य भाष्ये ।
[1]अतोऽधिकं यद् द्वयमिष्टमन्यै-
र्भेदो न तस्येत्यपि सिद्धमेतत् ॥ ५७ ॥

इह भवति शतादौ सम्भवाद्या सहस्रा-
न्मतिरवियुतभावात् सानुमानादभिन्ना ।
जगति बहु न तथ्यं नित्यमैतिह्यमुक्तं
भवति तु यदि सत्यं नागमाद् भिद्यते तत् ॥ ५८ ॥

इत्यभावप्रकरणम्

एवं प्रत्यक्षादेरभावपर्यन्तस्य व्यभिचारनिवृत्त्यर्थं लक्षणमुक्तमुपसंहरति— **युक्त्यागमाभ्यामिति** । सहस्रदर्शनेन शतसद्भावात्मकस्यानुभवस्याविनाभावेनानुमानान्तर्भावात् 'इह वटे यक्षः प्रतिवसति'—इत्येवमात्मकस्य चैतिह्यस्याप्रमाणत्वात् प्रमाणत्वे वा आगम एवान्तर्भावान्न पृथग्लक्षणं कृतमित्याह— **अतोऽधिकमिति** ॥

इति भट्टोम्वेकविरचितायां तात्पर्यटीकाया-
मभावः समाप्तः

—: * :—

1. ततोऽधिकम्. चौ. मु.

# अथ चित्राक्षेपः

**परलोकफलाः पूर्वमाक्षिप्ताश्चोदनाः परैः ।**
**इदानीमैहिकाक्षेपः सूत्रकारेण [1]वोच्यते ॥ १ ॥**

"अनिमित्तं विद्यमानोपलम्भनत्वात्" इति सूत्रावयवं प्रत्यक्षसूत्रादपच्छिद्य वृत्तिकारेण प्रतिज्ञातचोदनाप्रामाण्याक्षेपपरं व्याख्यातम्—"प्रत्यक्षादीन्यन्यानि भवन्तु नाम प्रमाणानि; शब्दस्तु न प्रमाणम्, अनिमित्तं अप्रमाणं शब्दः, विद्यमानोपलम्भनत्वात्" इत्यादिना । तस्य— "नन्वथ"—इत्यादिना सह पौनरुक्त्यमाशङ्क्य वार्तिककारः परिहारद्वयमाह—**परलोकफला इति ।** परलोकफलानामग्निहोत्रादिवाक्यानां तत्राक्षेपः; ऐहिकफलानां तु चित्रादिवाक्यानामत्रेति । अथवा पूर्वोक्तमेव सर्वविषयमाक्षेपं सूत्रारूढं करोतीति श्लोकार्थः । तदनुपपन्नम्; "नन्वतथाभूतमपि" इत्यत्र लोकायतिकमतेन परतःप्रामाण्याभ्युपगमेन........ "चोदना[2] नैव प्रमाणम्" इति स्वतःप्रामाण्यप्रतिज्ञाक्षेपः; अत्र तु अनन्तरं फलानुपलब्ध्या प्रत्यक्षविरोधेन च प्रतिज्ञार्थस्याक्षेपः; तत्र का पुनरुक्तता ? यच्चेदमुक्तम्—परलोकफलानां तत्राक्षेपः, [3]अत्र त्वैहिकफलानाम्—इति; तदप्ययुक्तम्; परतः प्रामाण्येनार्थासंस्पर्शितया वा तत्राक्षेपः, स चैहिकफलानामप्यविशिष्टः । अत्र "यदा तावदसौ विद्यमानासीत् तदा फलं न दत्तवती, असती कथं दास्यति" इत्येवम्; स परलोकफलानामप्यविशिष्टः । अपि च, अत्रैहिकफलानामाक्षेपेऽभ्युपगम्यमाने—"एवं दृष्टापचारस्य स्वर्गाद्यपि फलं नास्ति इति मन्यामहे" इति विरुध्येत । यदपि "सूत्रकारेण वोच्यते" इत्युक्तम्, तदप्याक्षेपैक्ये सति घटते, नान्यथेति । [4]तस्मान्न पौनरुक्त्याशङ्कया परिहारद्वयमनुपपन्नम् । अपि च, धात्वर्थकर्मत्वे निराकृते विधिबलेन भावनाकर्मत्वे साधिते अपूर्वद्वारेण च कालान्तरभावित्वेऽवस्थिते गुणवादेन च दृष्टविरोधपरिहारे दत्ते कोऽयमाक्षेप इति न विद्मः । अलमतिविस्तरेण; [5]प्रकृतमेव आक्षेपविभागं मुख्यं वस्त्वनुसरामः ॥

1. चोद्यते. चौ. मु.
2. चौदनैवप्रमाणम्. मा.
3. अत्रत्वितिफलानाम्. मा.
4. तस्मान्न पौन. मा.
5. प्रकृतमेव आक्षेपविपमाग. मा.

**चित्रापशुफलत्वादिविषयाश्चोदना मृषा ।**
**प्रत्यक्षाद्यधिकारेऽपि तैरर्थासङ्गतिर्यतः ॥ २ ॥**

**यदीदृक् तन्मृषा दृष्टं विप्रलिप्सोर्यथा वचः ।**
**नदीतीरे फलानीति तत्रादृश्यानि तानि चेत् ॥ ३ ॥**

**न वा पशुफला चित्रा स्वकाले तददानतः ।**
**स्नानभुज्यादिवत्तेऽपि तत्साध्या न भवन्ति वा ॥ ४ ॥**

**तदुत्पत्तावसद्भावात् [1]स्वर्गतृप्तिसुखादिवत् ।**
**वैधर्म्येणोभयत्रापि भवेतां सुखमर्दने ॥ ५ ॥**

**आनन्तर्य[2]मनुक्तं चेन्न सामर्थ्यावबोधनात् ।**

इदानीम्—"अनिमित्तं विद्यमानोपलम्भनत्वात्" इत्यनेनाक्षिप्तं प्रयोगमाह—**चित्रापशुफलत्वादीति** श्लोकद्वयेन । चोदनेति धर्मी, [3]मृषात्वं साध्यो धर्मः, चित्रापशुफलत्वादीत्यादि धर्मिविशेषणम्, प्रत्यक्षादिगोचरप्रतिपादकस्य तैरेवासङ्गतेरिति हेतुः, विप्रलिप्सुवाक्यवदिति दृष्टान्तः ॥

प्रयोगान्तरमाह—**न वेति** [4]त्रिपाद्या । चित्रेति धर्मिनिर्देशः, पशुफला न भवतीति साध्यो धर्मः, चित्रोत्प[5]त्तावनन्तरादर्शनादिति हेतुः, स्नानभुज्यादिवदिति दृष्टान्तः । प्रयोगान्तरमाह—[6]**तेऽपीति** त्रिपाद्या । पशवो धर्मिणः, चित्रासाध्या न भवन्तीति साध्यो धर्मः, चित्रोत्पत्तावदर्शनादिति हेतुः, स्वर्गतृप्तिसुखादिवदिति दृष्टान्तः । सुखशब्दः प्रत्येकमभिसंबध्यते । "न वा पशुफला चित्रा"—इत्यत्र प्रयोगे मर्दनं वैधर्म्येण प्रयोक्तव्यम्; "तेऽपि तत्साध्या न भवन्ति वा" इत्यत्र मर्दनसुखमित्याह—**वैधर्म्येणेत्यर्धेन** । तस्मादनन्तरं फलानुपलब्ध्या साध्यसाधनभावाभावेन विधिविषयबाधः ॥

ननु विधिः साध्यसाधनसम्बन्धे प्रमाणम्; तेन [7]च कुर्वत्येवोक्ता; अतः कोऽयमनन्तरफलानुपलब्ध्या विधिविषयबाध इति चोदयति—**आनन्तर्यमनुक्तं**

1. स्वर्गे तृप्ति. चौ. मु.
2. मयुक्तं. चौ. मु.
3. दृष्टत्वं. मा.
4. स्नानभुज्यादिवदित्यन्तेन इति स्यात्
5. चित्पत्तवदनन्तरदर्श. मा.
6. तेऽपीति सहितया त्रिपाद्या इति स्यात्
7. चाकुर्वन्नेवोत्तमत. मा.

शब्दैकदेशभूतेन तेन तत् प्रतिपादितम् ॥ ६ ॥

कालान्तरानुपादानात् कर्मस्वाभाव्यतोऽपि च ।
चोद्यमानस्य चित्रादेरानन्तर्यं विशेषणम् ॥ ७ ॥

अत्र तावदसंवादो विरोधश्चोत्तरत्र[1] तु ।
स्वर्गयानविरुद्धो हि भस्मीभावोऽत्र दृश्यते ॥ ८ ॥

यज्ञायुधिवचो मिथ्या प्रत्यक्षेण विरोधतः ।
साधर्म्येण शिलावाक्यं वैधर्म्येणाप्तभाषितम् ॥ ९ ॥

[2]शरीरान्याभिधायिन्यां नासौ [3]यज्ञायुधी भवेत् ।
न चास्य यजमानत्वं सद्भावोऽपि च [4]दुष्करः ॥ १० ॥

**चेदिति** । तत्र परिहारमाह—**नेति** त्रिपाद्या । कालान्तरे निमित्ताभावेन फलानुत्पादात् सामर्थ्यादानन्तर्यमाक्षिप्तमित्यर्थः ॥

इदानीं भावार्थस्वभावपर्यालोचनयानन्तर्यं प्रतीयत इत्याह—**कालान्तरानुपादानादिति** । तदुक्तम्—"कर्मकाले च कर्मफलेन भवितव्यम्, यत्काले हि मर्दनम्, तत्काले मर्दनसुखम्" इति ॥

इदमपरमाक्षेपभाष्यम्—"दृष्टविरुद्धमपि भवति किञ्चिद्वैदिकं वचनम्" इति । तत्र पूर्वोत्तरयोर्विषयभेदमाह—**अत्र तावदिति** । चित्रावाक्ये प्रत्यक्षग्रहणयोग्यस्याग्रहणं बाधः; [5]इतरत्र तु स्वर्गगमनविरुद्धभस्मोपलब्धौ प्रत्यक्षविरोधः ॥

एतमेव प्रत्यक्षविरोधं त्रैलक्षण्येनोपनिबध्नाति—**यज्ञायुधिवच इति** । वचनं धर्मि, यज्ञायुधीति धर्मिविशेषणम्, मिथ्येति साध्यो धर्मः, प्रत्यक्षविरुद्धार्थप्रतिपादकत्वादिति हेतुः, [6]शिलावाक्यं साधर्म्येण आप्तवाक्यं च वैधर्म्येण दृष्टान्तौ ॥

अथात्मनो गमनमयमाह, शरीरगमनविरुद्धस्य च प्रत्यक्षेण ग्रहणादविरोधः तत्राह—**शरीरान्याभिधायिन्यामिति** । यज्ञायुधिशब्देन शरीरमुच्यते ; नात्मा,

1. उत्तरस्य. चौ. मु.
2. शरीराद्यदि चान्यः स्यात्. चौ. मु.
3. युक्तायुधः. मा.
4. दुर्लभः. चौ. मु.
5. इतरत्र तु गमन. मा.
6. शिलावाक्यं साधर्म्येण च वैधर्म्येण ; omitted दृष्टान्तौ in मा.

यदि स्याद् विधिशब्दोऽत्र नैवादर्शनतो भवेत् ।
विशेषोऽस्येति भेदेन नो [1]चाद्यादिदं ततः ॥ ११ ॥

विधिशब्दे भविष्यत्त्वं फलस्य परिकल्प्य हि ।
विरोधपरिहारः स्याद् वर्तमाने [2]तु नास्त्यसौ ॥ १२ ॥

फलं [3]तु न भवेदेवं भस्मीभावाद् विधावपि ।
[4]तत्सामान्येन यान्यापि कल्पना तां निषेधति ॥ १३ ॥

यजमानश्रवणात् गमनश्रवणाच्च, शरीरस्य हि यज्ञायुधसम्बन्धः श्रूयते, नात्मनः । तस्यैव चासर्वगतत्वेन गमनयोग्यता ; यागयोग्यश्च यजमानशब्दप्रवृत्तौ निमित्तम् ; वर्णत्रयस्य च यागेऽधिकारः, शरीरस्य च वर्णत्रयविभागः, नात्मनः ; तद्गमनविरुद्धोपलम्भश्च प्रत्यक्षेण ; आत्मनस्तु सद्भावोऽपि तावत् प्रतिपादनीय इति ॥

"न चैष याति इति विधिशब्दः"–इति भाष्यं चित्रादिवाक्याद् यज्ञायुधिवाक्यस्य भेदोपन्यासे प्रयोजनं दर्शयति । तद्व्याचष्टे—**यदि स्यादिति** ॥

यदि 'यायात्' इति श्रूयेत, ततः कालत्रयान्यतमसस्पृष्टानुपादानेन चित्रादिवाक्यफलवदस्यापि स्वर्गगमनस्य कालान्तरभावित्वं परिकल्प्य विरोधपरिहारेण [5]कुत्राप्यदर्शनमेव स्यादिति; "याति" इति तु वर्तमानतावच्छिन्नस्य गमनस्योपादानं तद्विरुद्धभस्मग्रहणेन चित्रादिवाक्यवैलक्षण्यात् भेदोपन्यासः ।

एतदेव विवृणोति—**विधिशब्दे भविष्यत्त्वमिति** ॥

ननु विधावपि शरीरविनाशात् कालान्तरेऽपि कथं गमनस्य फलत्वम् ? सत्यमेतत् ; विधिफलत्वेन तु ज्योतिष्टोमादिवाक्यसामान्यतोऽदृष्टकल्पनाप्यत्र नास्तीत्याह—**फलन्त्विति** ॥

1. नोपात्तं स्यात्. चौ. मु.
2. अपि. चौ. मु.
3. च. चौ. मु.
4. तत्सामर्थ्येन या चान्या. चौ. मु.
5. यत्राप्यदर्शनमेव. मा.

प्रायश्चैवंप्रकारत्वमर्थवादेषु दृश्यते ।
मन्त्रेषु चेति ते सर्वे पक्षीकार्याः प्रयत्नतः ॥ १४ ॥

एवं सत्यग्निहोत्रादिवाक्येष्वपि मृषार्थता ।
वेदवाक्यैकदेशत्वाच्चित्रादिवचनेष्विव[1] ॥ १५ ॥

[2]स्वपक्षसाधनं [3]तावदमृषा वैदिकं वचः ।

ननु "धूम एवाग्नेर्दिवा ददृशे" इत्यादावपि प्रत्यक्षविरुद्धहेतुसद्भावादनैकान्तिकत्वमाशङ्क्याह—**प्रायश्चेति** ॥

"तत्सामान्यादग्निहोत्रादिचोदनास्वपि नाश्वासः" इति भाष्यम् । अस्यार्थं प्रयोगारूढं करोति—**एवं सतीति** । अग्निहोत्रादिवाक्यं धर्मि, मृषात्वं साध्यो धर्मः, वेदैकदेशत्वादिति हेतुः चित्रादिवाक्यवदिति दृष्टान्तः ॥

"तस्मान्न चोदनालक्षणो धर्मः" इत्युपसंहृते सत्यौत्पत्तिकसूत्रावयवं वृत्तिकारः सिद्धान्ते योजयितुमाह—"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानम् इति । तुशब्दः पक्षं व्यावर्तयति । [4]अपौरुषेयः शब्दस्यार्थेन सम्बन्धः, तस्य ज्ञानं यथा चोदनालक्षणः सम्यक्प्रत्ययः"—इत्यादिना । तत्र वार्तिककारः "अथ यत् उक्तमनिमित्तं शब्दः, कर्मकाले फलादर्शनात् कालान्तरे च कर्माभावात् प्रमाणं नास्तीति तदुच्यते ; न स्यात् प्रमाणम्, यदि पञ्चैव प्रमाणान्यभविष्यन् ; येन येन प्रमीयते तत्तत् प्रमाणम् ; शब्देनापि प्रमीयते, तत् [5]शब्दोऽपि प्रमाणं यथैव प्रत्यक्षम् । न च प्रमाणेनावगतं प्रमाणान्तरेण नावगतमित्येतावतानवगतं भवति । न चैवं श्रूयते—"कृते कर्मणि तावत्येव फलं भवति"—इति, अनेन "यत्तु प्रत्यक्षविरुद्धं वचनम् "स एष यज्ञायुधी यजमानः" इति शारीरकं व्यपदिशतीत्युच्यते शरीरसम्बन्धाद्यस्य तच्छरीरं सोऽपि तैर्यज्ञायुधैर्यज्ञायुधी" इत्यनेन च सह पौनरुक्त्यमाशङ्क्याह—**स्वपक्षसाधनं तावदिति** । "औत्पत्तिकस्तु

१. ष्वपि. चौ. मु.
2. अत्र. चौ. मु. ग्रन्थे चित्राक्षेपः समाप्तः । संबन्धाक्षेपः प्रारभ्यते इति विभागः कृतः ।
3. तावन्न मृषा. चौ. मु.
4. असौ पुरुषेय. मा.
5. शब्दोऽपि Omitted मा.

**स्वार्थे वक्त्रनपेक्षत्वात् [1]पदार्थ पदबुद्धिवत् ॥ १६ ॥**

**तत्कृतः प्रत्ययः सम्यङ् नित्यवाक्योद्भवत्वतः ।**
**वाक्यबुद्धिवदेवात्र पूर्वोक्ताश्चापि हेतवः ॥ १७ ॥**

**नित्याञ्छब्दार्थसम्बन्धानाश्रित्योक्तेन हेतुना ।**
**स्वतःप्रमाण्यसिध्यर्थमप्रामाण्ये निराकृते ॥ १८ ॥**

**असम्बन्धोद्भवत्वेन पुरो मिथ्यात्वमब्रवीत् ।**
**सम्बन्धोऽस्ति [2]च नित्यश्चेत्युक्तमौत्पत्तिकादिना ॥ १९ ॥**

शब्दस्यार्थेन सम्बन्धः तस्य ज्ञानम् "—इत्यनेन तावत् स्वपक्षसिद्धौ प्रमाणमुक्तम् । अथ यदुक्तम्—"यत्तु प्रत्यक्षविरुद्धम् "—इत्यनेन प्रत्यक्षानुपलब्धिप्रत्यक्षविरोधाख्यं दूषणद्वयम्, [3]तत परिहरिष्यति । सांप्रतमौत्पत्तिकस्त्वित्यनेनैव सूचितं प्रयोगमाह—**अमृषेति** त्रिपाद्या । वैदिकं वचनं धर्मि, अमृषेति साध्यो धर्मः, स्वाथ वक्त्रनपेक्षत्वादिति हेतुः, पदार्थे पदबुद्धिवदिति दृष्टान्तः ॥

प्रयोगान्तरमाह—**तत्कृत** इत्यादिकेन **बुद्धि वदेवेत्यन्तेन** । प्रत्ययो धर्मी वैदिकवचनकृत इति प्रत्यक्षादिनिरासेन धर्मिणं विशिनष्टि सिद्धसाध्यतापरिहारार्थम्, सम्यगिति साध्यो धर्मः, नित्यवाक्योद्भवत्वत इति हेतुः, वाक्यालम्बनबुद्धिवदिति दृष्टान्तः । तत्कृतः प्रत्ययः सम्यक् इत्यत्र च साध्ये पूर्वोक्ता अपि हेतवः—"दोषवर्जितैः करणैर्जन्यमानत्वात्"—इत्यादयो वक्तव्या इत्याह—**अत्र पूर्वोक्ताश्चापि हेतव इति** ॥

एवं स्थिते पूर्वपक्षभाष्यम्—"स्यादेतत्; नैव शब्दस्यार्थेन सम्बन्धोऽस्ति, कुतोऽस्य पौरुषेयतापौरुषेयता वा "—इत्यादि । तस्य तात्पर्यं व्याचष्टे—**नित्यानिति** सार्धश्लोकेन ॥

शब्दार्थयोर्नित्यसम्बन्धाभ्युपगमेन स्वार्थे वक्त्रनपेक्षत्वात—इत्यनेन हेतुनाप्रामाण्यनिवृत्तिद्वारेण स्वतःप्रामाण्ये साधिते सिद्धान्तवादिना, पूर्वपक्षवादी शब्दा-

1. पदार्थपद. चौ. मु.
2. न. मा.
3. Omitted. तत्. मा.

**मिथ्यात्वस्य निरासार्थं तत्परैर्नेष्यते द्वयम् ।**
**नैव चास्त्यत्र सम्बन्धः कृतको वेति वक्ष्यते ॥ २० ॥**

**असम्भवेन शेषाणां संश्लेषः परिशिष्यते ।**
**[1]तस्मिन्नेव च सम्बन्धे प्रतीतिर्लौकिकी ध्रुवा ॥ २१ ॥**

**तन्निषेधमतः प्राह न शब्दोऽर्थेन सङ्गतः ।**
**तद्देशानन्तरादृष्टेर्विन्ध्यो हिमवता यथा ॥ २२ ॥**

**एवमर्थो द्वयं वापि साधनीयमसङ्गतम् ।**

र्थयोः सम्बन्धाभावेन मिथ्यात्वमाह — "स्यादेतत् नैव"—इत्यादिना । एतदेव विवृणोति—**सम्बन्ध इति ।** शब्दार्थयोः सम्बन्धोऽस्ति, स च नित्यः—इत्युक्ते "औत्पत्तिकस्तु" इत्यादिना सूत्रेण परः सम्बन्धाभावं समयं च प्रतिपादयतीत्यर्थः । तत्रानन्तरेण—"स्यादेतत् नैव" इत्यादिना सम्बन्धाभावं प्रतिपादयति; "यदि प्रथमश्रुतो न प्रत्याययति, कृतकस्तर्हि शब्दार्थयोः सम्बन्धः" इत्यादिना च व्यवहितेनाभ्युपगम्य सम्बन्धकृतकत्वं प्रतिपादयिष्यतीत्याह—**नैव चेति** ॥

"अथ स्यात् क्षुरमोदकशब्दोच्चारणे मुखस्य पाटनपूरणे स्याताम्"—इत्यनेन संयोगलक्षणसम्बन्धं निराकरोति; न चासौ मीमांसकेनाभ्युपगत इत्यसम्बद्धत्वमित्याशङ्क्याह — **असम्भवेनेति** सपादेन श्लोकेन । प्रथमश्रुतादर्थप्रत्ययाभावेन स्वाभाविकसम्बन्धाभावाच्छब्दार्थयोश्च नित्यत्वेन कार्यकारणलक्षणसम्बन्धाभावाद् भिन्नयोस्तादात्म्याभावेन सम्बन्धोऽभ्युपगम्यमानः परिशेष्यात् संयोग एवावतिष्ठते; तत्रैव च लौकिकानां सम्बन्धप्रसिद्धिः । अतस्तस्यैव निषेधमाह "क्षुर" इत्यादिनेत्यर्थः । एतदेव प्रयोगारूढं करोति—**न शब्दोऽर्थेनेति** त्रिपाद्या । शब्दो धर्मी, अर्थेन न संयुज्यत इति साध्यो धर्मः, अर्थदेशानन्तरमदर्शनादिति हेतुः, विन्ध्यो हिमवता यथेति दृष्टान्तः ॥

ताभ्यामेव हेतुदृष्टान्ताभ्यां प्रतिज्ञाद्वयेन प्रयोगद्वयमाह—**एवमर्थो द्वयं वापीति ।** अर्थस्य शब्देन सह सम्बन्धो नास्ति, शब्ददेशानन्तरमदर्शनात् ।

1. अस्मिन्नेव.

क्षुरेत्यादि च सिध्यर्थं हेतोरुक्तमथापरः ॥ २३ ॥

शक्तिरूपं गृहीत्वाह संश्लेषो यदि वार्यते ।
सम्बन्धासिद्धसाध्यत्वमथ सम्बन्धमात्रकम् ॥ २४ ॥

पितापुत्रादिसम्बन्धैरनैकान्तः प्रसज्यते ।
एकभूम्यादिसम्बन्धाद् दृष्टान्ते साध्यहीनता ॥ २५ ॥

वाच्यवाचकसम्बन्धनिषेधे लोकबाधनम् ।

द्वयोर्वा परस्परसंयोगो नास्ति, परस्परदेशानन्तरमदर्शनात् इति उभयत्रापि "विन्ध्यो हिमवता यथा"—इति दृष्टान्तश्च । "क्षुर"—इत्यादिना तद्देशानन्तरमदर्शनात्—इत्यस्य हेतोः सिद्धतामाहेत्याह—**क्षुरेत्यादि च सिध्यर्थं हेतोरुक्तमिति** । [1]शब्दार्थयोरेकत्र सद्भावेन मुखे एवार्थस्यापि सद्भावात् मोदकशब्दोच्चारणे सति [2]अर्थसंबन्धिनो मुखस्य पूरणं स्यादित्युक्तं भाष्ये । एवमवस्थिते सिद्धान्तभाष्यम्—"उच्यते—योऽत्र व्यपदेश्यः, तमेकं न व्यपदिशति भवान् प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणसम्बन्धम्"—इति । तस्य वार्तिककारस्तात्पर्यमाह—**अथापरः शक्तिरूपं गृहीत्वाहेति** । वाच्यवाचकशक्तिद्वयाभिप्रायेणाह वृत्तिकारः प्रत्याय्यस्य प्रत्यायकस्य च संज्ञासंज्ञिलक्षणसम्बन्धमिति । इदानीं पूर्वपक्षवादिप्रयुक्तस्यानुमानस्य प्रतिज्ञार्थं विकल्प्य दूषयितुमाह—**संश्लेषो यदि वार्यत इति** सशेषेण सार्धेन श्लोकेन । शब्दार्थयोः संयोगनिषेधेऽपि सिद्धसाध्यता । सम्बन्धमात्रनिषेधे च सम्बद्धयोरपि पितापुत्रयोः स्वस्वामिनोश्च तद्देशानन्तरमदर्शनादित्यस्य सद्भावादनैकान्तिकत्वम् । साध्यविकलता च दृष्टान्तस्य हिमवद्विन्ध्ययोरप्येकभूमिलक्षणसम्बन्धसद्भावेनेत्यर्थः ॥

वाच्यवाचकसम्बन्धनिषेधेऽप्यनन्यथासिद्धार्थप्रत्ययान्यथानुपपत्त्यार्थापत्तिबाधा इत्याह—**वाच्यवाचकेति** । लोकशब्दोऽर्थापत्तिरेव कारणत्वेनोपलक्षिता वाच्यवाचकसम्बन्धाभावेन च प्रतिज्ञार्थोऽपि प्रतिपादयितुं न शक्यत इति वचन-

1. शब्दयोरेकत्र. मा. 2. गर्भसंबन्धिनो. मा.

**विरोधश्च स्ववाक्येन न हि सम्बन्धवर्जितैः ॥ २६ ॥**

**प्रतिज्ञार्थं पदैः शक्यः प्रतिपादयितुं परः ।**
**अभिधानक्रियायां हि कर्मत्वं वाच्यसंश्रितम् ॥ २७ ॥**

**शब्दानां करणत्वं वा कर्तृत्वं वा निरूपितम् ।**
**प्रतिपत्तावुपादानात् साहित्ये च विवक्षिते ॥ २८ ॥**

**[1]नियम्येते यदेकस्यां सम्बन्धः सोऽर्थशब्दयोः ।**
**तत्र यद्यप्यसम्बन्धः [2]कारकाणां परस्परम् ॥ २९ ॥**

विरोध इत्याह—**विरोधश्चेति** । कथं वाच्यवाचकसम्बन्धाभावेन धर्मिधर्मप्रतिपादकत्वमित्यर्थः ॥

किं पुनरिदं वाचकत्वम्, यन्निषेधे लोकबाधः स्ववचनविरोधश्चेत्युच्यते ? यदि तावद्गमकत्वम्, धूमादेरपि वाचकत्वप्रसङ्गः । अथ शब्दावच्छिन्नगमकत्वम्, विवक्षायामपि शब्दनिष्ठायां वाचकत्वप्रसङ्गः । नाप्यात्मसादृश्येन गमकत्वं वाचकत्वम्, द्वित्वस्यापि पादादौ वाचकत्वप्रसङ्गात्; शब्दे तन्नास्तीत्यवाचकत्वप्रसङ्गादित्याशङ्क्याह—**अभिधानक्रियायामिति** । अभिधानक्रियायां हि यदभिधेयार्थसमवेतं कर्मत्वं तद्वाच्यत्वम्; यदभिधायकशब्दसमवेतं करणत्वं कर्तृत्वं वा तद्वाचकत्वमिति । नन्वर्थप्रतिपत्तिरभिधानक्रिया । [3]अर्थः प्रतिपत्तावुपादानमिति तस्याञ्च धूमादेरपि करणत्वेन वाचकत्वप्रसङ्गः । उच्यते; रूपत्रयादिरहितादनवगताद्वा या अर्थप्रतिपत्तिः साभिधानक्रियेत्यदोषः ॥

नन्वेवमपि शब्दार्थयोः सम्बन्धोऽनुपपन्न एव [4]कारकाणां परस्परसम्बन्धाभावेनेत्याशङ्क्याह—**प्रतिपत्ताविति** । एकस्यामभिधानक्रियायामुपादीयमानत्वात् गोत्वगोशब्दयोस्तयैव तावत् प्रथमसम्बन्धः; तत्सम्बन्धे च तयोः साहित्यमुपादीयमानमवगतत्वेन विवक्षितम् । तत उत्तरकालमरुणैकहायन्यादिवत् परस्परनियमः । स एव चानयोः परस्परसम्बन्ध इत्याह—**तत्र यदीत्यर्धत्रयेण** ॥

1. नियम्यते यदेकस्यां
2. अयं पादः मा. न वर्तते.
3. वत्यप्रतिपत्तावुपादानादिति तस्याश्च
4. कारणात्. मा.

**तथापि [1]यत्क्रिया तस्यामुपकार्योपकारिता ।**
**[2]स क्रियासङ्गतेः पश्चात् सम्बन्धः कीर्त्यते तयोः ॥ ३० ॥**

**न [3]चाप्यत्राविनाभाव उपयोगीति साधितम् ।**
**संज्ञेति गमकत्वं चेन्न तदङ्गमियं भवेत् ॥ ३१ ॥**

**[4]गमयन्तीं श्रुतिं दृष्ट्वा कल्प्यते व्यवहारतः ।**
**न चैषा गमयत्यर्थं सम्बन्धेऽनवधारिते ॥ ३२ ॥**

**तस्माद् गमकता पश्चाद् धूमादेरिव जायते ।**
**सानङ्गं तद्वदेव स्यान्नेयं धूमादिभिः समा ॥ ३३ ॥**

**निरूपितेऽविनाभावे तत्र तत्कारिता ह्यसौ ।**
**गमकत्वेन पूर्वं च तत्र नोत्पद्यते मतिः ॥ ३४ ॥**

एतस्यामभिधानक्रियायामुपकार्योपकारकभावेन सम्बद्धयोरर्थशब्दयोर्योऽयं परस्परनियमः, स एव तयोः सम्बन्धः । साक्षात् सम्बन्धाभावेऽपि तस्यैव चार्थप्रतिपत्तावङ्गत्वम् । अविनाभावस्तु विद्यमानोऽपि नार्थप्रतिपत्तावङ्गमित्युक्तम् ‘सम्बन्धं यं तु वक्ष्याम’ इति । तद् दर्शयति—**नेत्यर्धेन** ॥

अत्र चोदयति—**संज्ञेत्यादिना** सपादेन श्लोकद्वयेन । संयोगाविनाभावकार्यकारणभावतादात्म्याभावे सति संज्ञासंज्ञिभावोऽभ्युपगम्यमानः पारिशेष्याद् गम्यगमकभाव एवावशिष्यते । न च तस्यार्थप्रतिपत्तावङ्गत्वम्, अर्थप्रतिपत्तिलक्षणकार्यावसेयत्वात् । तदाह—गमयन्तीं श्रुतिं दृष्ट्वैवोत्तरकालं शब्दे गमकता प्रतीयत इति । न च सम्बन्धमन्तरेण शब्दस्यार्थप्रतिपादकत्वम् । तत्राप्याह—**न चेति** । तस्मात् सम्बन्धान्तरनिमित्तार्थप्रतिपत्त्युत्तरकालं गमकत्वमवगम्यमानमर्थप्रतिपत्तावनङ्गम्, यथान्वयव्यतिरेकनिमित्तार्थप्र[illegible]रकालं धूमादौ गमकत्वमवगम्यमानमनङ्गम् । तच्च सम्बन्धान्तरं धूमादाविवान्वयव्यतिरेकाख्यम् । ततश्च तद्वदेवानुमानप्रसङ्गः । तत्र परिहारमाह—**नेयमित्यादिना** न्यूनपादेन श्लोकत्रयेण ॥

1. या क्रिया. मा.
2. सा. मा.
3. चात्राप्यविनाभाव. चौ. मु.
4. गमयन्ती हि दृष्टैषा मा.

इह वाचकतायाः प्राङ् नाविनाभाविता मतिः ।
[1]यदैव चेह सम्बन्धं वृद्धेभ्यः प्रतिपद्यते ॥ ३५ ॥

तदैव गमकोऽस्यायमिति नान्यस्वरूपतः ।
कथयन्ति क्वचित् तावद् बोद्धव्योऽस्मादयं त्विति ॥ ३६ ॥

क्वचिद् वाचक इत्येवं वाच्योऽयमिति चोच्यते ।
क्वचिदुच्चरिताच्छब्दाद् [2]दृष्ट्वार्थविषयां क्रियाम् ॥ ३७ ॥

केषांचित् तत्र बोद्धृत्वमनुमानात् [3]प्रकल्प्यते ।
एतेनास्माद् यतः शब्दादर्थोऽयमवधारितः ॥ ३८ ॥

तेन नूनमिमौ सिद्धौ [4]वाच्यवाचकशक्तिकौ ।
इत्थं वाचकता सिद्धा [5]सङ्कीर्णार्था ततः परम् ॥ ३९ ॥

अन्वयव्यतिरेकाभ्यां निष्कृष्टेऽर्थे नियम्यते ।

युक्तं धूमादौ गमकत्वस्यार्थप्रतिपत्तावनङ्गत्वम्; अविनाभावनिमित्तार्थप्रतिपत्त्युत्तरकालावसेयत्वात्; शब्दार्थयोस्तु गम्यगमकतां वृद्धेभ्यः प्रतिपद्यत इति तस्यैवार्थप्रतिपत्तावङ्गत्वम्; न हि तत्रार्थप्रतिपत्तेः पूर्वं धूमादाविवाविनाभावावगतिः, ततोऽर्थप्रतिपत्ति, ततः पश्चाद् गमकत्वावगतिरिति कथं पुनरर्थप्रतिपत्तेः पूर्वं वृद्धेभ्यो गम्यगमकभावः प्रतिपद्यते इत्याशङ्क्य त्रिप्रकारतां दर्शयति—**कथयन्तीत्यादिना** श्लोकत्रयेण । क्वचित् तावदेवं कथयन्ति—गोशब्देन गोत्वलक्षणोऽर्थोऽवगन्तव्यः, क्वचिदेवम्—गोशब्दो गोत्वस्य वाचकः गोत्वं च गोशब्दस्य वाच्यम्—इति । क्वचित्तु कश्चित् कश्चिदाह—गामानय—इति; ततस्तेन शाबलेयादिकमर्थमानीयमानमुपलभ्य पार्श्वस्थोऽर्थापत्त्यैवं प्रतिपद्यते—गोशब्दादनेनायमर्थः [6]प्रतिपन्नः; तस्मादनयोर्वाच्यवाचकभावः—इति ॥

ननु गोत्वसत्ताद्रव्यगुणादिसंसृष्टं शा..लेयमानीयमानमुपलभ्य कथमर्थापत्त्या गोशब्दस्य गोत्ववाचकत्वं प्रतिपद्यत इत्याशङ्क्याह—**इत्थं वाचकतेति** ॥

1. सदैव. मा.
2. दृष्टार्थ. मा.
3. प्रतीयते. चौ. मु.
4. लोके वाचकशक्तिकौ. चौ. मु.
5. सङ्कीर्णापि.
6. प्रतिपन्नः इति. मा.

**बहुजातिगुणद्रव्यकर्म [1]भेदावलम्बनान् ॥ ४० ॥**

**[2]प्रत्ययान् सहसा जानान् श्रौतलाक्षणिकात्मकान् ।**
**न लोकः कारणाभावान्निर्धारयितुमिच्छति ॥ ४१ ॥**

**बलाबलादिसिध्यर्थं वाक्यज्ञास्तु विविञ्चते ।**
**[3]कक्ष्यान्तरितसामान्यविशेषेषु हि दुर्बलः ॥ ४२ ॥**

**सामान्यवचनः शब्दो जायते लक्षणाबलात् ।**
**तेनावश्यं विवेक्तव्यं शब्देन कियदुच्यते ॥ ४३ ॥**

**कियद्वा नित्यसम्बन्धादभिधेयेन लक्ष्यते ।**
**तत्र प्रयोगबाहुल्यात् [4]तद्विशेषेष्वसत्स्वपि ॥ ४४ ॥**

यद्यपि संसृष्टस्यानयनम्, तथापि वक्ष्यमाणाभ्यामन्वयव्यतिरेकाभ्यां नियत [5]एवार्थे वाचकत्वमवगम्यते । एतदेव विवृणोति—**बह्विति** श्लोकद्वयेन ॥

यद्यपि गोशब्दोच्चारणे गोत्वसत्ताव्यक्तिगुणादयोऽर्थाः प्रतीयन्ते; न च तन्निर्धारणे लोकस्य प्रयोजनम्—अयं वाच्यः, अयं गम्यमानः—इति; तथापि सामान्यविशेषशास्त्रयोर्बलाबलादिप्रसिध्यर्थं मीमांसकास्तर्केण विविक्तं कुर्वन्ति—गोत्वमेव वाच्यम्, सत्तादयस्त्वभिधेयाविनाभावेन लक्ष्यमाणगुणयोगेन वा प्रतीयन्ते—इति न च लौकिकविरुद्धता तर्कस्य, प्रतीतिमात्रव्यवहारित्वाल्लोकस्य । पुनरत्र सामान्यमात्रवाच्यत्वे सामान्यशास्त्रस्य व्यक्तिशास्त्राद् दुर्बलत्वमित्याह—**कक्ष्यान्तरितेति** । सामान्यविशेषशब्देनात्र व्यक्तयोऽभिधीयन्ते । यतश्चोक्तप्रकारेण सप्रयोजनोऽयमन्वयव्यतिरेकावसेयो विवेकः तेनः कर्तव्य इत्याह—**तेनावश्यं विवेक्तव्यमिति** ॥

तावन्वयव्यतिरेकौ दर्शयति—**तत्र प्रयोगबाहुल्यादिति** । यत्र यत्र गोत्वं तत्र तत्र प्रयोगाद् बाहुलेयाभावेऽपि शाबलेये प्रयोगात् सत्तादिसमन्वितेऽपि

1. भेदावलम्बनात्. मा.
   भेदावलम्बिन. चौ. मु.
2. प्रत्ययात्सहसा जाता
   श्रौतलाक्षणिकात्मकात्. चौ. मु.
3. कक्षान्तरित. चौ. मु.
4. तत्प्रयोगेषु. चौ. मु.
5. एवार्थो. मा.

प्रयोगात् परसामान्ये सति चाप्यप्रयोगतः ।
[1]सास्नाद्युत्पन्नसम्बन्धगोत्वमात्रस्य वाचकः ॥ ४५ ॥

गोशब्द इति विज्ञानमन्वयव्यतिरेकजम् ।
तस्माद् गमकतैवादावभिधायकता पुनः ॥ ४६ ॥

तन्निमित्तेति सम्बन्धः संज्ञासंज्ञित्वलक्षणः ।
[2]सम्बन्धनियमोऽयन्तु याविनाभावितोच्यते ॥ ४७ ॥

सम्बन्धग्रहणात् पूर्वं यस्मान्न गमयत्यतः ।
गवादेर्नाभिधाशक्तिर्देवदत्तपदे यथा ॥ ४८ ॥

यथैव गमकः शब्दो व्यवहारात् प्रतीयते ।
तथैव शक्तिविज्ञानं तस्योपायोऽवगम्यते ॥ ४९ ॥

महिष्यादावप्रयोगादन्वयव्यतिरेकबलेनेदृशं विज्ञानमुपजायते—गोत्वस्यायं वाचको गोशब्दः—इति ॥

उपसंहरति—**तस्मादिति** । तस्मादर्थप्रतिपत्तेः पूर्वमर्थापत्त्या वाचकत्वमेव प्रतीयते ; ततस्तन्निमित्तमेव गमकत्वविशेषाभिधायकत्वमुत्तरकालमवगम्यत इति सिद्धः [3]शक्तिद्वयलक्षणः सम्बन्धः । अविनाभावस्तु तस्यैव नियामक इत्युक्तमित्याह—**सम्बन्धनियम इति** ॥

एवमवस्थिते पूर्वपक्षभाष्यमाह—"यदि प्रत्यायकः शब्दः, प्रथमश्रुतः किं न प्रत्याययति"—इति । तदनेनोपक्षिप्तं प्रयोगमाह—**सम्बन्धग्रहणादिति** । गोशब्दो धर्मी, गोत्वं प्रति तस्य वाचिका शक्तिर्नास्तीति साध्यो धर्मः, सम्बन्धग्रहणात् पूर्वमप्रतिपादकत्वादिति हेतुः, देवदत्तपदवदिति दृष्टान्तः ॥

अत्र सिद्धान्तभाष्यम्—"सर्वत्र नो दर्शनं प्रमाणम् ; प्रत्यायक इति हि प्रत्ययं दृष्ट्वावगच्छामः, न प्रथमश्रुत इति प्रथमश्रवणे प्रत्ययमदृष्ट्वा ; यावत्कृत्वः श्रुतेन इयं संज्ञा इत्यवधारितं भवति, तावत्कृत्वः श्रुतादर्थावसायः"—इति । तद्व्याचष्टे—**यथैव गमक इति** । गोशब्दस्य हि शक्तिद्वयनियमसम्बन्धबलेनार्थे

1. सास्नाद्येकार्थसंबन्धि. चौ. मु.
2. संबन्धनियमे यत्तु. मा.
3. शक्तिद्वयविलक्षणः. मा.

**स्वरूपग्रहणं चास्य यथा व्याप्रियते फले ।**
**[1]तथा संबन्धविज्ञानं नाशक्तिस्तत्कृता भवेत् ॥ ५० ॥**

**यत्साधकतमत्वेन कस्यचित् किञ्चिदुच्यते ।**
**तस्यानुग्राहकापेक्षा न स्वशक्तिविघातिनी ॥ ५१ ॥**

**न हि तत् कारणं लोके वेदे वा किञ्चिदीदृशम् ।**
**इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥ ५२ ॥**

**प्रत्यात्मनियतत्वाच्च [2]तयैव करणं भवेत् ।**
**बाह्यान्तरविभागेन क्वचित् स्याद्वा [3]विभाषया ॥ ५३ ॥**

प्रतिपादयतस्तज्ज्ञानमितिकर्तव्यता यथा धूमस्याविनाभावज्ञानम् । न च करणस्येतिकर्तव्यतापेक्षायामशक्तत्वमित्यर्थः ॥

अत्रैव दृष्टान्तमाह—**स्वरूपग्रहणमिति** । यथा स्वरूपग्रहणापेक्षायां शब्दस्यार्थप्रतिपत्तिलक्षणे फले शक्तिविघातो नास्ति तथा[4] सम्बन्धग्रहणापेक्षायामित्यर्थः ॥

अपि च, अभिधानक्रियायां कारकत्वं वाचकत्वम्; तस्य च संबन्धग्रहणस्वरूपग्रहणलक्षणे[5]तिकर्तव्यताद्यनुग्राहकापेक्षा न कारणशक्तिविघातं करोतीत्याह—**यत्साधकतमत्वेनेति** ॥

न चैतदभिनवं यच्छब्दे; यतो वैदिका आग्नेयादयो लौकिकाश्चक्षुरादयः स्वक्रियायामितिकर्तव्यतापेक्षाः । तदाह—**न हि तत् कारणमिति** ॥

एवं तावत् वैदिकलौकिककारणानुग्राहिणीं प्रयाजादिदृढमुष्टिलक्षणामितिकर्तव्यतामभिधायेदानीं करणस्वरूपोपपादिकामाह—**प्रत्यात्मनियतत्वाच्चेति** । काष्ठानां हि पाकप्रवृत्तौ ज्वालादयोऽवान्तरव्यापारलक्षणाः प्रतिकारकं च नियताः कारणादीनामुत्पादकाः । ननु रूपप्रतिपत्तिलक्षणायां क्रियायामिन्द्रियालोकसमन-

1. यथा. मा.
2. यथैव. चौ. मु.
3. विवक्षया. चौ. मु.
4. यथा. मा.
5. इतिकर्तव्यतापेक्षाद्यग्राहिका. मा.

उद्विग्नो [1]ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि ।
किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया ॥ ५४ ॥

[2]नित्यवृत्तौ तु नान्धानां दृष्टिर्दीपशतैरपि ।
रूपादिदर्शने यस्मात् तस्माच्चक्षुः प्रकाशकम् ॥ ५५ ॥

शरीरात्ममनोयोगादसाधारणताबलात् ।
विज्ञानासत्तिभावाच्च चक्षुः कारणमिष्यते ॥ ५६ ॥

तथैवेहापि सम्बन्धज्ञानमङ्गं प्रसिद्धितः ।

स्कत्वादीनां समाने तद्भावभावित्वे कथमिन्द्रियस्यैव करणत्वम् , आलोकादीनां तु करणानुग्राहकत्वमित्याशङ्क्याह—उद्विग्नो हीति ॥

साधकतमं करणम्; तमबर्थश्चातिशयः; अन्धकारोद्विग्नश्चालोकस्यैव साधकतमत्वं विवक्षति; तदा चक्षुरादेरालोकं प्रत्यनुग्राहकत्वम् । विवक्षावशेनैतदुक्तम् । परमार्थतस्तु चक्षुरिन्द्रियस्यैव रूपप्रतिपत्तौ करणत्वम्; आलोकस्यानुग्राहकत्वम्; अन्धस्य प्रदीपसमवधानेऽपि रूपाद्यप्रतिपत्तेः ।

ननु यदि शक्तः किमित्यपेक्षते ? अपेक्षते चेदपेक्ष्यमाणस्यैव शक्तत्वमुभयोर्वा । [3]सहकारिकारणसमवधानं शक्तिः । उच्यते—यथा रूपप्रतिपत्ताविन्द्रियस्यालोकसहितस्य आलोकस्य वेन्द्रियसहितस्य उभयोर्वा शक्तत्वम्, एवं शब्दस्य वा सम्बन्धग्रहणसहितस्य सम्बन्धग्रहणस्य वा शब्दसहितस्य उभयोर्वा शक्तत्वमित्यदोषः ॥

अधुना "बाह्यान्तरविभागेन" इति यदुक्तम्, तद्विवृणोति—शरीरेति ॥

शरीरसम्बद्धात्मसमवेते रूपज्ञाने आलोकापेक्षया चक्षुरिन्द्रियस्यैव प्रत्यासत्तेः साधकतमत्वेन करणत्वम्; असाधारण्येन च [4]संयोगापेक्षया तस्य रूपरसज्ञानसाधारणत्वात्; दार्ष्टान्तिके योजयितुमाह—तथैवेहापीति ॥

1. ह्यन्यकारेण. मा.
2. इत्यनिवृत्तौ तु नान्धादीनां दृष्टि दीपशतैरपि. मा.
3. सहकारिकारणसमवधानं वा शक्तिः. मा.
4. संस्कारापेक्षया. मा.

**गौरवात् करणत्वेन मतं चेत् केन वार्यते ॥ ५७ ॥**

**यथा चक्षुरितीदन्तु व्यभिचारित्वमुच्यते ।**
**देवदत्तेऽपि चाव्यक्तां शक्तिमिच्छन्ति युक्तितः ॥ ५८ ॥**

**[1]प्रकाशेऽवस्थिते बाह्ये नान्धे रूपं प्रतीयते ।**
**फलानन्तर्यतश्चापि चक्षुः करणमिष्यते ॥ ५९ ॥**

**पुरुषाधीनविज्ञानस्तेभ्यः प्रागनिरूपितः ।**
**यः संज्ञासंज्ञिसम्बन्धः स [2]चेष्टश्चेद् ध्रुवं कृतः ॥ ६० ॥**

**भिन्नदेशाद्यधिष्ठानाद् यथा रज्जुघटादिषु ।**

अथ विवक्षावशेनालोकवत् सम्बन्धग्रहणस्यैव करणत्वम्, शब्दस्तु तदनुग्राहक इति; भवतु नाम न कश्चिद् दोष इत्याह—**गौरवादिति** ॥

"यथा चक्षुर्द्रष्टृ न बाह्येन प्रकाशेन विना"—इति भाष्यम् । तद् व्याचष्टे—**यथा चक्षुरितीदमिति** । यत् सापेक्षत्वेनाशक्तत्वमुक्तम् तस्य चक्षुरादावालोकापेक्षायामनैकान्तिकत्वमित्यर्थः ॥

"देवदत्तपदे यथा"—इति दृष्टान्तत्वेन दत्तम्; तस्य साध्यविकलतामाह—**देवदत्तेऽपीति** । देवदत्तपदस्यार्थप्रतिपादिका शक्तिः कैश्चिदिष्यते । युक्तिं चाहुः, यस्माद् देवदत्तशब्द उच्चारिते न विद्मः कस्यार्थस्यायं वाचक इति ॥

एवमवस्थिते पूर्वपक्षभाष्यम्—"यदि प्रथमश्रुतो न प्रत्याययति, कृतकस्तर्हि शब्दस्यार्थेन सम्बन्धः"—इति । तद् व्याचष्टे—**पुरुषाधीनविज्ञान इति** ।

संज्ञासंज्ञिसम्बन्धो हि पुरुषान्वयव्यतिरेकानुविधायित्वात् पुरुषकार्यः समय एव । स चासौ नित्यस्यैवाभिव्यञ्जकः । अभ्युपगम्यापि तं समयाभ्युपगमेनैवार्थप्रतिपत्तेः किमन्तर्गडुनानेन ? तदभावेन समयमात्रादर्थप्रतिपत्तिर्न स्यात् । यत्र यत्र च संकेत्यते गोशब्दः तत्र तत्र प्रतिज्ञां न जनयति । "मुखे हि शब्दमुपलभामहे, भूमावर्थम्"—इति भाष्यम् । तद्व्याचष्टे—**भिन्नदेशाद्यधिष्ठानादिति** ॥

1. अयं श्लोको मा. न दृश्यते; न वा अत्र व्याख्यातः ॥

2. चेष्टश्चे.... ...व कृत. मा.

समं नास्त्यनयोः किञ्चित् तेनासङ्गतता स्वतः ॥ ६१ ॥

इति चित्राक्षेपवादः[1]

—: * :—

रज्जुघटयोरिव भिन्नत्वेन व्यपदेशभेदेन कृतकः शब्दार्थयोः सम्बन्धः । पुरुषाभावेन च वेदे समयाभावाच्चोदनैव प्रमाणमिति प्रतिज्ञानं समञ्जसम् ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
चित्राक्षेपः समाप्तः

—: + :—

1. अत्र इति संबन्धाक्षेपवादः इति. चौ. मु. वर्तते.

# अथ स्फोटवादः

**आधारात्मनि विज्ञाते सुखमाधेयबोधनम् ।**
**तस्यैव तावत् प्रस्तावादथ गौरित्यतोऽब्रवीत् ॥ १ ॥**

एवमवस्थिते सिद्धान्तवादी प्रश्नपूर्वकं शब्दार्थयोर्निरूपणं करोति । "अथ गौरित्यत्र कः शब्दः"—इत्यनन्तरेण शब्दनिरूपणम् ; "अथ गौरित्यस्य शब्दस्य कोऽर्थः"—इत्यनेन चार्थनिरूपणम् । तत्र सम्बन्धाक्षेपानन्तरं तत्परिहारावसरे शब्दार्थयोर्निरूपणमसम्बद्ध[1]माशङ्क्य वार्तिककारः सम्बद्धत्वं दर्शयितुमाह—**आधारात्मनीत्यर्धेन** । शब्दार्थसम्बन्धस्य हि शब्दार्थौ सम्बन्धिनावाधारौ । तत्राधारनिरूपणद्वारेणाधेयनिरूपणमेवेदं द्रष्टव्यमित्यर्थः । तत्रापि शब्दपूर्वकत्वादर्थप्रतिपत्तेः प्रथमं शब्दाख्यमेव सम्बन्धिनं निरूपयतीत्याह—**तस्यैव तावदित्यर्धेन** ॥

अत्रानुपासितगुरवश्चोदयन्ति—अथ गौः—इति कस्यायं प्रश्नः? न तावत् पूर्वपक्षवादिनः, तस्य सम्बन्धाक्षेपानन्तरं तत्प्रश्नानुपपत्तेः । नापि सिद्धान्तवादिनः ; तस्यापि सम्बन्धाक्षेपानन्तरं तत्प्रतिसमाधानावसरे [2]सम्बन्धिप्रश्नानुपपत्तेः । "गकारौकार" इत्यादि चोत्तरभाष्यं स्वप्रश्नानन्तरमसम्बद्धमेव स्यात् । यदपि वार्तिककारेणोक्तम्—

"आधारात्मनि विज्ञाते सुखमाधेयबोधनम् ।
तस्यैव तावत् प्रस्तावादथ गौरित्यतोऽब्रवीत् ॥" इति

तदपि यदि तावत् पूर्वपक्षवादी, ततोऽनुपपन्नम्, तेनाधारनिरूपणात् पूर्वमाधेयस्य निरूपितत्वात्—"यदि प्रथमश्रुतो न प्रत्याययति"—इत्यादिना । अथ सिद्धान्तवादी, तर्हि सिद्धान्तवादिप्रश्नोऽयम्; तत्रेदमनुपपन्नम्—कः स्वयमुत्तरं तेभ्यो दद्यात्—इति पूर्वपक्षवादिप्रश्नोऽयमिति दर्शयिष्यति । अपि च, सिद्धान्तवादिनोऽपि नित्यत्वेन सम्बन्धिनिरूपणं सम्बन्धनित्यत्वप्रतिपत्तावुपयुज्यते । तत्र स्फोटनिषेधेन वर्णत्रयात्मकत्वेन सम्बन्धिनिरूपणमसम्बद्धम्, स्फोटाख्येऽपि सम्बन्धिनि तन्नित्यत्वाभ्युपगमेन सम्बन्धनित्यत्वोपपत्तेः । तस्मादालूनविशीर्णोऽयं सह [3]विवरणेन भाष्यग्रन्थः ॥

1. निरूपणसंबन्धं. मा.
2. सम्बन्धप्रश्नानुपपत्तेः. मा.
3. Does he mean the वार्तिक ?

**प्रत्यक्षेऽपि विसंवादो येषां कः स्वयमुत्तरम् ।**
**तेभ्यो दद्यादिति ज्ञात्वा वृद्धानां मतमब्रवीत् ॥ २ ॥**

अत्र समाधिः—सिद्धान्तवादिन एवायं प्रश्नः [1]स हि सम्बन्धाक्षेपानन्तरं स्फोटात्मकसम्बन्धिनिषेधेन वर्णात्मकसंबन्ध्यवधारणरूपः । अथ गौः—इत्यत्र भवतः सम्बन्धी कः [3]शब्दोऽभिमतः, यस्यार्थेन सह सम्बन्धाभावं मन्यसे ? यदि वर्णत्रयातिरेकेण स्फोटाख्यः सम्बन्ध्यभ्युपगम्यते, ततस्तस्य वर्णत्रयातिरेकेण विधिमुख्येन बुद्धावप्रतिभासमानत्वेनाभावादर्थेन सह सम्बन्धो न नित्यो नापि सामयिकः स्यात् । नाप्यर्थप्रतिपत्तिलक्षणकार्यावगतस्य सम्बन्धावगतिः, अप्रतिपन्ने तस्मिन्नस्याभावेनेतरेतराश्रयप्रसङ्गात् । भावे वा वाक्यस्फोटापेक्षया पदस्फोटस्यासत्यत्वेन सम्बन्धसत्यता न स्यात् । वर्णत्रयात्मके तु सम्बन्धिनि विधिमुखेनावधारिते तस्यार्थेन सह स्वरूपेण सत्यत्वेन च सम्बन्धग्रहणं शक्यम् , वाक्यार्थवत् पदार्थयोरपि सत्यत्वादित्यभिप्रायः । वक्ष्यति च—

"कार्याणि वाक्यावयवाश्रयाणि
सत्यानि कर्तुं कृत एष यत्नः"—इति ॥

[4]तस्मात्—"अथ गौः" इति भाष्यं, आधारात्मनि---इति वार्तिकं द्वयमप्युपपन्नम् । "गकारौकारविसर्जनीयाः" इति भाष्यम् ; तस्य [5]स्वगतत्वेनोपवर्षग्रहणमसम्बद्धमाशङ्क्य व्याचष्टे—**प्रत्यक्षेऽपीति** । प्रतीयमानबाधितकल्पं वर्णत्रयमुत्सृज्य विधिमुखेन कार्यमुखेन वा प्रतिभासमानस्य निष्प्रयोजनस्य स्वप्रक्रिययाभ्युपगमो येषामनोघोपहतानाम् , कः स्वयमुत्तरं तेभ्यो दद्यादिति [6]पर्यालोच्योपवर्षग्रहणं भाष्ये । "ते च श्रोत्रग्रहणाः"—इत्यादि भाष्यम् । तस्यायमर्थः—श्रोत्रग्राह्ये वस्तुनि लोके शब्दशब्दः प्रयुज्यते । [7]गकारादय एव च—गौः—इत्येतस्मिन् विज्ञाने श्रौत्रे वर्णत्रयविधिमुखेन सम्बन्धिनिरूपणं प्रक्रान्तम्—गौः—इत्येतस्मिन् विज्ञाने श्रौत्रे वर्णत्रयव्यतिरेकेणार्थान्तरावभासोऽस्ति, उत न—इति । नास्ति—इति सिद्धान्तितम्—"ते च श्रोत्रग्रहणाः"—इति । तीर्थान्तरे तु कार्यमुखेन सम्बन्धिनिरूपणं कृतम्—

1. न हि सम्बन्धापेक्षानन्तरम्. मा.
2. अयं वाक्यभागः अधस्तात् "कृत एष यत्नः" इति इत्यतः परं मा. वर्तते.
3. शब्दाभिमतः मा.
4. इतः पूर्वं मा. स्फोटात्मक...अवधारणरूपः इति वाक्यभागः दृश्यते, यथोपरिनिर्दिष्टम्.
5. स्वमतत्वेनापकर्षग्रहणसम्बद्धमाशङ्क्य. मा.
6. पर्यालोच्योपपन्नग्रहणं. मा.
7. गकारादयद. मा.

तत्रार्थप्रत्ययद्वारं कृतं शब्दनिरूपणम् ।
येरासतां तु ते तावत् प्रत्यक्षेण [1]निरूप्यते ॥ ३ ॥

प्रत्यक्षं नाममर्थं नस्तेन चार्थोऽवधारितः ।
न हेतुर्बलवानन्यः परीक्ष्येत यतस्ततः ॥ ४ ॥

तस्माच्छ्रोत्रपरिच्छिन्नो यद्यर्थं गमयेन्न वा ।
सर्वथा तस्य शब्दत्वं लोकसिद्धं न हीयते ॥ ५ ॥

अथ गौः — इत्येतस्मिन् विज्ञाने श्रौत्रे बहवोऽर्थाः प्रतिभासन्ते ; तत्र कस्तेषां शब्दः ?—इत्युपक्रम्य—"येनोच्चरितेनार्थप्रत्ययो भवति, स शब्दः"—इत्युपसंहृतम् । तत्र वार्तिककारः कार्यनिरूपणद्वारेण सम्बन्धिनिरूपणपरित्यागेन विधिमुखेन यत् सम्बन्धिनिरूपणं कृतं भाष्ये, तत्र कारणमाह—**तत्रार्थप्रत्ययद्वारमिति**। गौः—इत्येतस्मिन्नक्षजे ज्ञाने वर्णत्रयातिरेकेण यदि तत् प्रकाशत एव, ततो व्यर्थं कार्यमुखेन तन्निरूपणम् । अथ न प्रकाशते, ततः सम्बन्धग्रहणाभावेन कुतस्ततोऽर्थावगतिः ? नापि कार्यमुखेनैवावगतस्य सम्बन्धग्रहणम्, इतरेतराश्रयात् ; अवगम्यमानं हि सम्बन्धबलेन तदर्थप्रतिपत्तिलक्षणं कार्यं करोति । तस्माद् विधिमुखेनैव गमकनिरूपणं कर्तव्यम् ; यतोऽवगतस्य सम्बन्धग्रहणबलेन गमकत्वम्, नान्यथा । कार्यमुखेन तु गमकनिरूपणं कारणचर्चावदुपेक्षणीयम् ।

एवं सत्यपि यदि प्रत्यक्षग्रहणयोग्यः स न भवेत्, ततः कार्यमुखेन कल्प्येतापि । न त्वेतदस्तीत्याह—**प्रत्यक्षं नाममर्थं न इति**। तत्र यदि—गौः—इत्यक्षजे विज्ञाने वर्णत्रयव्यतिरेकेणार्थान्तरमवभासत एव, ततो व्यर्थं कार्यमुखेन परिकल्पनमित्याह—**तेन चार्थ इति** त्रिपाद्या ॥

उपसंहरति—**तस्मादिति**। तस्माच्छ्रोत्रगृहीतस्य गकारादित्रयस्य यद्यर्थप्रतिपादकत्वं वक्ष्यमाणेन न्यायेन—"पूर्ववर्णजनितसंस्कारविशिष्टोऽन्त्यो वर्णः"—इत्यनेन, ततः शब्दकृतेयमर्थप्रतिपत्तिर्भविष्यति । अथापि नास्ति, तथापि शब्दशब्दप्रयोगाद् गकारादित्रयस्यैव शब्दत्वमित्यर्थः ॥

1. परीक्ष्यते. चौ. मु.

**यदि त्वर्थगतौ शक्तिर्न स्यादस्य ततः पुनः ।**
**वस्त्वन्तरं प्रकल्प्येत विना शब्दप्रसिद्धितः ॥ ६ ॥**

**अग्न्यादीन् गमयन्तोऽपि शब्दा धूमादयो न हि ।**
**न [1]चाप्रत्यायकत्वात् स्यादेकवर्णेष्वशब्दता ॥ ७ ॥**

**न च प्रागर्थविज्ञानाच्छ्रोत्रग्राह्ये[2]ष्वशब्दधीः ।**
**न चार्थज्ञानतः पश्चादश्रौत्रेष्व[3]पि शब्दता ॥ ८ ॥**

**परस्परानपेक्षाश्च [4]श्रौत्रबुध्या स्वरूपतः ।**

यदि तु वर्णत्रयस्यार्थप्रतिपादकत्वं प्रत्येकं संभूय युगपत् क्रमेण वा नोपपद्यते वक्ष्यमाणेन न्यायेन—"यद्यर्थप्रत्ययो नोपपद्यते"—इत्यादिना, ततोऽर्थप्रतिपत्त्यन्यथानुपपत्त्या अभ्युपगम्यत्वादेन कल्पना; न तु तस्य शब्दत्वम्, शब्दशब्दप्रयोगाभावादित्याह—**यदि त्वर्थगताविति** ॥

अपि च, "येनोच्चरितेनार्थप्रतिपत्तिर्भविष्यति, स शब्द"—इत्यस्य कोऽर्थः ? यदि तावद् गौः—इति श्रौत्रविज्ञानप्रतिभासनिरपेक्षमर्थप्रतिपत्तिहेतुत्वमेव केवलं स्फोटस्य शब्दत्वे कारणम्, ततो धूमादेरपि शब्दत्वप्रसङ्ग इत्याह—**अग्न्यादीनि**त्यर्धेन । अथ—गौः इत्यस्मिन् विज्ञाने श्रौत्रे बहूनां प्रतिभासमानानां यस्यार्थप्रतिपत्तिहेतुत्वम्, स शब्द इति, ततः गौः इत्येकस्मिन् पदे एकैकस्य वर्णस्फोटस्य तन्नास्तीति शब्दत्वं न स्यादित्याह—**न चाप्रत्यायकत्वमि**त्यर्धेन ॥

तथैकस्यैव पदस्फोटस्य सम्बन्धग्रहणानुरोधेन शब्दत्वमशब्दत्वं च प्राप्नोतीत्याह—**न च प्रागार्थविज्ञानादि**त्यर्धेन । अथ [5]श्रौत्रज्ञानप्रतिभासितैव शब्दत्वे कारणम्, नार्थप्रतीतिहेतुत्वम्; पदस्फोटस्यापि तर्हि [6]श्रौत्रविज्ञानप्रतिभासाभावेन सत्यप्यर्थप्रतीतिहेतुत्वे शब्दत्वं स्यादित्याह—**न चार्थज्ञानत** इत्यर्धेन ॥

कथं पुनरश्रौत्रत्वं पदस्फोटस्येत्याशङ्क्याह—**परस्परेति** । पूर्वशब्देनात्र कारणत्वेन परपरिकल्पिता गकारपरमाणव उच्यन्ते । परशब्देनापि [7]परपरि-

1. वाप्रत्यायकत्वात्. चौ. मु.
2. श्रोत्रग्राह्ये न. चौ. मु.
3. अश्रौत्रेऽपि च. चौ. मु.
4. श्रोत्रबुद्धया. चौ. मु.
5. श्रोत्रज्ञान मा.
6. श्रोत्रविज्ञान. मा.
7. परपरिकल्पितमभिव्यङ्ग्यं स्फोटं. मा.

**वर्णा एवावगम्यन्ते न [1]पूर्वपरवस्तुनी ॥ ९ ॥**

**अल्पीयसापि यत्नेन [2]शब्द उच्चरिते मतिः ।**
**यदि वा नैव गृह्णाति वर्णं वा सकलं स्फुटम् ॥ १० ॥**

**पृथङ् [3]नैवोपलभ्यन्ते वर्णस्यावयवाः क्वचित् ।**
**न च वर्णेष्वनुस्यूता दृश्यन्ते तन्तुवत् पटे ॥ ११ ॥**

**तेषामनुपलब्धेश्च न ज्ञाता लिङ्गसङ्गतिः ।**
**नागमस्तत्परश्चास्ति नादृष्टे चोपमा क्वचित् ॥ १२ ॥**

कल्पितोऽभिव्यङ्ग्यः स्फोटः गत्वादिकार्यं च गोशब्दावयव्या[4]त्वमभिधीयन्ते । एतदुक्तं भवति - गौः—इत्येतस्मिन् विज्ञाने परस्परानपेक्षं पूर्वापरशून्यं गकारादित्रयमवभासते—इति । सत्यपि च गोत्वप्रतिपत्तौ परस्परसापेक्षत्वे परपरिकल्पितगोशब्दावयव्यपेक्षयानपेक्षत्वमुच्यते ; अथवा सम्बन्धग्रहणात् पूर्वमर्थप्रतीत्यभावेऽपि तद्भावेन परस्परानपेक्षत्वमस्त्येव ॥

तत्र पूर्वं [5]गकारावयवनिराकरणप्रतिज्ञां तावत् साधयितुमाह—**अल्पीयसापीति** । सावयवस्य हि [6]पटादेः सकलप्रतिपत्त्यप्रतिपत्तिव्यतिरेकेणापि विकलप्रतीतिर्दृष्टा । गकारस्य तु नैव ग्रहणम् , सकलस्य वा ग्रहणम् ; न तु पटवत् विकलस्येत्यर्थः ॥

अपि च, सावयवस्य हि पटादेस्तन्त्वादयोऽनारब्धकार्याश्च प्रतीयन्ते । न तु तथा वर्णावयवानामुपलब्धिरित्याह—**पृथङ् नेति** । तन्तुवदिति वैधर्म्यनिदर्शनम् ॥

प्रत्यक्षाभावेन संबन्धग्रहणाभावादनुमानस्यापि वर्णावयवग्रहणे वृत्तिर्नास्तीत्याह-**तेषामित्यर्धेन** । आगमोऽपि गकारावयवस्य प्रतिपादको नास्तीत्याह—**नागमस्तत्परश्चास्ति इति** । न चादृष्टस्यादृष्टसदृशस्य वोपमानप्रमेयत्वमित्याह—**नादृष्टे चोपमा क्वचिदिति** ॥

1. पूर्वापरवस्तुनी. चौ. मु.
2. शब्दमुच्चरितं चौ. मु.
3. न चोपलभ्यन्ते. चौ. मु.
4. अभिधीयते मा.
5. गकारावयवि. मा.
6. घटादेः मा.

**न चाप्यनुपपत्तिः स्याद् वर्णस्यावयवैर्विना ।**
**[1]यथान्त्यावयवानां हि विनाप्यवयवान्तरैः ॥ १३ ॥**

**प्रत्यक्षेणावबुद्धश्च वर्णोऽवयववर्जितः ।**
**किं न स्याद् व्योमवच्चात्र लिङ्गं तद्रहिता मतिः ॥ १४ ॥**

**तद्वच्चास्यैकबुद्धित्वाद् देशभेदेऽप्यभिन्नता ।**
**ननु भेदमतिर्न स्यात् तवाप्येकत्वधीः कुतः ॥ १५ ॥**

**सामान्येषु ममैका धीस्तद्वच्चक्तिषु च भेदधीः ।**
**न हीष्टं भेदमात्रं [2]मे न स्यादेकत्वधीर्यतः ॥ १६ ॥**

अर्थापत्तिरपि गकारावयवग्राहिका नास्तीत्याह—**न चापीति** । यथा भवदभिमतानां गकारान्त्यावयवानां परमाणुसंज्ञकानां विनाप्यवयवान्तरैरुपपत्तिः, एवं स्थूलस्यापि गकारस्य भविष्यतीत्यर्थः ॥

एवमवयवाभावं प्रतिपाद्येदानीं तत्रैव प्रयोगमाह—**प्रत्यक्षेणेति** । वर्णोऽवयववर्जितः किं न स्यादिति प्रतिज्ञा, अवयवप्रतिभासरहिता मतिर्लिङ्गम्, व्योमवदिति दृष्टान्तः ॥

इदानीं पराभिव्यङ्ग्यगत्वनिराकरणप्रतिज्ञां साधयितुमाह—**तद्वदित्यर्धेन** । तदनेन प्रयोग उपक्षिप्तः—अस्येति प्रक्रान्तस्य वर्णस्य धर्मित्वेनोपादानम्, देशभेदेऽप्यभिन्नतेति साध्यो धर्मः, एकबुद्धिग्राह्यत्वादिति हेतुः, तद्वदिति प्रक्रान्तं व्योम निदर्शनम् । देशादिभेदेन प्रतीयमानस्यापि—स एवायम्—इत्येकबुद्धिग्राह्यत्वेन व्योमवदेकत्वं गकारस्येत्यर्थः । नन्वेकत्वे गकारस्य द्रुतमध्यमविलम्बितादिभेदेन प्रतिभासो न स्यादिति चोदयति—**ननु भेदमतिर्न स्यादिति** । तत्र सिद्धान्तवाद्याह—**तवाप्येकत्वधीः कुत इति** । द्रुतादिभेदेन गकारादिभेदे तवापि—स एवायम्—इति कथमेकत्वप्रत्यय इत्यर्थः ॥

तत्र गत्ववादी स्वाभिप्रायं तावदाह—**सामान्येष्विति** । यथैव तव शाबलेयादिषु भेदप्रत्ययेन भेदेऽवगते सामान्यालम्बनोऽयम्—स एवायं गौः—इति

1. यथान्त्यवयवानां. चौ. मु. २. हि. चौ. मु.

व्यक्तेस्तावन्न सामान्यं भिन्नरूपं प्रतीयते ।
वर्णेष्वन्यत्र शब्दत्वान्नान्यच्चेद् वर्ण एव सः ॥ १७ ॥

स एवेति [1]मतेनापि सादृश्यं न च तत् क्वचित् ।
[2]विनावयवसामान्यैर्वर्णेष्ववयवा न च ॥ १८ ॥

प्रत्यक्षविषयत्वाच्च नान्यापोहोऽपि युज्यते ।
वाचकश्चात्र लिङ्गं वा न तदानीं प्रतीयते ॥ १९ ॥

गकारादिषु सामान्यं शब्दत्वं कल्प्यते यथा ।

प्रत्ययः, तथा ममापि द्रुतादिभेदेन गकारव्यक्तिभेदे सति [3]सामान्यगत्वालम्बनोऽयं—स एवायं गकारः—इति प्रत्ययोऽपि भविष्यति इति गोत्ववद् गत्वप्रसिद्धिविशेषोऽवधार्यनामित्यर्थः ॥

एवमवस्थिते सिद्धान्तवादी गोत्वेन सह गत्वस्य विशेषमाह—**व्यक्तेरिति** ।

द्रुतादिभेदेन गकारव्यक्तिभेदेऽवस्थिते गत्वपरिकल्पनं जातिरूपं वा स्यात् सादृश्यरूपमपोहरूपं वा ? तत्र शब्दत्वव्यतिरेकेण वर्णेषु जातिरूपमवान्तरसामान्यं गत्वं तत्त्वान्यत्वेन विकल्प्य निराकर्तव्यम्, अन्यस्याग्रहणात्; अनन्यत्वे वा तत्राभावप्रसङ्गात् । नापि सादृश्यरूपं गत्वम्, द्रुतादिभेदेषु—स एवायम्—इति तत्त्वप्रत्ययादित्याह—**स एवेति मतेनापि सादृश्यमिति** । अपि च गकारावयवानामभावेन भूयोऽवयवसामान्ययोगलक्षणस्य सादृश्यस्यासद्भाव इत्याह—**न चेत्यादि** सशेषार्धेन ॥

नाप्यपोहरूपम्, द्रुतादिभेदेषु—स एवायं गकारः—इति श्रौत्रे विज्ञाने कथमवभासविषयतेत्याह—**प्रत्यक्षविषयत्वादित्यर्धेन** । प्रतीत्यभावेन च सम्बन्धग्रहणाभावाद् वाचकलिङ्गयोर्द्वयोरप्यभाव इत्याह—**वाचक इति** ॥

एवमवस्थिते गत्ववाद्याह—**गकारादिष्विति** । तस्यायमभिप्रायः—यथैव गकारौकारादिषु शाबलेयादिषु च भेदप्रत्ययाद् भिन्ना व्यक्तयोऽभेदप्रत्ययाच्चाभिन्नं

1. मतिनापि. चौ. मु.
2. विनावयवसामान्यात्. चौ. मु.
3. सामान्यगत्वालम्बनो यः. मा

**गोत्वं च शाबलेयादौ तथैतत् किं न कल्प्यते ॥ २० ॥**

**शाबलेयगकारादीन् निष्पन्नान् व्यक्तिरूपतः ।**
**[1]साम्यधीर्न हि गृह्णातीत्यतो जातिरपीष्यते ॥ २१ ॥**

**न तु [2]द्रुतादिभेदेन निष्पन्ना संप्रतीयते ।**
**गव्यक्तयन्तरविच्छिन्ना गव्यक्तिरपरा स्फुटा ॥ २२ ॥**

**तेनैकत्वेन वर्णस्य बुद्धिरेकोपजायते ।**
**विशेषबुद्धिसद्भावो भवेद् व्यञ्जकभेदतः ॥ २३ ॥**

**यथैव तत्र गत्वादि गम्यमानं द्रुतादिभिः ।**
**विशेषैरपि नानेकमेवं वर्णोऽपि नो भवेत् ॥ २४ ॥**

**त्वयापि व्यञ्जकव्यक्तिभेदाद् भेदोऽभ्युपेयते ।**
**ममापि व्यञ्जकैर्नादैर्भेदबुद्धिर्भविष्यति ॥ २५ ॥**

सामान्यं शब्दत्वं गोत्वं च, तथात्रापि द्रुतादिभेदेन भेदप्रत्ययाद्भिन्ना व्यक्तयः—स एवायम्—इत्यभेदप्रत्ययाच्चा[3]भिन्नं सामान्यं गत्वं च भविष्यति ॥

तत्र सिद्धान्तवादी गोत्वेन शब्दत्वेन च सह गत्वस्य वैषम्यमाह—**शाबलेयेति**। युक्तं शाबलेयादिषु भेदाभेदप्रत्ययात् सामान्यविशेषत्वम्; न हि शाबलेयबाहुलेययोः गकारौकारयोश्च भेदप्रत्ययस्याभिव्यञ्जकालम्बनत्वम्, अभिव्यञ्जकप्रतिपाद्यैक्येऽपि भेदप्रत्ययेन धर्मिभेदात्। भिन्नेषु चैकप्रत्ययस्य जातिसाधकत्वादित्यर्थः ॥

द्रुतादौ तु भेदप्रत्ययस्याभिव्यञ्जकाभेदादेकत्वप्रत्यभिज्ञानादेकैव गकारव्यक्तिः शाबलेयादिष्विव गोत्वमित्याह—**न त्विति**।

उपसंहरति—**तेनैकत्वेनेति** ॥

अत्रैव दृष्टान्तमाह—**यथैव तत्रेति** ॥

एतदेव विवृणोति—**त्वयापीति** ॥

1. सामान्यधीर्न गृह्णाति. चौ. मु.
2. द्रुतादिभेदेऽपि. चौ. मु.
3. अभिन्नत्वं सामान्यं गत्वं भविष्यति. मा.

तेन यत् प्राथ्यते [1]जातेस्तद्वर्णादेव लभ्यते ।
व्यक्तिलभ्यं च नादेभ्य इति गत्वादिधीर्वृथा ॥ २६ ॥

कल्पयित्वापि तत् पश्चाद् विभुत्वैकत्वनित्यताः ।
प्रत्येकवृत्तिता चास्य भवेयुर्महतः श्रमात् ॥ २७ ॥

द्वयसिद्धस्तु वर्णात्मा नित्यत्वादि यथैव च ।
कल्पितस्येष्यते तद्वत् सिद्धस्यैवाभ्युपेयताम् ॥ २८ ॥

प्रत्येकसमवाये च क्लेशो नैव भविष्यति ।
व्यञ्जनेषु च धीभेदो नैव [2]कामं प्रवर्तते ॥ २९ ॥

दृश्यतेऽजनुरागेण भेदो यो नाम तत्र नः ।
विवेकोऽस्त्येव न ह्येष केवलानां प्रतीयते ॥ ३० ॥

गत्वकार्यस्याभेदप्रत्ययस्य वर्णसिद्धत्वाद् भेदप्रत्ययस्य व्यक्तिकार्यस्य नादसिद्धत्वेन सामान्यविशेषकल्पनं निष्प्रमाणकमित्याह—**तेन यत् प्राथ्यत इति** ॥

अनेकत्वेन वर्णस्य गत्वादिपरिकल्पनायां च विभुत्वादिचतुष्टयपरिकल्पनागौरवमित्याह—**कल्पयित्वापीति** ॥

मीमांसकपक्षेऽपि विभुत्वादिचतुष्टयपरिकल्पनादाविशेष इति चेदित्याशङ्कयाह—**द्वयसिद्ध इति** । उभयवादिसिद्धे धर्मिणि नित्यत्वादिधर्ममात्रस्यैव परिकल्पनाद्विशेष इत्यर्थः ॥

प्रत्येकसमवेतकल्पना चास्मत्पक्षे न भविष्यति, वर्णस्य स्वप्रतिष्ठितत्वेन क्वचिदप्यसमवायात्; आकाशसमवेतत्वे वा तस्यैकत्वादित्याह—**प्रत्येकसमवाय** इत्यर्धेन । अपि च, व्यञ्जनाख्येषु वर्णेषु—अग्निचित्—इत्येवमादौ द्रुतादिभेदेऽपि न तकारस्य भेदः प्रतीयते । यस्तु [3]क्वचिदजनुरागेण भेदप्रत्ययः, स केवलानामभावेनान्वयव्यतिरेकाभ्यामौपाधिक इति प्रतिपत्तव्यमित्याह—**व्यञ्जनेष्विति** सार्धेन ॥

1. ज्ञाने. चौ. मु.
2. तादृक् प्रतीयते. चौ. मु.
3. क्वचिदञ्जनरागेण. मा.

अक्ष्वप्येवं परोपाधिर्द्रुतादिप्रत्ययो [1]भवेत् ।
वर्णाश्रितत्वाद् वर्णत्वव्यञ्जनप्रत्ययो यथा ॥ ३१ ॥

गकारोऽत्यन्तनिष्कृष्टगत्वाधारो न गम्यते ।
गान्यबुध्यनिरूप्यत्वात् [2]परकल्पितगत्ववत् ॥ ३२ ॥

अवस्तुत्वेन साध्यत्वान्निषेधाद्धेतुसाध्ययोः ।
सपक्षेऽन्यतरासिद्धिर्न दोषायात्र जायते ॥ ३३ ॥

वर्णत्वाच्चापि साध्योऽयं यकारादिवदेव च ।
व्यतिरेकस्य चादृष्टेर्नात्र दृष्टं [3]निवर्तते ॥ ३४ ॥

एवं व्यञ्जनेषु भेदप्रत्ययस्यौपाधिकत्वं प्रतिपाद्येदानीमन्येष्वपि भेदप्रत्ययस्यानुमानेनौपाधिकत्वं प्रतिपादयितुमाह—**अक्ष्विति** । द्रुतादिप्रत्यय इति धर्मिनिर्देशः, अक्ष्वपीति धर्मिविशेषणम्, परोपाधिरिति साध्यो धर्मः, वर्णाश्रितत्वादिति हेतुः, वर्णत्वव्यञ्जनप्रत्ययवदिति दृष्टान्तद्वयम् ॥

एवं भेदप्रत्ययस्य नानालम्बनत्वेनाभेदप्रत्ययस्य च गकारस्वरूपाश्रितत्वेन सिद्धमेकत्वं गकारस्य । अत्रैव प्रयोगमाह—**गकारोऽत्यन्तेति** । गकारो धर्मी, गत्वाधारो न भवतीति साध्यो धर्मः, अत्यन्तनिष्कृष्ट इति धर्मिविशेषणम्, गान्यस्तम्भादिबुध्यनिरूप्यत्वादिति हेतुः, परकल्पितगत्ववदिति दृष्टान्तः ॥

ननु सपक्षधर्मिणः गत्वस्य, वाद्यसिद्धत्वेन अभावात् सपक्षे हेतोः सत्त्वप्रदर्शनमशक्यम् । यत्र तु साध्याभावेन हेतोरभावः कथ्यते, तत्र तदभावेऽपि न दोषः यथा नित्यत्वाभावे कृतकत्वाभावः शशविषाणादावित्याशङ्क्याह—**अवस्तुत्वेनेति** । भावरूपयोरभावे भावो न स्यात्; अत्र तु [4]सपक्षेऽभावरूपेऽपि निषेधरूपत्वेन न भवत्यनिरूप्यत्वयोः सद्भावाददोष इत्यर्थः ॥

तस्मिन्नेव साध्ये हेतुदृष्टान्तान्तरमाह—**वर्णत्वाच्चापीत्यर्धेन** । न च गत्वनिराकरणपरस्यानुमानस्य प्रत्यक्षबाधः, अभेदप्रत्ययस्य गकारालम्बनत्वेन व्यक्तिव्यतिरेकेण गत्वस्यादर्शनादित्याह—**व्यतिरेकस्य चादृष्टेरिति** ॥

1. यथा. चौ. मु.
2. परैः कल्पित. चौ. मु.
3. निवर्तकम्. चौ. मु.
4. विपक्षे. मा.

**गोत्वादिवारणेऽ[1]प्येवं दृष्टबाधः स्फुटो भवेत् ।**
**नान्यथा हि मतिस्तत्र स्यात् सामान्यविशेषयोः ॥ ३५ ॥**

**न चाप्यत्रैकवस्तुत्वे भेदो व्यञ्जकभेदतः ।**
**न पिण्डव्यतिरेकेण व्यञ्जकोऽत्र ध्वनिर्यथा ॥ ३६ ॥**

**पिण्डव्यङ्ग्यैव गोत्वादे[2]र्नित्यं जातिः प्रतीयते[3] ।**
**तेन भिन्नेषु पिण्डेषु जातिरेकाभ्युपेयताम् ॥ ३७ ॥**

**ननु यस्य द्वयं श्रोत्रं तस्य बुद्धिद्वयं भवेत् ।**
**भवतोऽतीन्द्रियत्वात् [4]तु कथं नादविशेषधीः ॥ ३८ ॥**

शाबलेयस्य तु द्रव्यत्वेन गोत्वाधारवारणे प्रत्यक्षेण भेदाभेददर्शनाद्बाध इत्याह—**गोत्वादिवारण** इत्यर्धेन । यस्मात्तत्र तत्र भेदाभेदप्रत्ययौ सामान्यविशेषमन्तरेण न भवत इत्याह—**नेत्यर्धेन** ।

ननु शाबलेयावपि श्रुतादिप्रत्ययवद्भेदप्रत्ययस्य व्यञ्जकालम्बनत्वेनाभेदप्रत्ययस्यापि पिण्डालम्बनत्वेन गोत्वाभावेन कुतो दृष्टबाध इत्याशङ्क्याह—**न चापीति** । पिण्डव्यतिरेकेण [5]द्रुतादिव्यञ्जकाभावादित्यर्थः ॥

शाबलेयादय एव तु भिन्नाभिन्नत्वस्य गोत्वस्य व्यञ्जका इत्याह—**पिण्डव्यङ्ग्यैवेत्यर्धेन** । उपसंहरति—**तेन भिन्नेषु पिण्डेष्वित्यर्धेन** ॥

तस्माद्यथा भिन्नेषु शाबलेयादिषु प्रत्यभिज्ञानाद् गोत्वमेकम्, एवं द्रुतादिभेदेऽपि प्रत्यभिज्ञानात् गव्यक्तिरेका भविष्यतीति सिद्धम् । अभेदप्रत्ययस्य वर्णालम्बनत्वं गृह्णीमः; द्रुतादिभेदेन तु भेदप्रत्ययस्य तद्भावभावित्वेन श्रौत्रत्वे सति नित्यानुमेयत्वाद्वालम्बनत्वं कथमिति चोदयति—**ननु यस्य द्वयं श्रौत्रमिति** ॥

1. त्वेवं चौ. मु.
2. जातिर्नित्यं चौ. मु.
3. प्रतीयते. चौ. मु.
4. त्तु कथं Omitted मा.
5. द्रुतादिव्यञ्जकः मा.

नादेन संस्कृताच्छ्रोत्राद् यदा शब्दः प्रतीयते ।
तदुपश्लेषतस्तस्य बोधं केचित् प्रचक्षते ॥ ३९ ॥

नैव वा ग्रहणं तेषां शब्दे बुद्धिस्तु तद्वशात् ।
संस्का[1]रानुकृतेः सोऽपि महत्वाद्यवबुध्यते ॥ ४० ॥

मधुरं तिक्तरूपेण श्वेतं पीततया तथा ।
गृह्णन्ति पित्तदोषेण विषयं भ्रान्तचेतसः ॥ ४१ ॥

तथा वेगेन धावन्तो नाव्यारूढाश्च गच्छतः ।
पर्वतादीन् विजानन्ति भ्रमेण भ्रमतश्च तान् ॥ ४२ ॥

मण्डूकवसयाक्ताक्षा वंशानुरगबुद्धिभिः ।
व्यक्त्यल्पत्वमहत्त्वाभ्यां सामान्यं च तदाश्रयम् ॥ ४३ ॥

गृह्णन्ति यद्वदेतानि निमित्तग्रहणाद् विना ।
व्यञ्जक[2]त्वमबुध्वैवं व्यङ्ग्ये भ्रान्तिर्भविष्यति ॥ ४४ ॥

तत्र परिहारमाह—**नादेनेति** ॥

द्रुतादिसंस्कृतश्रोत्रेन्द्रियः पुरुषस्तानपि वर्णमिश्रान्छ्रोत्रेणैव गृह्णातीति परिहारान्तरमाह—**नैवेति** । द्रुतादिसंस्कृतं श्रोत्रेन्द्रियमभिन्नेऽपि गकारादौ संस्कारानुकारेण भेदप्रत्ययं जनयति । तत्रैव दृष्टान्तमाह—**सोऽपि महत्त्वादीति** । यथा संस्कारानुकारेण महत्वं सूक्ष्मत्वं च शब्दे गृह्णाति ॥

अत्रैव दृष्टान्तद्वयमाह—**मधुरं तिक्तरूपेणेति** चतुष्टयेन । यथा पित्तदोषसंस्कृतमिन्द्रियं मधुरं तिक्तरूपतया, श्वेतं पीततया गृह्णाति, एवं धर्मिणि गतान् द्रुतादीन् गृह्णदेव तथा शब्दं प्रतिपद्यत इत्यर्थः । निमित्तग्रहणाद्विनेति च यथासंभवं योज्यम् । एवं ह्रस्वदीर्घप्लुतादिष्वपि प्रत्ययद्वयं विवेक्तव्यम् । केचित्तु दीर्घादिष्वभेदप्रत्ययवद् भेदप्रत्ययस्यापि वर्णालम्बनत्वमिच्छन्ति ; न हि द्रुतादिप्रत्ययवन्नाददोषाद्दीर्घह्रस्वप्लुतादिषु भेदप्रत्ययः । तत्र प्रयोगशब्देन प्रत्ययमाह, नान्तरीय-

1. रानुकृतेः सो Omitted मा. 2. अबुध्वैव. चौ. मु.

वर्णान्तरत्वमेवाहुः केचिद्दीर्घप्लुतादिषु ।
न हि द्रुतादिवत्तत्र प्रयोगो नान्तरीयकः ॥ ४५ ॥

[1]तथा सति च सामान्यं त्रिष्वत्वं कैश्चिदिष्यते ।
सामान्यकल्पना त्वन्यैर्न युक्तेत्यभिधीयते ॥ ४६ ॥

अत्वमित्युच्यमानं हि न दीर्घप्लुतयोर्भवेत् ।
आत्वं न ह्रस्वप्लुतयो[2]स्त्रिमात्रं न च पूर्वयोः ॥ ४७ ॥

[3]सर्वसाधारणत्वेन तद्विज्ञातुं न शक्यते ।
प्रत्येकं शाबलेयादिरूपे गोत्वं यथा स्फुटम् ॥ ४८ ॥

अवर्णकुलशब्दोऽपि स्थानसाम्याद् वनादिवत् ।
[4]समुदायात्मवाचीति न जातिवचनो भवेत् ॥ ४९ ॥

स्वतो ह्रस्वादिभेदस्तु नित्यवादे विरुध्यते ।
सर्वदा यस्य सद्भावः स कथं मात्रिकः स्वयम् ॥ ५० ॥

शब्देनाप्युपाधिवचनम् । ह्रस्वादिभेदेन च भिन्नास्वकारव्यक्तिष्वत्वं सामान्यमिच्छन्त्यवर्णकुलशब्दाभिधेयमित्याह—**वर्णान्तरत्वमित्यादिना** सार्धेन श्लोकेन ।

तत्र दूषणमाह—**सामान्येत्यादिना** सार्धेन श्लोकद्वयेन । यथा हि शाबलेयादौ गोत्वं साधारणम्, एवं प्लुतादिषु सामान्यकल्पनमयुक्तमिति, अस्य दीर्घादिष्वभावात् दीर्घस्य ह्रस्वाप्लुतयोः त्रिमात्रस्यापि पूर्वयोरित्यर्थः ॥

अवर्णकुलशब्दोऽपि दीर्घाद्युपाधिभेदेन भिन्नत्वाद्वनादिशब्दवदेकस्यानावच्छिन्नस्य [5]समुदायमाह, न जातिमिति दर्शयति—**अवर्णेति** ॥

स्वाभाविके तु ह्रस्वादिभेदे नित्यताप्याकारस्य भवदभिमता न स्यादित्याह **स्वतो ह्रस्वादिभेदस्त्वित्यर्धेन** ।

1. तथा च सति. चौ. मु.
2. त्रैमात्र्यं. चौ. मु.
3. सर्व Omitted मा.
4. समुदायार्थ. चौ. मु.
5. समानमाह. मा.

तस्मादुच्चारणं [1]तेषां मात्राकालं [2]प्रतीयताम् ।
द्विमात्रं वा त्रिमात्रं वा [3]तव नो मात्रिकः स्वयम् ॥ ४१ ॥

दीर्घादेर्न त्वनङ्गत्वं वाचकाधर्मतो भवेत् ।
इत्थं प्रतीयमानाः स्युर्वर्णा [4]नः प्रतिपादकाः ॥ ५२ ॥

यादृशात् पूर्वदृष्टोऽसावर्थो गम्येत तादृशात् ।
भ्रान्त्या कथं प्रतीतिश्चेन्नासावर्थमिति प्रति ॥ ५३ ॥

यथाश्वादिजवः पुंसां [5]कार्यान्यत्वं प्रकल्पयेत् ।
परधर्मोऽपि वर्णानां [6]ध्वनिधर्मस्तथैव नः ॥ ५४ ॥

ननु दीर्घाद्यनित्यत्वादनित्यो वाचको भवेत् ।
आनुपूर्वीव[7]देतस्य परिहारो भविष्यति ॥ ५५ ॥

उतसंहरति—**तस्मादुच्चारणमिति**

ननु ध्वनिधर्मत्वेन दीर्घादेरर्थप्रतिपत्तावनङ्गत्वप्रसङ्गः । ततश्च गमनागमनादिष्वर्थभेदो न स्यादिति चोदयति—**दीर्घादेरि**त्यर्धेन ।

तत्र परिहारमाह—**इत्थमिति** । वर्णस्यैव ध्वनिगतदीर्घादिविशिष्टस्यार्थप्रतिपादकत्वम्, तथा सम्बन्धग्रहणादित्यर्थः । ननु ध्वनिगतदीर्घादिविशिष्टतया भ्रान्तस्य वर्णस्य कथमर्थप्रतिपत्तावुपायत्वमिति चोदयति—**भ्रान्त्या कथं प्रतीतिश्चेदिति** । तत्र परिहारमाह—**नासावर्थमिति प्रतीति** । वर्णस्वरूप एव हि सा भ्रान्तिः, अतस्मिंस्तद्ग्रहणात् । सम्बन्धग्रहणवशेन तु अर्थप्रतिपत्तावुपायत्वेन यद्यथावृत्तम्, तत्तथेत्यर्थः । तदुक्तम्—यावन्तो यादृशा—इति ॥

अन्यत्र चान्यधर्मस्य कार्यकरत्वं दृष्टमित्याह—**यथाश्वादीति** ॥

ननु वर्णात्मकेऽपि सम्बन्धिनि दीर्घादिविशिष्टस्य तस्य नित्यत्वेन कथमाधेयस्य नित्यतेत्याह—**नन्वित्यर्धेन** । तत्राह—**आनुपूर्वीवदिति** । तत्त्वान्तरप्रति-

1. तस्य. चौ. मु.
2. प्रतीयते. चौ. मु.
3. न वर्णो. चौ. मु.
4. न. चौ. मु.
5. कार्याङ्गत्वं चौ. मु.
6. ध्वनिधर्माः चौ. मु.
7. एवास्य. चौ. मु.

**तथोदात्तादिभेदानां संस्कारव्यञ्जगा मतिः ।**
**तेषां दीर्घादिवद् भेदो न कदाचित् प्रतीयते ॥ ५६ ॥**

**तत्रैकवर्णरूपत्वे भेदोऽपि स्याद् द्रुतादिवत् ।**
**नात्र वर्णान्तर[1]व्यक्तिशक्तध्वन्यन्तरोद्भवः ॥ ५७ ॥**

**त एव मृदुतीव्रत्वशीघ्रत्वादिसमन्विताः ।**
**अभेदे चापि वर्णस्य [2]ध्वनिना द्विप्रकारता ॥ ५८ ॥**

**केचित् स्वरूपबोधार्थाः केचिद् बोधानुवर्तिनः ।**
**युगपत् क्रमरूपेण [3]संस्कारोत्पादनेन वा ॥ ५९ ॥**

**तत्र दीर्घादिबोधः स्यात् [4]सर्वेषां प्रचयो यदा ।**

षेधेन वर्णात्मकसम्बन्धिनिरूपणं सम्बन्धसद्भावनिरूपणसिद्ध्यर्थम् । अत्र नित्यत्वेन तु सम्बन्धिनिरूपणं संबन्धनित्यत्वसिध्यै भविष्यतीत्यर्थः ॥

उदात्तादिभेदेनापि भेदप्रत्ययस्य संस्कारानुसारेण भ्रान्ततामतिदिशति—**तथोदात्तादीति** । यो ह्युदात्तादिभेदेन भेदप्रत्ययः, सोऽपि दीर्घादिवदौपाधिकः ; न कदाचित् स्वत इत्यर्थः ॥

एतदेव विवृणोति—**तत्रैकवर्णरूपत्व इति** सार्धेन । प्रत्यभिज्ञानबलेनैकत्वे प्रतिपादिते सत्युदात्तादिभेदोऽपि द्रुतादिवदौपाधिकः ; ध्वनय एव तत्र मृदुतीव्रशीघ्रत्वादिसम्बन्धिन उदात्तादिभेदेन प्रत्ययं जनयन्ति ; अभिव्यङ्ग्यगकारस्वरूपं तु तदेवेत्यर्थः ।

एवं प्रत्यभिज्ञाबलेन गकारादेर्वर्णस्य वृत्तित्रयेऽप्येकत्वं प्रतिपाद्येदानीं शिष्टागमबलेन प्रसङ्गाद् वृत्तित्रयस्योत्पत्तिं दर्शयितुमाह—**अभेदे चापि वर्णस्ये**त्यादिना सार्धेन श्लोकेन ॥

द्विप्रकारा हि ध्वनयः—वर्णस्वरूपबोधार्थाः बोधानुवर्तिनश्चेति । ते च युगपत् क्रमेण वा श्रोत्रस्य संस्कारकाः । तत्र यदा दीर्घत्ववशेन वर्णस्वरूपबोधार्थानां प्रचयो भवति, तदा दीर्घादिबोधो भवतीत्याह—**तत्र दीर्घादिबोधः**

1. व्यक्तिरिव. चौ. मु.
2. ध्वनीनां. चौ. मु.
3. संस्कारोत्पादहेतवः. चौ. मु.
4. पूर्वेषां. चौ. मु.

**वर्णात्मैव हि कालेन तावता तैः प्रतीयते ॥ ६० ॥**

**युगपत् प्रचितैस्तैश्च स्यादुदात्तादिकल्पना ।**
**प्रचये [1]तूत्तरेषां स्याद् वृत्तिभेदो द्रुतादिकः ॥ ६१ ॥**

**वर्णात्मन्यवबुद्धे हि तद्रूपामेव ते मतिम् ।**
**शनैरुत्पादयन्तीति नान्यो वर्णः प्रतीयते ॥ ६२ ॥**

**व्यक्त्याकृतिकृतो भेदो यद्यप्येकान्ततो भवेत् ।**
**वर्णेषु जैमिनेः पक्षस्तथापि न [2]विरोत्स्यते ॥ ६३ ॥**

**नित्यत्वयत्नः सर्वोऽपि गत्वादिषु भविष्यति ।**
**गकारादिवचश्चैतत् तेष्वेव न विरोत्स्यते ॥ ६४ ॥**

**स्यादित्यर्धेन** । तेन च ध्वनयो वर्णस्वरूपपर्यवसिताः स्वात्मानुकारेण भ्रान्ति जनयन्तीति वर्णस्वरूपबोधार्था इष्यन्त इत्याह—[3]**वर्णात्मैव हीत्यर्धेन** ।

यदा त्वभिघातवशेन वर्णस्वरूपबोधार्थानां बोधानुवर्तिनां च युगपत् प्रचयो भवति, तदोदात्तादिबोधो भवतीत्याह—**युगपदित्यर्धेन** । बोधानुवर्तिनां तु प्रचये द्रुतादिबोधो भवतीत्याह—**प्रचये त्वित्यर्धेन** ॥

ते च वर्णस्वरूपवदर्थेऽपि संस्कारान्तरेण भ्रान्तिमुपवर्णयन्तीति वर्णबोधानुवर्तिन इष्यन्त इत्याह—**वर्णात्मनीति** त्रिपाद्या । तस्मात् प्रत्यभिज्ञानबलेन वृत्तित्रयेऽपि नान्यो वर्णः प्रतीयत इत्युपसंहरति—**नान्यो वर्णः प्रतीयत इति** ॥

एवं तावद् वास्तवमभेदं प्रतिपाद्येदानीमभ्युपगम्यापि गकारादेः सामान्यविशेषवत्त्वं स्वदर्शनहानिर्नास्तीत्याह—**व्यक्त्याकृतिकृत इति** ॥

यथा स्वदर्शनहानिर्नास्ति, तथा दर्शयतीत्याह—**नित्यत्वयत्न इत्यर्धेन** । "गकारौकारविसर्जनीयाः"—इत्यादि भाष्यवचनं गत्वादिषु भविष्यतीत्यविरोध एवेत्याह—**गकारादिवचश्चेत्यर्धेन** ॥

1. त्वितरेषां. चौ. मु.
2. विरुध्यते. चौ. मु.
3. कालात्मैव.

**विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि ।**
**व्यतिरिक्तपदारम्भो वर्णनात्रो[1]पलभ्यते ॥ ६५ ॥**

**अनारब्धे च गोशब्दे गोशब्दत्वं कथं भवेत् ।**
**वर्णसामान्यवच्चापि न तत्कल्पनमर्हति ॥ ६६ ॥**

**वर्णात्मनामभेदाच्च सिद्धा सामान्यधीरपि ।**
**समुदायोऽपि तेभ्योऽन्यो वारणीयोऽनया दिशा ॥ ६७ ॥**

ननु गकाराद्यारब्धो गोशब्दः, तस्यैव गोशब्दत्वोपलक्षितस्य सम्बन्धग्रहणादर्थप्रतिपादकत्वम् । अतः कथमिदं भाष्यम्—"गकारौकारविसर्जनीयाः"—इतीत्याशङ्क्याह—**विच्छिन्नयत्नेति** । न तावद् वर्णत्रयस्य युगपदेकगोशब्दारम्भकत्वम्, विच्छिन्नप्रयत्नाभिव्यङ्ग्यत्वेन संवित्तौ यौगपद्याभावात् । नापि वास्तवेन यौगपद्येन वर्णस्यैकगोशब्दारम्भकत्वम्, नित्यत्वेन सर्वगतत्वेन सर्वदा सर्वत्रारम्भकत्वप्रसङ्गात् । नापि क्रमेण, एकैकवर्णप्रतिपत्तिकाले तद्व्यतिरिक्तस्यानुपलम्भात् । उक्तेन प्रकारेणानारब्धे च गोशब्दावयविनि गकारादिषु गोशब्दत्वं कथं भवेत्? न प्रत्येकम्, एकैकस्य गोशब्दत्वेन गोत्वप्रतिपादकत्वप्रसङ्गात् । नापि व्यासज्य, युगपद्वर्णद्वयोपलब्धौ तद्बुद्धिः स्यात्, विच्छिन्नयत्नव्यङ्ग्यत्वेन च तदभावात्; अप्रतिपन्नस्य चार्थप्रतिपादकत्वाभावादित्यर्थः । ..........[2]गत्ववच्च गोशब्दत्वं निराकर्तव्यम्—स एवायं गोशब्दः—इत्यभिन्नवर्णालम्बनत्वेनेत्याह—**वर्णसामान्यवच्चापीति ।**

वर्णत्रयसमुदायोऽपि तत्त्वान्यत्वाभ्यां विकल्प्य [3]निराकर्तव्य इत्याह—**समुदायोऽपीति** । वर्णत्रयव्यतिरेकेण समुदायस्याप्रतिभासात् । अभिन्नस्य तु धर्मभूतस्य भावेऽपि दोषाभावादित्यर्थः ।

"यद्येवमर्थप्रत्ययो नोपपद्यते"—इत्यादि पूर्वपक्षभाष्यम् । तस्यायमभिप्रायः—ननु वर्णत्रयात्मकेऽपि सम्बन्धिनि शब्दस्यार्थेन सह गम्यगमकलक्षणः सम्बन्धोऽनुपपन्न एव । तथा हि—गोत्वं प्रति वर्णानां संभूय वा गमकत्वं

1. पद्यते. चौ. मु.
2. न किंचिल्लुप्तमिव भाति.
3. निराकर्तव्यानित्याह. मा.

अभेदसमुदायस्तु तेषां धर्मो न दुष्यति ।
तेषामस्ति हि सामर्थ्यमर्थप्रत्यायनं प्रति ॥ ६८ ॥

यावन्तो यादृशा ये च यदर्थप्रतिपादने ।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः ॥ ६९ ॥

स्यादेकस्य वा ? संभूयापि युगपत् क्रमेण वा ? न तावदेकैकस्य, अनुपलम्भनात् पर्यायत्वप्रसङ्गाच्च, नापि संभूय युगपत्, तदभावात् । एतदुक्तम्—

"यौगपद्यं न संवित्तौ सत्तयातिप्रसज्यते ।"

नापि संभूय क्रमेण, नित्यत्वेन सर्वगतत्वेन च देशतः कालतो वा क्रमायोगात्, संभूय क्रमेण च इति [1]विप्रतिषेधाच्च । आग्नेयादीनां तु संभूयकारिणां क्रमकर्तृत्वमपूर्वद्वारेण । वर्णानामपि संभूयकर्तृत्वं संस्कारद्वारेण इति चेन्न । संस्कारान्तरपरिकल्पनायां [2]न प्रमाणमस्ति । [3]अपूर्वकल्पनायां तु साध्यसाधन[4]सम्बन्धानुपपत्तिर्गमका [5]इत्युक्तम् । अनवगत[6]व्याकरणस्यापि गकारादिज्ञानजनितसंस्कारादिद्वारेण औकारादिस्मरणोत्पादकत्वेन कल्पितस्यान्यविषयत्वायोगात्; एकैकशश्चाशक्तानां समुदायोऽप्यशक्त एव ; व्युत्क्रमेण च प्रतिपादकत्वं प्राप्नोति। तस्मात्—

'आधारात्मनि विज्ञाते सुखमाधेयबोधनम्'—इत्यनुपपन्नम् ।

अत्र सिद्धान्तभाष्यम्—"पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णो वाचकः" इति । तद्व्याचष्टे—**तेषामस्ति हि सामर्थ्यमिति**। पूर्ववर्णजनितसंस्कारद्वयविशिष्टस्य [7]वान्त्यस्य वर्णस्य, अतीतवर्णद्वयानुगृहीतस्य वा, संस्कारद्वारेण वा सर्वेषामाग्नेयादिवत्, संस्कारद्वयान्त्यवर्णसामाग्रीके वा ज्ञाने सदसद्वर्णगोचरे प्रतिभासमानानाम्, समस्तसंस्कारिते वा सङ्कलनाप्रत्यये प्रतिभासमानानाम्, उपलब्ध्यनन्तरसत्ताकानां वा [8]अर्थप्रतिपादनसामर्थ्यमस्तीत्यभिप्रायः ।

यत्तु नैकस्य नापि संभूय युगपत् क्रमेण वा प्रतिपादकत्वमस्तीत्युक्तम्, तत्राप्याह—**यावन्त इति**। सम्बन्धग्रहणवशेन वर्णानामर्थप्रतिपादकत्वं येषां च यावतां

1. निषेधाच्य. मा.
2. न omitted मा.
3. नापूर्वकल्पनायां. मा.
4. संबन्धानुपपत्तिगमक मा.
5. 'गमक' इति 'इत्युक्तम्' इति चानयोरन्तरे 'कल्पनायां न प्रमाणं' इत्यधिकः ग्रन्थः .
6. व्याकरणत्वापि. मा.
7. वाक्यस्य. मा.
8. हेतुप्रतिपादन. मा.

तेषां तु गुणभूतानामर्थप्रत्यायनं प्रति ।
साहित्यमेककर्त्रादिक्रमश्चापि विवक्षितः ॥ ७० ॥

[1]वक्त्रेकत्वनिमित्ते च क्रमे सति नियामकम् ।
प्रयुञ्जानस्य यत् पूर्वं वृद्धेभ्यः क्रमदर्शनम् ॥ ७१ ॥

यौगपद्यं [2]च शक्यत्वान्नैव तेषामिहाश्रितम् ।
कर्तृभेदश्च तत्र स्यान्न चैवं दृश्यतेऽभिधा ॥ ७२ ॥

युगपद् [3]दृष्टसामर्थ्या नैव शक्ताः क्रमे यथा ।
भावास्तथा क्रमे शक्ता यौगपद्ये न [4]शक्नुयुः ॥ ७३ ॥

दृष्टश्च पूर्णमासादेः क्रमः संहत्यकारिणः ।
अभ्यासानां च लोकेऽपि स्वाध्यायग्रहणादिषु ॥ ७४ ॥

यत्क्रमकाणां च यत्तदास्ति, [5]तत्तेषां तावतामेव तत्क्रमकाणामेकवक्तृप्रयुक्तानां च प्रतिपादकत्वमित्यर्थः ॥

तदेतदत्रैव समासमुत्तरम्; अस्यैव प्रपञ्चः—सर्वमेव च साहित्याद्यर्थप्रतिपत्तावुपादीयमानस्य वर्णत्रयस्योपादीयमानविशेषणत्वेन पशुगतैकत्ववद् विवक्षितमित्याह—**तेषां चेति** ॥

[6]वक्तुरेकत्वाच्च वर्णानामवश्यंभाविनि क्रमे सम्बन्धग्रहणकालावगतस्य ग्रहणमित्याह—**वक्त्रेकत्वनिमित्ते चेति** ॥

तस्मादुपलब्धियौगपद्यासम्भवात् सम्भवे वा वक्तृभेदप्रसङ्गात् वास्तवेन च सर्वेषां सर्वदा चाविशिष्टत्वेन चाप्रतिपादकत्वात् संभूय क्रमेण प्रतिपादकत्वमित्याह—**यौगपद्यं चेति** ॥

दृष्टं च संभूयकारिणां द्वैविध्येन कार्यकरत्वमित्याह—**युगपदिति** ॥

नापि विप्रतिषेधः, संभूयकारिणां क्रमकर्तृत्वदर्शनादिदृष्टान्तत्रयमाह—**दृष्टश्च पूर्णमासादेरिति** । 'दर्शपूर्णमासाभ्याम्' इत्युपपदसमर्पितसाहित्येति-

1. कैत्रेकत्वे निमित्ते. चौ. मु.
2. त्वशक्तत्वात्. चौ. मु.
3. दृश्य. चौ. मु.
4. शक्तयः. मा.
5. 'तेषां' इत्येतावदेव. मा.
6. इतः पूर्वं 'एकत्वात्' इत्यधिकः ग्रन्थः. मा.

**साधनादित्रयाणां च व्यापारस्यैककालता ।**
**सर्वत्रास्तीति नेह स्यादुपालम्भः क्रमं प्रति ॥ ७५ ॥**

**निष्पन्ना एव दृश्यन्ते व्यापाराः सर्व एव हि ।**
**सूक्ष्मा व्यापारभेदास्तु [1]न दृश्यन्ते कदाचन ॥ ७६ ॥**

**एकसाधनसंस्थाश्च व्यापारावयवा यदा ।**
**स्वरूपतो निरीक्ष्यन्ते यौगपद्यमसत्तदा ॥ ७७ ॥**

**किं पुनर्बहवो भिन्ना भिन्नसाधनसंश्रिताः ।**
**भवेयुर्यौगपद्येन व्यापाराः क्रमवर्तिनः ॥ ७८ ॥**

कर्तव्यताविशिष्टानामाग्नेयादीनामेकप्रेर्यविशेषणोत्पादकत्वं क्रमेण, करणानामाग्नेयादीनां क्षणिकत्वेन यौगपद्यासम्भवात्; अभ्यासे चैन्द्रवायवादीनामेकाधिकारनिष्पादकत्वम्; लोकेऽपि पदाध्ययनादीनामेकानुवाकग्रहणसाधकत्वम् ।

ननु यदि पूर्णमाससंज्ञकस्य साधनत्रयस्य अभ्यासाध्ययनयोश्च क्षणिकत्वे यौगपद्यासम्भवात् क्रमकर्तृत्वम्, अक्रमकारिणां तर्हि साहित्यमनुपपन्नमित्याशङ्क्याह—**साधनादीति** । यद्यपि चाग्नेयादीनां स्थूलेन रूपेण प्रत्यक्षदृश्येन क्षणिकत्वादेककालत्वं नास्ति, तथाप्यपूर्वद्वारकैककालत्वमस्तीति साहित्यानुपलम्भः । व्यापारशब्देनात्र शक्त्यवस्थाभिधीयते । साधनत्रयस्य शक्तिद्वारेणैककालत्वमस्तीत्यर्थः ॥

स्थूलशक्तिरूपस्य च व्यापारस्य प्रत्यक्षेण ग्रहणम्, इतरेषां चार्थापत्त्या इत्याह—**निष्पन्ना एव दृश्यन्त इति** । निष्पन्नशब्देन दृश्यस्याभिधानम्; सूक्ष्मशब्देनापि शक्तेः ।

एकफलावच्छिन्नानेकलक्षणप्रचयात्मिका ह्येका क्रियाभिधीयते । तत्रैकसाधनगतानामपि स्वलक्षणानां शक्तिमन्तरेण यौगपद्यं नास्ति; किं पुनर्बहूनां भिन्नसाधनगतानामित्याह—**एकसाधनसंस्थाश्चेति** । वक्ष्यति—

"क्षणिकावयवत्वेन नैकस्यापि हि शक्तता" इति ।

ननु यदि क्रमवदनेकस्थूललक्षणप्रचयात्मिकैका क्रियाभिधीयते, क्रमवतां च गकारादीनामेकपदत्वम्, कथं तर्हि—पचति, गोशब्दो वर्तते—इति च वर्त-

1. दृश्यन्ते न चौ. मु.

**यदा त्वाद्यपरिस्पन्दात् प्रभृत्या फल[1]भावतः ।**
**क्रिया पूर्वापरीभूता लक्ष्यते वर्तते तदा ॥ ७९ ॥**

**तेनात्रापि विवक्षातः प्रभृत्यार्थावबोधनात् ।**
**साकल्येनेक्ष्यमाणे स्याद् व्यापारे वर्तमानता ॥ ८० ॥**

**प्रत्येकं ये पुनस्तत्र व्यापारास्तन्निरूपणम् ।**
**फलानिष्पत्तितो न स्यान्नास्तित्वं न च तावता ॥ ८१ ॥**

**फलानुमेयतायां च व्यपारस्य फलं प्रति ।**
**कारकाणां यथास्थानं व्यापारे वर्तमानता ॥ ८२ ॥**

मानकाल निर्देशः ? तत्र क्रियागतं तावद्वर्तमानकालावच्छेदमाह—**यदा त्विति ।** यावन्तमेकफलावच्छिन्नानि क्रियाक्षणानि व्याप्नुवन्ति; तावान् वर्तमानः काल इत्युच्यते । तत्कालावच्छिन्नानि च क्षणानि विनष्टोत्पद्यमानानि क्रिया वर्तते[2]—इत्युच्यन्ते ॥

साम्प्रतं गोशब्दस्य वर्तमानतामाह—**तेनात्रापि विवक्षात इति ।** विवक्षात आरभ्यान्त्यवर्णपर्यन्तानि वर्णान्येकार्थप्रतिपत्तावधिकृतानि यावन्तं कालं व्याप्नुवन्ति, तावान् वर्तमानः काल इत्युच्यते , तत्कालावच्छिन्नानि वर्णानि–गोशब्दो वर्तते—[3]इत्युच्यन्ते । व्यापारशब्देनात्र गकारादिज्ञानजनितस्य संस्कारस्याभिधानम् ॥

यथा चाग्नेयादीनां पयोऽन्तानामेकफलोत्पत्तावपूर्वद्वारेण साहित्यम् , एवमेकस्याप्याग्नेयस्य क्रमवदनेकक्षणात्मकस्य संस्कारद्वारेणैव स्वापूर्वनिष्पत्तौ साहित्यम् । फलनिष्पादकत्वेन तु तेषाम्—“ चोदना पुनरारम्भः ”—इत्यत्र संकीर्तनं न कृतम् । न तु तावता नास्तितेत्याह—**प्रत्येकं ये पुनरिति ।** व्यापारशब्देनात्र क्रियाक्षणजन्यानां संस्काराणामभिधानम् ।..........[4]अधिकारभावनायां बहूनामग्नेयादीनां करणानां यथास्थाने वर्तमानानामाग्नेयस्योपांशुयाजादिव्यवहितस्योपांशुयाजस्य वाग्नीषोमीयादिव्यवहितस्यापूर्वद्वारेण साहित्यमित्याह—**फलानुमेयतायां इति ।** व्यापारशब्देनात्रापूर्वस्याभिधानम् ॥

1. लाभतः. चौ. मु.
2. वर्तन्ते. मा.
3. इत्युच्यते. मा.
4. न किंचिल्लुप्तमिव भाति.

**अवश्यंभाविनी नित्यं प्रत्यासत्तिश्च कस्यचित् ।**
**न तावता व्यपेतत्वादितरेषामनङ्गता ॥ ८३ ॥**

**[1]द्व्यन्तरैकान्तरत्वे च गकारौकारयोर्ध्रुवम् ।**
**अर्थप्रत्यायने शक्तिस्तत्रस्थौ गमकौ यतः ॥ ८४ ॥**

**यथा विसर्जनीयस्य व्यवधाने न शक्तता ।**
**तथैवेतरयोः शक्तिरानन्तर्ये न विद्यते ॥ ८५ ॥**

**न च यत्रैकशोऽशक्तिस्तत्र सर्वेष्वशक्तता ।**
**[2]रथाद्यङ्गानि दृश्यन्ते शाल्यादिवहनादिषु ॥ ८६ ॥**

**शक्तिस्तत्रास्ति काचिद्धि वहने सा [3]समर्थ्यते ।**
**सङ्घातेन तु वर्णानां प्रत्येकं [4]काचिदिष्यते ॥ ८७ ॥**

अधिकारभावनायां बहूनामाग्नेयादीनां करणत्वेऽवगते नान्त्यस्यैव सन्निधानादङ्गत्वमित्याह—**अवश्यंभाविनीति** ॥

एवम्—"दृष्टश्च पूर्णमासादेः"—इत्युपक्रान्तत्रयं व्याख्यायाधुना दार्ष्टान्तिके योजयितुमाह—**द्व्यन्तरैकान्तरत्वे चेति** । सम्बन्धग्रहणवशेन प्रतिपादकत्वे [5]यत् यथा वृत्तं तत्तथेत्यर्थः ॥

अन्यथा नेत्याह—**यथा विसर्जनीयस्येति** ।

एकैकशश्चाशक्तानां समुदायस्य शक्तता दृष्टैवेत्याह—**न च यत्रैकशोऽशक्तिरिति** । शालिवहनाख्ये कार्ये प्रत्येकमशक्तानामपि रथाङ्गानां समुदितानां शक्तता दृष्टैवेत्यर्थः ॥

ननु च रथाङ्गानामेकैकस्यापि शालिवहनाख्ये कार्ये शक्तिरस्त्येव ; सङ्घाते तु प्रचयादभ्यधिककार्यारम्भकत्वम् । गकारादीनां तु गोत्वावयवशक्तौ नैकैकस्यावयवशः स्फुटास्फुटप्रतिपादकत्वेन वा शक्तिरस्तीति श्लोकद्वयेन चोदयति—**शक्तिस्तत्रास्ति काचिदित्यादिना** ।

1. द्व्यन्तरैकात्वेन. चौ. मु.
2. तथाह्यङ्गानि. चौ. मु.
3. सम्भ्यते. चौ. मु.
4. ईक्ष्यते. चौ. मु.
5. यत् omitted मा.

न ह्यर्थावयवः कश्चित् प्रत्येकं तैः प्रतीयते ।
समस्तस्याथवा कश्चिद् बोधलेशो[1]ऽवजायते ॥ ८८ ॥

रथस्यापि तु यत्कार्यं शाल्यादिवहनं न तत् ।
प्रत्येकं दृश्यते [2]कश्चिन्मनागपि यथेहितम् ॥ ८९ ॥

अथ यत्किंचिदुच्येत वहने तदिहापि नः ।
स्वात्मप्रत्ययहेतुत्वं [3]वर्णेऽस्त्यर्थेऽथवा क्वचित् ॥ ९० ॥

यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।
सोऽपि पर्यनुयोगेन [4]नैवानेन विमुच्यते ॥ ९१ ॥

तत्रापि प्रतिवर्णं हि पदस्फोटो न गम्यते ।
न चावयवशो व्यक्तिस्तदभावान्न चात्र धीः ॥ ९२ ॥

प्रत्येकं चाप्यशक्तानां समुदायेऽप्यशक्तता ।

तत्र परिहारमाह—**रथस्येति** । रथस्य यत् कार्यं तत्रैकैकस्य शक्तिर्नास्ति, मिलितानामस्तीत्यर्थः ॥

अथैकैकस्य यत् कार्यं तत्रैकैकस्य शक्तिरुच्येत; गकारादीनामपि तर्हि आलम्बनविज्ञानोत्पत्तौ सम्बन्धग्रहणवशेन वा क्वचिदर्थेऽप्यस्तीत्याह—**अथ यत्किंचिदुच्येतेति** ।

यश्चायमर्थप्रतिपत्तौ वर्णानां पर्यनुयोग उक्तः—नैकैकस्य, नापि सम्भूय युगपत् क्रमेण वा—इत्यादि, स पदस्फोटाभिव्यक्तावपि भवत्पक्षे ध्वनीनां वर्णानां वा तुल्य इत्याह—**यस्येति** ।

तत्र नैकैकस्य पदस्फोटाभिव्यञ्जकत्वम्, अनुपलब्धेरित्याह—**तत्रापि प्रतिवर्णमिति** । नापि सर्वेषामवयवद्वारेणाभिव्यञ्जकत्वम्, निरवयवत्वादनुपलब्धेश्चे त्याह—**न चेति** ॥

प्रत्येकमशक्तानां समुदायोऽप्यशक्त एवेत्याह—**प्रत्येकमि**त्यर्धेन । तस्मा-

1. लेशोऽत्र. चौ. मु.
2. किंचित्. चौ. मु.
3. वर्णेष्वर्थेऽपिवा. चौ. मु.
4. नैवैतेन. चौ. मु.

तत्र यः परिहारस्ते स नोऽत्रापि भविष्यति ॥ ९३ ॥

सद्भावव्यतिरेकौ च तथावयववर्जनम् ।
तत्राधिकं भवेद् [1]यस्माद् यत्नोऽस्मात्वर्थबुद्धिषु ॥ ९४ ॥

नान्यथानुपपत्तिश्च [2]भवत्यर्थमितिं प्रति ।
तदेवास्या निमित्तं स्याज्जायते यदनन्तरम् ॥ ९५ ॥

सा च वर्णद्वयज्ञानेऽतीतेऽन्त्यज्ञानतः परा ।
[3]भवतीति तदेवास्या निमित्तमवकल्पते ॥ ९६ ॥

विना संस्कारकल्पेन तदनन्तरवृत्तितः ।
कृतानुग्रहसामर्थ्यो वर्णोऽन्त्यः प्रतिपादकः ॥ ९७ ॥

दवश्यं कश्चित् पदस्फोटाभिव्यक्तौ वर्णानां प्रकार आस्थेयः ; स नोऽर्थप्रतिपत्तावेव भविष्यतीत्याह—**तत्र यः परिहार** इत्यर्धेन ॥

ननु समाने पर्यनुयोगे तत्परिहारे च स्फोटपक्ष एव कस्मान्न भवतीत्याह— **सद्भावव्यतिरेकाविति** । अनुपलभ्यमानस्य सद्भावः, वर्णव्यतिरिक्तत्वम्, निरवयवत्वम्, पूर्वविज्ञानजनितस्य संस्कारस्य शक्तिकल्पनं च बाधकम् । तदुक्तम् "शब्दकल्पनायां सा च संस्कारस्य शक्तिकल्पना, शब्दकल्पना च"—इति । [4]तस्मादुपलभ्यमानानामेव वर्णानां पूर्वविज्ञानजनितसंस्कारविशिष्टोऽन्त्यो [5]वर्णः गोत्वं प्रतिपादयति इत्ययं यत्न आस्थेय इत्यर्थः ॥

अपि च, वर्णत्रयव्यतिरिक्तशब्दकल्पनायां चार्थापत्तिः प्रत्यक्षं वा प्रमाणम् ? न तावदर्थापत्तिः, अर्थप्रतिपत्तेरन्यथाप्युपपद्यमानत्वादित्याह—**नान्यथेति** श्लोकद्वयेन ॥

अथवान्त्यस्यैवानन्तरोपलब्धवर्णद्वयानुगृहीतस्य संस्कारमन्तरेणैव निमित्तत्वमित्याह —**विना संस्कारकल्पेनेति** ॥

1. तस्मात्. चौ. मु.
2. भवेदर्थमिति. चौ. मु.
3. भवतीतीदृगेवास्या. चौ. मु.
4. तस्मादुपलभ्यमानामेव गोत्वं प्रति वर्णानां. मा.
5. वर्ण इत्ययं. मा.

**एष एव [1]च संस्कार इति केचित् प्रचक्षते ।**
**[2]अदृष्टकल्पनाहीनं तावन्मात्रं हि दृश्यते ॥ ९८ ॥**

**अथवा वासनैवास्तु संस्कारः सर्व एव हि ।**
**दृढज्ञानगृहीतेऽर्थे संस्कारोऽस्तीति मन्वते ॥ ९९ ॥**

**तस्यार्थबुद्धिहेतुत्वे [3]विसंवादोऽत्र निर्णये ।**
**तद्भावभाविताहेतुर[4]न्यत्रेव प्रतीयते ॥ १०० ॥**

**संस्कारेऽनिष्यमाणे तु पूर्ववृत्तत्वकल्पनम् ।**
**निष्प्रमाणक[5]मित्येवं नानुग्रहफलं भवेत् ॥ १०१ ॥**

अनन्तरवृत्ततामेव वा संस्कारशब्देनाह भाष्यकार इत्याह—**एष इति ।** स्मरणान्यथानुपपत्तिकल्पितस्य स्मरणोत्पादकत्वात् संस्कारान्तरपरिकल्पनायां च प्रमाणाभावादुपलब्धवर्णद्वयविशिष्टान्त्यवर्णानन्तरं चार्थप्रतिपत्तिदर्शनादलं संस्कारान्तरेणेत्यर्थः ॥

अथवा गकारादिविज्ञानजनितवासनामेवाह भाष्यकारः **संस्कारशब्देन ।** तद्विशिष्टस्यैवान्त्यावयवस्यार्थप्रतिपत्तौ हेतुत्वं स्मरणान्यथानुपपत्तिप्रमाणकम् । सर्वलोकप्रसिद्धं चैतत् । तदुक्तम्—"वस्तुधर्मो ह्येषः, यदनुभवः पटीयान् स्मृतिबीजमाधत्ते"—इति । तदेतदाह— **अथवा वासनैवास्त्विति ॥**

अर्थप्रतिपादकत्वे तु तस्य विप्रतिपत्तिः, तत्र च तद्भावभावित्वं स्मृतिविज्ञान इव निर्णयकारणमित्याह—**तस्यार्थबुद्धिहेतुत्व इति ॥**

युक्त चैतत्, अनिष्यमाणे च संस्कारे पूर्वयोरन्त्यं प्रत्यनुग्राहकत्वं न स्यादित्याह—**संस्कारेऽनिष्यमाण इति ।** न तावत् पूर्वयोरन्त्यं प्रति विज्ञानयोरनुग्राहकत्वम्, अन्त्यवर्णज्ञानवेलायां तिरोहितत्वात्; नापि संस्कारद्वारेण, तदभावाभ्युपगमात् । नाप्यनन्तरोपलब्धयोः, संस्काराभावेन उपलम्भानुपलम्भयोरविशेषादित्यर्थः ॥

1. तु. चौ. मु.
2. अदृष्टकल्पनातीतं चौ. मु.
3. विसंवादोऽस्य. चौ. मु.
4. अन्यत्रैव. चौ. मु.
5. एवेति. चौ. मु.

**यद्यपि स्मृतिहेतुत्वं संस्कारस्य व्यवस्थितम् ।**
**[1]कार्यान्तरेऽपि सामर्थ्यं न तस्य प्रतिषिध्यते ॥ १०२ ॥**

**तेन संस्कारसद्भावो [2]नानेनैव प्रकल्पितः ।**
**[3]तस्यार्थप्रत्ययार्थत्वमदृष्टं केवलं कृतम् ॥ १०३ ॥**

**शब्दपक्षेऽपि तच्चैतददृष्टत्वान्न मुच्यते ।**
**कार्यबोधनशक्तत्वं तुल्यं संस्कारशब्दयोः ॥ १०४ ॥**

**क्षीणार्थापत्तिरेवं च न स्फोटं परिकल्पयेत् ।**

गकारादिस्मरणान्यथानुपपत्तिपरिकल्पितस्यान्यत्रासामर्थ्यादिति चेदित्याशङ्क्याह—**यद्यपीति** । अर्थप्रतिपत्तिलक्षणेऽपि कार्ये तदन्यथानुपपत्त्या तत्रापि सामर्थ्यावगमादित्यर्थः ॥

ननु स्मरणान्यथानुपपत्तिकल्पितस्य संस्कारस्यार्थप्रतिपत्त्यन्यथानुपपत्त्या शक्तिकल्पनायां स्फोटकल्पनैव वरमित्याशङ्क्याह—**तेन संस्कारसद्भाव इति** ।

मम वर्णस्मरणान्यथानुपपत्त्यावगत एव संस्कारात्मके धर्मिणि शक्तिमात्रकल्पना ; तव त्वर्थप्रतिपत्त्यन्यथानुपपत्त्या धर्मिणोऽपि स्फोटस्य कल्पनेति विशेषः ॥

सा च संस्कारस्य शक्तिः कल्पयित्वापि स्फोटं भवत्पक्षे स्फोटाभिव्यक्तौ परिकल्पनीयैवेति कल्पनागौरवमित्याशङ्क्याह—**शब्दपक्षेऽपीति** ।

तत्र गकारादिस्मरणान्यथानुपपत्त्या कल्पिते वा धर्मिणि संस्कारात्मकेऽर्थप्रतिपत्त्यन्यथानुपपत्त्या शक्तिमात्रं परिकल्प्यताम्, शक्तिविशिष्टं वा पदस्फोटाख्यधर्म्यन्तरमिति चिन्तायां संस्कारस्यैव शक्तिमात्रं परिकल्प्यार्थप्रतिपत्तेरुपपन्नत्वान्न स्फोटकल्पनायामर्थापत्तिः प्रभवतीत्याह—**कार्यबोधनशक्तत्वमिति** ।

अपि च, कल्पयित्वार्थप्रतिपत्त्या शक्तिविशिष्टं पदस्फोटाख्यं संस्कारस्य शक्तिः परिकल्पनीया । अतः पूर्ववर्णजनितसंस्कारविशिष्टस्यैवान्त्यस्य पदस्फोटाभि-

1. कार्यान्तरेषु. चौ. मु.
2. नानेनैवं प्रकल्प्यते. चौ. मु.
3. तस्यार्थबुद्धिहेतुत्वम्. चौ. मु.

**संस्कारकल्पना पूर्वमवश्यंभाविनी हि ते ॥ १०५ ॥**

**ध्वनिभ्योऽप्यपरस्तावन्नेष्येतार्थमिति प्रति ।**
**ते वा यद्युपलभ्येरन् वर्णाः प्रत्यक्षतो न [1]वा ॥ २०६ ॥**

**वर्णानां यौगपद्येन यदि चावश्यमर्थिता ।**
**नित्यत्वात् सर्वदा तत् स्यान्न तु कारणता तथा ॥ २०७ ॥**

**इत्थं क्रमगृहीतानां [2]युगपद् वाथवा परा ।**
**स्थितिः सा कारणं तु स्यान्नित्यमर्थधियं प्रति ॥ १०८ ॥**

व्यञ्जकत्वम्, अभिव्यञ्जकस्य चार्थप्रतिपादकत्वमित्याह — **संस्कारकल्पना पूर्वमिति** ।

ननु यदि वर्णेभ्य एव पदस्फोटाभिव्यञ्जकेभ्योऽर्थस्य प्रतिपन्नत्वेन नार्थापत्तिरर्थान्तरं कल्पयति, ध्वनिभ्य एव तर्हि वर्णाभिव्यञ्जकेभ्योऽर्थप्रतिपत्तेरुपपन्नत्वेन वर्णत्रयसद्भावोऽपि न स्यात्। ततश्च—"गकारौकारविसर्जनीयाः"—इति भाष्यमनुपपन्नमित्याशङ्क्याह **ध्वनिभ्योऽपीति** । स्यादेतदेवम्, यदि स्फोटवदर्थप्रतिपत्त्यन्यथानुपपत्तिरेव वर्णसद्भावे प्रमाणं स्यात्; वर्णवदेव च ध्वनयः प्रत्यक्षा भवेयुः; प्रत्यक्षावगतवर्णत्रयान्यथानुपपत्तिकल्पितास्तु ध्वनयः; तत्र वर्णत्रयाभावे एषामभाव एव स्यात् । तस्माद् वर्णानामेव संभूय क्रमेण वार्थप्रतिपत्तिनिमित्तत्वान्नार्थापत्तिरर्थान्तरं कल्पयतीत्यर्थः।

ननु नित्यत्वेन वर्णानां यौगपद्यस्यापि सद्भावात् संभूय यौगपद्येन निमित्तत्वं कस्मान्नेष्टम्? अत आह—**वर्णानामिति** । अनभिव्यक्तानां यौगपद्यम्, न तु कारणत्वमित्यर्थः ॥

पक्षान्तरमाह—**इत्थमिति** ।

विशिष्टक्रमगृहीतानां वानन्तरं सत्तार्थप्रतिपत्तिनिमित्तत्वम्, तथा सम्बन्धग्रहणादित्यर्थः ।

1. च. चौ मु     2. युगपद्याथवा. चौ. मु.

यद्वा प्रत्यक्षतः पूर्वं क्रमज्ञातेषु यत् परम् ।
समस्तवर्णविज्ञानं तदर्थज्ञानकारणम् ॥ १०९ ॥

तत्र ज्ञाने च वर्णानां यौगपद्यं प्रतीयते ।
नावश्यं यौगपद्येन [1]प्रत्यक्षत्वेन तद्भवेत् ॥ ११० ॥

चित्ररूपां च तां बुद्धिं सदसद्वर्णगोचराम् ।
[2]केचिदाहुर्यया वर्णो गृह्यतेऽन्त्यः पदे पदे ॥ १११ ॥

अन्त्यवर्णेऽपि विज्ञाते [3]पूर्वसंस्कारकारितम् ।
स्मरणं यौगपद्येन सर्वेष्वन्ये प्रचक्षते ॥ ११२ ॥

सर्वेषु [4]चैतदर्थेषु मानसं सर्ववादिनाम् ।
इष्टं समुच्चयज्ञानं [5]क्रमज्ञानेषु सत्स्वपि ॥ ११३ ॥

पक्षान्तरमाह—**यद्वेति** श्लोकद्वयेन । न पूर्ववर्णसंस्कारस्य साक्षादर्थप्रतिपत्तौ निमित्तत्वम् । संस्कारजन्यायां तु बुद्धौ युगपत् प्रतिभासमानस्य वर्णत्रयस्य निमित्तत्वम्, नावश्यं प्रतीतिगतस्यैव यौगपद्यस्यार्थप्रतिपादकत्वम्, स्मृतिगतस्याप्युपपत्तेरित्यर्थः ॥

तां च [6]बुद्धिं पूर्ववर्णजनित[7]संस्कारानुगृहीतान्त्यवर्णजन्यामतिक्रान्तवर्णग्रहणरूपां सदसद्वर्ण[8]गोचरां केचिद् विचित्रामिच्छन्ति, यया पदे पदेऽन्त्यवर्णग्रहणमित्याह—**चित्ररूपां चेति** ।

अपरे तु संस्कारत्रयजन्यां वर्णस्मरणरूपां सङ्कलनात्मिकामिच्छन्तीत्याह—**अन्त्यवर्णेऽपि विज्ञान इति** ।

दृष्टं च क्रमगृहीतानां युगपत् स्मरणमित्याह—**सर्वेषु चेति** ।

1. प्रत्यक्षस्येन. चौ. मु.
2. केचिदाहुर्यथा. चौ. मु.
3. सर्वसंस्कार. मा.
4. चैवमर्थेषु. चौ. मु.
5. क्रमज्ञातेषु. मा.
6. बुद्धिं omitted मा.
7. संस्कारान्त्यवर्ण. मा.
8. गोचराङ्ककचिद्विचित्र. मा.

**न [1]चेत्तदभ्युपेयेत क्रमदृष्टेषु नैव हि ।**
**शतादिरूपं जायेत तत्समुच्चयदर्शनम् ॥ ११४ ॥**

**तेन श्रोत्रमनोभ्यां स्यात् क्रमाद् वर्णेषु यद्यपि ।**
**पूर्वज्ञानं [2]परस्तात् तु युगपत् स्मरणं भवेत् ॥ ११५ ॥**

**तदारूढा[3]स्तदा वर्णा न दूरेऽर्थावबोधनात् ।**
**शब्दादर्थमतिस्तेन लौकिकैरभिधीयते ॥ ११६ ॥**

**चित्रबुध्यानया भ्रान्त्या वर्णेभ्यो व्यतिरेकतः ।**
**पश्चाद् गौरिति विज्ञानं प्रत्यक्षं कैश्चिदिष्यते ॥ ११७ ॥**

क्रमगृहीतानां युगपत् स्मरणानभ्युपगमे त्वेकादिक्रमेण गृहीतानां सङ्कलनात्मकः शतप्रत्ययो न स्यादित्याह—**न चेदिति** ।

उपसंहरति—**तेन श्रोत्रमनोभ्यामिति** ।

तदारूढानां स्वार्थप्रतिपादकत्वे सति व्यवधानाभावेन शब्दार्थं प्रतिपद्यामहे—इति लौकिकं वचनमित्याह—**तदारूढास्तदेति** । तस्मादुक्तेन प्रकारेणार्थप्रतिपत्तेरन्यथाप्युपपद्यमानत्वेन नार्थान्तरं परिकल्पयतीति सिद्धम् । स्वयं चैतत्—'यावन्तो यादृशाः'—इत्यादिना व्याख्यातम् ।

ननु विज्ञानत्रयोत्तरकालं—गौः—इत्येकाकारं विज्ञानमेकैकज्ञानविलक्षणमर्थान्तरावभासमुपजायते; तद्भावभावित्वेनाक्षजत्वात् प्रत्यक्षम् । न च तद्वर्णालम्बनम्, भिन्नत्वाद् वर्णानाम् । तत्र यदा शाबलेयादिषु—गौरयम्—इत्येकाकारं विज्ञानं शाबलेयादिव्यतिरिक्तैकजातिप्रसाधकम्, यथा च प्राण्यादिषु—देवदत्तोऽयम्—इति विज्ञानमेकावयविप्रसाधकम्, तद्वद्—गौः—इत्यपि वर्णत्रयव्यतिरिक्तैकप्रसाधकं प्रत्यक्षमिष्टं कैश्चिदित्येतद् विकल्प्य दूषयति—न तावद्वर्णत्रयोत्तरकालमेकाकारमर्थान्तरग्राहकं विज्ञानमुपजायते, वर्णत्रयव्यतिरिक्तस्य श्रोत्रविज्ञाने प्रतिभासाभावात्? तदुक्तम्—"ते च श्रोत्रग्रहणाः"—इति ।

भ्रान्तेस्तु मूलमुपदर्शयितुमाह—**चित्रबुध्यानयेति** । वर्णद्वयप्रतिपत्त्यनन्तरं सदसद्वर्णगोचरं ग्रहणस्मरणरूपं यद्विज्ञानमुपजायते [4]समस्तसंस्कारकारितम्,

1. चेत्तदाभ्युपेयेत. चौ. मु.
2. परस्तान्न. चौ. मु.
3. ततो. चौ. मु.
4. कारितं तावत् कुतोऽयं. मा.

**वैलक्षण्यं च[1] तस्येष्टमेकैकज्ञानतः स्फुटम् ।**
**वर्णरूपावबोधात् तु न तदर्थान्तरं भवेत् ॥ ११८ ॥**

**यदि चार्थान्तरत्वं स्यादेकैकस्मात् त्रयस्य तत् ।**
**वर्णत्रयपरित्यागे बुद्धिर्नान्यत्र जायते ॥ ११९ ॥**

**गौरित्येकमतित्वं तु नैवास्माभिर्निवार्यते ।**
**[2]तद्ग्राह्यैकार्थता भ्रान्त्या शब्दे स्यादेकतामतिः ॥ १२० ॥**

**शैघ्र्यादल्पान्तरत्वाच्च गोशब्दे सा भवेदपि ।**
**[3]देवदत्तादिशब्दे तु स्फुटो भेदः प्रतीयते ॥ १२१ ॥**

तत्कृतोयं भ्रमः न तु तत्रार्थान्तरं प्रतिभासते । वर्णा एव तु परोक्षापरोक्षतया प्रतिभासन्ते; नार्थान्तरमित्यर्थः ।

इष्टमेव च तस्य वैलक्षण्यमेकैकवर्णगोचराद् विज्ञानादित्याह—**वैलक्षण्यमिति।**

यदि चैकैकज्ञानगोचराद् गकारादेर्वर्ण[4]त्रयस्यार्थान्तरत्वं तदपीष्टमेवेत्याह—**यदि चार्थान्तरत्वमिति ।**

यदपि केवलं प्रतीयमानस्यैव गकारादेरेकार्थसंश्लेषकारितमेकाकारं विज्ञानमुपजायते, तदपि वर्णत्रयात्मकैकगोपदालम्बनम् । एकपदत्वं चैकार्थकत्वेनैकबुद्धिग्राह्यत्वेन चेत्याह—**गौरित्येकमतित्वमिति ।**

यत्र तु भिन्नावशिष्टता, तत्रैकमतित्वं नास्तीत्याह—**शैघ्र्यादिति** । गौः—इत्यत्रापि प्रतिपत्तित्रयमेकलक्षणोत्पन्नत्वेनैकावशिष्टत्वेनैकत्ववदवभासते; न तु तत्रैकार्थकारित्वेन वर्णत्रयालम्बनैकावगतिः, सम्बन्धग्रहणाग्रहणयोरविशेषात् इति अपिशब्दस्यार्थः ।

"नन्वेवमपि—शब्दादर्थं प्रतिपद्यामहे—इति लौकिकं वचनमनुपपन्नम्"—इति चोद्यभाष्यम् । तस्यायमर्थः—संस्काराणामर्थप्रतिपादकत्वे तेषामशब्दत्वेन—शब्दादर्थं प्रतिपद्यामहे—इति लौकिकं वचनमनुपपन्नम्—इति । तत्र परिहारभाष्य-

1. तु. चौ. मु.
2. तद्ग्राह्यैकार्थताभ्यां च. चौ. मु.
3. देवदत्तादिशब्देषु. चौ. मु.
4. त्रयस्यार्थान्तरत्वमपीष्ट. मा.

न गौणः शब्द इत्येवं ग्रन्थसम्बन्धनं भवेत् ।
अस्त्यक्षरेषु हेतुत्वं तत्परं वचनं [1]च तत् ॥ १२२ ॥

शब्दादिति च हेतुत्वं पञ्चम्यात्राभिधीयते ।
भवत्पक्षेऽपि चैकान्ताज्ज्ञानेन व्यवधिर्भवेत् ॥ १२३ ॥

गौणोऽन्यथा [2]प्रसिद्धः सन् प्रयुज्येतान्यथा यदि ।
न चान्यादृङ्निमित्तत्वं कस्यचित् संप्रतीयते ॥ १२४ ॥

स्वव्यापारव्यवायो हि सर्वस्मिन्नेव कारके ।
दृष्टो व्यापार ईदृक् [3]च शब्दस्येत्यव्यवेतता ॥ १२५ ॥

गकारादेर्यदा चान्यो न लोके शब्द उच्यते ।

द्वयम्—"यदि नोपपद्यते, अनुपपन्नं नाम"—इत्येकम्, "न चैतदनुपपन्नार्थम्, अक्षरेभ्यः संस्कारः, संस्कारादर्थप्रतिपत्तिरिति भवन्त्यर्थप्रतिपत्तावक्षराणि निमित्तम्"—इत्यपरं भाष्यम्। "गौण एष शब्दः"—इति चोद्यभाष्यम्; तस्याभिप्रायः—संस्कारादर्थप्रतिपत्तावक्षराणां गौणमर्थप्रतिपादकत्वम्। ततश्च—शब्दादर्थं प्रतिपद्यामहे—इतीति। नायं गौणः शब्दः, अक्षराणां संस्कारद्वारेणार्थप्रतिपत्तौ तद्भावभावित्वेन निमित्तत्वात्। निमित्तप्रतिपादकं चैतद्वचनम्—शब्दादर्थं प्रतिपद्यामहे—इति इत्यर्थः।

एतदेव विवृणोति—**शब्दादिति च हेतुत्वमिति**।

यदि च कस्यचित् साक्षात्कारकत्वं स्यात्, ततोऽक्षराणां संस्कारव्यवधानेनार्थप्रतिपत्तौ गौणत्वं स्यात्; न तु तदस्ति, काष्ठादेरपि पाके ज्वलनव्यवधानादित्याह—**गौणोऽन्यथा प्रसिद्ध इति**।

अथवा, अवान्तरव्यापारविशिष्टस्य कारकत्वेन तस्य च प्रतिकारकं विचित्रत्वेन न क्वचिद् व्यवधानमित्याह—**स्वव्यापारव्यवाय इति**।

गकारादिव्यतिरिक्ते लोके शब्दशब्दप्रयोगाभावेन [4]अशब्दत्वेन स्फोटपक्षे एव—शब्दादर्थं प्रतिपद्यामहे—इति लौकिकं वचनमनुपपन्नमित्याह—**गकारादेरिति**।

1. हि. चौ. मु.
2. प्रसिद्धो वा. चौ. मु.
3. तु. चौ. मु.
4. शब्दत्वेन. मा.

तदा तस्मात् प्रतीतेऽर्थे शब्दादिति कथं भवेत् ॥ १२६ ॥

शब्दज्ञानादिसंस्कारव्यक्तस्फोटकृतेऽथवा ।
प्रत्यये शब्दजन्यत्वमिति गौणं प्रसज्यते ॥ १२७ ॥

संस्कारजननार्थं च न शब्दोच्चारणं मतम् ।
अर्थप्रतीतिमुद्दिश्य प्रयुक्तस्य[1] क्रमस्त्वयम् ॥ १२८ ॥

तस्मात् तादर्थ्यतः शब्दः फलेन व्यपदिश्यते ।
समुच्चयावबोधे तु व्यवधानं न केनचित् ॥ १२९ ॥

यदि [2]वापूर्वसंस्कार इतिकर्तव्यतेष्यते ।
वर्णोऽन्त्यो गमकस्तस्य शब्दत्वान्मुख्यता भवेत् ॥ १३० ॥

अथ वर्णाभिव्यञ्जकस्यार्थप्रतिपादकत्वेन लौकिकवचनमुपपन्नमित्युच्यते, [3]तत्रास्य गौणत्वं प्राप्नोतीत्याह—**शब्दज्ञानादीति**। भवत्पक्षे हि वर्णानामर्थप्रतिपादकत्वं शब्दालम्बनज्ञानसंस्कारतच्छक्तिकल्पनाभिव्यक्तस्फोटव्यवहितमिति—शब्दादर्थं प्रतिपद्यामहे—इति गौणमापद्यत इत्यर्थः ।

अस्मत्पक्षे तु यथा पाकमुद्दिश्य काष्ठादेः प्रवृत्तौ ज्वलनादेरवान्तरव्यापारत्वेनाव्यवधायकत्वम्, एवं वर्णत्रयस्यार्थप्रतिपत्तिमुद्दिश्य प्रयुक्तस्य न संस्कारेण व्यवधानमित्याह—**संस्कारजननार्थमिति**।

उपसंहरति—**तस्मादिति**। इन्द्रियादावपि संकलनाप्रत्ययारूढानां प्रतिपादकत्वम्, तदापि व्यवधानं नास्तीत्याह—**समुच्चयावबोध इति**। तदुक्तम्—"तदारूढाः"—इति ।

यदाप्यन्त्यस्य पूर्ववर्णजनितसंस्कारविशिष्टस्य गमकत्वम्, तदापि तस्य शब्दत्वेन व्यवधानाभावेनैकत्वेन च [4]मुख्यत्वम्। शब्दादिति प्रकृतिप्रत्ययौ; इत्याह—**यदि वापूर्वसंस्कार इति**।

1. क्रमादयम्. चौ. मु.
2. चापूर्वसंस्कार. चौ. मु.
3. तत्राप्यगौणत्वं. मा.
4. मुख्यत्वं शब्दादिति प्रकृतिप्रत्यये.... त्याह. मा.

**वर्णा वा ध्वनयो वापि स्फोटं न पदवाक्ययोः ।**
**व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः ॥ १३१ ॥**

**सत्त्वाद् घटादिवच्चेति साधनानि यथारुचि ।**
**लौकिकव्यतिरेकेण कल्पितेऽर्थे भवन्ति हि ॥ १३२ ॥**

**नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ।**
**घटादिवन्न दृष्टेन विरोधो धर्म्यसिद्धितः ॥ १३३ ॥**

**प्रतिषेधेत्तु यो वर्णांस्तज्ज्ञानानन्तरोद्भवान् ।**
**दृष्टबाधो भवेत् तस्य शशिचन्द्रनिषेधवत् ॥ १३४ ॥**

**वर्णोत्था वार्थधीरेषा तज्ज्ञानानन्तरोद्भवा ।**
**येदृशी सा तदुत्था हि धूमादेरिव वह्निधीः ॥ १३५ ॥**

[1]तत्रैव वैलक्षण्यमाह—**वर्णा वा इति** । वर्णा वा ध्वनयो वापीति धर्मिनिर्देशः, स्फोटं नाभिव्यञ्जन्तीति साध्यो धर्मः, व्यञ्जकत्वादिति हेतुः, प्रदीपवदिति दृष्टान्तः । तस्मिन्नेव प्रतिज्ञार्थे सत्त्वादिति हेतुः, घटवदिति दृष्टान्त इत्याह—**सत्त्वाद् घटादिवच्चेति** । न चात्र प्रत्यक्षादिविरोधः, प्रत्यक्षादिना प्रतीयमानत्वात् स्फोटस्येत्याह—**साधनानीति** ।

प्रयोगान्तरमाह—**नार्थस्य वाचक इति** । स्फोट इति धर्मी, अर्थस्य वाचको न भवतीति साध्यो धर्मः, वर्णव्यतिरिक्तत्वादिति हेतुः, घटवदिति दृष्टान्तः । नापि [2]स्फोटानन्तरा धीर्भवतीत्याह **प्रतिषेधेदिति** । यदि कश्चिदेवमाह—न वर्णत्रयमर्थस्य वाचकम् , स्फोटव्यतिरिक्तत्वात् घटवत्—इति, तस्य वर्णत्रयप्रतिपत्त्यनन्तरमनन्यथासिद्धार्थप्रतिभान्यथानुपपत्त्या शशिचन्द्रनिषेधवद्बाध इत्यर्थः ।

प्रमाणान्तरमाह—**वर्णोत्था वेति** । वर्णजन्येति साध्यो धर्मः, वर्णप्रतिपत्त्यनन्तरमुत्पद्यमानत्वादिति हेतुः, धूमादग्न्यनुमानवदिति दृष्टान्तः ।

1. तत्रैव त्रैलक्षण्य. मा. 2. स्फोटानन्तराधो भवतीत्याह. मा.

**दीपवद्वा गकारादिर्गवादेः प्रतिपादकः ।**
**ध्रुवं प्रतीयमानत्वात् तत्पूर्वं प्रतिपादनात् ॥ १३६ ॥**

**वर्णातिरिक्तः प्रतिषिध्यमानः पदेषु मन्दं फलमादधाति ।**
**कार्याणि [1]वाक्यावयवाश्रयाणि सत्यानि कर्तुं कृत एष यत्नः ॥ १३७ ॥**

प्रयोगान्तरमाह—**दीपवद्वेति** । गकारादित्रयं धर्मि, प्रतिपादकमिति साध्यो धर्मः, गोत्वप्रतिपादनादिति हेतुः, रूपे प्रदीपवदिति दृष्टान्तः ।

शब्दार्थयोः सम्बन्धाक्षेपानन्तरं वर्णव्यतिरिक्तसम्बन्धिनिराकरणमसम्बद्धम्, तस्यैवार्थेन सह सम्बन्धोपपत्तेरिति चोदयति—**वर्णेति** । तत्र परिहारमाह—**कार्याणीति** । वर्णत्रयातिरिक्तस्य विधिमुखेन कार्यमुखेन वानुपलभ्यमानत्वेन सम्बन्धग्रहणाभावाद् वाक्यस्फोटस्यासत्यत्वे [2]सम्बन्धस्यासत्यत्वाद् वर्णत्रयात्मन्येव सम्बन्धिनि तस्योपलभ्यमानत्वेन च सम्बन्धस्य सद्भावः सत्यत्वं च सिध्यति । तदाह—**वाक्यावयवाश्रयाणीत्यादि** । सत्यानि कर्तुं कृत एष यत्नः स्फोटात्मकसम्बन्धिनः प्रतिषेधेन [3]वर्णात्मकसम्बन्ध्यवधारणरूपः । तदुक्तम्—

"आधारात्मनि विज्ञाते सुखमाधेयबोधनम्" । इति ॥

इति भट्टोम्बेकविरचितायां तात्पर्यटीकायां
स्फोटाख्यं वादस्थानकं
समाप्तम्

---

1. वाक्यावयवाश्रितानि. मा.
2. संबन्धस्यासत्यर्थाद्वर्ण. मा
3. वर्णात्मकसंबधावधारण. मा.

# श्लोकार्धानुक्रमणिका

## VARIANT READINGS OF THE ŚLOKAVĀRTIKA

(With those in the Ptd. Edns and Adyar Ms., not noticed as foot-note in the text)

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 2 | 3 b | चित्तश्रोत्रैः | चित्तस्तोत्रैः K. |
| 8 | 17 d | वक्तव्यः | कर्तव्यः K. |
| 8 | 21 b | एवाभिधास्यते | एवाभिधीयते T. |
| 9 | 24 a | तदतद्भावयोः | सदसद्भावयोः T. |
| 9 | 26 d | प्रयुक्तस्यादितः | प्रयुक्तस्स्यादितः K. |
| 10 | 30 b | सम्भवात् | सम्भवः K. T. |
| 11 | 36 a | क्लिश्यतश्चैवं | क्लिश्यते चैवं K. T. |
| 11 | 37 d | चोच्यते | वोच्यते K. T. |
| 12 | 41 b | चेक्षते | चेष्यते K. T. |
| 12 | 41 c | नन्वशक्तम् | न त्वशक्तम् K. |
| 13 | 47 a | अतिदौर्बल्यात् | अतिदौर्जन्यात् T. |
| 13 | 48 d | वैदिकं | व्याख्येयम् K. T. |
| 13 | 51 a | अध्याहारादिनिर्मुक्ता | अध्याहारादिभिर्मुक्ता T. |
| 14 | 52 a | अन्याय्य | अन्याय K. |
| 14 | 52 d | वशतोऽथवा | वशगोऽथवा K. T. |
| 14 | 53 c | वेदाविरोधस्य | वेदाविरुद्धस्य K. |
| 14 | 56 a | व्यवधानं च | व्यवधानं तु T. |
| 16 | 63 b | नानार्थवादिनः | नानार्थवाचिनः T. |
| 16 | 66 b | कल्पना | कल्पनम् Ch. T. |
| 17 | 71 c | क्रियमाणापि | क्रियमाणा च T. |
| 17 | 73 a | साधारण्यात् | साधारणात् T. |
| 18 | 74 d | —पाठेऽवबाधिते | —पाठे प्रबाधिते T. |
| 18 | 75 c | पूर्वेणैव च | पूर्वेणैव हि T. |

---

**K.** Kāsi Vidya Sudhānidhi Edn. **Ch.** Chowkhāmba Edn.

**T.** Trivandrum Edn. **Ms.** Adyar Manuscript.

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 18 | 77 a | कानि | तानि T. |
| 18 | 78 b | चोद्यते | चोदना T. |
| 18 | 78 d | अधीत्य च | अधीत्य तु T. |
| 19 | 79 d | कृत्वेत्येवं | कृत्वेत्येतत् T. |
| 19 | 81 c | —विधित्वे | —विधाने T. |
| 20 | 84 c | परस्तात् | पुरस्तात् T. |
| 20 | 87 a | श्रुतार्थं तु परित्यज्य | श्रुतार्थन्त्वपरित्यज्य Ch. K. T. |
| 20 | 87 a | श्रुतार्थं तु | श्रुत्यर्थं तु Ms. |
| 22 | 93 a | अन्यं संस्कारं | अन्यः संस्कारः T. |
| 23 | 102 d | यावन्न च समाप्यते | यावच्च न समाप्यते T. |
| 24 | 103 d | स्नातको न हि | स्नातको हि न T. |
| 24 | 106 d | दृष्टार्थत्वेन दर्शितः | दृष्टार्थत्वात् प्रदर्शितः T. |
| 24 | 108 a,b | गुरुवासाच्च जिज्ञासोः | गुरुगेहाच्च जिज्ञासार्थः T. |
| 24 | 108 d | संस्थितिः | सूत्रितः T. |
| 25 | 110 b | वेदाध्ययनहेतुता | वेदग्रहणहेतुता T. |
| 25 | 111 b | प्रतिपाद्यते | प्रतिपादितम् T. |
| 25 | 111 d | शब्दं विना | शब्दात् विना T. |
| 26 | 114 d | लभ्यते | शक्यते K. |
| 26 | 116 a | बाह्यं | बाह्यः T. |
| 26 | 117 d | दर्शिता | सूत्रिता Ch. T. |
| 27 | 118 b | समस्यते | समर्थ्यते Ms. |
| 27 | 118 c | तादर्थ्ये | तादृशे K. |
| 27 | 120 d | तादर्थ्यं | तादृशम् Ch. T. |
| 27 | 121 c | विशेष— | विशिष्ट— T. |
| 28 | 123 c | —शब्दश्च | —शब्दस्तु Ms. |
| 28 | 124 b | प्रसिद्धत्वाच्च | प्रसिद्धत्वात्तु T. |
| 28 | 126 d | आद्येन | आद्यस्य T. |
| 31 | 1 d | वेह | चेह T. |
| 34 | 9 c | त्वपि | वापि Ms. T. |
| 35 | 11 d | चापि | वापि T. |

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 37 | 19 c | तन्न तु | तन्न च Ch. |
| 37 | 20 c | सम्बन्धेक्षानपेक्षाणां | सम्बन्धस्यानपेक्षाणाम् Ch. |
| 38 | 23 a | वक्त्रानुभूत | तत्रानुभूत Ch. T. |
| 42 | 33 b | परीक्ष्यताम् | प्रतीक्ष्यताम् T. |
| 44 | 39 b | कारणदोषतः | करणदोषतः Ms. |
| 44 | 39 c | वस्तुत्वात्तु | वस्तुत्वन्तु Ms. |
| 46 | 40 b | तदभावोऽप्यकृत्रिमः | तदभावोऽथ कृत्रिमः Ch. T. |
| 46 | 42 c | दुष्टत्वाद्वेन्द्रिया— | दुष्टत्वादिन्द्रिया— Ch. T. |
| 47 | 43 a | अत एव च वो | अत एव वचो T. |
| 47 | 43 c | गुणाभावः | गुणाभावाः T. |
| 47 | 44 d | लभ्यते | लक्ष्यते T. |
| 47 | 46 d | चोदनानां | चोदनायां T. |
| 48 | 47 b | गृह्यताम् | गम्यताम् T. |
| 55 | 48 b | अपेक्षिता | अपेक्षता Ch. T. |
| 56 | 50 d | शुद्धिः | बुद्धिः Ms. |
| 56 | 51 a | कारणेऽशुद्धे | कारणे शुद्धे Ch. T. |
| 56 | 51 b | —ज्ञानस्याप्रमाणता | —ज्ञाने स्यात् प्रमाणता Ch. T. |
| 56 | 51 d | न किञ्चित् | न क्वचित् Ch. T. |
| 56 | 52 b | तदान्यो | तदान्यत् Ch. T. |
| 59 | 60 b | दोषज्ञानादमानता | दोषाज्ञानात् प्रमाणता Ch. T. Ms. |
| 60 | 61 b | मतिः | मतिम् Ms. |
| 61 | 62 d | गुणवद्वक्तृकत्वतः | गुणा वक्तृकत्वतः ? Ms. |
| 64 | 71 c | तदभावे हि तद् | तदभावे न तद् Ms. |
| 64 | 73 c | विकल्प्यत्वात् | विकल्पत्वात् Ms. |
| 66 | 80 b | न विसंवादम् | नापि संवादम् Ch. T. |
| 67 | 84 a | तेनास्य ज्ञायमानत्वं | तेनास्याज्ञायमानत्वे K. |
| 68 | 86 b | पूर्वेणात्तः | पूर्वेणोत्तः ? Ms. |
| 68 | 87 b | गृह्यते | गम्यते Ms. |
| 69 | 92 c | असिद्धमितीदं तु | असिद्धमिदं किंतु Ch. |
| 69 | 95 d | वेदसर्वसाधारणे | वेदे सर्वसाधारणे Ch. T. |

| Page | Verse | Present Edn. | Other edns. and MS. |
|---|---|---|---|
| 69 | 96 a | नैवं. | नैव T. |
| 70 | 100 c | निराकरिष्यते | निवारयिष्यते Ch. T. |
| 72 | 107 b | इन्द्रियेति तु | इन्द्रियेण तु Ch. T. |
| 72 | 109 b | इतरत्र तु | उत्तरत्र च T. |
| 75 | 121 c d | वचनत्वेन श्रद्धेये | वचनश्रद्धेये Ms. |
| 77 | 128 b | पुंवाक्यत्वे | नृवाक्यत्वे Ch. T. |
| 79 | 142 d | प्रवर्तते | प्रतीयते Ms. |
| 83 | 158 d | बालवाक्येऽपि दर्शनात् | बालवाक्ये निदर्शनात् K. |
| 85 | 164 c | आवापोद्धारप्रयोगेन | आवापोद्धारभेदेन K. |
| 86 | 170 d | नायथार्थता | also in K. नायथार्थता |
| 90 | 181 d | न च वाक्ये | न तु वाक्ये Ms |
| 94 | 195 d | नृगुणेऽपूर्वजन्मनि | नृगुणैः पूर्वजन्मनि Ch.<br>नृगुणे पूर्वजन्मनि K. |
| 94 | 198 d | के त्वरूपता | केऽप्यरूपता Ms. |
| 98 | 207 c | बाध्येतेह | बाध्यतेह ? Ms. |
| 99 | 209 a | साधनत्वेन | साधकत्वेन K |
| 103 | 221 c | स्वर्गादि | स्वर्गो हि K. |
| 104 | 222 b | निरीक्षया | विवक्षया K. |
| 111 | 245 a | भूयान् धर्मः | भूयार्थत्वं Ms. |
| 111 | 245 b | ह्युपकारिता | ह्युपकारिता Ms. |
| 112 | 249 c | निषिद्धत्वात् | निषेधत्वात् Ms |
| 113 | 255 c | हिंसाचांश | हिंसायांश Ms |
| 114 | 261 b | नानर्थोऽपि | नानर्थोऽतः Ms. |
| 116 | 267 d | श्येनस्य न फल | श्येने न फल Ms. |
| 116 | 270 b | सम्प्रधार्यते | सम्प्रधार्यताम् Ms. |
| 116 | 270 c | इष्टसिद्धिः | इष्टवृद्धिः Ms. |
| 117 | 275 a | साधनाशक्ति | साधनाशक्तिः Ms. |
| 120 | 2 a | मात्रमित्येतत् | मात्रमित्यत्र Ms. |
| 123 | 10 b | लक्ष्यते | वक्ष्यते Ms. |
| 129 | 37 a | सप्तम्यैव | सप्तम्यापि Ms. |

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 130 | 42 a | –वाचित्वात् | –बाधित्वात् K. |
| 130 | 43 a | –लक्षणो वान्यः | –लक्षणेनान्यः K. |
| 130 | 43 b | संयोगः | संप्रयोगः ? Ms. |
| 131 | 47 b | वर्तनम् | वर्जनम् K. |
| 131 | 49 d | मूलच्छेदात् | मूलभेदात् K. |
| 132 | 53 b | विरोत्स्यते | विरुध्यते K. |
| 138 | 76 b | भवते भेदहानेन | भवत्यभेदहानेन. K. |
| 138 | 77 b | कल्प्यते त्वया | कल्पितस्त्वया Ms |
| 139 | 78 d | परं फलम् | फलं परम् Ms. |
| 143 | 91 d | तदा नाक्षस्य | न तदाक्षस्य Ms. |
| 144 | 97 b | नचाप्यस्तीह | नैवाप्यस्तीह Ms. |
| 148 | 116 b | व्यावृत्तानुगतात्मना | व्यावृत्त्यानुगतात्मना Ms. |
| 149 | 118 a | –बोधेऽपि | –बोधेन Ms. |
| 150 | 120 c | साऽपि | सोऽपि Ms. |
| 152 | 125 c d | तत्सम्बन्धानुसारेण सर्वं प्रत्यक्षमिष्यते ॥ | Omitted in K. |
| 156 | 143 c | अव्युत्पन्नस्य सा मिथ्या | अव्युत्पन्नेऽप्यसौ मिथ्या Ms. |
| 156 | 145 a | तत्रापि | अत्रापि K. |
| 158 | 150 d | न नानात्वं तयोर्भवेत् | नानात्वं त्वनयोर्भवेत् Ms. |
| 158 | 152 b | –धर्मकेषु | –धर्मिकेषु Ms. |
| 159 | 156 a | नचानेक— | नवानेक—K. |
| 159 | 158 a | बुद्धिभेदाच्च नैकत्वं | बुद्धिभेदान्न चैकत्वं Ms. |
| 160 | 160 b | चक्षुरादिना | चक्षुरादिभिः Ms. |
| 160 | 160 d | दृश्यते | गम्यते K. |
| 160 | 162 c | चाज्ञानात् | वाज्ञानात् K. |
| 162 | 167 c | –विषयेऽप्यस्य | –विषयेष्वस्य Ms. |
| 165 | 181 b | भेदश्चेत् | भेदश्च Ms. |
| 165 | 182 c | गौरित्येव च | गौरित्येवञ्च Ms. |
| 166 | 183 b | श्रोत्रा वक्तृस्वरूपता | श्रोत्रवक्तृस्वरूपता K. |
| 166 | 186 a | यदि चाभेद– | यदि वाभेद– Ms. |

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 168 | 4 c | मूर्तार्थो | मूर्तोऽर्थो Ms. |
| 170 | 205 a | वाच्यानां | वाच्यस्य Ms. |
| 170 | 205 c | स्मारकत्वाच्च | स्मारकत्वात्तु Ms. |
| 171 | 207 b | यां शब्दः कुरुते मतिम् | यः शब्दस्सकृदुच्यते । K. |
| 171 | 209 b | उपरागात् | अनुरागात् Ms. |
| 172 | 215 d | अर्थरूपं | अर्थतत्त्वं K. |
| 172 | 216 b | शब्दाद्भिन्नैक- | शब्दादन्यैक- Ms. |
| 172 | 217 d | नार्थे रूपं | न स्वरूपं Ms. |
| 174 | 221 d | अशक्तत्वं | Omitted in Ms. |
| 174 | 223 b | सम्बन्धाद्यत्व- | सम्बन्धान्यत्व- Ms. |
| 175 | 226 a | यदा तु | यदा च K. |
| 175 | 127 b | व्यज्यतामियम् | व्यज्यतां मिथः |
| 179 | 229 b | स्मरतोऽपि या | स्मरतोऽपि वा K. |
| 176 | 223 b | अवसरो मितेः | अभ्यधिको मितेः K. |
| 179 | 238 a | चान्ये | केचित् Ms. |
| 179 | 239 c | यथा षड्ज- | तथा षड्ज- K. |
| 179 | 241 b | वक्तुं शक्यम् | शक्यं वक्तुम् Ms. |
| 180 | 246 c | प्रकल्प्येत | विकल्पकेन ? Ms. |
| 181 | 247 a | प्रमाणाभासता | प्रत्यक्षाभासता Ms. |
| 181 | 249 b | अनुमानेऽभिधास्यते | अनुमाने हि साध्यते K. |
| 181 | 250 b | यथा गोत्वादिबुद्धयः | गोत्वादिमतयो यथा K. |
| 182 | 254 d | विनाप्यदः | विनाप्यतः K. |
| 183 | 2 b | पीडानुग्रह- | हिंसानुग्रह- Ms. |
| 183 | 4 d | वारितम् | पारितम् Ms. |
| 192 | 3 a | तत्रान्यस्य | अत्रान्यस्य Ms. |
| 192 | 4 a | ह्येतत् | चैतत् Ms. |
| 193 | 5 a | अर्थापत्त्येतरेषां | अर्थापत्त्या परेषां Ms. |
| 195 | 3 b | —ऐहलौकिकः | —ऐकलौकिकः ? Ms. |
| 196 | 5 d | वृथाग्राहोऽर्थ- | वृथाग्राह्योऽर्थ- Ms. |
| 199 | 18 c | प्रस्तुतः सद्विधा | प्रस्तुतस्तद्विधा Ms. |

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 201 | 27 c | हेतुत्वं | हेतुत्वात् Ms. |
| 205 | 43 a | पक्षाभावः | पक्षभावः Ms. |
| 206 | 52 b | अग्रहो | अग्रतो Ms. |
| 207 | 56 c | नालम्बनस्य हेतुः | नालम्बनत्वहेतुः K. |
| 211 | 71 a | साधनस्याप्रयोगः | साधनस्य प्रयोगः Ms. |
| 213 | 80 b | -बाह्य- | -बाध- Ms. |
| 221 | 116 a | अविद्यमानस्य | अवर्तमानस्य Ms. |
| 223 | 124 c | -साध्यत्वे | -साध्यत्वात् K. |
| 223 | 125 a | तेन स्यात्- | तेनास्मात् Ms. |
| 223 | 126 a | न च शक्यो | न चाशक्यो Ms. |
| 224 | 127 a | असामर्थ्यात् | असामर्थ्यम् Ms. |
| 224 | 129 d | साधनं कृतम् | साधनं त्वतः Ms. |
| 224 | 130 a | किमर्थं मद | Omitted in Ms. |
| 224 | 130 b | अत्रात्थ | अत्राथ K. |
| 226 | 140 a | तस्मात् | यस्मात् Ms. |
| 227 | 144 d | तदैवं | तदैतत् Ms. |
| 228 | 152 b | दृढे सति | दृढे स्थिते Ms. |
| 229 | 156 b | प्रकाशते | प्रतीयते Ms. |
| 231 | 166 b | अस्ति ते | अस्ति न Ms. |
| 231 | 166 c | -कोपायगम्यस्य | -कोपायगम्ये च Ms. |
| 231 | 167 d | -प्रविभागतः | प्रतिभागतः Ms. |
| 232 | 169 b | तत्र | त्वत्र Ms. |
| 232 | 170 a | कथञ्चित् | कथञ्च Ms. |
| 232 | 170 d | न सिध्यति | न विद्यते Ms. |
| 232 | 173 c | बाह्यापेक्षया | बाह्यापेक्षिता Ms. |
| 232 | 174 a | -प्रक्लृप्तिसिद्धेश्च | -क्लृप्तेश्च सिद्धेश्च Ms. |
| 233 | 175 c | न हि कल्प्येत | न विकल्प्येत Ms. |
| 223 | 180 b | वापि | चापि Ms. |
| 235 | 187 a | नैतदस्त्यनुरूपं तु | नैतदस्त्यानुरूप्यं हि Ms. |
| 235 | 187 c | त्वनुत्पन्ने | ह्यनुत्पन्नं Ms. |

| Page | Verse | Present Edn. | Other edns. and MS. |
|---|---|---|---|
| 236 | 190 a | समानधर्मतां | समानरूपतां Ms. |
| 240 | 3 a | प्रवर्तितुं | प्रवर्तितं Ms. |
| 243 | 16 d | दूषितम् | रूषितम् Ms. |
| 245 | 20 c | प्रत्यासन्नं च सम्बद्धं | प्रत्यासत्तिस्तदात्यन्तं Ms. |
| 246 | 22 a | ज्ञानाख्यप्रकाशे | ज्ञानाख्ये प्रकाशे |
| 247 | 27 a b | ज्ञानान्तरस्यचोत्पत्तिं प्रकाशो न प्रतीक्षते । | ज्ञानान्तरस्यानिष्पत्तिं प्रकाश्यं न प्रतीयते । cf. fol. 94 b of Ms. |
| 247 | 27 b | प्रकाशो न | प्राकाश्यान्न Ms. |
| 249 | 36 d | एतस्मादेव नेष्यते | एतस्मादेव हेष्यते Ms. |
| 250 | 38 c | वाकार | चाकार- Ms. |
| 252 | 48 a | नचाप्यस्येह | नचार्थस्येह Ms. |
| 252 | 48 b | प्राग्गृहीतो | प्रगृहीतो Ms. |
| 252 | 48 d | भाषितम् | साधितम् Ms. |
| 252 | 49 d | नचास्त्यर्थस्य | नचार्थस्येह Ms. |
| 253 | 51 e | -बोधेन | -बोधे च Ms. |
| 255 | 60 d | ऐकात्म्यवत्तया | एकार्थवत्तया Ms. |
| 257 | 68 c | भवेत्तत्र | भवेदत्र Ms. |
| 257 | 69 b | क्व वासा- | क्व चासा Ms. |
| 257 | 69 d | प्रवर्तिता | प्रवृत्तिता Ms. |
| 259 | 73 b | -वस्तुनोः | वस्तुनः Ms. |
| 259 | 74 c | न तदा | तदा न Ms. |
| 259 | 76 c | निराकारं | नीलाकारं Ms. |
| 260 | 80 a | प्रति न | प्रति तु Ms. |
| 260 | 81 c | बहिरितीहेदं | बहिरितीदं तु Ms. |
| 261 | 84 d | तत्राप्येषैव | तत्रत्वेषेव ? Ms. |
| 263 | 93 a | वाभ्युपेत्य | चाभ्युपेत्य Ms. |
| 263 | 95 d | कल्पितम् | कल्पकम् Ms. |
| 267 | 110 b | -विशेषाद्या प्रकल्प्यते | विशेषाद्यापि कल्प्यते Ms. |
| 267 | 110 d | स्मरणाच्च | स्मरणाद्वा Ms. |

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 267 | 113 a | जायते | ज्ञायते Ms. |
| 267 | 113 b | यत्र तत्पुनः | तत्र यत्पुनः Ms. |
| 267 | 113 c | तस्यात्मीयश्च | तत्रात्मीयश्च Ms. |
| 267 | 113 d | उपप्लुतौ | उपप्लवौ Ms. |
| 267 | 114 a | संवित्तौ | संवित्तो Ms. |
| 269 | 119 a | गृहीतमेव | गृहीतमिति Ms. |
| 270 | 123 b | कुतोऽत्र | कुतो नु Ms. |
| 271 | 130 d | यदि | तस्य K. |
| 273 | 138 a | -निवृत्तौ हि | निवृत्तौ ते Ms. |
| 273 | 138 b | ज्ञानेऽन्यार्थः | ज्ञानेऽन्योऽर्थः Ms. |
| 273 | 139 b | प्रकल्पितम् | च कल्पितम् Ms. |
| 273 | 141 d | युज्यते | विद्यते Ms. |
| 274 | 144 a | गृह्यते येन | गृह्यते यस्य Ms. |
| 276 | 153 c | भावितामात्रं | भावमात्रं च Ms. |
| 276 | 154 a | -पर्यविनिर्मुक्तम् | —पर्याद् विनिर्मुक्तम् Ms. |
| 277 | 157 c | दुर्लक्ष | दुर्लक्ष्यः Ms. |
| 277 | 158 c | -द्वारा | द्वारं Ms. |
| 280 | 166 d | युज्यते | लभ्यते Ms. |
| 280 | 169 d | प्रहीयते | तु हीयते Ms. |
| 285 | 190 d | विज्ञानानि | विजानाति Ms. |
| 286 | 198 c | गृहीतार्थम् | गृहीत्वार्थम् K. |
| 287 | 200 a | -सम्बन्धौ | -सम्बुद्धौ Ms. |
| 287 | 200 c | -वाप्येतौ | चाप्येतौ Ms. |
| 287 | 202 c | जन्यतेऽर्थे | जन्यतेऽर्थैः Ms. |
| 288 | 203 b | नवाप्य- | नचाप्य- Ms. |
| 288 | 205 b | सा च | सापि Ms. |
| 289 | 210 b | कल्पयन्त्यर्थम् | कल्पयत्यर्थम् K. |
| 292 | 220 a | तथैव | तथापि K. |
| 295 | 237 a | उपलब्धी हि | उपलब्धीनि Ms. |
| 295 | 237 b | -कान्ततान्विते | -कान्ततः स्थिते Ms. |

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 306 | 4 c | गमकत्वं तु | गमकत्वं च T. |
| 306 | 5 d | वाप्यधिकोऽपि | वाभ्यधिकोऽपि T. |
| 307 | 9 d | मितौ | मितेः Ch. Ms. T. |
| 307 | 9 d | येनैव | येनेव Ms. |
| 307 | 10 b | यादृशा | यादृशी T. |
| 308 | 11 a | तादृक् स्यात् | तादृक् स T. |
| 308 | 11 b | धर्म्यन्तरेषु नः | धर्म्यन्तरे पुनः T. |
| 308 | 12 a | गम्या हि | -गम्या च T. |
| 309 | 15 a | दृष्टैरपि न तैरिष्टा | तैर्दृष्टैरपि नैवेष्टा T. |
| 309 | 15 d | साध्यसिद्धौ | साध्यसिध्यै Ms. T. |
| 309 | 16 a | सुलभप्रति- | सुलभैः प्रति- T. |
| 309 | 16 a | -हेत्वादिदोषैः | -हेतुत्वाद्दोषैः Ms. |
| 310 | 20 b | शूद्रत्वेन | शूद्रस्थेन Ch. T. |
| 310 | 21 c | जातिमत्त्वेन्द्रियत्व- | जातिमत्त्वेन्द्रियत्व Ch. T. |
| 310 | 23 d | धर्माभ्यामेक- | धर्म्यप्यत्रैके Ch T.<br>धर्म्यप्यत्रैक- Ms. |
| 311 | 24 b | स्वरूपे | स्वरूपैर्नैक Ch. T. |
| 311 | 24 d | एव च | एव वा Ch. T. |
| 311 | 26 d | ईदृशो | ईदृशः T. |
| 312 | 30 a | अनित्यत्वादिनो | अनित्यत्वादयो T. |
| 312 | 31 d | निदर्श्यते | निदर्शने Ms. |
| 313 | 36 d | तत्राप्राधान्यतो | तस्याप्राधान्यतो T. |
| 315 | 43 d | सर्वैर्विशिष्यते | सर्वैर्विशेष्यते T |
| 316 | 50 c | धूमस्य धर्मित्वे | धूमविशेष्यत्वे T. |
| 317 | 51 a | विशिष्टे | विशेषे T. |
| 317 | 51 b | सामान्यहेतुता | सामान्यहेतुना T. |
| 317 | 53 d | प्रतिपादनम् | प्रतिपादनात् T. |
| 318 | 54 a | परिच्छित्तिः | गृहीतत्वम् T. |
| 318 | 55 a | विपक्षाच्च | विरुद्धाच्च T. |
| 318 | 56 b | वा | च T. |

| Page | Verse | Present Edn. | Other edns. and MS. |
| --- | --- | --- | --- |
| 319 | 58 d | येनैवार्थोऽवधारितः | नैवार्थो ह्यवधारितः K. |
| 320 | 61 d | प्रसिध्यादि | प्रतिज्ञादि T. |
| 320 | 63 a | —मृषात्वे तु | मृषात्वेन Ch. T. |
| 321 | 65 a | स सर्वलोकसिद्धेन | सर्वलोकप्रसिद्धेन Ms. |
| 322 | 69 c | सद्भावे विरोधः | सद्भावविरोधः Ch. T. |
| 322 | 70 a | तु | च T. |
| 322 | 71 a | —क्षिप्तयोर्बाधः | —क्षिप्तयोर्वाक्ये T. |
| 323 | 72 b | तद्विशेषौष्ण्य— | तद्विशेषोत्थ— T. |
| 323 | 73 a | अधर्मत्वस्वरूपस्य | अधर्मस्य स्वरूपस्य T. |
| 323 | 74 d | —साधनात् | — बोधनात् K. |
| 323 | 75 d | एतेन | अनेन T. |
| 324 | 79 b | एवं तावत् स्वरूपतः | एवं भावस्वरूपतः Ms. |
| 324 | 81 c | —मात्रासिद्धि | मात्रासिद्ध Ms. |
| 325 | 85 a | —सम्बन्धौ | —सम्बद्धौ Ch. T. |
| 326 | 86 d | उभौ | एषः T. |
| 327 | 88 b | मतम् | मतः T. |
| 327 | 89 b | स नः संशय— | मतः संशय— T. |
| 327 | 89 d | —पेक्षयेष्यते | —पेक्षयोच्यते T. |
| 327 | 90 d | निष्क्रियादावमूर्ति— | निष्क्रियाभावमूर्ति— Ms. |
| 328 | 91 d | अरूपत्वेन | अरूपित्वेन T. |
| 328 | 92 a | चासौ | वासौ T. |
| 329 | 95 c | चापि | वापि T. |
| 329 | 96 b | निदर्शनम् | निदर्शितौ T. |
| 329 | 98 b | प्रयुज्यते | विशिष्यते T. |
| 329 | 99 b | पश्चाद्वत् | पश्चाद्वा Ms. |
| 330 | 104 d | बाधैवं | बाधोऽयं T. |
| 331 | 105 c,d | —पारार्थ्यं भौतिक— | —पारार्थ्यभौतिक- Ms. |
| 331 | 106 d | इष्टे | दृष्टे T. "चेष्टे" cf. Kāśikā, C. on Ślokavārtika, T. Edn. |

| Page | Verse | Present Edn. | Other edns. and MS. |
| --- | --- | --- | --- |
| 331 | 107 d | भाषितुं | भाषितम् Ms. |
| 332 | 109 a | धर्मी | धर्मो Ms. |
| 332 | 111 d | सहभाव— | सहचार— Ch. |
| | | | सहभाव—K. |
| 333 | 112 a | वा हेतोर्न | वा हेतौ न T. |
| 333 | 112 d | तद्योग्यं.........यदा | तद्योगं.........यदि T. |
| 333 | 113 d | वापि | चैव T. |
| 333 | 116 a | पटवत् | घटवत् Ms. |
| 334 | 118 b | अपेक्षते | अपेक्ष्यते T. |
| 334 | 120 a | —अन्वयत्वं वा | अन्वयं वापि T. |
| 336 | 127 a | —उपयोगः | उपकारः T. |
| 336 | 128 c | —सिध्यै च | —सिध्यैव Ms. |
| | | | —सिध्यै हि T. |
| 337 | 132 d | शब्देऽभिधास्यते | शाब्दे हि वक्ष्यते Ms. |
| | | | शाब्देऽभिधास्यते T. |
| 337 | 133 d | व्यापित्वं | व्यापिता T. |
| 338 | 134 b | कथिते | कल्पिते K. |
| 338 | 133 b | पक्षेऽप्येतत् | पक्षेऽप्येवम् T. |
| 339 | 141 a | —दृष्टः सम्बन्धः | —दृष्टसम्बन्धं T. |
| 341 | 151 a | चाप्यनुमानेन | वाप्यनुमानेन T. |
| 341 | 151 b | —संहितात् | संहतात् T. |
| 342 | 152 a | —मानस्य | — मानत्वात् T. |
| 342 | 152 d | कल्पिते | —कल्पने T. |
| 342 | 154 d | लिङ्गिन्यपि तथा | तथा लिङ्गिगतिः T. |
| 342 | 155 c | —न्तरमेयं स्यात् | —न्तरमेव स्यात् T. |
| 344 | 165 a | —रूपतायां च | —रूपतायां वा T. |
| 344 | 166 a b | —भवेऽप्येवमेषितव्यम् | —भवोऽवश्यमेषितव्यः T. |
| 345 | 168 c | —वेद्यत्वात् | —गम्यत्वात् T. |
| 345 | 170 b | लिङ्गिनः | लिङ्गिनि T. |
| 345 | 171 d | दूरं न | दूरान्न Ms. |

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 346 | 173 b | इष्यताम् | इष्यते T. |
| 347 | 178 a | अगृह्यमाणश्च | अगृह्यमाणस्य T. |
| 347 | 178 b | न भेदो | नाभेदो T. |
| 347 | 179 a | नचाप्यस्ति | नवाप्यस्ति T. |
| 347 | 180 d | न तेषां | नैतेषां T. |
| 347 | 180 d | अपगच्छति | अवगच्छति Ms. |
| 348 | 181 c | व्यासङ्गिनि | व्यासङ्गिनी T. |
| 348 | 184 c | यो हरेत | योऽपह्नुते T. |
| 348 | 185 b | तद्बुद्धि— | तत्सिद्धि— T. |
| 349 | 187 a | अपेक्ष्य | उपेक्ष्य Ms. |
| 349 | 187 c | प्रतिपद्यतेऽत्र | प्रतिपद्यतेऽस्मिन् T. |
| 349 | 188 c | प्रतिपद्यते | प्रतिपाद्यते Ms. |
| 350 | 2 a | मुक्त्वा | त्यक्त्वा T. |
| 352 | 11 b | अन्तरेणापि | अन्तरेणास्ति Ms. T. |
| 352 | 11 d | स्फुटम् | सुखम् T. |
| 352 | 16 d | नतूक्तं | ननूक्तं Ms. |
| 355 | 24 b | भिद्यते | भिन्नता T. |
| 355 | 27 b | बिम्बं | लिङ्गं Ms. |
| 356 | 29 b | तत्क्षणात् | तत्क्षणम् T. |
| 356 | 29 c | —विरुद्धस्य बोधात् | —विरुद्धार्थबोधात् Ms. |
| 356 | 31 c | वाक्ये | चास्मिन् T. |
| 357 | 34 d | बुध्यते | बुध्यन्ते T. |
| 358 | 38 b | भेदोऽस्य | भेदोऽत्र T. |
| 359 | 43 a | नचाप्यननुमेय | नचार्थानुमेय Ms. |
| 359 | 43 d | अप्रत्यक्षगम्यता | अप्रत्यक्षतेष्यते T. |
| 359 | 44 b | नातिप्रयत्निनः | नातिप्रयत्नतः T. |
| 360 | 45 b | धर्मे निराकृतम् | धर्मनिराकृतम् Ms. |
| 360 | 47 d | ऋच्छति | इच्छति Ms. |
| 360 | 49 a | —सत्यत्वात् | —सत्यत्वे T. |
| 360 | 50 c | पातः | नातः T. |

| *Page* | *Verse* | *Present Edn.* | *Other edns. and MS.* |
|---|---|---|---|
| 362 | 55 c | हि | च T. |
| 362 | 56 d | हि तत | न तत् T. |
| 363 | 59 c | यत्र | यत्तु Ms. |
| 364 | 65 c | कथं चार्थ— | कथं वास्य T |
| 365 | 68 d | शब्दस्येह | शब्दस्येव Ms. |
| 366 | 74 b | शब्दस्तु विषयः | शब्दस्तद्विषयः T. |
| 366 | 74 d | तस्य च | तस्य वा T. |
| 366 | 75 a | उत्थापयति | उत्पादयति T. |
| 366 | 76 a | वः | च T. |
| 366 | 77 c | हि | तु T. |
| 366 | 78 a | -सम्बन्धः | -सम्बन्धाः T. |
| 366 | 78 c | जानाति | जानन्ति T. |
| 367 | 79 d | प्रवर्तते | प्रसज्यते T. |
| 367 | 83 c | अनवगते | अनवधृते T. |
| 367 | 83 d | -अवधारणा | -अवधारणात् Ch T. |
| 368 | 85 d | अन्वेतृत्वम् | अन्वितत्वम् T. |
| 368 | 86 d | निश्चयः | निश्चित Ms. |
| 369 | 92 b | सदा | स्फुटः T. |
| 369 | 93 d | अनुमाने व्यवस्थितम् | अनुमानस्य च स्थितम् T. |
| 369 | 95 c | धूमेऽन्वयात् | धूमान्वयात् T. |
| 369 | 95 d | शक्तत्वं गम्यते तथा | शक्तत्वमवगम्यते T. |
| 370 | 96 c | पश्चात्कृतत्वेन | पश्चात् स्थितत्वेन T. |
| 370 | 96 d | -प्रत्ययकारणम् | -प्रत्ययसाधनम् T. |
| 370 | 98 c | त्रैरूप्यरहितत्वेन | त्रैरूप्यविषयत्वेन Ms. |
| 370 | 100 d | अज्ञातेऽथ | अज्ञातेऽपि T. |
| 371 | 102 d | स त्वन्यतो गतः | स त्वक्षगोचरः T. |
| 371 | 104 d | उपपद्यते | उपजायते T. |
| 372 | 106 a | पूर्वानुभूतोऽर्थः | पूर्वपरिच्छिन्नः T. |
| 372 | 107 c | भवेत् तत्र | भवेत् किञ्चित् T. |
| 372 | 107 d | स पदस्य | तत्पदस्य T. |

| Page | Verse | Present Edn. | Other. edns. and MS. |
|---|---|---|---|
| 372 | 108 a | च | वा T. |
| 372 | 108 b | मति | मितिः T. |
| 373 | 109 d | भिन्ना साप्यक्षबुद्धिवत् | भिन्नासावक्षबुद्धिवत् T. |
| 373 | 110 d | वाक्यबुद्धावसिद्धता | वाक्यात् बुद्धावसिद्धता T. |
| 374 | 1 b | यदा | यदि T. |
| 374 | 2 a | एतस्मिन् | एकस्मिन् Ms. |
| 374 | 3 b | तस्यार्थः | तत्रार्थः T. |
| 375 | 6 d | गोसादृश्येन रञ्जिता | गोसादृश्यानुरञ्जिता T. |
| 375 | 7 b | सादृश्ये स्मृतिरत्र तु | सादृश्यस्मृतिरत्र तु T. |
| 376 | 9 b | प्रत्यक्षादेव सा भवेत् | प्रत्यक्षादिवशात् भवेत् T. |
| 376 | 9 c | —इन्द्रियसम्बन्धः | इन्द्रियसम्बद्धे T. |
| 376 | 9 d | स्थितम् | स्मृतम् T. |
| 377 | 15 a | —बोधोऽपि | —बोधेऽपि T. |
| 378 | 15 c | —युक्तोऽर्थः | —युक्तार्थः T. |
| 378 | 16 c | तदानेन | तदा तेन T. |
| 379 | 20 d | — भेदादस्य च | भेदादेतस्य T. |
| 379 | 21 d | गम्यते | दृश्यते T. |
| 380 | 24 a | —योगाद्धि | —योगाच्च T. |
| 380 | 26 a | भूयस्त्ववाचेदं | भूयस्तयाचेदं T. |
| 380 | 26 c | सन्त्येव | सन्त्येवम् T. |
| 380 | 26 d | सादृश्येऽपि | प्रत्यक्षेऽपि T. |
| 380 | 27 d | सामान्यावयवा— | समानावयवा— |
| 381 | 32 c | परिणामादभिव्यक्तिः | परिणामादिभिर्व्यक्तिः T. |
| 382 | 34 b | सम्बन्धस्य | सम्बद्धस्य T. |
| 382 | 34 d | प्रत्यक्षत्वं | प्रत्यक्षत्वात् T. |
| 382 | 35 d | उपलभ्यते | उपगम्यते T. |
| 382 | 36 b | तज्ज्ञानं | तद्भानं T. |
| 382 | 38 b | गवि तु | गवि च T. |
| 382 | 38 c d | विशिष्टस्यान्यतोऽसिद्धे-रुपमानप्रमाणता | विशिष्टस्यान्यतो लोके प्रसिद्धेऽनुपमानता । See fn. of T. |

| Page | Verse | Present Edn. | Other. edns. and MS. |
|---|---|---|---|
| 383 | 39 c,d | विशिष्टस्यान्यतोऽसिद्धेरनु-मानप्रमाणता | विशिष्टविषयत्वेन नानुमानप्रमाणता T. |
| 383 | 41 a | बाधकज्ञानतश्चैषां | बाधकप्रत्ययाच्चैषा T. |
| 383 | 41 b | भवेत् | मता T. |
| 384 | 45 a | असम्बन्धः | असम्बन्धात् T. |
| 384 | 45 d | पूर्वदृष्टं | पूर्वं दृष्टं T. |
| 385 | 47 c | नैतेषाम् | न तेषाम् T. |
| 385 | 48 c | सदृशः | सदृशी T. |
| 385 | 48 d | सदृशः | सदृशी T. |
| 385 | 51 b | भ्रान्तिज्ञानं | भ्रान्तज्ञानं T. |
| 385 | 51 d | स्मरणं | स्मरणात् T. |
| 386 | 54 b | —युक्तम् | —मुक्तम् Ms. |
| 387 | 1 b | यत्रार्थो | यत्रार्थे Ms. |
| 387 | 1 b | भवन् | भवेत् T. |
| 389 | 6 c | अवगम्यैवं | अपगम्यैव Ms |
| 389 | 8 b | विशेषितात् | विशेषणात् Ms. |
| 390 | 10 d | भिन्नैषा | भिन्नैवा— |
| 390 | 11 a | बहिर्देश | बहिर्भाव Ms. |
| 390 | 11 c | प्रमेयो | प्रमेये T. |
| 390 | 12 a | तदभाव | तदाभाव Ms. |
| 390 | 12 a | विशिष्टं तु | विशिष्टं हि Ms. |
| 391 | 14 b | कल्प्यते | कल्पते T. |
| | | इत आरभ्य मातृकायां मूलग्रन्थो नास्ति। व्याख्यायां प्रतीकमात्रं विद्यते। व्याख्यायां अनूदिता मूलपाठभेदाः प्रदीयन्ते। | |
| 392 | 19 d | न चाबुध्वा | न वाबुध्वा Ms. |
| 392 | 21 a | गृहाभावस्तु | गेहाभावस्तु T. |
| 394 | 29 d | प्रतिघातिनः | प्रतिभाति नः T. |
| 394 | 30 d | सत्यप्येषा | अन्यथैषा T. |
| 398 | 47 c | कार्यादर्शनतः | कार्यदर्शनतः T. |
| 399 | 52 a | —विषयां | —गोचरां T. |

